श्रीमन्नृपनाम...

॥ श्रीः ॥

श्रीमदापदेवात्मजानंतदेवप्रणीतः

# स्मृतिकौस्तुभः।

श्रीमन्नृपबाजबाहदुरकारितः।

अयंच

पणशीकर-लक्ष्मणशर्मतनुजनुषावासुदेवशर्मणा

संशोधितः।

मुंबय्यां

तुकाराम जावजी

इत्येतेषां कृते तेषामेव 'निर्णयसागरा' ख्यमुद्रणालये

बालकृष्ण रामचंद्र घाणेकर इत्यनेनांकितः.

शकाब्दाः १८३१, सन १९०९.

मूल्यं २ रूप्यद्वयम्.

# प्रास्ताविकम् ।

पुरा किल 'नासदासीन्नो सदासीत्तदानीं' इति श्रुतिप्रामाण्यात्सर्वतोऽम्भःप्राये भोगिभोगे शयानस्य भगवतो जागराव्यवहितक्षणे 'स ईक्षत लोकान्नु सृजा इति' जगत्सिसृक्षाङ्कुरोऽन्तः प्रादुर्बभूव । तदातर्क्यवैभवोऽखिलशक्त्याधारो निमित्तोपादानादिकारणांतरनिरपेक्षः स्वयमात्मनैव ब्रह्मादिस्तंबपर्यंतं चतुर्विधभूतनिकायगर्भितं स्थावरजंगमात्मकं जगत् धर्माधर्मौ च सृष्ट्वा व्यवहाराय तत्तच्छब्दानां तेनतेनार्थेन संबन्धं कल्पयित्वाऽखिलधर्माधर्मप्रतिपादकपदे वेदान्कल्पयित्वा हिरण्यगर्भादिभ्यः प्रतिपादितवान् तैरन्येभ्य इत्येवमुत्तरोत्तरं श्रुतिप्रसरणप्रणाली ।

अपरार्कः—वेदप्रतिपादितमेव धर्ममभाणीत्—

"धर्मशुद्धिमभीप्सद्भिर्न वेदादन्यदिष्यते ।
धर्मस्य कारणं शुद्धं मिश्रमन्यात्प्रकीर्तितम् ॥
अतः स परमो धर्मो यो वेदादधिगम्यते ।
अवरः स तु विज्ञेयो यः पुराणादिषु स्मृतः ॥
वेदार्थवित्तमैः कर्म यत्स्मृतं मुनिभिः पुरा ।
तद्यत्नेन समातिष्ठेत्तन्निषिद्धं तु वर्जयेत् ॥
ते हि वेदार्थतत्त्वज्ञा लोकानां हितकाम्यया ।
प्रदिष्टवन्तो यं धर्मं तं धर्मं न विचारयेत् ॥
वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेद्यदि ।
ऋषिभिर्निश्चिते तस्मिन्का शङ्का स्यान्मनीषिणाम् ॥
एतेभ्योपि यदन्यत्स्यात्किंचिद्धर्माभिधायकम् ।
तद्दूरतरतो विद्धि मोहस्तस्याश्रयो मतः ॥ १ ॥" इति ।

ततश्च भगवत्प्रतिपादितश्छंदोराशिरनेकशाखामंडलभिन्नश्चातुर्वर्ण्याश्रमनित्यानुष्ठातव्याद्यनेकविभागादिनास्तां, केवलं तदेकदेशः पुरुषायुषेणाप्युपढौकयितुमशक्य इति महाप्रभावा मंत्रद्रष्टारो महर्षयो यथाग्रथं तं विभज्य तदर्थोपोद्बलका लोकव्यवहारक्षमा नैकशः स्मृती रचयांबभूवुः । अथ कुशाग्रमतिभिस्ताभ्योऽतरंगतया सुप्रतिष्ठिता भविष्यत्पुराणे गुह्येश्वरवाक्ये स्मृतयः षट्त्रिंशदेवाभिहिताः—

"मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्तिताः ।
तासां वाक्यानि क्रमशः समासेन ब्रवीमि ते ॥" इति ।

ताश्च मनु—विष्णु—यम—दक्षा—ङ्गिरो—ऽत्रि—बृहस्प—त्युशना—पस्तम्ब—वसिष्ठ—कात्यायन—पराशर—व्यास—शङ्खलिखित—संवर्त—गौतम—शातातप—हारीत—याज्ञवल्क्य—प्रचेतो—बुध—देवल—सोम—जमदग्नि—विश्वामित्र—प्रजापति—नारद—पैठीनसि—पितामह—बौधायन—छागलेय—जाबालि—च्यवन—मरीचि—कश्यपा इति षट्त्रिंशदेव स्मृत्यन्तरे पठिताः। एवं वृद्धमन्वादयश्च वयोवस्थादिभेदेन मन्वादिप्रणेतार एव द्रष्टव्याः अविरोधित्वाच्छ्रुतिस्मृत्युपबृंहकत्वाच्छिष्टपरिगृहीतत्वादाप्तोक्तत्वाच्च ।

आस्तां महर्षिव्यवहारक्षमाणां श्रुतिस्मृतिकल्पसूत्राणां विवेचनेन । आधुनिकानां निर्वाहाय पदवाक्यप्रमाणपारावारपारीणैर्विद्वच्छिरोमणिभिर्धर्मशास्त्रग्रंथाः श्रौतस्मार्तसमयाचारघंटापथाः सर्वतः सर्वैः समाद्रियमाणाः स्वस्ववर्णाश्रमधर्मानुयायिभिः सज्जनैर्भरतखंडस्थैः सर्वतोमुखमध्ययनाध्यापनादिकुशलकुशाग्रबुद्धिभिः परिरक्ष्यमाणाश्च बहुशो दरीदृश्यंते । तेषु नानाविधविपुलधर्मशास्त्रनिबंधेषु दुरवगाहतां विस्तरं चालोच्याऽलसानामाधुनिकानां बुद्धिमांद्यं तत्तद्ग्रंथेभ्यस्तत्तत्प्राकरणिकार्थनिर्धारणासामर्थ्यं सारासारविवेचनसामर्थ्यशून्यतां देशकालादिव्यवस्थितिनिश्चयसामर्थ्यादिकं च परिचिंत्य निखिलसांगोपांगवेदमीमांसाशास्त्रपुराणेतिहासपारावारपारीणेन तदुक्तान्यूनानतिरिक्तधर्मानुष्ठाननिष्ठागरिष्ठेन महामीमांसकेनापदेवभट्टात्मजेन **श्रीमदनंतदेवभट्टेन** सारघमिव मधुकरेण सर्वमहानिबंधान्विलोड्य सारासारविवेचनेन तत्तदर्थं निर्णीयायं **स्मृतिकौस्तुभनामा** धर्मशास्त्रग्रन्थो व्यरचि । अत्र क्षणलवनिमेषकलाकाष्ठाहर्दिवसमाससंवत्सरगणानामवयवशः स्पष्टतरं निर्णयाः संति । अयं च **श्रीमद्बाजबाहदुरसंज्ञकेन** भूभृता कारित इति ग्रंथोपोद्घातावसानोल्लेखादवसीयते । ग्रथिताश्चानेन वेदांते **सिद्धांततत्त्वं** याज्ञिके च **संस्कारकौस्तुभप्रभृतयः** लोकानामसंशयं तत्तत्समयोचितसंस्कारधर्मकर्मानुष्ठानायामूलचूडमोतप्रोतस्मृत्यादिमहर्षिवचनोपनिबद्धाखिलसिद्धांतसद्रत्नानां मंजूषारूपाः श्रुतिशास्त्रपारंगतानामपि परमानंदथुप्रदाः निबंधाः ।

यद्यप्ययं ग्रंथकारधौरेयः स्वजनुषा कदा महीमंडलमलंचकारेति प्राच्येतिहासवैकल्येन निर्णेतुं न पारयामस्तथापि प्रयोगरत्नाद्यनेकमहानिबंधप्रणेतु**र्नारायणभट्टा**दीषदनंतरोयं तत्समकालीन एवेति निश्चीयते । संस्कारकौस्तुभे तत्रतत्र प्रयोगरत्नानुवादपूर्वकं खंडनारंभात् । नारायणभट्टपौत्रेण **कमलाकराख्य**विदुषा प्रणीतनिर्णयाब्ध्युपसंहारे 'वसुऋतुऋतुभू १६६८ मिते गतेऽब्दे नरपतिविक्रमतोऽथ याति रौद्रे' इति स्वीयसमयनिर्देशात् नारायणभट्टस्तावद्वैक्रमीये पंचदशे शतक एवासीदिति समनुमिनुमः । सिद्धांततत्वसंस्कर्त्रा

पंडितवरेण तु तत्प्रस्तावे इसवी सन १६४४—६४ कालीन एव बाज-बाहदुरराजासीदिति तदाश्रितस्यानंतदेवस्यापि स एव काल इति राद्धांतितमुपलभ्यते । आस्तां पल्लवितेन ।

अत्रत्यमाघकृत्यांतर्गतकुंडमंडपांतःपातिकुंडनिर्माणसूत्रभुजादिगणितभागः श्रीकाशीक्षेत्रवासि **वे. शा. सं. रामचंद्र दीक्षित जडे** इत्येतैरस्मत्स्निग्धैर्निरपेक्षबुद्ध्या संस्कृत्य प्रेषित इति तेषामत्र निर्देश आवश्यक एव ।

एतत्पुस्तकसंस्करणावसरे वे. शा. सं. श्रीकृष्णशास्त्रीपाध्ये गुर्जर तथा विद्वद्वर भालचंद्रपाध्ये गुर्जरतनय वे. शा. सखारामपाध्ये इत्येताभ्यां स्वीयग्रंथसंग्रहात् पृथग्घस्तलिखितं पुस्तकद्वयं दत्तं तत्संयोजनेन यावत्प्रज्ञं शोधितोयं ग्रंथः, वे. शा. सं. महादेव गंगाधरशास्त्री वाके इत्येतैश्च ग्रंथविवेचनावसरे बहूपकृतमथाप्येतस्य दुरूहत्वेन भ्रांतेः पुरुषधर्मत्वाद्दृग्दोषादिना मतिमांद्याच्च क्वचन स्खलितं दृगारूढं दयालवो विद्वांसः शोधयंतु पुनःसंस्करणेऽहमपि शोधयेयेति सविनयं निवेदयति—

विदुषामनुचरो

**वासुदेवशर्मा ।**



# स्मृतिकौस्तुभविषयानुक्रमः।



इति स्मृतिकौस्तुभीयविषयानुक्रमणिका ।

श्रीः ।

श्रीमदापदेवात्मजानंतदेवप्रणीतः

# स्मृतिकौस्तुभः ।

श्रीगणेशाय नमः ।

दध्नो मंथनकाम्यया व्रजवधूं कुंभे तदासिंचतीं
सस्नेहं दधि देहि मह्यमधुनेत्युक्ते रमेशेन या ।
ओमित्युक्तिपुरःसरं निजकरे तस्यार्पणं कुर्वतीं
प्रत्युक्तिः कुरु कार्यमस्तु शमिति श्रीशस्य सा पातु नः ॥ १ ॥
यः पूर्वजन्मार्जितपुण्यभारैः संलब्धया दिव्यधियावनीशान् ।
वशेऽकरोच्छीतकरोच्चवंशे स ज्ञानचंद्रो नृपतिर्बभूव ॥ २ ॥
कल्याणकर्ता सकलप्रजानां कल्याणचंद्रस्तत आविरासीत् ।
कदापि दंड्या न यदीयराज्ये वभूवुरेषां क्व नु दंडवार्ता ॥ ३ ॥
प्रतापेन रुद्रो यमः स्वच्छकीर्त्या समाह्लादयन्यो जनांश्चंद्रतुल्यः ।
सदा सर्वविद्वद्गुणज्ञो वदान्योऽभवच्चंद्रवंशे ततो रुद्रचंद्रः ॥ ४ ॥
श्रीरुद्रस्य षडाननः शशधरस्यासीद्यथा वा वुधः
श्रीमल्लक्ष्मणचंद्रनामकसुतोऽभूद्रुद्रचंद्रस्य यः ।
तेनानेकहिमाचलस्थनृपतीन्दुष्टान्विजित्य स्वके
राज्ये वृद्धिरकारि तुष्टिरमिता चाधायि विद्वद्धृदि ॥ ५ ॥
ततस्त्रिमल्लचंद्रोऽभूद्भूपो रूपोत्कटो भुवि ।
काशीस्थविद्वदादिभ्यो धनराशीनदात्सदा ॥ ६ ॥
तस्मिन्कुलेऽजनि ततः किल नीलचंद्रो
यस्तीर्थसज्जननिषेवणभूरिपुण्यैः ।
तेजो दधार परमं पुरुषोत्तमाख्यं
धत्ते यथैंद्रदिशि नीलगिरिः परं तत् ॥ ७ ॥
श्रीबाजबाहदुरचंद्रनृपस्ततोऽभू-
च्चंद्रान्वयः स भुवि भूरियशोऽकरोद्यः ।
सर्वावनिस्थविदुषामवनं प्रकुर्व-
न्योऽस्मिन्कलावपि ररक्ष समस्तशास्त्रम् ॥ ८ ॥

यदीयप्रतापोदयाद्दूरदेशे स्वदुर्गं तरंत्यूष्मणा त्यक्तदुर्गाः ।
परेंऽभोधिपत्नीतटे संवसंतो वसंतोद्भवं नैव संतोषमापुः ॥ ९ ॥
ब्रह्मण्यदेवस्य हरेरिवास्य गुणैरनंतैः श्रुतिषु स्पृशद्भिः ।
आकृष्य नीताः परभूपकन्या धन्या बभूवुः स्वकुलोद्भवानाम् ॥ १० ॥
सर्वाशापरिपूरणक्षमयशःसौधप्रवाहेण यो
न्यक्कारं प्रतनोति सौधवपुषो नामार्थवत्तां नयन् ।
कस्तस्मादितरः कलौ किल सतां सेव्यः प्रभुर्योऽभव-
त्क्रीडायामपि दानमानविनयैः संतोषदातुः सताम् ॥ ११ ॥
येनार्चिता बुधवराः शिबिराणि यांतो
यांति स्फुटं पथि नृपा इति भांति लोके ।
नित्यं भटैः सतुरगैः परिपाल्यमाना
मानार्थदं तदितरं न कलौ विलोके ॥ १२ ॥
आसीद्गोदावरीतीरे वेदवेदिसमन्वितः ।
श्रीकृष्णभक्तिमानेक एकनाथाभिधो द्विजः ॥ १३ ॥
तत्सुतस्तद्गुणैर्युक्तः सर्वशास्त्रार्थतत्त्ववित् ।
आपदेवोऽभवद्देवात्प्राप यः सकलान्मनून् ॥ १४ ॥
मीमांसानयकोविदो मधुरिपोः सेवासु नित्योद्यतो
विद्यादानसुभावितोत्तमयशा आसीत्तदीयात्मजः ।
यस्यानंतगुणैरनंत इति सन्नामार्थवत्तां गतं
येनावादि च वादिनां श्रुतिशिरःसिद्धांततत्त्वं मुदे ॥ १५ ॥
न्यायप्रकाशकर्ता निरवधिविद्यामृतप्रदः सततम् ।
मीमांसाद्वयनयवित्तनयस्तस्यापदेवोऽभूत् ॥ १६ ॥
तस्यात्मजं वैदिकशास्त्रविज्ञं संतोऽसकृत्प्राहुरनंतदेवम् ।
बाजाद्धराज्ञो वचसा विधेयं निबंधसारोद्धरणं त्वयेति ॥ १७ ॥
अनंतदेवेन तदाज्ञयाथो मुदे हरेः पूर्वनिबंधरूपम् ।
क्षीरांबुधिं बुद्धिगुणैर्मथित्वा प्रकाश्यतेऽयं स्मृतिकौस्तुभः कौ १८
भवानीशंकरौ नत्वा ससुतौ प्रार्थयास्यदः ।
धृतः श्रीहरिणा धार्यो राज्ञाऽयं स्याच्छुभप्रदः ॥ १९ ॥
तिथिदीधितिरुक्ता प्राग्वक्ष्यामोऽब्दौघदीधितिम् ।
अब्दभेदाद्वदास्येनां माधवोक्त्यनुसारतः ॥ २० ॥
चांद्रः सौरः सावनोऽथ बार्हस्पत्यो भभूस्तथा ।
वत्सरः पंचधा प्रोक्तश्चांद्रोऽत्र बहुकार्यभाक् ॥ २१ ॥

वक्ष्यामः पूर्वमेवातश्चांद्रवत्सरदीधितिम् ।
मासानां च तिथीनां च यानि कार्याणि संति हि ॥ २२ ॥
कालं तेषां वदामोऽत्र प्रयोगं मानपूर्वकम् ।
(संक्रांतीनां सकार्याणां निर्णयं सौरदीधितौ ।)[1]
वक्ष्यामो वत्सराणां च निर्णयं सौरदीधितौ ॥ २३ ॥
गुरौ सिंहादिराशिस्थे कार्याकार्यविनिर्णयम् ।
तस्य शुक्रस्य चास्तादि बार्हस्पत्याब्ददीधितौ ॥ २४ ॥
अथ भानां सयोगानां करणानां च निर्णयम् ।
कार्याकार्याणि चैतेषां वक्ष्ये नाक्षत्रदीधितौ ॥ २५ ॥
ततः स्मृत्यर्थसारादिनिबंधोक्तं कलौ युगे ।
यत्कार्यं यदकार्यं च वक्ष्यामोऽर्[2]घौघदीधितौ ॥ २६ ॥
निर्णीतास्तिथयः प्राग्याः शुक्लाः कृष्णाश्च तद्गणौ ।
क्रमात्पक्षौ शुक्लकृष्णौ मुख्यो मा एष चंद्रभूः ॥ २७ ॥
मासा द्वादश चांद्राद्यास्तादृशाः साधिकाः क्वचित् ।
चांद्रसंवत्सरो ज्ञेयस्तदारंभोऽथ कथ्यते ॥ २८ ॥

तत्र चांद्रसंवत्सरस्य चैत्रशुक्लप्रतिपद्यारंभः । चांद्रोब्दो मधुशुक्लगप्रतिपदारंभ इति दीपि[3]कोक्तेः । सा चोदयव्यापिनी ग्राह्या । चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि । शुक्लपक्षे समग्रं तु तदा सूर्योदये सति । प्रवर्तयामास तथा कालस्य गणनामपि इति मदनरत्ने ब्रह्मपुराणवचनात् दिनद्वयेऽप्युदयसंबन्धे च पूर्वैव कार्या । वत्सरादौ वसंतादौ बलिराज्ये तथैव च । पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः । इति बृहद्वसिष्ठोक्तेः । चैत्रस्य मलमासत्वे वत्सरारंभनिमित्तं कार्यं तत्रैव कर्तव्यं । तत्रैव वत्सरारंभादिति केचित् । अन्येतु षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः । पूर्वमर्धं परित्यज्य कर्तव्या चोत्तरे क्रिया । इति वचनेन पूर्वमासि कर्तव्यस्य उत्तरत्र कर्तव्यताभिधानात् शुद्धचैत्रप्रतिपद्येव कार्यमित्याहुः ॥

अत्रेदं बोध्यम् । द्विविधं तावदस्यां प्रतिपदि विहितं कर्म किंचित्संवत्सरारंभं निमित्तीकृत्य तैलाभ्यंगादि । यथाह बृहद्वसिष्ठः—वत्सरादौ वसंतादौ बलिराज्ये तथैव च । तैलाभ्यं-

---

१ इदं पद्यार्धमेकस्मिन्पुस्तकेऽधिकं दृश्यते । २ मोऽत्राघदीधितौ इति पाठः ।
३ दीपिकाप्रतिपदोक्तेः इति पाठः ।

गमकुर्वाणो नरकं प्रतिपद्यते। इति। केचित्तु चैत्रशुक्लप्रतिपत्पुरस्कारेण विहितम्। तद्यथा **हेमाद्रौ ब्राह्मे** तामेव तिथिं प्रक्रम्य—तत्र कार्या महाशांतिः सर्वकल्मषनाशिनी। सर्वोत्पातप्रशमनी कलिदुःस्वप्ननाशिनी। तस्यामादौ तु संपूज्यो ब्रह्मा कमलसंभवः। पाद्यार्घ्यपुष्पदीपैश्च वस्त्रालंकारभोजनैः। होमैर्बल्युपहारैश्च तथा ब्राह्मणतर्पणैः। ततः क्रमेण देवेभ्यः पूजा कार्या पृथक् पृथक्। इत्युक्त्वा। ॐनमो ब्रह्मणे तुभ्यं कामाय च महात्मने। नमस्तेस्त्वनिमेषाय त्रुटये च महात्मने। इत्यादीन्। नमस्ते बहुरूपाय विष्णवे परमात्मने। इत्यंतान्मंत्रानुक्त्वोक्तं। अथ किं बहुनोक्तेन मंत्रेणानेन पूजयेत्। प्राङ्मुखोदङ्मुखान्विप्रान्देवानुद्दिश्य पूर्ववत्। इति ब्राह्मणपूजामुक्त्वा अनेनैव तु मंत्रेण स्वाहांतेन पृथक् पृथक्। यविष्ठायाग्नये होमः कर्तव्यः सर्वतृप्तये। शालाशोभा ततः कार्या मंगलालपनं तथा। भोजयित्वा द्विजान्सर्वान्सुहृत्संबंधिबांधवान्। विशेषेण च भोक्तव्यं कार्यश्चापि महोत्सवः। एवं संवत्सरारंभः सर्वसिद्धिप्रवर्तकः। इति। अनेनैवेत्यनेन व्यवहितपठितो नमस्ते बहुरूपायेत्ययं मंत्रः परामृश्यते। ततश्चानेनैव पूजाहोमादिसिद्धेः पूर्वपठिताः सर्वेपि मंत्रा अनावश्यका इति द्योत्यते। इयंच पूजा दमनकेन कार्या। यथोक्तं **हेमाद्रौ देवीपुराणे** ब्रह्मोवाच। चैत्रादौ कारयेत्पूजां मम वत्स यथाविधि। गंधधूपार्चनादानैर्माल्यैश्च दमनोद्भवैः। एवं स पूजयित्वा तु सर्वान्कामानवाप्नुयात्। इति। तत्राभ्यंगादौ संवत्सरारंभस्य निमित्तत्वकथनात् अकरणे दोषश्रवणाच्च नैमित्तिकत्वप्रतीतेः। नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे। इति शास्त्रादधिकशुक्लप्रतिपदि तत्करणमुचितम्। ब्रह्मपूजादिकर्मणस्तु तादृशनैमित्तिकत्वसाधकत्वाभावात् काम्यत्वप्रतीतेश्च शुद्धचैत्रप्रतिपद्यनुष्ठानमिति।

अस्यामेव प्रतिपदि वत्सराधिपपूजोक्ता **ज्योतिर्निबन्धे** यश्चैत्रशुक्लप्रतिपद्दिनवारो नृपो हि सः। तस्य पूजा विधातव्या पताकातोरणादिभिः। प्रतिगृहं ध्वजाकर्म शक्त्या ब्राह्मणतर्पणम्। निरीक्षणं च कर्तव्यं शकुनानां शुभेप्सुभिः। इति। वत्सरादिनामश्रवणफलमप्युक्तं **भविष्ये**—चैत्रे मासि महाबाहो

१ प्रतिपत्पारस्करेण इति पाठः।

पुण्या या प्रतिपत्परा। अस्यां वै निंबपत्राणि प्राश्य संश्रृणुयात्तिथिम्। शकवत्सरभूपमंत्रिणां रसधान्येश्वरमेघपतीनां। श्रवणात्पठनाच्च वै नृणां शुभतां यात्यशुभं सह श्रिया। इति। विष्णुधर्मेषु विद्याव्रतारंभोऽपि। मार्कंडेय उवाच। अष्टपत्रं तु कमलं विन्यसेद्वर्णकैः शुभैः। ब्रह्माणं कर्णिकायां तु तस्य संपूजयेद्विभुं। तस्य कमलस्य। ऋग्वेदं पूर्वपत्रे तु यजुर्वेदं च दक्षिणे। पश्चिमे सामवेदं तु उदगाथर्वणं तथा। आग्नेये च तथांगानि धर्मशास्त्राणि नैर्ऋते। पुराणं चैव वायव्य ईशान्ये न्यायविस्तरौ। एवं विन्यस्य धर्मज्ञः सोपवासस्तु पूजयेत्। चैत्रशुक्लामथारभ्य सोपवासो जितेंद्रियः। सदा प्रतिपदं प्राप्य शुक्लपक्षस्य यादव। संवत्सरे महाभग शुक्लगंधानुलेपनैः। भूरिणा परमान्नेन धूपदीपैरतंद्रितः। संवत्सरांते गां दद्याद्व्रते चीर्णे नरोत्तमः। इदं व्रतं यस्तु करोति राजन्स वेदवित्स्याद्भुवि धर्मनिष्ठः। कृत्वा तथा द्वादश वत्सराणि विरिंचिलोकं पुरुषः प्रयाति। इति। अत्र संवत्सरप्रयोगो विद्याप्राप्त्यर्थं, द्वादशवर्षप्रयोगस्तु ब्रह्मलोकप्राप्त्यर्थमिति विवेकः।

इयमेव प्रतिपत्कल्पादिरपि। यथोक्तं हेमाद्रौ नागरखंडे—अथ कल्पाद्यो राजन्कथ्यंते तिथयः शुभाः। यासु श्राद्धे कृते तृप्तिः पितृणामक्षया भवेत्। चैत्रशुक्लप्रतिपदि श्वेतकल्पः पुराऽभवत्। तस्य शुक्लत्रयोदश्यामुदानः समजायत। कल्पस्तु नारसिंहाख्यः कृष्णायां प्रतिपद्यभूत्। अथ कृष्णत्रयोदश्यां गौरीकल्पोऽप्यकल्पत। वैशाखस्य तृतीयायां शुक्लायां नीललोहितः। चतुर्दश्यां तु शुक्लायां प्रवृत्तो गारुडाभिधः। समानस्तु तृतीयायां कृष्णायामुदपद्यत। माहेश्वरश्चतुर्दश्यां कृष्णपक्षे समागमत्। ज्येष्ठशुक्लतृतीयायां महादेवस्य संभवः। पौर्णमास्यां तु तस्यैव कूर्मः प्रववृते नृप। कृष्णपक्षे तृतीयायामाग्नेयः समपद्यत। तस्यामाषाढकृष्णायां सोमकल्पः समापतत्। श्रावणे शुक्लपंचम्यां रौरवः समपद्यत। तस्यैव कृष्णपंचम्यां मानवः समजायत[1]। षष्ठीं प्रोष्ठपदे शुक्ले प्राप्य प्राणाधिपोऽभवत्। सितेतरायां षष्ठ्यां तु तस्य तत्पुरुषाह्वयः। बृहत्कल्पस्तु सप्तम्यां शुक्लायामाश्विनस्य च। कृष्णायामपि

१ मानवः समपद्यत इति पाठः।

वैकुंठः प्रविवेश विशांपते । कार्तिकस्य सिते षष्ठ्यां कल्पः कंदर्पसंज्ञकः । असितायां पुनर्जज्ञे लक्ष्मीकल्पस्य कल्पना । मार्गे शुक्लनवम्यां तु कल्पः सद्योऽभ्यपद्यत । असितायां च सावित्रीकल्पः प्रारंभमध्यगात्[1] । पौषे दशम्यां शुक्लायामीशानः प्रादुरास च । असितायां मयूरस्य कल्पस्योपक्रमोऽभवत् । एकादश्यां तु शुक्लायां माघे व्यानः प्रजज्ञिवान् । तस्यामेव तमिस्रायां वाराहः प्राप भूतये । सारस्वतस्तु शुक्लायां द्वादश्यां फाल्गुनस्य च । कृष्णायामपि वैराजो विरराज महामनाः । इति त्रिंशदमी कल्पास्तिथयः परमेष्ठिनः । आरंभतिथयस्त्विष्टा उक्ताः पुण्यतमा मया । तासु श्राद्धे कृते ब्रह्मन्नाकल्पं तु विकल्पते । इति ।

एतावतीष्वपि कल्पादिषु श्राद्धं कर्तुमसमर्थेन सप्तस्वेव कर्तव्यमिति द्योतनार्थं शास्त्रांतरमप्युदाहृतं तेनैव **मात्स्ये**—ब्रह्मणो यद्दिनादर्वाक्कल्पस्यादिः प्रकीर्तिता । वैशाखस्य तृतीयायां कृष्णायां फाल्गुनस्य च । पंचमी चैत्रमासस्य तस्यैवान्या तथा परा । तस्यैव चैत्रस्यैव । परा कल्पादिरित्यर्थः । शुक्ला त्रयोदशी माघे कार्तिकस्य तु सप्तमी । नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् । कल्पानामादयो ह्येता दत्तस्याक्षय्यकारकाः । इति ।

इयमेव **मत्स्यजयंती** । यथोक्तं **पुराणसमुच्चये**—मत्स्योऽभूद्धुतभुग्दिने मधुसिते इति । हुतभुक्दिनं तृतीयेति केचित् । तदयुक्तं । यतः अग्निवाचकेन हुतभुक्शब्देन त्रित्वलक्षणाद्वारा तृतीयायां लक्षितायां लक्षितलक्षणा स्यात् । तदपेक्षयाऽग्निदेवत्यतया प्रसिद्धायाः प्रतिपदः षष्ठीसमासेन प्रतिपादनौचित्यात् हुतभुक्दिनं प्रतिपत् । तथाच **मात्स्ये**—कृते च प्रभवे चैत्रे प्रतिपच्छुद्धपक्षगा । रेवत्यां योगविष्कंभे दिवा द्वादश नाडिकाः । मत्स्यरूपी कुमार्यां तु अवतीर्णो हरिः स्वयं । इति । अत्रैव शुक्लतृतीयायां **मत्स्यजयंती**—चैत्रशुक्लतृतीयायां भगवान्मीनरूपधृक् । इति **मात्स्यवचनात्** । आषाढशुक्लैकादशी मत्स्यजयंतीत्वेनोक्ता **वाराहे**—आषाढे शुक्लपक्षे तु एकादश्यां महातिथौ । जयंती मत्स्यनाम्नी तु तस्यां कार्यमुपोषणम् । इति । नचैषां वाक्यानां परस्परविरोधः । कल्पभेदेन व्यवस्थापनात् ।

[1] सावित्रमध्यगात् इति पाठः ।

जन्मकाले षोडशोपचारैः संपूज्यार्घ्यं दद्यात्। तत्र मंत्रः—सत्यव्रतोपदेशाय जिह्ममीनस्वरूपधृक्। प्रलयाब्धिकृतावास गृहाणार्घ्यं नमोस्तुते। इति।

अस्यामेव प्रतिपदि **नवरात्रारंभो मार्कण्डेयपुराणे**-शरत्काले महापूजा क्रियते या च वार्षिकी। वसंतकाले सा प्रोक्ता कार्या सर्वैः शुभार्थिभिः। इति। एतन्निर्णयमाश्विननवरात्रावसरे वक्ष्यामः।

चैत्रे मासि कार्यं **निर्णयामृते मात्स्ये**—वर्जयित्वा मधौ यस्तु दधि क्षीरं घृतैक्षवं। दद्याद्वस्त्राणि सूक्ष्माणि रसवस्त्रफलानि वा। संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति। एतद्गौरीव्रतं नाम भवानीलोकदायकम्। इति।

अत्रैव **प्रपादानारंभ** उक्तोऽ**परार्के**—अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे। पुण्येह्नि विप्रकथिते प्रपादानं समारभेत्। तत्र मंत्रः। प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता। अस्याः प्रदानात्पितरस्तृप्यंतु हि पितामहाः। इति। अनिवार्यं ततो देयं जलं मासचतुष्टयम्। प्रपां दातुमशक्तेन विशेषाद्धर्ममीप्सुना। प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः। ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः। **मंत्रः**—एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः। अस्य प्रदानात्सकला मम संतु मनोरथाः। इति। अनेन विधिना यस्तु धर्मकुंभं प्रयच्छति। प्रपादानफलं सोऽपि लभते नात्र संशयः। इति।

चैत्रशुक्लद्वितीयायां **बालेंदुव्रतं। हेमाद्रौ विष्णुधर्मोत्तरे**—मार्कंडेय उवाच। चैत्रशुक्लद्वितीयायां संप्राप्य नृपसत्तम। दिनावसाने कुर्वीत सम्यक्स्नानं नदीजले। बालेंदुमंडलं कृत्वा पूजयेच्छ्वेतवर्णकैः। श्वेतैः पुष्पैः फलैश्चैव परमान्नेन भूरिणा। द्राक्षेणेक्षुविकारैश्च शुभ्रेण लवणेन च। दिनावसाने देवेशं पूजयेद्वा निशाकरम्। अथवा मंडलं कृत्वा गगनस्थं प्रपूजयेत्। मंडले विकल्पः। बालेंदोर्मंडलं कार्यं पूर्णेंदोर्वा। गगनस्थं ध्यात्वा मंडलस्थं पूजयेदिति तु समम्। घृतेन हवनं कृत्वा नक्तं भुंजीत वाग्यतः। ततस्तैले पाचितं तु भक्षयेन्न सदैव तत्। एतद्व्रतं नरः कृत्वा सम्यक् संवत्सरं शुचिः। सौभाग्यं महदाप्नोति स्वर्गलोकं च गच्छति। एतत्पवित्रं रिपुनाशकारि सौभाग्यदं

रोगहरं च राजन् । प्रोक्तं व्रतं यादववंशमुख्य कार्यं प्रयत्नेन तथा स्त्रियापि । इति । नाममंत्रेण पूजा होमादिश्च १०८। सदैवेति संवत्सरं तैलपक्ववर्जनम् ।

अस्यामेव दमनकेनोमादिपूजनमुक्तम् । निर्णयामृते हेमाद्रौ च देवीपुराणे–उमां शिवं हुताशं च द्वितीयायां च पूजयेत् । हविष्यमन्नं नैवेद्यं देयं गंधार्चनान्वितम् । फलं प्राप्नोति विप्रेंद्र सर्वक्रतुसमुद्भवम् । इति ।

अथ तृतीयायां पार्वतीश्वरयोरांदोलनव्रतं । तत्रैव देवीपुराणे–तृतीयायां मधोर्देवीं शंकरेण समन्विताम् । कुंकुमागरुकर्पूरमणिवस्त्रसुगंधकैः । स्रग्गंधधूपदीपैश्च दमनेन विशेषतः । आंदोलयेत्ततो वत्स शिवोमातुष्टये सदा । रात्रौ जागरणं कार्यं प्रातर्देया च दक्षिणा । हेमवस्त्रान्नपानानि तांबूलानि स्रजस्तथा । सौभाग्याय सदा स्त्रीभिः कार्या पुत्रसुखेप्सुभिः । इति ।

शंकरोमाप्रतिमास्वरूपमुक्तं तत्रैव–सौवर्णी तु उमा कार्या राजतः शंकरस्तथा । चतुर्भुजस्तु देवेशो द्विभुजा तु उमा भवेत् । इति । इदं च व्रतं द्वितीयाविद्धां तृतीयां त्यक्त्वा मुहूर्तमात्रायामपि चतुर्थीयुतायां कार्यमित्यत्र प्रमाणं प्रागेवोक्तं । सत्यपि वैधृत्यादियोगे द्वितीयानिषेध एव बलवान् । तस्य विशेषविषयत्वात् । ततो मासमांदोलयेत् । चैत्रमासकृत्यत्वेन व्रतहेमाद्रौ तदुदाहरणात् । दोलानिर्माणपूर्वकं तद्विधिश्च तत्रैवोक्तः । अद्यप्रभृति ये दोलाक्रीडां पुष्करिणीतटे । वसंते कारयिष्यंति मंडिते त्रिदशांगणे । नेत्रसंज्ञपटीछन्नां पद्मरागविभूषितां । छाद्यकैरुपसंछन्नां विन्यस्तकनकांदुकाम् । विचित्राभरणां भूरिमाभासितदिगंतरां । मायाविद्याधराक्रांतां प्रांतरोपितदर्पणाम् । छत्रचामरसंछन्नां यथाशक्त्यथवा कृतां । अग्निकार्यं ततः कृत्वा दिग्विदिक्षु दिशां वलिं । तस्यामारोपयेद्देवमिष्टं शिष्टजनावृतम् । मूलमंत्रेण देवानां प्राप्तं दोलाधिरोपणम् । पार्श्वस्थो ब्राह्मणो विद्वान्पठेद्वा मंत्रमुत्तमं । मंत्रो विश्वतश्चक्षुरिति । नेत्रपटी कौशेयं । छाद्यकैर्वितानैः । अंदुकाः शृंखलाः । अग्निकार्यं आज्येनाष्टोत्तरशतं व्याहृतिभिर्होमः । प्राच्यै नम इत्यादिभिर्मंत्रैर्लौकिकचरुणा बलिः । देवतानामिति बहुवचनाद्देवतांतरदोलोत्सवेऽप्ययमेव विधिरिति सूच्यते । स्वस्य तत्त-

द्वैवत्यमूलमंत्राध्ययने स्वयमेव तेन तेन मंत्रेण देवतानां दोलाधिरोहणं कुर्यात् । तदभावे द्वितीयः पक्षः ।

अस्यामेव तृतीयायां **श्रीरामचंद्रदोलोत्सवारंभ** उक्तो **रामार्चनचंद्रिकायां**—मधौ शुक्लतृतीयायां जानकीरमणं प्रभुं । राजोपचारैः संपूज्य मासमांदोलयेत्कलौ । दोलारूढं प्रपश्यंति ये कृष्णं मधुमाधवे । अपराधसहस्रैस्तु मुक्तास्ते नात्र संशयः । दोलारूढस्य देवस्य येऽग्रे कुर्वंति जागरम् । सर्वपुण्यफलावाप्तिर्निमिषे निमिषे भवेत् । इति । नित्यं चैतत् । ऊर्जे व्रतं मधौ दोलां श्रावणे तंतुपूजनम् । चैत्रे दमनकारोपमकुर्वाणो व्रजत्यधः । इत्यकरणे दोषश्रवणात् ।

इयं तृतीया मन्वादिरपि । यथोक्तं **हेमाद्रौ मात्स्ये**—आश्वयुक्शुक्लनवमी द्वादशी कार्तिकस्य च । तृतीया चैत्रमासस्य तथा भाद्रपदस्य च । फाल्गुनस्याप्यमावास्या पौषे चैकादशी सिता । श्रावणस्याष्टमी कृष्णा तथाषाढस्य पौर्णिमा । आषाढशुक्लदशमी तथा माघस्य सप्तमी । कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पंचदशी तथा । मन्वंतराद्यश्चैता दत्तस्याक्षयकारकाः । इति । मन्वादिषु चापिंडं श्राद्धमवश्यमनुष्ठेयम् । तत्र मानमवसरे दर्शयिष्यामः ।

अथ चतुर्थ्यां **गणपतेर्दमनकारोपणमुक्तं ज्योतिर्निबंधे भविष्योत्तरे**—चतुर्थी गणनाथस्य दुर्गाया नवमी तथा । विष्णोस्तु नवमी पुण्या तथैव द्वादशी शुभा । त्रयोदशीश्वरस्यैव श्रेष्ठारण्यनिवासिनः । भैरवस्यैकवीराया ज्ञेया भूता फलप्रदा । पूर्णिमा सर्वदेवानां श्रेष्ठा दमनकार्पणे । कारुहस्तगतः पुण्यः प्रोक्तो दमनको बुधैः । आनीय मंदिरं स्नात्वा कृत्वा गंधादिपूजनम् । अर्चयेत्सर्वदेवानां यथाकालं यथातिथि । इति । **निर्णयामृते देवीपुराणे** दमनकपूजाप्रकरणे—गणेशे कारयेत्पूजां लड्डुकादिभिरादरात् । चतुर्थ्यां विघ्ननाशाय सर्वकामसमृद्धये । इति ।

अथ पंचम्यां **लक्ष्मीपूजनमुक्तं हेमाद्रौ भविष्ये**—शुक्लायामथ पंचम्यां चैत्रे मासि शुभानना । श्रीर्विष्णुलोकान्मानुष्यं संप्राप्ता केशवाज्ञया । तस्मात्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुंचति । एषा श्रीपंचमी कार्या विष्णुलोकगतिप्रदा । इति ।

अत्रैव हयपूजाव्रतं **मदनरत्ने पाद्मे पातालखंडे**–उच्चैः- श्रवाः पूजनीयः पंचम्यां चैत्रशुक्लके । तत्रैव पूज्या गंधर्वास्तु- रगाणां तु बांधवाः । पत्रवानर्कपर्णश्च प्रत्युक्तश्च महायशाः । भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी । तथा शालिशिराः श्रीमान्प्रद्युम्नश्च महायशाः । नारदश्च कलिंगश्च गंधर्वश्च हहा- हुहूः । सुबाहुस्तुंबुरुश्चैव तथा चित्ररथः प्रभुः । चित्रांगदश्च विख्यातश्चित्रसेनश्च वीर्यवान् । सिद्धपूर्वश्च बदरीपर्णाशश्च महायशाः । ब्रह्मचारी रतिगुणः सुपर्णोऽतिबलस्तथा । विश्वा- वसुः सुरेंद्रश्च गंधर्वोऽतिपराक्रमः । इत्येते पूजनीयास्तु गंधै- रुच्चावचैस्तथा । मोदकैर्लापिकाभिश्च परमान्नेन चाक्षतैः । दध्ना गुडेन पयसा शालिपिष्टेन भूरिशः । धूपैर्माल्यैस्तथा दीपैर्द्विजा- नां स्वस्तिवाचनैः । एवं हि पूजिताः सम्यक् तुरगाणां तु बांधवाः । बलमायुः प्रयच्छंति संग्रामेष्वपराजयम् । आरोग्यं परमां पुष्टिं तथैव च विधेयतां । नरो वाप्यथवा नारी व्रतमे- तत्समाचरेत् । चैत्रस्य शुक्लपंचम्यां शुचिः स्नाता उपोषिता । प्रभाते पारणं कृत्वा देवविप्रान्प्रपूज्य च । लभते साथवा सोपि स्वमनोरथजं फलम् । इति ।

अत्रैव तिथौ **निर्णयामृते देवीपुराणे**–पंचम्यां पूजये- न्नागाननंताद्यान्महोरगान् । क्षीरं सर्पिस्तु नैवेद्यं देयं सर्वसुखा- वहम् । इति । दमनपूजाविषयमेतदिति **हेमाद्रिः** । नागप्र- तिमालक्षणमुक्तं **मात्स्ये**–नागाश्चैव तु कर्तव्याः खड्गखेटक- धारिणः । अधः सर्पाकृतिस्तेषां नाभेरूर्ध्वं तु मानुषी । फणाश्च मूर्ध्नि कर्तव्या द्विजिह्वा बहवोऽसमाः । इति । असमा विषम- संख्याः ।

अथ **षष्ठ्यां कालहेमाद्रौ ब्राह्मे**–जातः स्कंदश्च षष्ठ्यां तु शुक्लायां चैत्रनामनि । सैनापत्येऽभिषिक्तश्च देवानां ब्रह्मणा स्वयम् । जितवांस्तारकं दैत्यं क्रौंचं शक्त्या बिभेद सः । तस्मा- त्सर्वत्र विधिना स्कंदो माल्यैः सुगंधिभिः । दीपालंकारवस्त्रा- न्नकूटैः संपूज्य एव हि । सकुक्कुटक्रीडनकैर्घंटाचामरदर्पणैः । सर्वासु शुक्लषष्ठीषु कार्यमेव न संशयः । इति । तत्रैव **देवी- पुराणे**–दमनकपूजाप्रकरणे–षष्ठ्यां स्कंदस्य कर्तव्या पूजा सर्वो- पहारिकी । इहैव सुखसौभाग्यमंते स्कंदपुरं व्रजेत् । इति ।

तत्रैव व्रतकांडे कालोत्तरे—ईश्वर उवाच । चैत्रशुक्लात्समारभ्य व्रतार्थमधुनोच्यते । उपोष्य विधिना षष्ठ्यां विशेषात्षण्मुखं यजेत् । मृन्मयीं प्रतिमां रम्यां तदा कुर्याद्विशेषतः । षण्मुखं द्वादशभुजं बालवत्कांचनप्रभम् । मयूरवाहनं देवं सौम्यं लावण्यपूरितम् । शक्तिघंटापताकेषुपाशकुक्कुटभूषितम् । दंडाभयं सवरदं खड्गेषुधिशरासनम् । संपूज्य परया भक्त्या शुक्लपुष्पोपचारकैः । नैवेद्यं गंधवस्त्राणि शुक्लान्येव प्रदापयेत् । ब्राह्मीरसं समादाय कपिलाज्यं पलं तथा । सरस्वत्यणुनामंत्र्य सहस्राष्टोत्तरेण तु । आचार्यं पूजयेद्भक्त्या वस्त्रहेमान्नवाहनैः । ब्राह्मीरसघृतं पश्चाद्व्रतांते पारणं हितम् । मासिमासि प्रकर्तव्यं यावत्संवत्सरावधि । ब्रह्मचर्येण शुचिना वर्षमेकं समाचरेत् । महान्कविर्भवेत्सोपि भुवि वाचस्पतिर्यथा । सकृद्गृह्णाति शास्त्राणि वादिनां मूर्ध्नि तिष्ठति । रक्षोविनायकास्तस्य न हिंसंति कदाचन । स्कंदग्रहा महाघोरास्तथापस्मारदुर्ग्रहाः । न हिंसंति महासेन व्रतस्यास्य प्रभावतः । इदं व्रतोत्तमं श्रेष्ठं कर्तव्यं भूतिवर्धनम्[1] । षण्मुखं १ पार्वतीपुत्रं २ स्कंदं ३ गुहं ४ कुमारकं ५ । कार्तिकेयं ६ तथा बालं ७ तथान्यं क्रौंचसूदनम् ८ । तारकाराति ९ संज्ञं च तथान्यं कृत्तिकासुतम् १० । वैशाखं च ११ विशाखं च १२ मासि मासि प्रपूजयेत् । इति । सरस्वत्यणुः सरस्वतीमंत्रः ।

अथवा सप्तम्यां मदनरत्ने देवीपुराणे—भास्करस्य तु सप्तम्यां पूजां दमनकादिभिः । कृत्वा प्राप्नोति भोगादीन् विगतारिर्महातपाः । इति ।

अथाष्टम्यां निर्णयामृते लैंगे—अशोककलिकाश्चाष्टौ ये पिबंति पुनर्वसौ । चैत्रे मासि सिताष्टम्यां ते न शोकमवाप्नुयुः । इति । प्राशनमंत्रः—त्वामशोक नराभीष्ट मधुमाससमुद्भव । पिबामि शोकसंतप्तो मामशोकं सदा कुरु । इति । अत्र पुनर्वसुयोगः प्राशस्त्यार्थः । अत्रैव भवानीयात्रा काशीखंडे—चैत्राष्टम्यां महायात्रां भवान्याः कारयेत्सुधीः । अष्टाधिकाः प्रकर्तव्याः शतकृत्वः प्रदक्षिणाः । इति । अस्यामेव योगविशेषेण

---

१ भूरिवर्धनम् इति पाठः ।

कार्यमुक्तं विष्णुना—पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी। प्रातस्तु विधिना स्नात्वा वाजपेयफलं लभेत्। इति।

अथ **श्रीरामनवमीव्रतम्**। **अगस्तिसंहितायां**- चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ। मेषे पूषणि संप्राप्ते लग्ने कर्कटकाह्वये। आविरासीत्स कलया कौसल्यायां परः पुमान्। तस्मिन् दिने तु कर्तव्यमुपवासव्रतं सदा। तत्र जागरणं कुर्या- द्रघुनाथपरो भुवि। प्रातर्दशम्यां कृत्वा तु संध्याद्याः कालिकाः[1] क्रियाः। संपूज्य विधिवद्रामं भक्त्या वित्तानुसारतः। ब्राह्मणा- न्भोजयेद्भुत्वा दक्षिणाभिश्च तोषयेत्। गोभूतिलहिरण्याद्यैर्वस्त्रा- लंकरणैस्तथा। रामभक्तान्प्रयत्नेन प्रीणयेत्परया मुदा। एवं यः कुरुते भक्त्या श्रीरामनवमीव्रतम्। अनेकजन्मसिद्धानि पातका- नि बहून्यपि। भस्मीकृत्वा व्रजत्येव तद्विष्णोः परमं पदम्। सर्वेषामप्ययं धर्मो भुक्तिमुक्त्यैकसाधनं। इति। **हेमाद्रौ**—उपो- षणं जागरणं पितॄनुद्दिश्य तर्पणम्। तस्मिन् दिने तु कर्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः। इति। एवं फलश्रवणात् काम्यमेतत्। नित्यं च। यश्च रामनवम्यां तु [2]भुंक्ते मोहाद्विमूढधीः। कुंभी- पाकेषु घोरेषु पच्यते नात्र संशयः। इति। यस्तु रामनवम्यां च मर्त्यो मोहाद्विमूढधीः। उपोषणं न कुरुते कुंभीपाकेषु पच्यते। इत्यकरणे दोषश्रवणात्। अत्र मर्त्य इत्यविशेषश्रवणान्मनुष्यमात्रं- प्रति नित्यमिदम्। लग्ने कर्कटकाह्वय इति मध्याह्नसंकीर्तनात्। सैव मध्याह्नयोगेन पुण्या तु नवमी भवेत्। इति स्मरणाच्च मध्याह्नव्यापिनी ग्राह्या। पुनर्वसुयोगस्तु तत्रैव प्राशस्त्यार्थः। तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम्। तस्मात्तिथिं प्रशं- संति न नक्षत्रं तिथिं विना। इति वचनात्। दिनद्वये त- द्व्याप्तौ तदव्याप्तौ च परैव ग्राह्या। अष्टमीविद्धाया निषेधात्। नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः। उपोषणं नवम्यां च दशम्यां चैव पारणम्। इति। यत्त्वत्र विष्णुपरायणैरिति विष्णुपरस्य प्रकृतरामपरत्वात् राममंत्रदीक्षितपरमिदं पदं गुण- विधौ श्रुतमपि प्रकृते—तस्मिन् दिने तु कर्तव्यमुपवासव्रतं सदा।

१ सकलाः क्रियाः इति पाठः। २ उपोषणं न कुरुते भुंक्ते मोहात् इति पाठः।

इति नित्यप्रयोगविधानाच्चान्वेति कांक्षित्वात्[1] । ततश्च राममंत्रदीक्षितान्प्रत्येव नित्यमिदं न सर्वान्प्रतीति । तदसत् । अवतारिणि प्रसिद्धस्य विष्णुपदस्य प्रकरणमनपेक्ष्य विधेयकोटिक्षिप्तस्वार्थसमर्पणेन चरितार्थस्यावतारविशेषपरत्वे मानाभावात् । वाक्यांतरे श्रुतस्याकांक्षितस्यापि अनुषंगसाधकन्यायाभावे वाक्यांतरेऽन्वयकल्पनायोगाच्च । वत्सरा वा एषा यज्ञस्येत्यत्र श्रुतयज्ञपदस्य प्राचीनमग्नीषोमीयादित्यत्रान्वयासंभववत् सप्तदश वैश्यस्येति वैश्यं प्रति साप्तदश्यविधिपरेण वाक्येन सामान्यप्रवृत्तसाप्तदश्यविधेरिव विष्णुपरायणान्प्रति अष्टमीविद्धाया निषेधपरेण वाक्येन सामान्यप्रवृत्तस्य मर्त्यमात्रं प्रति नित्यत्वावेदकपूर्वोक्तवचस उपसंहारायोगाच्च । अतएव वैष्णवान्प्रति विशिष्य विद्धानिषेधात् अष्टमीविद्धां मध्याह्नव्यापिनीं पुनर्वसुयुक्तामपि परित्यज्य परेद्युस्त्रिमुहूर्तायामप्युपोषणं कार्यमिति केचित्। अन्ये तु कर्मकालव्यापिशास्त्रानुरोधेनैव शास्त्रांतरस्य नेतुमुचितत्वात् । परदिने मध्याह्नव्याप्त्यामसत्यां पूर्वविद्धैव ग्राह्येत्याहुः। अविद्धाया अलाभे तु विद्धायामप्युपोषणं [2]निःसंदिग्धमेव । गुणानुरोधेन प्रधानस्य लोपासंभवात् । अग्निहोत्रहवण्यलाभे निर्वापस्येव । इदंच मलमासे न कार्यं। स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले । इति वचनात् ॥

अथ प्रयोगः । अष्टम्यां प्रातर्नित्यविधिं कृत्वा श्रीरामभक्तं विप्रं संपूज्य प्रार्थयेत् । श्रीरामप्रतिमादानं करिष्येऽहं द्विजोत्तम । तत्राचार्यो भव प्रीतः श्रीरामोऽसि त्वमेव मे । इति । ततः—नवम्यामंगभूतेन एकभक्तेन राघव । इक्ष्वाकुवंशतिलक प्रीतो भव भवप्रिय। इति एकभक्तं संकल्प्य साचार्यो हविष्यं भुंजीत । ततः प्रातर्नित्यविधानानंतरं स्वगृहोत्तरभागे शंखचक्रहनूमद्युतं प्राग्द्वारं । गरुत्मच्छार्ङ्गबाणयुतं दक्षिणद्वारं । गदाखड्गांगदयुतं पश्चिमद्वारं । पद्मस्वस्तिकनीलयुतमुत्तरद्वारं । मध्ये हस्तचतुष्कायतवेदिकायुक्तं सुवितानं सुतोरणं पूजामंडपं विधायोपवाससंकल्पपूर्वकं प्रतिमादानं [3]कल्पयेत् । तत्र मंत्रः । उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव । तेन प्रीतो भव त्वं मे संसारात्त्राहि मां हरे । अस्यां रामनवम्यां तु रामाराधनतत्परः।

१ विधावन्वेतिकांक्षि०। २ निःसंदेह एव इति पाठः। ३ 'संकल्पयेत्' इति पाठः।

उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि । इमां स्वर्णमयीं रामप्रतिमां त्वां प्रयत्नतः । श्रीरामप्रीतये दास्ये रामभक्ताय धीमते। प्रीतो रामो हरत्वाशु पापानि सुबहूनि च । अनेकजन्मसंसिद्धान्यभ्यस्तानि महांत्यपि । इति । वेदिकामध्यलिखितसर्वतोभद्रेऽष्टदले वा कलशप्रतिष्ठादिविधिना पूर्णकुंभं निधाय तदुपरि सौवर्णं राजतं वैणवं वा पीठं वस्त्राच्छन्नं निधाय तत्र सिंहासने श्रीरामप्रतिमामग्न्युत्तारणपूर्वकं संस्थाप्य पाद्यप्रभृतिपुष्पांतोपचारैर्महापूजां कृत्वा । रामस्य जननी चासि रामात्मकमिदं जगत् । अतस्त्वां पूजयिष्यामि लोकमातर्नमोस्तु ते । इति मंत्रेण कौसल्यामभ्यर्च्य । ॐ नमो दशरथायेति दशरथं संपूज्यावरणपूजाप्रभृति पूजां समाप्य मध्याह्ने–फलपुष्पांबुसंपूर्णं गृहीत्वा शंखमुत्तमं । अशोकैरत्नकुसुमैर्युक्तं च तुलसीदलैः । अर्घ्यं दद्यात् । तत्र मंत्रः-दशाननवधार्थाय धर्मसंस्थापनाय च। दानवानां विनाशाय दैत्यानां निधनाय च । परित्राणाय साधूनां जातो रामः स्वयं हरिः । गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ । इति । यामचतुष्टयेऽपि श्रीरामं संपूज्य रात्रौ जागरणं विधाय दशम्यां नित्यपूजांतं कृत्वा मूलमंत्रेणाष्टोत्तरशतपायसाहुतीर्हुत्वा आचार्यं वस्त्रभूषणादिभिः संपूज्य तस्मै प्रतिमां दद्यात् । इमां स्वर्णमयीं रामप्रतिमां समलंकृताम् । चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवात्मने । श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः । इति । अन्येभ्यो यथाशक्ति दक्षिणां दत्वा पारणं कुर्यात् । मंत्रः । तव प्रसादं स्वीकृत्य क्रियते पारणं[2] मया। व्रतेनानेन संतुष्टः स्वामिन्भक्तिं प्रयच्छ मे । इति ।

अत्र च होमसहितप्रतिमादानात्मकमुद्यापनं नित्यतया व्रतांतर्गतत्वेन समर्थं प्रति विधीयते । रामार्चनचंद्रिकोदाहृत–अगस्तिसंहितावचोभ्याम्–वर्षे वर्षे समर्थस्य व्रतेनैव प्रपूर्णता । न तस्योद्यापनं किंचिद्व्रतादन्यद्विधीयते । सर्वत्र तस्य पूर्त्यर्थं सदा रामव्रतं चरेत् । नान्येनास्याविधवत्पूर्तिरनेनास्य प्रपूर्णता। इति। अत्र व्रतशब्देन प्रतिमायाः संकल्पपूर्वकं दानमेवोच्यते। तदंगत्वेन होमोऽपि लभ्यते। अतएवाकिंचनं प्रति होमदानरहितं व्रतमुपदिश्य तत्रैवोक्तं । शक्तस्य यद्व्रतं प्रोक्तमशक्तोद्यापनं च तत्।

१ अशोकचूतेत्यपि पाठः । २ पारणा मया इति पाठः ।

तदपि स्याद्यथाशक्ति सांगं तु सकलं तदा । एकामपि नरो भक्त्या श्रीरामनवमीं मुने । उपोष्य कृतकृत्यः स्यात्सर्वपापैः प्रमुच्यते । इति । एतदंते च चंद्रिकोक्तिः–अपिशब्दादशक्तस्य पूर्त्यै दानं तु सूचितं । इति अकिंचनव्रतोद्यापनं सूचितमिति । अतोऽसमर्थेन कस्यांचिदप्येकस्यां नवम्यामुद्यापनत्वेन सहोमप्रतिमादानं कार्यं । समर्थेन प्रतिनवमि । अनेनैवाशयेनोक्तं लैंगे—पूजितां प्रतिमां तस्मै दत्त्वा संपूर्णतां तथा । वाचयेदिति प्रकृत्य–उद्यापनविधिं प्रोक्तं श्रीरामप्रीतिदं प्रिये । इति । अत्र प्रीतिदं विधिं तथा वाचयेदित्यन्वयः ।

अथ शक्ताशक्तयोर्होमादिप्रयोगः । दशम्यां देशकालौ संकीर्त्य श्रीरामप्रीत्यर्थं श्रीरामनवमीव्रतांगं साज्यपायसहोमं करिष्ये इति शक्तः संकल्पयेत् । अशक्तस्तु अस्यांकिंचिन्नवम्यां सोद्यापनं रामनवमीव्रतं करिष्ये इति संकल्प्य शक्तवन्नवमीकृत्यांतं कृत्वा दशम्यां संकल्पयेत् । श्रीरामनवमीव्रतोद्यापनांगं साज्यपायसहोमं करिष्ये इति । ततः पद्मकुंडे स्थंडिले वाऽग्निं प्रतिष्ठाप्याऽग्निध्यानांतेऽन्वादध्यात् । चक्षुषी आज्येनेत्यंते श्रीराममष्टोत्तरशतसंख्याभिः साज्यपायसाहुतिभिः, सीतां रामस्य जननीं दशरथं हृदयं शिरः शिखां कवचं नेत्रं अस्त्रं हनुमंतं सुग्रीवं भरतं बिभीषणं लक्ष्मणं अंगदं शत्रुघ्नं जांबवंतं धृष्टिं जयंतं विजयं सुराष्ट्रं राष्ट्रवर्धनं अकोपं अर्धपालं सुमंतं इंद्रं अग्निं यमं निर्ऋतिं वरुणं वायुं कुवेरं ईशानं वज्रं शक्तिं दंडं खड्गं पाशं अंकुशं गदां शूलं इत्येकचत्वारिंशद्देवताः प्रत्येकमष्टाविंशतिसंख्याभिः साज्यपायसाहुतिभिः शेषेण स्विष्टकृतमित्यादि । नचावरणदेवताभ्यो होमे मानाभावः, सत्त्वे वावशिष्टदेवताभ्योऽपि होमः किं न स्यादिति वाच्यं । स्कांदे–रामनवमीप्रकरणे रामजननीप्रभृत्यस्त्रांता एव देवताः पूज्यत्वेनानुक्रम्य होमावसरे–ततो होमं प्रकुर्वीत मूलमंत्रेण मंत्रवित् । पूर्वोक्तपद्मपीठे वा स्थंडिले वा यथाविधि । लौकिकेऽग्नौ विधानेन शतमष्टोत्तरमिति पठितवाक्ये यथाविधि विधानेनेत्यनयोरपौनरुक्त्याय पूजागतांगावरणदेवतासाहित्यप्रापणार्थमेकं । अपरं तु स्थालीपाकतंत्रप्रापणार्थमित्याश्रयणात् । रामार्चनचंद्रिकायामपि

१ वशिष्ठा इति पाठः ।

पठितेष्वीदृशवाक्येषु तथैवाश्रयणौचित्याच्च । शौनकोक्तरजो-
दर्शनशांतौ इंद्राणींद्रयोरिव प्रधानहोमविधिनैवांगदेवताभ्योऽपि
होमाक्षेपसंभवाच्च निर्वापे श्रीराममुद्दिश्य तूष्णीं चतुरो मुष्टी-
न्निरुप्येतरदेवताभ्यः सीतायै त्वा जुष्टं निर्वपामि रामस्यजनन्यै
त्वा जुष्टं निर्वपामीत्येवं चतुरश्चतुरो मुष्टीन्निर्वपेत् । तथैव सीतायै
त्वा जुष्टं प्रोक्षामीति मंत्रैः प्रतिदैवतं चतुःसंख्यं प्रोक्षणम् ।
ततः पत्न्या त्रिःफलीकृतानां तंडुलानां पयसि श्रपणं । आज्येन
सह पायसपर्यग्निकरणं च । आज्यभागांते अष्टोत्तरशतसंख्याहु-
तिपर्याप्तं साज्यपायसं श्रीरामाय । प्रतिदैवतमष्टाविंशतिसंख्याहु-
तिपर्याप्तं साज्यपायसं सीतायै रामस्यजनन्यै दशरथाय हृदयाय
शिरसे शिखायै कवचाय नेत्राय अस्त्राय हनुमते सुग्रीवाय
भरताय बिभीषणाय लक्ष्मणाय अंगदाय शत्रुघ्नाय जांबवते
धृष्टये जयंताय विजयाय सुराष्ट्राय राष्ट्रवर्धनाय अकोपाय धर्म-
पालाय सुमंताय इंद्राय अग्नये यमाय निर्ऋतये वरुणाय वाय-
वे कुबेराय ईशानाय वज्राय शक्तये दंडाय खड्गाय पाशाय
अंकुशाय गदायै शूलाय नममेति साक्षतजलेन यजमानस्त्यागं
कुर्यात् । ततः षडक्षरस्य ऋष्यादिस्मरणपूर्वकं तेनाष्टोत्तरशत-
संख्यः साज्यपायसहोमः कार्यः । करणीयो वाचार्यादिहस्तेन ।
षडक्षरदीक्षारहितस्तु पूजामिव होममपि वैदिकमंत्रेण नाममं-
त्रेण वा कुर्यात् । वैदिकपक्षे—तद्विष्णोरिति मंत्रस्य मधोतिथि-
र्विष्णुर्गायत्री । रामनवमीव्रतांगसाज्यपायसहोमे विनियोग
इति समर्थस्य । रामनवमीव्रतोद्यापनांगसाज्यपायसहोमे विनि-
योग इति असमर्थस्य । तद्विष्णोः० राततं स्वाहेति होमः कार्यः ।
द्वितीयपक्षे ॐ श्रीरामाय स्वाहेति । ततः ॐ सीतायै स्वाहेत्येव
प्रणवादिस्वाहांतैरेकचत्वारिंशन्नाममंत्रैः प्रत्येकमष्टाविंशतिसं-
ख्याकाः साज्यपायसाहुतीर्हुत्वा । स्विष्टकृदादिपूर्णपात्रनिनयनांते
कृते संस्थाजपेनोपस्थाय परिस्तरणविसर्जनादिविभूतिधारणांतं
कर्म कृत्वा आचार्यस्य चरणक्षालनपूर्वकं वस्त्रगंधाक्षतपुष्पैः
कुंडलाभ्यां सरत्नाभ्यां सरत्नांगुलीयैश्च पूजां कृत्वा प्रतिमादानं
तस्मै कुर्यात् । तत्र कौसल्यादिप्रतिमासत्वे ताभिः सह । तद-
सत्त्वे तु केवलां रामप्रतिमां पूजोपस्करसहितां चित्रवस्त्रयुगच्छन्नां
प्राङ्मुख उदङ्मुखाय दद्यात् पूर्वोक्तमंत्रेण चंद्रिकोदाहृतेन ।

स्कांदे तु—इमां स्वर्णमयीं रामप्रतिमामर्हणान्वितां । चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते । श्रीरामप्रीतये दास्ये यथोक्तफलसिद्धये । दानेनानेन सुप्रीतस्तुष्टो भव मम प्रभो । इति पाठः । आचार्यो देवस्यत्वेति प्रतिगृह्य स्वस्तीति ब्रूयात् । ततः अशक्तौ तन्निष्क्रयं सुवर्णं वा दक्षिणां दद्यात् । कृतस्य प्रतिमादानस्य पूर्णतासिध्यर्थं इमां दक्षिणां तुभ्यमहं संप्रददे । इति यजमानशाखानुसारेण देवस्यत्वेति कइदमिति वा प्रतिग्रहः । ततो दाता प्रणतो भूत्वा—श्रीरामरूप द्विजोत्तम श्रीरामनवमीव्रतं पूर्णमस्त्विवति ब्रूयात् । असमर्थस्तु इत्थमुक्त्वा शास्त्रप्रोक्त उद्यापनविधिः श्रीरामप्रीतिदोऽस्त्विति च ब्रूयात् । आचार्यो यथोचितमुत्तरं वदेत् । ततोऽन्येभ्यो ब्राह्मणेभ्यः यथाशक्ति भूयसीं सतांवूलदक्षिणां दत्त्वा तद्दानं संकल्प्य वा कृतं कर्म श्रीरामार्पणं कृत्वा पूर्वोक्तमंत्रेण पारणां कुर्यात् । इति समर्थासमर्थयोर्होमादिप्रयोगः ।

प्रतिमानिर्माणे विशेषो लैंगे—सद्यःप्रसूतां कौसल्यां पितरौ भ्रातृभिः सह । सुवर्णेन पृथक्कृत्वा श्रीरामं सीतया सह । लक्षणोक्ताः सुरूपास्ताः पूजयित्वा यथाविधि । इति । सहेति श्रीरामवामांकस्थितत्वं नियम्यते । अतएव चंद्रिकायां प्रतिमानिर्माणमित्थमुक्तं—ततः स्वर्णमयीं रामप्रतिमां पलमानतः । निर्मितां द्विभुजां दिव्यां वामांकस्थितजानकीम् । विभ्रतीं दक्षिणकरे ज्ञानमुद्रां महामुने । चापेनात्मकरेणाराद्देवीमालापसंस्थितां(?) । सिंहासने राजतेत्र पलद्वयविनिर्मिते । अशक्तो यो महाभाग तस्य वित्तानुसारतः । पलेनार्धतदर्धेन तदर्धार्धेन वा पुनः । ततोप्यशक्तौ रौप्येण कारयेद्रघुनंदनम् । लोहेन निर्मितं वापि शिलया दारुणापि वा । यद्वा लेख्यं विलेप्यं वा मातुरंकगतं हरिं । दक्षिणांगे दशरथं पुत्रान्वेषणतत्परं । पार्श्वे भरतशत्रुघ्नौ तालवृंतकरावुभौ । पृष्ठतो लक्ष्मणं देवं संछन्नं कनकप्रभम् । अग्रेऽप्यग्रं हनूमंतं रामानुग्रहकांक्षिणम् । वित्तशाठ्यमकृत्वैव मूर्तीः कुर्यात्प्रयत्नतः । इति । अशक्तिनिमित्ते रौप्यादिमयप्रतिमानिर्माणे इमां रूप्यमयीमिति दानमंत्रोहः । नैमित्तिक(?)फलं चमसे सोमं ते क्रीणामीत्यत्र फलानि ते क्रीणामीत्यूहवत् । लोहं ताम्रं तदा ताम्रमयीमिति । सर्वतोभद्रपक्षे तन्निर्माणं तत्रत्यदेवतापूज-

नं च समंत्रमनंतव्रतोद्यापनप्रकरणे द्रष्टव्यं । पद्मकुंडपक्षे तन्नि-र्माणं माघकृत्ये लक्षहोमप्रकरणे द्रष्टव्यम् । वेदिकोपरि सर्वतो-भद्रं तत्र कलशं संस्थाप्य तदुपरि सुवर्णादिधातुमये वैल्वे वा पीठे सदशं वस्त्रयुग्मं निधाय तत्र षट्कोणमालिख्य तत्र सिं-हासनं निधाय तत्र पीठपूर्वकं पूजा कार्येति क्रमश्चंद्रिकोक्तो बोध्यः । इति कौस्तुभे सोद्यापनं रामनवमीव्रतम् ॥ अस्यां पारणायां दशम्या लंघनं न कर्तव्यं । एकादशीव्रतपारणायामिव द्वादश्याः । दशम्यादिषु वृद्धिश्चेद्विद्धा त्याज्यैव वैष्णवैः । तद-न्येषां तु सर्वेषां व्रतं तत्रैव निश्चितं । दशम्यामेवेत्येवशब्देन दशमीं नैव लंघयेदिति **रामार्चनचंद्रिकायां** ।

अस्यामेव नवम्यां आश्विनशुक्लनवम्यामिव देवीपूजनसहिता नवरात्रव्रतसमाप्तिरुक्ता **निर्णयामृते** । तत्र निर्णयं चाश्वि-ननवरात्रावसरे वक्ष्यामः । अत्रैव दुर्गाया दमनेन पूजनं प्रा-गुदाहृतवचनात् ।

अथ दशम्यां **धर्मराजस्य** दमनकेन पूजनमुक्तं **निर्णया-मृते देवीपुराणे**—धर्मराजं दशम्यां तु पूजयित्वा सुगंधिभिः । विगतारिर्निरातंक इह चांते परं पदं । इति । प्राप्नुयादिति शेषः । अथैकादश्यां **ऋषीणां** दमनकपूजोक्ता **हेमाद्रौ देवी-पुराणे**—एकादश्यां ऋषेः पूजा कार्या सर्वोपहारिकी । धनवा-न्पुत्रवान् कांत ऋषिलोके महीयते । इति ।

अस्यामेव **श्रीकृष्णदोलोत्सवः**।—चैत्रमासस्य शुक्लाया-मेकादश्यां तु वैष्णवैः । आंदोलनीयो देवेशः सलक्ष्मीको महो-त्सवैः । दमनेनार्चयित्वा च रात्रौ जागरणं चरेत् । इति **मद-नरत्ने** ब्राह्मवचनात् । एतन्महिमा चोक्तो **गारुडे**—दोला-रूढं प्रपश्यंति कृष्णं कलिमलापहम् । अपराधसहस्रैस्तु मु-क्तास्ते घूर्णने कृते । आंदोलनदिने प्राप्ते रुद्रेण सहिताः सुराः । कुर्वंति प्रांगणे नृत्यं गीतं वाद्यं च हर्षिताः । तावत्तिष्ठंति पा-पानि जन्मकोटिकृतान्यपि । यावन्नांदोलयेद्भूप कृष्णं कंसवि-नाशिनं । दोलास्थितस्य देवस्य येऽग्रे कुर्वंति जागरं । सर्वपु-ण्यफलावाप्तिर्निमेषेणैव जायते । दोलास्थितं तु ये कृष्णं प-श्यंति मधुमाधवे । क्रीडंते विष्णुना सार्धं वैकुंठे देवपूजिताः ।

तस्मात्सर्वप्रयत्नेन दोलायात्रामहोत्सवः । कार्यः सर्वफलावाप्त्यै सर्वपापहरः शुभः । इति ।

अथ तत्रैव द्वादश्यां **दमनोत्सवः**। चैत्रे मासि तथा विष्णोः कार्यो दमनकोत्सवः । वैष्णवैर्विष्णुभक्त्या च जनतानंदवर्धनः । देवानंदसमुद्भूता दिव्या दमनमंजरी । निवेद्या विष्णवे भक्त्या सर्वपुण्यफलेप्सुभिः । इति । **रामार्चनचंद्रिकायां**—द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवैः । बौधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरे । पारणाहे न लभ्येत द्वादशी घटिकापि चेत् । तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे । इति । माधवे दमनारोपो मधौ न विहितो यदि । वैशाख्यां श्रावणे भाद्रे कर्तव्यं वा तदर्पणं । इति च ।

**अथ प्रयोगः** । उपवासदिने प्रातःस्नानादि नित्यपूजांतं निर्वर्त्य[1] दमनकारामं गत्वा क्रयेण तमादाय चंदनादिना तत्रैव तं पूजयेत् । श्रीकृष्णपूजार्थं त्वां नेष्यामि इति प्रार्थ्य प्रणमेत् यथादैवतमन्यत्रोहः । तत उत्पाट्य कारुहस्ते दत्वा तस्मै मूल्यदानपूर्वकं तत आदाय पंचगव्येनाभिषिच्य शुद्धोदकेन प्रक्षाल्य अशोकमूले स्थंडिले स्थापयित्वा तस्मिन्दमनके अशोककालवसंतकामान् गंधादिभिः संपूजयेत् । शुचौ देशे काममात्रं पूजयेदित्यन्ये । अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन । शोकार्तिं हर मे नित्यमानंदं जनयस्व मे । इत्यशोकं । त्रुट्यादिकालपर्यंतः कालरूपो महाबलः । कालते चैव यः सर्वं तस्मै कालात्मने नमः । इति कालं। वसंताय नमस्तुभ्यं वृक्षगुल्मलताप्रिय । सहस्रसुखसंवाह कालरूप नमोऽस्तु ते । इति वसंतं । नमोस्तु पुष्पबाणाय जगदाह्लादकारिणे। मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय ते । इति कामं । एवं चतुरो देवांस्तत्र संपूज्य । कामभस्मसमुद्भूत रतिबाष्पपरिप्लुत । ऋषिगंधर्वदेवादिविमोहक नमोऽस्तु ते । इति दमनकमुपतिष्ठेत् । ततः ॐ कामाय नमः इति मंत्रेण सपरिवारमन्मथरूपिणं दमनं गंधादिभिस्तत एवोद्धूतदमनेन च पूजयेत् । ततो धौतवाससाच्छाद्य नवे वैणवे पटले निधाय मंगलगीतपुरुषसूक्तादिवेदघोषेण स्वगृहमानयेत् । ततो रात्रौ देवं संपूज्य तदनुज्ञया दमनाधिवासनं कुर्यात् ।

---

१ पूजांतं कृत्वा ।

तदित्थं । देवस्य पुरतः स्थंडिलमुपलिप्य तत्राष्टदलं कमलं कृत्वा सितपीतकृष्णरक्तवर्णैः संपूर्य तद्बहिश्चतुष्कोणं विधाय पीतवर्णेन संपूर्य तद्बहिर्वर्तुलं मंडलत्रयं विधाय श्वेतरक्तपीतैः संपूर्य तद्बहिश्चतुष्कोणं विधाय रक्तवर्णेन संपूरयेत् । सर्वतो भद्रं वा संपादयेत् । तत्प्रकारं चानंतव्रतोद्यापने वक्ष्यामः । उपरि पंचवर्णं वितानं कुर्यात् । उक्तमंडले शुद्धोदकपूर्णं हेमरत्नफलयुतं कुंभं निधाय तस्मिन्दमनपटलं स्थाप्य—पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः । दमन त्वमिहागच्छ सांनिध्यं कुरु ते नमः । इति दमनके तद्देवतां पूजार्थमावाह्य प्रागादिदिक्षु क्लींपूर्वकनमोंतकामदेव—भस्मशरीर—अनंग—मन्मथ—वसंतसख-स्मरे-क्षुचाप-पुष्पबाणपदैः प्रत्येकं ह्रींपूर्वकनमोंतरतिपदयुतैः कामं गंधादिभिः पूजयेत् । ततः ॐतत्पुरुषाय विद्महे कामदेवाय धीमहि । तन्नोऽनंगः प्रचोदयात् । इति कामगायत्र्या दमनमष्टोत्तरशतमभिमंत्र्य गंधादिभिः संपूज्य हृदयमंत्रेण पुष्पांजलिं निवेद्य । ॐनमोस्तु पुष्पबाणाय जगदाह्लादकारिणे । मन्मथाय जगन्नेत्रे रतिप्रिय नमोस्तु ते । इति नमस्कुर्यात् । ततः क्षीरोदधिमहानागशय्यावस्थितविग्रह । प्रातस्त्वां पूजयिष्यामि संनिधौ भव ते नमः । इति परमेश्वरं प्राथ्र्य पुष्पांजलिं दत्वा । दमनं सर्वतो रक्षन् गीतादिना रात्रिमतिवाहयेत् । इत्यधिवासनं ।

प्रातर्नित्यपूजां विधाय पुनरनेकोपचारैः संपूज्य सदूर्वगंधाक्षतफलां दमनमंजरीं मूलेनाभिमंत्र्य कराभ्यां गृहीत्वा । देवदेव जगन्नाथ वांछितार्थप्रदायक । हृत्स्थान्पूरय मे विष्णो कामान्कामेश्वरीप्रिय । इमं दमनकं देव गृहाण मदनुग्रहात् । इमां सांवत्सरीं पूजां भगवन्परिपूरय । इति जप्त्वा मूलेन भगवत्यर्पयेत् । ततो यथाशोभं दमनकमारोप्य भगवंतं प्रार्थयेत् । मणिविद्रुममालाभिर्मंदारकुसुमादिभिः । इयं सांवत्सरी पूजा तवास्तु गरुडध्वज । वनमालां यथा देव कौस्तुभं सततं हृदि । तद्वद्दामनकीं मालां पूजां च हृदये वह । जानताजानता वापि न कृतं यत्तवार्चनम् । तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते । जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन । नमस्तेस्तु हृषीकेश महापुरुषपूर्वज । मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया

देव परिपूर्णं तदस्तु मे। इति। ततो देवं नमस्कृत्य गुरुं दमनेन वस्त्रादिभिः संपूज्य भगवति कर्म निवेद्य स्वयं च तत्प्रसादत्वेन दमनशेषं धृत्वा द्विजान्संपूज्य भोजयेत्। स्वयं बंधुभिः सह भुंजीत। इति दमनोत्सवः।

अस्यामेव **महाभारते दानधर्मेषु**—अहोरात्रेण द्वादश्यां चैत्रे विष्णुरिति स्मरन्। पौंडरीकमवाप्नोति देवलोकं च गच्छति। इति। अथ त्रयोदश्यां **हेमाद्रौ पाद्मे**—चैत्रशुक्लत्रयोदश्यां मदनं चंपकात्मकं। कृत्वा संपूज्य यत्नेन वीजयेद्व्यजनेन तु। ततः संधुक्षितः कामः पुत्रपौत्रसमृद्धिदः। इति। अस्मिंश्च कंदर्पव्रते त्रयोदशी पूर्वविद्धैव ग्राह्या। होलाका वटपैतृकी वलिदिनं वह्निव्रतोक्ता तिथिर्दूर्वाख्या सवृहत्तपा च नवमी दूर्वाव्रते श्रावणी। षष्ठी स्कंदयजौ त्रयोदशतिथिः कामस्य कृष्णाष्टमीत्येताः पूर्वयुता इति दीपिकोक्तेः। अस्यामेवेश्वरस्य दमनेन पूजनं कार्यं। पूर्वोदाहृत**ज्योतिर्निबंध**वचनात्।

अथ चतुर्दश्यां **नृसिंहदोलोत्सवो** नृसिंहाराधन**रत्नमालायां गारुडे**—मधौ शुक्लचतुर्दश्यां नृसिंहं जगतः प्रभुं। राजोपचारैः संपूज्य मासमांदोलयेत्कलौ। दक्षिणाभिमुखं देवं दोलमानं सुरेश्वरं। संपूजितं सकृद्दृष्ट्वा सर्वपापैः प्रमुच्यते। इति। अस्यामेवैकवीराभैरवयोर्दमनकेन पूजनं कार्यम्। प्रागुदाहृतवचनात्। अत्र च कर्मणीयं चतुर्दशी पूर्वविद्धैव ग्राह्या। मधोः श्रावणमासस्य या स्याच्छुक्लचतुर्दशी। सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी। इति **बौधायनोक्तेः**। नान्या शुक्ला कदाचनेति क्वचित् पाठः। नन्वस्माद्वाक्याद्रात्रिव्यापिन्या एव ग्रहणं प्रतीयते नतु पूर्वविद्धायाः। एवंच—निशि भ्रमंति भूतानि शक्तयः शूलभृद्यतः। अतस्तत्र चतुर्दश्यां सत्यां तत्पूजनं भवेत्। इति ब्रह्मवैवर्तवचसः संवादोपि लभ्यत इति चेत्। केचिदाहुः—चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो। इति **स्कांद**वचनात्पूर्वविद्धाया एव ग्राह्यत्वे प्राप्ते—तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी। पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता। इति **नारदीय**वचनेनापोदिते—मधोः श्रावणमासस्येति वचसा त्रयोदशीयुतायाः प्रतिप्रसवः क्रियते। स च यथाप्राप्त्येव भवतीति रात्रिव्यापिनीपदस्य पूर्वविद्धापरत्वमिति। तदसत्।

सामान्यप्रवृत्तस्कांदेतरस्य निशीतिवाक्यस्य— कृष्णपक्षेष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धा प्रकर्तव्येत्यापस्तंबवाक्येनोपसंहारे सति तृतीयैकादशीत्यादि नारदवाक्यस्य स्कांदेतरसामान्यवाक्यापवादत्वासंभवात् । स्कांदवाक्ये च बौधायनवाक्योत्तरप्रवृत्तिकत्वस्य वक्ष्यमाणत्वात् । एतेन पूर्वविद्धात्वे परविद्धात्वे चानियमेन प्राप्ते मधोः श्रावणमासस्येति पूर्वविद्धा नियम्यते, रात्रिव्यापिनीविधौ त्वपूर्वविधिः स्यात् । ततश्च नियमविधित्वं ज्याय इति रात्रिव्यापिनीपदं पूर्वविद्धापरमिति मतमपास्तम् । तत्तद्रुतविधिभिः पूर्वविद्धापरविद्धयोः अनियतप्राप्तावपि कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशीति शुक्लपक्षेष्टमी चैवेति च वार्त्रघ्नीवृधन्वत्योरिव पूर्वविद्धत्वपरविद्धत्वयोर्व्यवस्थायां कृतायां चैत्रश्रावणशुक्लचतुर्दशीसाध्यकर्मण्यपि परविद्धाया एव नित्यप्राप्तत्वेन पूर्वविद्धाया अनियतप्राप्त्यभावेन नियमविधित्वासंभवात् । अन्ये तु मधोः श्रावणमासस्येति वाक्ये स्कांदवाक्यप्राप्तमेव चतुर्दश्याः पूर्वविद्धत्वमनूद्यते । तच्च रात्रिव्यापित्वे सत्येव भवतीति रात्रिव्यापिनी तिथ्या ? प्राप्तपूर्वविद्धत्वानुवादः परा पूर्वाह्णगामिनीत्येतावदेव विधीयते । तस्यात्यंतप्राप्तत्वादित्याहुः । तदपि तुच्छम् । चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो । मम भक्तैर्महाबाहो भवेद्या चापराह्णिकी । दर्शविद्धा न कर्तव्या राकाविद्धा कदाचन । इति स्कांदवाक्यं हि पक्षद्वयेपि न चतुर्दश्याः पूर्वविद्धत्वविधिपरं । कृष्णचतुर्दश्यामापस्तंबवाक्येन पूर्वविद्धत्वस्य नित्यप्राप्तत्वात् । अतः पूर्वविद्धानुवादेनापराह्णिकत्वनियमपरं ।—प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी । इति वचनवत् । अस्मिन् वाक्ये हि युग्मवाक्यप्राप्तशुक्लप्रतिपद्गतपूर्वविद्धत्वानुवादेन आपराह्णिकत्वनियमपरत्वादेव शुक्लप्रतिपद्विषयत्वमेवांगीकृतं हेमाद्रिप्रभृतिभिः । नचैकमेव स्कांदवाक्यं कृष्णपूर्वविद्धत्वानुवादेनापराह्णिकत्वनियमपरं । शुक्लायां तु तद्विशिष्टपूर्वविद्धत्वविधिपरमिति वैरूप्यं संभवतीति शुक्लायामप्यापराह्णिकत्वमात्रं विधातुं पूर्वविद्धत्वप्राप्तिमपेक्षमाणं स्कांदवचो मधोः श्रावणमासस्येति वाक्यादन्यतश्चेत्प्राप्त्यसंभवेन बलात्तस्यैव बौधायनीयशास्त्रस्य पूर्वविद्धाविधिपरत्वमापादयतीति रात्रिव्यापिनीपदस्य पूर्वविद्धापरत्वं वक्तुमुचितम् ।

परा पूर्वाह्णगामिनीत्येतत्तु आपस्तंबवाक्यप्राप्तशुक्लचतुर्दश्यंतरगतपरविद्धत्वस्य न गिरागिरेतिवदनुवाद इति बौधायनीयवाक्यस्य स्कांदवाक्यप्रवृत्तिपूर्वकप्रवृत्तिताया अत्यंतानुचितत्वात् । तत्सिद्धं चैत्रशुक्लचतुर्दश्या अपराह्णव्यापिन्याः पूर्वविद्धायाएव ग्रहणं । अन्यस्याः शुक्लचतुर्दश्याः परविद्धाया एव ग्रहणमिति । अस्यामेव चतुर्दश्यां शिवपूजोत्सवो **निर्णयामृते** देवीपुराणे—चतुर्दश्यां तु कर्पूरकुंकुमागरुचंदनैः । वस्त्रादिमणिभिः पूजा कर्तव्या महती शिवे । वितानध्वजछत्रं च देयं पूज्याश्च मातरः । महत्पुण्यमवाप्नोति अश्वमेधशताधिकम् । इति ।

अस्यामेव **शिवे दमनकारोप** उक्तो **मदनरत्ने स्कांदे**—दमनकचतुर्दशीं वक्ष्यामि हितकाम्यया । लोकानां पुण्यजनिकां सर्वसौख्यप्रदायिकां । तस्माद्दमनकैः पूजा चतुर्दश्यां विधानतः । पूज्यते शंकरो रात्रौ तस्माद्दमनचतुर्दशी । चैत्रशुक्लचतुर्दश्यां यथावत्पूजयेच्छिवम् । प्रासादशोभां कृत्वैव सम्यक्संमार्जनादिभिः । संस्नाप्य विधिवद्देवं क्षीराज्येक्षुरसादिभिः । श्रीखंडागरुकर्पूरैः कुंकुमैश्चानुलेपयेत् । अस्यामेव विशेष उक्तो **हेमाद्रौ वाराहे**—चैत्रे मासि चतुर्दश्यां यः स्नायाच्छिवसंनिधौ । गंगायां तु विशेषेण स न प्रेतोऽभिजायते । इति ।

अस्यामेव पौर्णमास्यां तत्रैव **विष्णुस्मृतौ**—चैत्री चित्रायुता चेत्स्यात्तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोतीति । तत्रैव **वायुपुराणे**—संवत्सरकृतार्चायाः साफल्यायाखिलान्सुरान् । दमनेनार्चयेच्चैत्र्यां विशेषेण सदाशिवम् । इति ।

अस्यामेव **वैशाखस्नानारंभो** विकल्पेनोक्तः **पाद्मे**—मधुमासस्य शुक्लायामेकादश्यामुपोषितः । पंचदश्यां च भो वीर मेषसंक्रमणे नरः । वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया । मधुसूदनमभ्यर्च्य कुर्यात्संकल्पपूर्वकम् । तत्र **मंत्रः**—वैशाखं सकलं मासं मेषसंक्रमणे रवेः । प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः । मधुहंतुः प्रसादेन ब्राह्मणानामनुग्रहात् । निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहं । माधवे मेषगे भानौ मुरारे मधुसूदन । प्रातःस्नानेन मे नाथ फलदो भव पापहन् । इति । पंचदश्यां चेति चकारो वाशब्दार्थे ।

अथ चैत्रकृष्णाष्टम्यां आरब्धव्यं **मदनरत्ने विष्णुधर्मो**-

त्तरे। पुलस्त्य उवाच। शृणु दाल्भ्य परं काम्यं व्रतं संततिं नृणां। यदुपोष्य न विच्छेदः पुत्रपित्रोश्च जायते। कृष्णाष्टम्यां चैत्रमासे स्नातो नियतमानसः। कृष्णमभ्यर्च्य पूजां च देवक्याः कुरुते तु यः। निराहारो नरः पश्चात्कृष्णस्य जगतः पतेः। उपोषितो जपेन्मंत्रं रात्रौ प्रयतमानसः। पूजायां चापि कृष्णस्य सप्तवारं प्रकीर्तयेत्। पाखंडिनो विकर्मस्थान्न भाषेच्चैव नास्तिकान्। प्रभाते च ततः स्नातो दत्वा विप्राय दक्षिणां। भुंजीत कृतपूजस्तु कृष्णस्यैव जगत्पतेः। वैशाखज्येष्ठयोश्चैव पारणे द्वित्रियामिकम्। उपोष्य देवदेवेशं घृतेन स्नापयेद्धरिम्। आषाढे श्रावणे चैव मासि भाद्रपदे तथा। उपोषितो द्वितीये वै पारणं पूर्ववच्चरेत्। द्वितीये यामे—आश्विने कार्तिके मार्गे तृतीये पारणं तथा। पौषे माघे फाल्गुनादौ चतुर्थे द्विजसत्तम। आदिशब्देन चैत्रसंग्रहः। पारणे पारणे पुण्यघृतेन स्नापयेद्धरिं। पुण्यघृतं गोघृतं। ब्राह्मणेभ्यो घृतं दद्यात्तथैव प्रतिपारणम्[1]। कृत्वा व्रतं नाकमनुप्रयाति मानुष्यमासाद्य च निर्वृतिः स्यात्। संतानवृद्धिं च तथामुतेऽसौ यावन्मही सागरमेखलान्ता। इति।

अथ चैत्र कृष्णत्रयोदश्यां वारुणीयोगो **ब्रह्मांडे**—वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी। गंगायां यदि लभ्येत शतसूर्यग्रहैः समा। इति। तथा **शूलपाणौ स्कांदे** इममेव श्लोकं पठित्वा पठंति—शनिवारसमायुक्ता सा महावरुणी मता। गंगायां यदि लभ्येत कोटिसूर्यग्रहैः समा। शुभयोगसमायुक्ता शनौ शतभिषा यदि। महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्। इति चैत्रासिते वारुणऋक्षयोगे त्रयोदशी सूर्यसुतस्य वारे। योगे शुभे सातिमहामहेति गंगाजलेऽर्कग्रहकोटितुल्या।

अथ चतुर्दश्यां कार्यविशेष उक्तो **हेमाद्रौ वाराहे**—चैत्रकृष्णचतुर्दश्यामंगारकदिनं यदि। पिशाचत्वं पुनर्न स्याद्गंगायां स्नानभोजनात्। इति।

अमावास्यायां वह्निव्रतारंभो **हेमाद्रौ विष्णुधर्मोत्तरे**—कृष्णपक्षे पंचदश्यां चैत्रादारभ्य यादव। वह्निसंपूजनं कृत्वा गंधमाल्यान्नसंपदा। तिलहोमं तथा कुर्यान्नाम्ना वह्नेर्नराधिप। संवत्सरांते दद्याच्च सुवर्णं ब्राह्मणाय वै। कृत्वा व्रतं वत्सर-

१ 'प्रतिमासगम्' पाठः।

मेतदिष्टं प्राप्नोति वित्तं सततं यशश्च । धर्मे रतिं रूपमनुत्तमं च कामान्यथेष्टान्पुरुषप्रधानः । इति । येनार्जितानि युधि भूमिपतीन्विजित्य दुर्गाणि दुर्ग्रहतराणि धनैर्युतानि । श्रीवाजबाहदुरसंज्ञनृपस्य तस्य वाचा हरेरिव गिरावनिदेवतुष्ट्यै । योऽनंतदेवकृतमंथनसन्निबंधक्षीराब्धिजोऽथ कमलापतिना धृतो यः । नित्यं निजे हृदि सतां प्रमुदेऽस्तु तस्य चैत्राख्यदीधितिरियं स्मृतिकौस्तुभस्य । इति चैत्रकृत्यं ।

अथ वैशाखकृत्यं निर्णयामृते महाभारते—निश्वरेदेकभक्तं तु वैशाखे यो जितेंद्रियः । प्रातःस्नायी नरः स्त्री वा ज्ञातीनां श्रेष्ठतां व्रजेत् । इति । तथैव वामनपुराणे—गंधमाल्यानि च तथा वैशाखे सुरभीणि च । देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये । इति । निक्षिप्य जलपात्रे तु प्राप्ते माधवसंज्ञके । माधवं येऽर्चयिष्यंति देवतास्ते नरा भुवि । स्वर्णपात्रेथ वा रौप्ये ताम्रे वा मृन्मयेऽपि वा । तोयस्थं योऽर्चयेद्देवं शालग्रामशिलोद्भवं । प्रतिमां यो महाभाग तस्य पुण्यमनंतकम् । वैशाखे मास्यूष्मणोल्पत्वे ज्येष्ठेपीत्थं कार्यमित्युक्तं तत्रैव—तस्माज्ज्येष्ठे सदा भूप तोयस्थं योर्चयेद्धरिं । वीततापो नरस्तिष्ठेद्यावदाभूतसंप्लवं । इति ।

अत्र विशेषो रामार्चनचंद्रिकायां—ज्ञेयः कालविकल्पोऽयमूष्मणस्तारतम्यतः । गंधोदकयुते पात्रे नित्यपूजां समाप्य च । अतिवाह्य दिनं रात्रौ[1] देवं नीत्वा द्विजासनं । पंचोपचारैः संपूज्य तीर्थं प्राश्य विसर्जयेत् । आत्मानं गृहदारादि तेन तीर्थेन पावयेत् । द्वादश्यां तु जले रात्रावर्चयेद्गरुडोक्तितः ॥ द्वादश्यां पूजयेद्रात्रौ जलस्थं जलशायिनम् । इति । तिथितत्वे—ददाति यो हि मेषादौ सक्तूनंबुघटान्वितान् । पितृनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते । इति । अयं च विधिः मेषादाविति मेषसंक्रमणनिमित्तकतया प्रतीयमानत्वात् वैशाखादन्यत्रापि मेषसंक्रमदिने बोध्यः । पाद्मे—तुलसी कृष्णगौराख्या तयाभ्यर्च्य मधुद्विषं । विशेषेण तु वैशाखे नरो नारायणो भवेत् । एकभक्तमथो नक्तमयाचितमतंद्रितः । माधवे मासि यः कुर्याल्लभते सर्वमीप्सितम् । इति । मदनरत्ने स्कान्दे—

---

१ दिने रात्रौ इति पाठः ।

प्रपा कार्या च वैशाखे देवे देया गलंतिका । उपानद्व्यजनछत्र सूक्ष्मवासांसि चंदनं । जलपात्राणि देयानि तथा पुष्पगृहाणि च । पानकानि च पित्र्याणि द्राक्षा रंभाफलान्यपि । इति । पित्र्याणीति पानकविशेषणं ।

वैशाखशुक्लतृतीयायां निर्णयामृते भविष्ये विष्णुपूजोक्ता—वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुं । नारायणं पूजयेत पुष्पधूपविलेपनैः । इति । तत्रैव विशेषः—वैशाखे शुक्लपक्षे च तृतीयायां तथैव च । गंगातोयैर्नरः स्नात्वा मुच्यते सर्वकिल्बिषैः। तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् । यवान्दद्याद्विजातिभ्यः प्रयतः प्राशयेद्यवान् । इति । विष्णुधर्मोत्तरे—यः पश्यति तृतीयायां कृष्णं चंदनभूषितम् । वैशाखस्य सिते पक्षे स यात्यच्युतमंदिरं । इति । तथा मदनरत्ने भविष्ये—कृष्ण उवाच । बहुनाऽत्र किमुक्तेन किं बह्वक्षरमालया । वैशाखस्य सितामेकां तृतीयामक्षयां[1] शृणु । यस्यां स्नानं जपो होमः स्वाध्यायः पितृतर्पणम् । दानं च क्रियते किंचित्तत्सर्वं स्यादिहाक्षयं । आदिः कृतयुगस्येयं युगादिस्तेन कथ्यते । सर्वपापप्रशमनी सर्वसौख्यप्रदायिनी । पुरा महोदये पार्थ वणिगासीत्स निर्धनः । प्रियंवदः सत्यवृत्तिर्देवब्राह्मणपूजकः । पुण्याख्यानैकचित्तोऽभूत्कुटुंबव्याकुलोऽपि सन् । तेन श्रुता वाच्यमाना तृतीया रोहिणीयुता । यदा स्याद्बुधसंयुक्ता तदा सा सुमहाफला । तस्यां यद्दीयते किंचिदक्षयं स्यात्तदेव हि। इति श्रुत्वा स गंगायां संतर्प्य पितृदेवताः । गृहमागत्य करकान्सान्नानुदकसंयुतान् । अन्नपूर्णान्बृहत्कुंभान्जलेन विमलेन च। यवगोधूमचणकान्सक्तून्दध्योदनं तथा । इक्षुक्षीरविकारांश्च सहिरण्यांश्च शक्तितः । शुचिः शुद्धेन मनसा ब्राह्मणेभ्यो ददौ वणिक् । भार्यया वार्यमाणोऽपि कुटुंबासक्तचित्तया । तावत्तस्थौ स्थिरे सत्वे मत्वा सर्वं विनश्वरं । धर्मासक्तमतिः पार्थ कालेन बहुना ततः । जगाम पंचत्वमसौ वासुदेवमनुस्मरन् । ततः स क्षत्रियो जातः कुशावत्यां युधिष्ठिर । बभूव चाक्षया तस्य समृद्धिर्धर्मसंयुता । इयाज स महायज्ञैः समाप्तवरदक्षिणैः । स ददौ गोहिरण्यादि दानान्यन्यान्यहर्निशं । बुभुजे कामतो भो-

1 तृतीयालक्षणं.

गान्दीनांधान्पूरयद्धनैः। तथाप्यक्षयमेवास्य क्षयं याति न तद्धनं। श्रद्धापूर्वं तृतीयायां दत्तं च विभवं विना। इत्येतत्ते समाख्यातं श्रूयतामत्र यो विधिः। तृतीयायां समासाद्य स्नात्वा संतर्प्य देवताः। एकभक्तं तदा कुर्याद्वासुदेवं प्रपूजयेत्। उदकुंभान्सकरकान्सान्नान्सर्वरसैः सह। ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते। छत्रोपानत्प्रदानं च गोभूकांचनवाससां। यद्यदिष्टतमं चान्यत्तद्देयमविशंकया। एतत्ते सर्वमाख्यातं किमन्यच्छ्रोतुमिच्छसि। अनाख्येयं न मे किंचिदस्ति स्वस्त्यस्तु तेऽनघ। अस्यां तिथौ क्षयमुपैति हुतं न दत्तं तेनाक्षयेति कथिता मुनिभिस्तृतीया। उद्दिश्य दैवतपितॄन्क्रियते मनुष्यैस्तच्चाक्षयं भवति भारत सर्वमेव। इति।

इयमेव तृतीया **युगादिरपि**—नवम्यां शुक्लपक्षस्य कार्तिके निरगात्कृतं। त्रेता सिततृतीयायां वैशाखे समपद्यत। दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगं। कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः। इति निर्णयामृते भविष्योत्तरवचनात्। ब्राह्मे त्वियं कृतादिरित्युक्तं—वैशाखे मासि शुक्लायां तृतीयायां जनार्दनः। ब्रह्मलोकात्त्रिपथगां पृथिव्यामवतारयत्। यवानुत्पादयामास युगं चारब्धवान्कृतं। इति। नह्यत्र कश्चिद्विरोधः। कल्पभेदेन व्यवस्थापनात्।

युगादित्वादिह **श्राद्धमनुष्ठेयं**। कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु। हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत्। इति तत्रैव मात्स्यवचनात्। श्राद्धासंभवे तिलतर्पणमप्यत्र कार्यं। पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः। श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतन्मुनयो वदंति। इति तत्रैव विष्णुपुराणवचनात्। अत्रच शुक्लयुगादिकार्यं पूर्वाह्णेऽनुष्ठेयं कृष्णयुगादिकार्यं त्वपराह्णे—द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः। शुक्ले पूर्वाह्णिके ज्ञेये कृष्णे चैवापराह्णिके। इति तत्रैव भविष्यवचनात्। अत्र शुक्लयुगादिश्राद्धे पूर्वाह्णो नियम्यते नतु तद्विहिते दैवेपि कर्मणि। तत्र सामान्यशास्त्रादेव पूर्वाह्णस्य प्राप्तत्वात्। एवं चतुर्थपादे कृष्णयुगादिविहिते दैवे कर्मणि अपराह्णो नियम्यते नतु श्राद्धे। तत्राप-

१ 'यद्वृत्तं विभवं'.

राह्नस्यातिदेशशास्त्रादेव प्राप्तेः। यश्च कर्मकालः तद्व्यापिनी तिथिः तत्रतत्र ग्राह्येति न्यायसहकृतेन कर्मणो यस्य यः काल इति शास्त्रेणैव प्राप्तिसंभवात् तिथिगतपूर्वाह्निकत्वापराह्निकत्वेऽनूद्येते। यत्तु कालादर्शकारेणोक्तं—अमावास्यावद्युगादिमन्वादयोऽपराह्नव्यापिन्यो ग्राह्या इति। अनुसृतं च निर्णयामृतकारेण। तच्छुक्लयुगाद्योः मुख्यकालनिर्णयायोक्तशास्त्रविरोधादप्रभवदपि गौणकालनिर्णयोपयोगि बोध्यं। तथाहि याजमानमिति विशेषसमाख्यया बाधिताप्याध्वर्यवसमाख्या आज्यावेक्षणादौ प्रवासादिना यजमानकर्तृकत्वासंभवेऽध्वर्युकर्तृकत्वं प्रापयति। बाधकाभावे वाक्यस्य निरपवादत्वात्। तथामावास्याश्राद्धादतिदेशप्राप्तस्यापराह्नकालस्य शुक्लयुगादिश्राद्धे उक्तवचनोपदिष्टपूर्वाह्नकालेन बाधेपि दैवान्मानुषाद्वा कारणात्पूर्वाह्णे तदनुष्ठानासंभवेऽतिदेशप्राप्तापराह्णस्यांगत्वं[1] भवत्येव। अतस्तस्यां दशायां पूर्वाह्णसंनिकृष्टमपि मध्याह्नमुल्लंघ्यापराह्णएव श्राद्धमनुष्ठेयमित्येतदर्थंतया कालादर्शस्यातिदेशोक्तिरपि संगमयितव्या। इदं च पिंडरहितं कार्यं—अयनद्वितये श्राद्धं विषुवद्वितये तथा। युगादिषु च सर्वासु पिंडनिर्वपणादृते। इति पुलस्त्यवचनात्। अत्रैव श्राद्धे उदकुंभदाने मंत्रौ पठंति—एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः। अस्य प्रदानात्तृप्यंतु पितरोऽपि पितामहाः। गंधोदकतिलैर्मिश्रं[2] सान्नं कुंभं सदक्षिणं[3]। पितृभ्यः संप्रदास्यामि अक्षय्यमुपतिष्ठतु। इति। वैशाखस्याधिमासत्वे त्विदं श्राद्धं मासद्वयेपि कार्यं। यौगादिकं मासिकं च श्राद्धं चापरपक्षिकं। मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेपि च। इति स्मृतिचंद्रिकावचनात्।

अस्यामेव तृतीयायां विशेषो निर्णयामृते देवीपुराणे—तृतीयायां तु वैशाखे रोहिण्यृक्षे प्रपूज्य तु। उदकुंभप्रदानेन शिवलोके महीयते। इति। पूजा चेयं प्रकरणाद्गौर्या अभिप्रेतेति निर्णयामृतकारः। अतएव तदंगमुदकुंभदानमत्र विधीयत इति प्रतीयते। इत्यक्षय्यतृतीयानिर्णयः॥

परशुरामजयंती—वैशाखस्य सिते पक्षे तृतीयायां पुनर्वसौ। निशायाः प्रथमे यामे रामाख्यः समभूद्धरिः। रेणुका-

१ 'व्याप्तापराह्ण'. २ 'तिलैर्युक्तं'. ३ 'फलान्वितं'.

यास्तु यो गर्भाद्वतीर्णो हरिः स्वयं । इति भार्गवचंद्रिकायां स्कांदवचनात् पूर्वदिन एव निशाप्रथमयामव्याप्तौ पूर्वान्यथा परैव । पूर्वोक्ततृतीयानिर्णयात् । यदा तु अह्नो मध्ये वामनो रामरामाविति वचनात् मध्याह्नेऽयमवतारः स्वीक्रियते तदापि तद्व्याप्तिमनुसृत्योक्तरीत्या निर्णयो बोध्यः । जन्मकाले षोडशोपचारैः संपूज्यार्घ्यं दद्यात् । **तत्र मंत्रः**—जमदग्निसुतो वीर क्षत्रियांतकर प्रभो । गृहाणार्घ्यं मया दत्तं कृपया परमेश्वर । इति ॥

अथ सप्तम्यां **गंगापूजनमुक्तं ब्रह्मपुराणे**—वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा । क्रोधात्पीता पुनस्त्यक्ता कर्णरंध्रात्तु दक्षिणात् । तां तत्र पूजयेद्देवीं गगनांगणमेखलां । इति ।

अस्यामेव **शर्करासप्तमीव्रतं मदनरत्ने पाद्मे** पुलस्त्य उवाच । शर्करासप्तमीं वक्ष्ये सर्वकल्मषनाशिनीं । माधवस्य सिते पक्षे सप्तम्यां श्रद्धयान्वितः । प्रातः स्नात्वा तिलैः शुक्लैः शुक्लमाल्यानुलेपनः । स्थंडिले पद्ममालिख्य कुंकुमेन सकर्णिकं । तस्मै नमः सवित्रेति पुष्पधूपं निवेदयेत् । स्थापयेदव्रणं कुंभं शर्करापात्रसंयुतं । शुक्लवस्त्रेण संवेष्ट्य शुक्लमाल्यानुलेपनैः । सहिरण्यं यथाशक्त्या मंत्रेणानेन पूजयेत् । विश्वेदेवमयो यस्माद्वेदवादीति पठ्यते । त्वमेवामृतसर्वस्वमतः पाहि सनातन । पंचगव्यं ततः पीत्वा स्वपेत्तत्पार्श्वतः क्षितौ । सौरसूक्तं जपंस्तिष्ठेत्पुराणश्रवणेन वा । अहोरात्रे गते पश्चादष्टम्यां कृतनित्यकः । तत्सर्वं वेदविदुषे ब्राह्मणाय निवेदयेत् । भोजयेच्छक्तितो विप्रान् शर्कराघृतपायसैः । भुंजीतातैललवणं स्वयमप्यथ वाग्यतः । अनेन विधिना सर्वं मासि मासि समाचरेत् । वत्सरांते पुनर्दद्याद्ब्राह्मणाय समाहितः । शयनं वस्त्रसंवीतं शर्कराकलशान्वितं । सहस्रेणाथ निष्काणां कृत्वा दद्याच्छतेन वा । दशभिर्वा त्रिभिर्वापि निष्केणैकेन वा पुनः । पद्मं स्वशक्तितो दद्याद्वित्तशाठ्यविवर्जितः । अमृतं पिबतो वक्त्रात्सूर्यस्यामृतबिंदवः । निष्पेतुर्ये तदुत्पन्नाः शालिमुद्गयवादयः । शर्करा च परस्तस्मादिक्षुसारोऽमृतोपमः । इष्टा रवेस्ततः पुण्या शर्करा हव्यकव्ययोः । शर्करासप्तमी चैषा वाजिमेधफलप्रदा । सर्वदुःखप्रशमनी सर्व-

१ 'गवां दद्यात्'.

संपत्तिदायिनी । यः कुर्यात्परया भक्त्या स वै संपत्तिमाप्नुयात् । इति ।

अथाष्टम्यां देवीपूजोक्ता **निर्णयामृते देवीपुराणे**-सहकारफलैः स्नानं वैशाखे ह्यष्टमीदिने । आत्मनो देवतां स्नाप्य मांसीवालकवारिभिः । लेपनं फलकर्पूरं धूपं दीपं सगंधकं । इति । आत्मन इत्यस्य पूर्वार्धे स्नानमित्यनेनान्वयः । सहकारफलैरित्याम्रफलैरित्यर्थः । मांसी जटामांसी । फलकर्पूरमित्यत्र फलं जातीफलं । देवतामपराजिताख्यां देवीमिति व्याख्यातं तत्रैव । अत्रैव विशेषः **संवत्सरप्रदीपेपि**-देव्याः पूजां प्रकुर्वीत केतक्या चंपकेन च । शर्कराक्षीरनैवेद्यं कन्याविप्रेषु भोजनं । आत्मनः पारणं तद्वद्दक्षिणां शक्तितो ददेत् । सर्वतीर्थाभिषेकं तु अनेनाप्नोति भार्गव । इति । अत्रोपवासपूर्वकमुक्तविधपूजनमष्टम्यां कार्यं । नवम्यां कन्याविप्रभोजनमात्मनः पारणं चेति व्यवस्थोक्ता **निर्णयामृते** । इत्यष्टमी कृत्यं ॥

अथात्रैवोभयोः पक्षयोः नवम्यामुपवासपरश्चंडिकामर्चयेत् । तदुक्तं **निर्णयामृते भविष्योत्तरे**-वैशाखे मासि राजेंद्र नवम्यां पक्षयोर्द्वयोः । उपवासपरो भक्त्या पूजयानस्तु चंडिकां । हरः कुंदेंदुसंकाशस्तेजसा ध्रुवसंनिभः । विमानवरमारूढो देवलोके महीयते । इति ।

अथ द्वादश्यां **महाभारते दानधर्मेषु**-वैशाखमासे द्वादश्यां पूजयेन्मधुसूदनं । अग्निष्टोममवाप्नोति सोमलोकं च गच्छति । इति । अस्यामेव योगविशेषेण पुण्यकाल उक्तो **हेमाद्रौ**-पंचाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे । पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः । अस्मिंस्तु गोभूमिहिरण्यवस्त्रदानेन सर्वं परिहाय पापं । सुरत्वमिंद्रत्वमनामयत्वं मर्त्याधिपत्यं लभते मनुष्यः । इति । पाशाभिधाना तिथिः द्वादशी । करभं हस्तः ।

अथ त्रयोदशीमारभ्य **विष्णुधर्मोक्तं कामदेवव्रतम्** । मार्कंडेय उवाच-शुक्लपक्षे महाराज त्रयोदश्यामुपोषितः । पूजयेत्कामदेवं तु वैशाखात्प्रभृति प्रभो । गंधमाल्यांबरधरो धूपदीपादिसंपदा । दद्याद्व्रतांते विप्राय गंधवस्त्रयुगं तथा । व्रतं

चरित्वा वरमेतद्दिष्टमासाद्य नाकं सुचिरं मनुष्यः । मानुष्यमासाद्य भवत्यरोगः सुखान्वितो रूपसमन्वितश्च । इति ।

अथ चतुर्दश्यां **नृसिंहजयंती** । यथोक्तं **वाराहे**—वैशाखस्य सिते पक्षे चतुर्दश्यां महातिथौ । जयंती तत्र कर्तव्या नृसिंहस्य द्विजोत्तमैः । इति । **नृसिंहपुराणेपि**—भूतायां शुक्लपक्षे च वैशाखे तु निशामुखे । वायुभं यदि लभ्येत सोपोष्या सा महाफला । इति । निशामुखं सायंसंध्याकालः । तद्व्यापिन्येकदिन एव चेत्सैव ग्राह्या । दिनद्वये तद्व्याप्तौ तदव्याप्तौ तु परैव । नक्षत्रयोगस्तु प्राशस्त्यार्थः । वायुभं स्वाती । यद्वा वैष्णवान्प्रति अयं निर्णयः । **गोविंदार्णवे नृसिंहपुराणे**—अनंगेन समायुक्ता नोपोष्या सा चतुर्दशी । पूर्णायुक्तां तु तां कुर्यान्नरसिंहस्य तुष्टये । यः करोति नरो मोहात्कामविद्धां चतुर्दशीं । धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जयेत् । इति ।

**अथ प्रयोगः** । त्रयोदश्यां कृतैकभक्तः चतुर्दश्यां नित्यविधिं समाप्य मध्याह्ने तिलामलकैः स्नात्वा व्रतं संकल्पयेत् । तत्र मंत्रः । उपोष्येहं नारसिंहं भुक्तिमुक्तिफलप्रदं । शरणं त्वां प्रपन्नोस्मि भक्तिं मे नृहरे दिश । इति । ततः—आचार्यं त्वां वृणे ब्रह्मन्नारसिंहमहाव्रते । त्वमेव नारसिंहो मे चतुर्वर्गफलप्रदः । इत्याचार्यवरणं कृत्वा । सायं मंडपांतस्तंडुलपुंजोपरि निहितपूर्णकुंभे राजतताम्रादिजातीयं पात्रं निधाय तत्र निहितां सौवर्णप्रतिमां षोडशोपचारैः संपूज्यार्घ्यं दद्यात् । तत्र मंत्रः—हिरण्याक्षवधार्थाय भूभारोत्तारणाय च । परित्राणाय साधूनां जातो विष्णुर्नृकेसरी । गृहाणार्घ्यं मया दत्तं सलक्ष्मीर्नृहरे स्वयं । इति । ततो रात्रौ जागरणं विधाय कृतनित्यक्रियः श्रीनृसिंहं संपूज्याचार्याय धेनुं दक्षिणायुतां प्रतिमां च दद्यात् । तत्र मंत्रः । नृसिंहाच्युत गोविंद लक्ष्मीकांत जगत्पते । अनेनार्चाप्रदानेन सफलाः स्युर्मनोरथाः । इति । एवं दत्त्वा प्रार्थयेत् । मद्वंशे ये नरा जाता ये जनिष्यंति चापरे । तांस्त्वमुद्धर देवेश दुःसहाद्भवसागरात् । पातकार्णवमग्नस्य व्याधिदुःखांबुवारिभिः । तीव्रैश्च परिभूतस्य महादुःखगतस्य मे । करावलंबनं देहि शेषशायिन्जगत्पते । श्रीनृसिंह रमाकांत भक्तानां भयनाशन । क्षीरांबुधिनिवासिंस्त्वं चक्रपाणे जनार्दन । व्रतेनानेन देवेश

भुक्तिमुक्तिप्रदो भव । इति । ततो ब्राह्मणैः सह पारणां विधाय भगवते व्रतं निवेदयेत् । त्वत्प्रसादस्वीकरणं यत्कृतं पारणं मया । व्रतेनानेन संतुष्टस्त्वं हि मुक्तिं प्रयच्छ मे । इति नृसिंहजयंत्युत्सवः ।

अथ **पौर्णमास्यां कर्तव्यं निर्णयामृते यमगाथासु**- यस्तु कृष्णाजिनं दद्यात्सखुरं शृंगसंयुतं । तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलंकृतं । वैशाख्यां पौर्णमास्यां तु विशाखासु विशेषतः । ससमुद्रगुहा तेन सशैलवनकानना । सप्तद्वीपान्विता दत्ता पृथिवी नात्र संशयः । इति । तथा तत्रैव **विष्णुः**- कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतं । इति । **मदनरत्ने आदित्यपुराणे**- सूत उवाच- वैशाख्यां पौर्णमास्यां च सृष्टाः कमलयोनिना । तिलाः कृष्णाश्च गौराश्च तृप्तये सर्वदेहिनां । तस्मात्कार्यं तिलैः स्नानं तत्राग्नौ जुहुयात्तिलान् । निवेदितव्यं विधिवत्तिलपात्रं तु विष्णवे । तिलतैलेन दीपाश्च देया देवेभ्य एवच । सोदकैश्च तिलैः सार्धं कर्तव्यं पितृतर्पणं । तिलैः समधुभिर्युक्तं ब्राह्मणस्य च तर्पणं । दातव्या दक्षिणाश्चापि तिलैर्मधुयुतैरपि । मंत्रं जपेच्च पौराणं पारंपर्यक्रमागतं । तिला वै सोमदैवत्याः सुरैः सृष्टास्तु गोसवे । स्वर्गप्रदाः स्वतंत्राश्च ते मां रक्षंतु नित्यशः । दद्यादनेन मंत्रेण तिलपात्राणि तत्र च । सप्तभ्यस्त्वथ पंचभ्यो ब्राह्मणेभ्यस्तु कीर्तयेत् । प्रीयतां धर्मराजश्च देवाश्चान्ये तथैवच । एवं कृते स मुक्तः स्यात्पापैर्जन्मशतार्जितैः । इति ।

अस्यामेव कार्यांतरमुक्तमपरार्के—शृतान्नमुदकुंभं च वैशाख्यां च विशेषतः । निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात् । सुवर्णतिलयुक्तैस्तु ब्राह्मणान्सप्त पंच च । तर्पयेदुदकुंभैस्तु ब्रह्महत्यां व्यपोहति । इति । कृतवैशाखस्नानस्योद्यापने इयमेव पूर्णमासी वैशाखैकादशीद्वादशीभ्यां सह वैकल्पिककालत्वेन विहिता । **वामनपुराणे**—मासमेवं बहिः स्नात्वा नद्यादौ विमले जले । एकादश्यां वा द्वादश्यां पौर्णमास्यामथापि वा । उपोष्य नियतो भूत्वा कुर्यादुद्यापनं बुधः । मंडपं कारयेदादौ कलशं तत्र विन्यसेत् । निष्केण वा तदर्धेन तदर्धार्धेन वा पुनः । शक्त्या वा कारयेद्देवं सौवर्णं लक्षणान्वितं । लक्ष्मीयुतं जगन्नाथं

पूजयेदासने बुधः । भूषणैश्चंदनैः पुष्पैर्दीप[1]नैवेद्यसंचयैः । एवं संपूज्य विधिवद्रात्रौ जागरणं चरेत् । श्वोभूते कृतमैत्रोथ ग्रहवेद्यां ग्रहान्यजेत् । होमं कुर्यात्प्रयत्नेन पायसान्नैर्विचक्षणः । तिलाज्येन यवैर्वापि सर्वैर्वापि स्वशक्तितः । अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वै । प्रतद्विष्णुस्तवेनैवमिदंविष्णुरनेन वा । व्रतसंपूर्तिसिध्यर्थं धेनुमेकां पयस्विनीं । पादुकोपानहौ छत्रं गुरवे व्यजनं तथा । शय्यां सोपस्करां दद्याद्दीपिकां दर्पणं तथा । ब्राह्मणान्भोजयेत्रिंशत्तेभ्यो दद्याच्च दक्षिणां । कलशान्जलसंपूर्णास्तेभ्यो दद्याद्यवांस्तथा । एवं कृते माधवस्य उद्यापनविधौ शुभे । फलमाप्नोति सकलं विष्णुसान्निध्यमाप्नुयात् । अशक्तस्तु—वैशाख्यां विधिना स्नात्वा भोजयेद्ब्राह्मणान्दश । कृसरं सर्वपापेभ्यो मुच्यते नात्र संशयः । इति । निष्कश्चत्वारिंशन्माषाः । कृतमैत्रः कृतसूर्यदैवत्यप्रातर्होमादिघटितप्रातःकृत्यः । अस्यामेव विशेषो **विष्णुधर्मोत्तरे**—वैशाखे पूर्णमास्यां वै जलस्थं जगदीश्वरं । पूजयेद्वैष्णवो भक्त्या कृत्वोत्साहं मुदान्वितः । गीतवाद्यपताकाद्यैः कृत्वा पुण्यं महोत्सवं । ज्येष्ठस्यैकादशीं शुक्लां यजेत्तावत्प्रहर्षितः । इति । येनार्जितानि युधि भूमिपतीन्विजित्य दुर्गाणि दुर्ग्रहतराणि धनैर्युतानि । श्रीवाजवाहदुरसंज्ञनृपस्य तस्य वाचा हरेरिव गिरावनिदेवतुष्ट्यै ॥ १ ॥ योऽनंतदेवकृतमंथनसंनिबंधक्षीराब्धिजोऽथ कमलापतिना धृतो यः । नित्यं निजे हृदि सतां प्रमुदेस्तु तस्य वैशाखदीधितिरियं स्मृतिकौस्तुभस्य ॥

---

अथ ज्येष्ठकृत्यं तदुक्तं **निर्णयामृते भविष्ये**—पिष्टेन कंजजं कृत्वा ज्येष्ठे मासि सवेदिकं । पुष्पैः संपूज्य गंधाढ्यैर्नानावस्त्रविभूषणैः । वर्षकोट्ययुतं साग्रं सूर्यलोके[2] महीयते । इति । कंजजो ब्रह्मा । तत्रैव **वामनपुराणे**—उदकुंभांबु धेनुं च तालवृंतं सचंदनं । त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि वा । इति । अत्रैव शुक्लप्रतिपदि करवीरव्रतमुक्तं **मदनरत्ने भविष्योत्तरे** श्रीकृष्ण उवाच—ज्येष्ठे मासि सिते पक्षे प्रथमेह्नि दिनोदये । देवोद्यानभवं हृद्यं करवीरं समर्चयेत् । रक्ततंतु-

---

१ धूपनैवेद्य. २ 'स्वर्गलोके'.

परीधानं गंधधूपविलेपनैः। प्ररूढसप्तधान्यैश्च नारंगैर्बीजपूरकैः। गुणकैर्बदरैर्भक्ष्यैर्नारिकेलैः सुशोभनैः। अभ्युक्ष्याक्षततोयेन मंत्रेणेत्थं क्षमापयेत्। करवीर विषावास नमस्ते भानुवल्लभ। मौलिमंडनदुर्गादिदेवानां सततं प्रिय। आकृष्णेनेति वेदोक्तमंत्रेणाभ्यर्च्य भक्तितः। एवं भक्त्या समभ्यर्च्य दत्त्वा विप्राय दक्षिणां। प्रदक्षिणं ततः कुर्यात्ततः स्वभवनं व्रजेत्। एतद्व्रतं पुरा पार्थ सूर्याराधनकाम्यया। अनुष्ठितं निकुंभया सावित्र्या सत्यभामया। दमयंत्या सरस्वत्या गायत्र्या गंगया तथा। अन्याभिरपि नारीभिर्मर्त्यलोकेऽप्यनुष्ठितं। करवीरव्रतं पार्थ सर्वसौख्यफलप्रदं। संपूज्य रक्तकुसुमान्वितसर्वशाखं नीलैर्दलैस्ततनुं करवीरवृक्षं। भुक्त्वा मनोभिलषितान्भुवि भव्यभोगांस्ते वै प्रयांति भवनं भरताग्र्य भानोः। इति।

अथ तृतीयायां रंभाव्रतमुक्तं निर्णयामृते भविष्योत्तरे—ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परा। कुरु पार्श्वेषु पंचाग्नीन्ज्वलमानान्हुताहुतीन्। गार्हपत्यं दक्षिणाग्निं सभ्यं चाहवनीयकं। पंचमं भास्करं तेज इत्येते पंच वह्नयः। एतेषां मध्यमा भूत्वा तिष्ठ पूर्वमुखी स्थिरा। चतुर्भुजां ध्यानपरां पंकजासनसंस्थितां। मृगाजिनच्छन्नकटीं जटावल्कलधारिणीं। सर्वाभरणसंयुक्तां देवीमभिमुखीं कुरु। महालक्ष्मी महाकाली महामाया महामही। महानना महादेवी महामहिषमर्दिनी। गंगा च यमुना चैव शतद्रुर्नर्मदा तथा। सरस्वती वैतरणी सैव प्रोक्ता महासती। सप्रणवैर्नमोंतैश्च नामभिः पूजनं भवेत्। चतुर्थीसहितैश्चैव स्वाहांतैर्होम इष्यते। तदास्यप्रेक्षणपरा भव तद्भावसंयुता। तस्या देव्या आस्यं मुखं। होमं कुर्युर्यतात्मानो ब्राह्मणाः सर्वतोदिशं। देव्याः पूजा प्रकर्तव्या पुष्पधूपादिना ततः। बहुप्रकारं नैवेद्यं दातव्यं घृतपाचितम्। स्थापयेदग्रतो देव्याः सौभाग्याष्टकमेव च। जीरकं धान्यकं चैव कुसुंभं कुसुमं तथा। निष्पावाः पाचनतिला लवणं शर्करागुडम्। निष्पावः शिंबीधान्यविशेषः। पाचनतिला भृष्टतिलाः। शर्करागुडयोर्विकल्पेन विधिः पुष्पमंडपिका कार्या रंभास्तंभोपशोभिता। तत्र संपूजयेद्देवीं शक्त्या स्वर्णादिनिर्मितताम्। पद्मासनेन संतिष्ठेद्यावत्परिणतो रविः।

१ 'करवीरपुष्पम्'. २ देवीपुराणे.

ततः प्रणम्य रुद्राणीं मंत्रमेतमुदीरयेत् । वेदेषु सर्वशास्त्रेषु दिवि भूमौ रसातले । श्रुतो दृष्टश्च बहुशो न शक्त्या रहितः शिवः । त्वं शक्तिस्त्वं स्वधा स्वाहा त्वं सावित्री सरस्वती । पतिं देहि सुतान्देहि गृहं देहि नमोस्तु ते। एवं क्षमापयेद्देवीं प्रणिपत्य पुनः पुनः। देहि भक्त्या गृहं रम्यं विचित्रं बहुभूमिकम्। छाद्य केदारकह्लारप्रतोलीभिरलंकृतम् । कुड्यस्तंभगवाक्षाढ्यं मणिमंडिततोरणम्[1] । पद्मरागमहानीलमणिवैडूर्यभूषितम् । गृहदानविधानेन ब्राह्मणाय यशस्विने । सपत्नीकाय संपूज्य सर्वोपस्करसंयुतं । प्रयच्छ प्रणता भूत्वा ततो वांछितदायकम्। सुवासिनीभ्यस्तद्देयं नैवेद्यं शूर्पसंस्थितं । निर्वर्त्य विधिनानेन ततः पश्चात्समापयेत् । दंपत्यानि च भोज्यानि चतुर्थ्यां मधुरै रसैः । देव्युवाच । इत्युक्तया मया चीर्णमिदं रंभाव्रतं पुरा । व्रतांतेऽगस्त्यमुनये दत्तं वरगृहं महत् । लोपामुद्रा भर्तृयुता तस्मिन्वेश्मनि पूजिता । व्रतेन तेन देवेश भर्ता लब्धोसि शंकर। अर्धकाये स्थिता तेऽहं सौभाग्यबलगर्विता। कृष्णोवाच— पूर्वमेवोमया चीर्णं याश्चरिष्यंति योषितः । पुरुषो वापि कौंतेय ख्यातं रंभाव्रतं भुवि। भार्यां पुत्रं गृहं भोगान्कुलवृद्धिमवाप्नुयुः[2]। स्त्रीणां चातुलसौभाग्यं गार्हस्थ्यं सार्वकामिकं । सपत्नीदर्पदलनं वशीकरणमुत्तमं । मृता शिवपुरं याति ततो विष्णुपुरं व्रजेत् । इति । इयं तृतीया पूर्वविद्धा ग्राह्या । पूर्वोदाहृतवचनात् ॥

अथ चतुर्थ्यामुमापूजनमुक्तं मदनरत्ने ब्रह्मपुराणे[3]— ज्येष्ठशुक्लचतुर्थ्यां तु जाता पूर्वमुमा सती। तस्मात्सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये । उपहारैश्च विविधैर्गीतनृत्योत्सवादिभिः। होमैः पयोभिर्वस्त्रैश्च पत्रपुष्पैः सुगंधिभिः । इति । अथाष्टम्यां शुक्लादेवीपूजनमुक्तं निर्णयामृते देवीपुराणे—शुक्लाष्टम्यां पुरा जाता शुक्लादेवी महाशनिः । वधाय दानवेंद्राणां शुक्लपक्षेथ तां यजेत् । इति ।

अथ नवम्यां तत्रैव भविष्ये। उपवासपरो भक्त्या नवम्यां पूजयेदुमां । ब्रह्माणीमिति वै नाम्ना श्वेतरूपेण रूपिणीं । ज्येष्ठे मासि नृपश्रेष्ठ कृत्वा नक्तस्य वै विधिं । शाल्यन्नपायसोपेतं

१ 'शोभितम्'. २ मवाप्नुयात्. ३ 'ब्रह्मपुराणे–'.

स्वयं भुंजीत वाग्यतः । कुमारीं भोजयेच्चापि स्वशक्त्या ब्राह्मणांस्तथा । इति ।

अथ **गंगावतारतिथिः** । दशम्यां शुक्लपक्षे च ज्येष्ठे मासि कुजे दिने । गंगावतीर्णा हस्तर्क्षे सर्वपापहरा स्मृता । इति हेमाद्रौ विष्णुधर्मोक्तेः । अथ बुधवारोपि विकल्पेन प्रशस्तः । ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः । व्यतीपाते गरानंदे कन्याचंद्रे वृषे रवौ । इति **निर्णयामृते स्कांदवचनात्** । अत्र यद्यपि हस्तनक्षत्रे सति कन्याचंद्रोवश्यंभावी बुधहस्तसंयोगे चानंदयोगोवश्यंभावीत्यनयोः पृथग्ग्रहणं व्यर्थमिति प्रतिभाति तथापि दशानामनुकीर्तनं स्नानकाले कार्यमिति ज्ञापनार्थं तदिति बोध्यं । पाठादेव दशत्वे सिद्धे पुनर्दशयोग इति कीर्तनं कीर्तितानां दशानामेव पुण्यकालविशेषत्वमिति ज्ञापनार्थं । अतएव यत्कैश्चिदुक्तं । दिनद्वयेपि कतिपययोगसत्वे यत्रैव योगभूयस्त्वं तत्रैव स्नानादिकं कार्यमिति तच्चिंत्यं । दशमी व्यतीपातयोर्योगांतरनिरपेक्षयोः शास्त्रांतरेण पुण्यकालत्वलाभेपि बुधवारगरानंदादीनां योगांतरनिरपेक्षाणां पुण्यकालत्वे मानाभावात् । अतो दिनद्वयेपि कतिपययोगवद्दशमीसत्वे गंगापूजनादौ दैवे कर्मणि पूर्वाह्णस्य पुण्यकालत्वात् तद्व्यापिन्येव दशमी ग्राह्या ।

**अत्र कर्तव्यं हेमाद्रौ**—गंगास्नाने कृतार्थः स्यात्तस्मिन्योगे सकृन्नरः । हरेद्वै दश पापानि गंगा तत्र न संशयः । इति । **काशीवासिनां विशेष** उक्तः **काशीखंडे**—दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः । लिंगं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ । दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः । इति तत्रैव गंगापूजनमप्युक्तं । नमः शिवायै प्रथमं नारायण्यै पदं ततः । दशहरायै पदमिति गंगायै मंत्र एष वै । स्वाहांतः प्रणवादिश्च भवेद्विंशाक्षरो मनुः । पूजा दानं जपो होमस्तेनैव मनुना स्मृतः । इति । यत्र गंगा न लभ्यते तत्र नद्यंतरेपि स्नानादि कार्यमिति ज्ञापितं **स्कान्दे**—ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता । तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः । यां कांचित्सरितं प्राप्य दद्याद्[1]दर्भं तिलोदकं । मुच्यते दशभि

[1] 'दद्याद्दर्भं'.

पापैः स महापातकोपमैः । इति । अत्रार्घ्यमिति पूजावयवेन पूजोपलक्ष्यते । एवं दर्भमिति पाठे आसनाद्यर्थदर्भेणापि । ततश्च नद्यंतर एव गंगां ध्यात्वा पूजयेदिति भावः । तिलोदकमिति तीर्थप्राप्तिनिमित्ततर्पणानुवादः ।

अत्रैव स्तोत्रपाठः कर्तव्य इत्युक्तं मदनरत्ने स्कांदे— तस्यां दशम्यामेतच्च स्तोत्रं गंगाजले स्थितः । यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः । सोपि तत्फलमाप्नोति गंगां संपूज्य यत्नतः । इति । स्तोत्रं च स्कान्दे—ब्रह्मोवाच । ॐ नमः शिवायै गंगायै शिवदायै नमो नमः । नमस्ते विश्वरूपिण्यै ब्रह्ममूर्त्यै नमो नमः । नमस्ते रुद्ररूपिण्यै शांकर्यै ते नमोनमः । सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये । सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोस्तु ते । स्थाणुजंगमसंभूतविषहंत्र्यै नमो नमः । भोगोपभोगदायिन्यै भोगवत्यै नमोनमः । मंदाकिन्यै नमस्तेस्तु स्वर्गदायै[1] नमोनमः । नमस्त्रैलोक्यभूषायै जगद्धात्र्यै नमोनमः । नमस्त्रिशुक्लसंस्थायै तेजोवत्यै नमोनमः । नंदायै लिंगधारिण्यै नारायण्यै नमोनमः । नमस्ते विश्वमुख्यायै रेवत्यै ते नमोनमः । बृहत्यै ते नमस्तेस्तु लोकधात्र्यै नमोनमः । नमस्ते विश्वमित्रायै नंदिन्यै ते नमोनमः । पृथ्व्यै शिवामृतायै च सुवृषायै नमोनमः । शांतायै च वरिष्ठायै[2] वरदायै नमोनमः । उस्रायै सुखदोग्ध्र्यै च संजीविन्यै नमोनमः । ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमोनमः । प्रणतार्तिप्रभंजिन्यै जगन्मात्रे नमोस्तु ते । सर्वापत्प्रतिपक्षायै मंगलायै नमोनमः । शरणागतदीनार्तपरित्राणपरायणे । सर्वस्यार्तिहरे देवि नारायणि नमोस्तु ते । निर्लेपायै दुर्गहंत्र्यै दक्षायै ते नमोनमः । परात्परतरे तुभ्यं नमस्ते मोक्षदे सदा । गंगे ममाग्रतो भूया गंगे मे देवि पृष्ठतः । गंगे मे पार्श्वयोरेधि त्वयि गंगेस्तु मे स्थितिः । आदौ त्वमंते मध्ये च सर्वं त्वं गां गते शिवे । त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः । गंगे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे । य इदं पठते स्तोत्रं भक्त्या नित्यं नरोपि यः । शृणुते श्रद्धया युक्तः कायवाक्चित्तसंभवैः । दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते । रोगार्तो मुच्यते रोगादापद्भ्यश्च प्रमुच्यते । द्विषद्भ्यो बंधनाद्यैश्च भयेभ्यश्च प्रमुच्यते । सर्वान्कामानवाप्नो-

१ 'सर्वदायै'. २ 'वसिष्ठायै'.

ति प्रेत्य ब्रह्मणि लीयते । इमं स्तवं गृहे यस्तु लेखयित्वा विनिक्षिपेत् । नाग्निचोरभयं तत्र पापेभ्योपि भयं नहि । ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता । संहरेत्त्रिविधं पापं बुधवारेण संयुता । तस्यां दशम्यामेतच्च स्तोत्रं गंगाजले स्थितः । यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः । सोपि तत्फलमाप्नोति गंगां संपूज्य यत्नतः । पूर्वोक्तेन विधानेन यत्फलं संप्रकीर्तितं । यथा गौरी तथा गंगा तस्माद्गौर्यास्तु पूजने । विधिर्यो विहितः सम्यक्सोपि गंगाप्रपूजने । यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथा उमा । यथा उमा तथा गंगा चतूरूपं न भिद्यते । विष्णुरुद्रांतरं यस्तु श्रीगौर्योरंतरं तथा । गंगागौर्योरंतरं च यो ब्रूते मूढधीर्नरः । रौरवादिषु घोरेषु पच्यते नरकेष्वधः । अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतं । पारुष्यमनृतं चैव पैशून्यं चापि सर्वशः । असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधं । परद्रव्येष्वभिध्यानं मनसानिष्टचिंतनम् । वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतं । एतानि दश पापानि हर त्वं मम जाह्नवि । दशपापहरा यस्मात्तस्माद्दशहरा स्मृता । एतैर्दशविधैः पापैः कोटिजन्मसमुद्भवैः । मुच्यते नात्र संदेहो ब्रह्मणो वचनं यथा । त्रयस्त्रिंशच्छतान्पूर्वान्पितॄनथ पितामहान् । उद्धरत्येव संसारान्मंत्रेणानेन पूजिता । ॐनमोभगवत्यै दशपापहरायै गंगायै नारायण्यै रेवत्यै शिवायै दक्षायै अमृतायै विश्वरूपिण्यै नंदिन्यै ते नमोनमः । ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः । [1]योगे नंदे व्यतीपाते कन्याचंद्रे वृषे[2] रवौ । दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते । सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलशोद्यत्सोत्पलामत्यभीष्टां । विधिहरिहररूपां सेंदुकोटीरजुष्टां कलितसितदुकूलां जाह्नवीं तां नमामि । आदावादिपितामहस्य निगमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनं । भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते । विष्णुपादाब्जसंभूते गंगे त्रिपथगामिनी । धर्मद्रवेति विख्याते पापं मे हर जाह्नवि । जाह्नवी सर्वतः पुण्या ब्रह्महत्यापहारिणी । वाराणस्यां विशेषेण गंगा

१ 'गरानंदे'. २ 'गते रवौ'.

चोत्तरवाहिनी । गंगागंगेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति । इति ।

अथैकादश्यां **निर्जलाव्रत**मुक्तं **निर्णयामृते स्कांदे**—ज्येष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी शुभा । निर्जलं समुपोष्यात्र जलकुंभान्सशर्करान् । प्रदाय विप्रमुख्येभ्यस्तापत्रयविवर्जितः । विष्णुलोकमवाप्येह मोदते विष्णुसंनिधौ । इति । जलकुंभदानमंत्रो **नृसिंहपरिचर्यायां**—देवदेव हृषीकेश संसारार्णवतारक । उदकुंभप्रदानेन यास्यामि परमां गतिं । इति । अत्र च निर्जलमिति नित्याचमनादिव्यतिरेकेण जलपानं निवार्यते । द्वादश्यां च सशर्करकुंभदानं विधीयते । तत्र हेमापि देयं । वृषस्थे मिथुनस्थे वा शुक्ला ह्येकादशी भवेत् । ज्येष्ठे मासि प्रयत्नेन सोपोष्या जलवर्जिता । स्नाने वाचमने[1] वापि वर्जित्वा चोदकं बुधः । उपभुंजीत नैवान्यद्व्रतभंगोऽन्यथा भवेत् । उदयादुदयं यावद्वर्जयित्वा जलं बुधः । अप्रयत्नादवाप्नोति द्वादश द्वादशीर्नृप । ततः प्रभाते विमले द्वादश्यां स्नानमाचरेत् । जलं सुवर्णं दत्त्वा च द्विजातिभ्यो यथाविधि । भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी । इति ।

अथ द्वादश्यां **महाभारते दानधर्मेषु**—अहोरात्रेण द्वादश्यां ज्येष्ठे मासि त्रिविक्रमं । पूजयेदित्यनुषंगः । गवामयनमाप्नोति अप्सरोभिश्च मोदते । इति ।

अथ चतुर्दश्यां **निर्णयामृते मात्स्ये**—ज्येष्ठे पंच तथा सायं हेमधेनुप्रदो दिवं । यात्यष्टमीचतुर्दश्यो रुद्रव्रतमिदं स्मृतम् । इति । अथ पूर्णमास्यां **तत्रैवादित्यपुराणे**—ज्येष्ठे मासि तिलान्दद्यात्पूर्णमास्यां विशेषतः । अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः । इति । तत्रैव **विष्णुः**—ज्येष्ठी ज्येष्ठायुता चेत्स्यात्तस्यां छत्रोपानहद्दानेन नरो नराधिपत्यमाप्नोतीति ।

अस्यामेव पौर्णमास्यां **बिल्वत्रिरात्रिव्रतं हेमाद्रौ स्कांदे**—ब्रह्मोवाच । ज्येष्ठे मासि तु संप्राप्ते पौर्णमास्यां द्विजोत्तम । ज्येष्ठाकुजदिने कुर्यात्सिद्धार्थैः स्नानमुत्तमं । श्रीवृक्षं सिंचयेत्पश्चाद्गंधपुष्पैश्च पूजयेत् । वत्सरं त्वेकभक्तं तु हविष्यान्नेन कारयेत् । श्वसूकरखरादीनां दर्शने भोजनं त्यजेत् । अनेन

---

१ 'चमने चैव'.

विधिना सम्यङ्मासि मासि समाचरेत् । ततः संवत्सरे पूर्णे गत्वा बिल्वसमीपतः । गृहीत्वा वालुकां पात्रे प्रस्थमात्रां महामुने । अथवा धान्यमादाय यवशालितिलादिकं । ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टयेत् । उमामहेश्वरं हैमं शक्त्या कुर्यात्सुभूषितम् । रक्तवस्त्रयुगं दद्यान्नैवेद्यफलसंयुतम् । पुष्पैर्बहुविधैश्चापि फलैर्नानाविधैस्तथा । गुडेक्षुजीरकैर्धान्यैर्लवणेन विरूढकैः । सप्तधान्यैस्तथा दीपैर्वंशपात्रप्रकल्पितैः । रजनीकंठसूत्रैश्च शुभैः कुंकुमकेसरैः । अवतारं करोत्येषा उमादेवी हरप्रिया । श्रीनिकेत नमस्तुभ्यं शिवप्रिय नमोस्तु ते । अवैधव्यं च मे देहि श्रियं जन्मनि जन्मनि । श्रियं धनं पतिं पुत्रानारोग्यं कुलसंततिं । सौभाग्यं रूपसंपत्तिं पूजितस्त्वं प्रयच्छ मे । सहस्रं बिल्वपत्राणां होमयेत्तु यथाविधि । पायसं तत्र जुहुयाद्विप्रः शांतोथ मंत्रवित् । राजतं श्रीतरुं कृत्वा सुवर्णफलशोभितम् । अष्टोत्तरशतं यावत्पीतवस्त्रेण वेष्टयेत् । त्रयोदश्यां समारभ्य यावत्पूर्णा भवेत्तिथिः । त्रिरात्रं जागरं कृत्वा उपवासं जितेंद्रिया । उमापते पशुपते त्रैलोक्याधिपते प्रभो । गृहाणार्घ्यं मया देव गौर्या सह महेश्वर । ततः प्रभाते संयाते स्नात्वा च तिलसर्षपैः । वस्त्रालंकारपुष्पैश्च गुरोर्दंपत्यमर्चयेत् । पादुकोपानहच्छत्रं शय्यां गां च सुभूषिताम् । गुरुं प्रपूज्य भक्त्या तु दद्यादेतत्प्रयत्नतः । षोडशाष्टौ चतस्रो वा द्विजान्दंपत्यभूषितान् । वस्त्रालंकारगोदानैस्तस्मिन्नहनि पूजयेत् । मिष्टान्नभोजनं दद्यादात्मनः श्रेय इच्छता । या नारी कुरुते चैतद्व्रतं पापप्रणाशनम् । सर्वसिद्धिकरं पुण्यं शिवलोके महीयते । कल्पकोटिशतं यावदास्थाय शिवसंनिधौ । ततो राज्ञी भवेन्मर्त्ये पुत्रपौत्रसमन्विता । इति स्कन्दपुराणोक्तं बिल्वत्रिरात्रिव्रतम् ॥

अस्यामेव **वटसावित्रीव्रतमुक्तं स्कांदे**—व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिरा भवेत् । इत्युपक्रम्य—ज्येष्ठे मासि सिते पक्षे पौर्णमास्यां तथा व्रतम् । चीर्णं पुरा महाभक्त्या कथितं ते मया नृप । इति । एतच्चामावास्यायामपि । तदुक्तं **निर्णयामृते भविष्योत्तरे**—अमायां च तथा ज्येष्ठे वटमूले महासती । त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत् । अशक्ता तु त्रयोदश्यां नक्तं कुर्याज्जितेंद्रिया । अयाचितं चतुर्दश्याममायां समु-

पोषणम् । गृहीत्वा वालुकां पात्रे प्रस्थमात्रां युधिष्ठिर । ततो वंशमये पात्रे वस्त्रयुग्मेन [1]वेष्टिते । सावित्रीप्रतिमां कुर्यात्सर्वावयवशोभिनीं । सौवर्णीं मृन्मयीं वापि स्वस्वशक्त्या विनिर्मितां । सार्धं सत्यवता साध्वीं फलनैवेद्यदीपकैः । वटावलंवितं कृत्वा काष्ठभारं युधिष्ठिर । वि[2]रूढैः समधान्यैश्च वहुधा संप्रकल्पितैः । रजन्या कंठसूत्रैश्च शुभ्रैः कुंकुमकेसरैः । सावित्र्याख्यानकं चापि वाचयीत द्विजोत्तमैः । रात्रौ जागरणं कृत्वा नृत्यगीतपुरःसरं । ततः प्रभाते विधिना पूर्वोक्तेन नराधिप । तामपि ब्रह्मणे दद्यात्प्रणिपत्य क्षमापयेत् । **दानमंत्रश्च**—सावित्रीयं मया दत्ता सहिरण्या महासती । ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यताम् । इति । एवं दत्त्वा द्विजेंद्राय सावित्रीं तां युधिष्ठिर । नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहं नयेत् । स्वयं दशपदं गच्छेत् स्ववेश्म पुनराविशेत् । तत्र भुक्त्वा हविष्यान्नं ब्राह्मणैर्बांधवैः सह । विसर्जयेत्ततो विद्वान्सावित्री प्रीयतामिति । व्रतेनानेन राजेंद्र वैधव्यं नाप्नुयात्क्वचित् । इति ॥

अथ पौर्णमास्यामेत**द्व्रतविधिर्भविष्ये**—ज्येष्ठे मासि त्रयोदश्यां दंतधावनपूर्वकं । दंतकाष्ठं समं शुभ्रं जातीयं चतुरंगुलं । भक्ष्येऽहं कायशुद्ध्यर्थं व्रतविघ्नविनाशनं । नित्यं स्नायान्महानद्यां तडागे निर्झरेपि वा । विशेषतः पूर्णिमायां स्नानं सर्षपवज्जलैः । **स्कांदे**—स्नात्वा चैव शुचिर्भूत्वा वटं सिंचेद्वह्वुदकैः । वट सिंचामि ते मूलं सलिलैरमृतोपमैः । सूत्रेण वेष्टये भक्त्या गंधपुष्पाक्षतैः शुभैः । इति वटमूलं जलेनासिच्य । नमो वैवस्वतायेति कुर्याच्चैव प्रदक्षिणां । वटं प्रदक्षिणं सूत्रेणावेष्ट्य गंधाक्षतपुष्पैः संपूज्य——नमोव्यक्तस्वरूपाय महाप्रणवरूपिणे । महद्रसोपविष्टाय न्यग्रोधाय नमोस्तु ते । इति नत्वा त्रिरात्रनियमं कुर्यात् । तत्र **नियममंत्रः**——त्रिरात्रं लंघयित्वा तु चतुर्थे दिवसे त्वहं । चंद्रायार्घ्यं प्रदत्त्वा च पूजयित्वा च तां सतीं । मिष्टान्नानि यथाशक्त्या भोजयित्वा द्विजोत्तमान् । भोक्ष्येहं तु जगद्धात्रि निर्विघ्नं कुरु मे शुभे । कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च । सप्तधान्ययुतं पात्रं प्रस्थेनैकेन पूरयेत् ॥ वस्त्रद्वयोपरि स्थाप्य सावित्रीं ब्रह्मणा सह ॥ इति ॥

---

१ वेष्टयेत्. २ विरूपैः.

अथ वटसावित्रीपूजा ॥ आचम्य देशकालौ स्मृत्वा मम सावित्र्यादिदेवताप्रीतिद्वारा समस्तपापक्षयपूर्वकं भर्तुः पुत्राणां चायुरारोग्यप्राप्तये इह जन्मनि जन्मांतरे च स्थिरसौभाग्यपत्यवियोगकुलवृद्धिधनधान्यसुखसमृद्ध्यादिकल्पोक्तफलसिद्धये च 'त्रिदिनात्मकं' सावित्रीव्रतं करिष्ये । तदंगं वटमूले ब्रह्मसावित्र्यादिपूजनमहं करिष्ये । निर्विघ्नतासिद्ध्यर्थं गणपतिं संपूज्य कलशघंटादि पूजांते संभारान्प्रोक्ष्य वटमूले प्रतिमादौ ब्रह्मादीन्पूजयेत् । (महीद्यौरित्यादिविधिना कलशं संस्थाप्य तदुपरि पूर्णपात्रे प्रतिमादौ) । ब्रह्माणं सह सावित्र्या सावित्रीं सत्यवत्प्रियां । धर्मराजं मुनींद्रं च ध्यायामि च महातरुं । इति ध्यात्वा । आगच्छ देवि सावित्रि ब्रह्मपत्नि तपस्विनि । यावत्संपूजयाम्यत्र सर्वसौभाग्यदायिनि । सावित्र्यैनमः आवाहनं । आसनेस्मिन्महादेवि स्वर्णरत्नविभूषिते । उपविश्य प्रसादेन प्रीता मे भव सुव्रते । आसनं० । महादेवि महामाये भक्तानंदविधायिनि । पाद्यं गृहाण मे मातर्ब्रह्मप्राणसमे शुभे । पाद्यं । फलपुष्पयुतं सम्यक् शुद्धाक्षतसमन्वितं । गृहाणार्घ्यं मया दत्तं ब्रह्मणा सह सुव्रते । अर्घ्यं । गंगादिनानातीर्थेभ्य आहृतं विमलं जलं । कर्पूरवासितं शीतं गृहाणाचमनीयकं । आचमनीयं । सर्वकालुष्यहीनायै परिपूर्णमुखांबुजे । मधुपर्कमिमं देवि कल्पयामि प्रसीद मे । मधुपर्कं । उत्थितोप्यशुचिर्नैव यस्याः स्मरणमात्रतः । शुद्धिमाप्नोति तस्यै ते पुनराचमनीयकं । आचमनीयं । सुगंधिद्रव्यसंयुक्तं क्षीरं दधि घृतं मधु । शर्करा स्नपयामीह लक्ष्मीनारायणस्य च ॥ पंचामृतं मयानीतं पयो दधि घृतं मधु । शर्करादिसमायुक्तं स्नानार्थं प्रतिगृह्यतां । पंचामृतस्नानं । जगद्योने जगद्धात्रि ब्रह्माणि कमलासने । स्नाहि तापहरे शीतैस्तीर्थानीतैः शुभैर्जलैः । शुद्धोदकस्नानं ॥ पूर्वाराधनं समाप्य महाभिषेकः ॥ दुकूलयुग्मं सुनवं विलसत्कनकोज्ज्वलं । सुकोमलं च सुश्लक्ष्णं गृहाण परमेश्वरि । वस्त्रं । कस्तूरीघनसारादिकुंकुमागरुमिश्रितं । चंदनं च सुखस्पर्शं गृहाणायतलोचने । चंदनं । अक्षता विमलाः शुद्धा मुक्तामणिसमप्रभाः । भूषणार्थं मया देवि देहि मे निर्मलां धियं । अक्षतान् । भूषणानि च दिव्यानि मुक्ताहारयुतानि च । त्वदर्थमुपक्लृप्तानि गृहाण शुभलोचने । अलंकारान् । कंठसूत्रं

ताडपत्रं हरिद्राकुंकुमांजनं । सिंदूरादिप्रदास्यामि सौभाग्यं देहि मेऽव्यये । सौभाग्यद्रव्याणि । मालतीचंपकादीनि सुगंधीनि शुचिस्मिते । पुष्पाणि सुमहाभागे पूजार्थं प्रतिगृह्यतां । पुष्पाणि ॥ अथांगपूजा । सावित्र्यैनमः पादौ पूजयामि । प्रसावित्र्यै । जंघे पू० । कमलपत्राक्ष्यै० कटिं० । भूतधारिण्यै० उदरं० । गायत्र्यै० कंठं० । ब्रह्मप्रियायै० शिरः० ॥ अथ सत्यवत्पूजा । धात्रे पादौ० । ज्येष्ठाय० उदरं० । परिमेष्ठिने० मेढ्रं पू० । अग्निरूपाय० कटिंपू० । वेधसे० उदरं० । पद्मनाभाय० हृदयं० । विधये० कंठं० । हिरण्यगर्भाय० मुखं० । ब्रह्मणे० शिरः पू० । विष्णवे० सर्वांगं पू० ॥ देवद्रुमरसोद्भूतः कालागरुसमन्वितः । आघ्रेयतामयं धूपः सावित्रि घ्राणतर्पणः । धूपं । चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि । दीपं । शर्कराज्यविमिश्रं तु पायसं मधुसंयुतं । बहुप्रभेदैः पक्वान्नैः खाद्यैरामोदसंयुतं । षड्रसं विविधं स्वादु नैवेद्यं प्रतिगृह्यतां । नैवेद्यं । आचमनं । इदंफलमिति फलं । पूगीफलमिति तांबूलं । हिरण्यगर्भेति दक्षिणां । सावित्री च प्रसावित्री सततं ब्रह्मणः प्रिये । जगत्पूज्ये जगन्मातर्विधातृवरदे नमः । सावित्रि त्वं यथा देवी चतुर्वर्षशतायुषं । पतिं प्राप्तासि गुणिनं मम देवि तथा कुरु । सावित्री च प्रसावित्री सततं ब्रह्मणः प्रिये । पूजितासि द्विजैः सर्वैस्त्रीभिर्मुनिगणैस्तथा । त्रिसंध्यं देवि भूतानां वंदनीयासि सुव्रते । मया दत्ता च पूजेयं त्वं गृहाण नमोस्तुते । इति पुष्पांजलिं दत्त्वा । यानि कानि च पापानि जन्मांतरकृतानि च । तानितानि विनश्यंति प्रदक्षिणपदेपदे । प्रदक्षिणां । पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा तथा । भक्त्या निवेदयामीशे प्रणामान्सुरसुंदरि । नमस्काराः ॥ ततोर्घ्यं दद्यात् । ओंकारपूर्वके देवि सर्वदुःखनिवारिणि । वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे । पतिव्रते महाभागे चंद्रजाते शुचिस्मिते । दृढव्रते दृढमते भर्तुश्च प्रियवादिनि । अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते । पुत्रान्पौत्रांश्च सौभाग्यं गृहाणार्घ्यं नमोनमः । इदमर्घ्यं । अथ प्रार्थना । सावित्रि ब्रह्मगायत्रि सर्वदा प्रियभाषिणि । तेन सत्येन मां पाहि दुःखसंसारसागरात् । त्वं देवी त्वं शची गौरी त्वं प्रभा चंद्र-

मंडले । त्वमेव च जगन्माता त्वमुद्धर वरानने । यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि । भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे । अवियोगो यथा देवि सावित्र्या सहितस्तव । अवियोगस्तथास्माकं भूयाज्जन्मनि जन्मनि । साधु वासाधु वा कर्म यद्यदाचरितं मया । तत्सर्वं क्षम्यतां देवि गृहाणाराधनं परं । प्रार्थना । सुवासिन्यस्ततः पूज्या दिवसे दिवसे गते । सिंदूरं कुंकुमं चैव तांबूलं च पवित्रकं । तथा दद्याच्च शूर्पाणि भक्ष्यभोज्यादिकं सदा । सुवासिनीद्विजार्चाद्यैः सुकृतं यन्मयार्जितं । तत्फलं परमेशानि मया तुभ्यं समर्पितं । निवेदनं । एवं त्रिदिनं । इति अन्यग्रंथीया वटसावित्रीपूजा समाप्ता ।

**अथ कथा । स्कांदे**—सनत्कुमार उवाच । कुलस्त्रीणां व्रतं देव महाभाग्यकरं वद । अवैधव्यकरं स्त्रीणां पुत्रपौत्रप्रदायकम् ॥ १ ॥ ईश्वर उवाच ॥ आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः । नाम्ना चाश्वपतिर्वीरो वेदवेदांगपारगः ॥ २ ॥ अनपत्यो महाबाहुः सर्वैश्वर्यसमन्वितः । सपत्नीकस्तपस्तेपे समाराधनतत्परः ॥ ३ ॥ सावित्रीं शतसाहस्रं जपन्नास्ते महामनाः । जुहोति चैव सावित्र्या भक्त्या परमया युतः ॥ ४ ॥ ततस्तुष्टा तु सा देवी सावित्री द्विजसत्तम । सा विग्रहवती देवी तस्य दर्शनमागता ॥ ५ ॥ तां तु दृष्ट्वा जगद्वंद्यां सावित्रीं स नृपोत्तमः । प्रणिपत्य स्थितो भक्त्या प्रहृष्टेनांतरात्मना ॥ ६ ॥ तं दृष्ट्वा पतितं भूमौ तुष्टा देवी जगाद ह ॥ ७ ॥ सावित्र्युवाच । तुष्टाहं तव राजेंद्र वरं वरय सुव्रत ॥ एवमुक्तस्तया राजा प्रसन्नां तामुवाच ह ॥ ८ ॥ अश्वपतिरुवाच । अनपत्यो ह्यहं देवि पुत्रमिच्छामि शोभनं । नान्यं वृणोमि सावित्रि पुत्रादिह जगन्मये ॥ ९ ॥ अन्यदस्ति समग्रं मे क्षितौ यच्चापि दुर्लभं । प्रसादात्तव देवेशि तत्सर्वं विद्यते गृहे । एवमुक्ता तु सावित्री प्रत्युवाच नराधिपं ॥ १० ॥ सावित्र्युवाच । पुत्रस्ते नास्ति राजेंद्र कन्यैका ते भविष्यति । कुलद्वयं तु सा राजन्नुद्धरिष्यति भामिनी ॥ ११ ॥ मन्नाम्ना राजशार्दूल तस्या नाम भविष्यति । इत्युक्त्वा तं मुनिश्रेष्ठ राजानं ब्रह्मणः प्रिया ॥ १२ ॥ अंतर्धानं गता देवी संतुष्टोसौ महीपतिः । ततः कतिपयाहोभिस्तस्य राज्ञी महीभुजः ॥ १३ ॥ ससत्वाऽजायत सुतां पूर्णे काले सुखावहं । सावित्र्या

तुष्टया दत्ता हुतया जप्तया यतः ॥ १४ ॥ सावित्रीत्येव वरदं तस्या नाम बभूव ह । राजते देवगर्भाभा कन्या कमललोचना ॥ १५ ॥ ववृधे सा मुनिश्रेष्ठ चंद्रलेखेव चांबरे । तां दृष्ट्वा हेमगर्भाभां रूपेणाप्रतिमां भुवि ॥ १६ ॥ अयाच्यमानां च वरै राजा चिंतामुपेयिवान् । तस्या रूपेण ते सर्वे सन्निरुद्धा महीभुजः ॥ १७ ॥ ततः स राजा चाहूय प्रोवाच कमलेक्षणाम् । पुत्रि प्रदानकालस्ते न च याचंति केचन ॥ १८ ॥ स्वयं वरय हृद्यं ते पतिं गुणसमन्वितम् । मनःप्रह्लादनकरं शीलेनाभिजनेन च ॥ १९ ॥ इत्युक्त्वा तां स राजेंद्रो वृद्धामात्यैः सहैव ताम् ॥ २० ॥ वस्त्रालंकारसहितां धनरत्नैः समन्विताम् । विसर्ज्य च क्षणं तत्र यावत्तिष्ठति भूमिपः ॥ २१ ॥ तावत्तत्र समागच्छन्नारदो भगवानृषिः । संपूज्य च ततो राजा अर्घ्यपाद्येन तं मुनिं ॥२२॥ आसने च सुखासीनं पूजितं तेन भूभुजा । पूजयित्वा मुनिं राजा प्रोवाचेदं द्विजोत्तमं ॥ २३ ॥ पावितोहं त्वया विप्र दर्शनेनैव नारद । यावदेवं वदेद्राजा तावत्सा कमलेक्षणा ॥ २४ ॥ आश्रमादागता देवी वृद्धामात्यैः समन्विता । अभिवाद्य पितुः पादौ ववंदे सा मुनिं ततः ॥ २५ ॥ नारदोऽपि च तुष्टां तां दृष्ट्वा प्रोवाच भूमिपं । कन्येयं देवगर्भाभा किमर्थं न प्रयच्छसि ॥ २६ ॥ वराय त्वं महाबाहो वरयोग्यास्ति सुंदरी । एवमुक्तस्तदा तेन मुनिना नृपसत्तमः ॥ २७ ॥ उवाच तं मुनिं वाक्यमानेतुं प्रेषिता हि सा । आगतेयं विशालाक्षी मया संप्रेषिता सती ॥ २८ ॥ अनया यो वृतो भर्ता पृच्छ त्वं मुनिसत्तम । सा पृष्टा तेन मुनिना तस्मै चाचष्ट भामिनी ॥ २९ ॥ आश्रमे सत्यवान्नाम द्युमत्सेनसुतो मुने । भर्तृत्वे मनसा विप्र वृतोऽसौ राजनंदनः ॥ ३० ॥ नारद उवाच । कष्टं कृतं महाराज दुहित्रा तव सुव्रत । अजानंत्या वृतो भर्ता गुणवान्सत्यवादकः ॥ ३१ ॥ सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते । स्वयं सत्यं प्राभाषेत सत्यवानिति नामतः ॥ ३२ ॥ तथा चाश्वाः प्रियास्तस्य ह्यश्वैः क्रीडति मृन्मयैः । चित्रेपि विलिखत्यश्वांश्चित्राश्वस्तेन चोच्यते ॥ ३३ ॥ रूपवान्गुणवांश्चैव सर्वशास्त्रविशारदः । न तस्य सदृशो लोके विद्यते चेह मानवः ॥ ३४ ॥ सर्वैर्गुणैः स्वयं पूर्णो रत्नैरिव महोदधिः । एको दोषो

महानस्य गुणानावृत्य तिष्ठति ॥ ३५ ॥ संवत्सरेण क्षीणायु-र्देहत्यागं करिष्यति ॥ ३६ ॥ अश्वपतिरुवाच । अन्यं वर-य भद्रं ते वरं सावित्रि गम्यतां । विवाहस्य तु कालोयं वर्तते शुभलोचने ॥ ३७ ॥ सावित्र्युवाच । नान्यमिच्छाम्यहं तात मनसापि वरं प्रभो । यो मया च वृतो भर्ता स मे नान्यो भवि-ष्यति ॥ ३८ ॥ विचिंत्य मनसा पूर्वं वाचं पश्चात्समुच्चरेत् । क्रियते च ततः पश्चाच्छुभं वा यदि वाशुभम् । तस्मान्मनः पुमांसं मे कथमन्यं वृणोत्यहो ॥ ३९ ॥ सकृज्जल्पंति राजानः सकृज्जल्पंति पंडिताः । सकृत्कन्या प्रदीयेत त्रीण्येतानि सकृत्स-कृत् ॥ ४० ॥ इति मत्वा न मे बुद्धिर्विचलेद्धि कथंचन । सगुणो निर्गुणो वापि मूर्खः पंडित एव वा । दीर्घायुरथवा-ल्पायुः स वै भर्ता मम प्रभो ॥ ४१ ॥ नान्यं वृणोमि भर्तारं यदि साक्षाच्छचीपतिः । इति मत्वा त्वया तात यत्कर्तव्यं वदस्व तत् ॥ ४२ ॥ नारद उवाच । स्थिरा बुद्धिश्च राजेंद्र सावित्र्याः सत्यवत्यतः । त्वरयस्व विवाहाय भर्त्रा सह कुरु त्विमां ॥४३॥ ईश्वर उवाच । निश्चितां तु मतिं ज्ञात्वा स्थिरां बुद्धिं च निश्च-लाम् । सावित्र्याश्च महाराजः प्रतस्थे स वनं प्रति ॥ ४४ ॥ तां गृहीत्वा ततो राजा द्युमत्सेनस्य संनिधौ । स्वल्पानुगो महा-राजो वृद्धामात्यैः समन्वितः ॥ ४५ ॥ नारदस्तु ततः खे वै तत्रैवांतरधीयत । स गत्वा राजशार्दूलो द्युमत्सेनाश्रमं ततः ॥ ४६ ॥ वृद्धश्चांधश्च राजासौ वृक्षमूलमुपाश्रितः । तस्य चाश्वपती राजा पादौ जग्राह वीर्यवान् ॥ ४७ ॥ स्वनाम च समुच्चार्य तस्थौ तस्य समीपतः । उवाच राजा तं भूपं किमा-गमनकारणम् ॥ ४८ ॥ पूजयित्वार्घ्यदानेन वन्यमूलफलैश्च सः । ततः पप्रच्छ कुशलं स राजा मुनिसत्तम ॥ ४९ ॥ अश्व-पतिरुवाच । कुशलं दर्शनेनाद्य तव राजन्पतिं च वै । दुहिता मम सावित्री तव पुत्रमभीप्स्यति ॥ ५० ॥ भर्तारं राजशार्दूल प्राप्नोत्वियमानिंदिता । मनसा कांक्षितः पूर्वं भर्तायमनया प्रभो । आवयोश्च सुसंबंधो भवत्वद्य ममेप्सितः ॥ ५१ ॥ द्युमत्सेन उवाच । वृद्धश्चांधश्च राजेंद्र फलमूलाशनो नृप । राज्यच्युतश्च मे पुत्रो वने वन्येन जीवति ॥५२॥ सा कथं सहते दुःखं दुहिता तव कानने । अनभिज्ञा च दुःखानामित्यहं नाभिकांक्षये

॥ ५३ ॥ अश्वपतिरुवाच ॥ अनया च वृतो भर्ता जानंत्या राजसत्तम । अनेन सह संवासस्तव पुत्रेण मानद ॥ ५४ ॥ स्वर्गतुल्यो महाराज भविष्यति न संशयः । एवमुक्तस्तदा तेन राज्ञा राजर्षिसत्तमः ॥ ५५ ॥ तथेति स प्रतिज्ञाय चकारोद्वाहमुत्तमं । कृत्वा विवाहं राजेंद्रः संपूज्य विविधैर्धनैः ॥ ५६ ॥ अभिवाद्य द्युमत्सेनं जगाम नगरं प्रति । सावित्री तु पतिं लब्ध्वा शक्रं प्राप्य यथा शची ॥ ५७ ॥ सत्यवानपि राजर्षिस्तया पत्न्याभिनंदितः । क्रीडते तद्वनोद्देशे पौलोम्या मघवानिव ॥५८॥ नारदस्य तदा वाक्यं हृदयेन मनस्विनी । वहंती नियमं चक्रे व्रतस्यास्य च भामिनी ॥ ५९ ॥ गणयंती दिनान्येव न लेभे सौख्यमुत्तमम् । ज्ञात्वा तं दिवसं विप्र भर्तुर्मरणकारणं ॥ ६० ॥ अनागतं च नियमं त्रिदिनस्य मनस्विनी । अस्मिन्दिने च मर्तव्यं तदा सत्यवता मुने ॥ ६१ ॥ कुठारं संगृहीत्वा च पीठकं चैव सुव्रतः । तं प्रस्थितं वनं चैव सावित्री वाक्यमब्रवीत् ॥ ६२ ॥ न गंतव्यं वनं त्वद्य मम वाक्येन मानद । अथवा गम्यते साधो मया सह वनं व्रज ॥ ६३ ॥ संवत्सरश्च संपूर्ण आश्रमेऽस्मिन्मम प्रभो । तद्वनं द्रष्टुमिच्छामि प्रसादं कुरु सुव्रत ॥६४ ॥ सत्यवानुवाच । नाहं स्वतंत्रः सुश्रोणि पृच्छस्व पितरौ मम । ताभ्यां प्रस्थापिता गच्छ मया सह शुचिस्मिते ॥ ६५ ॥ एवमुक्ता तदा तेन भर्त्रा सा कमलेक्षणा । श्वश्रूश्वशुरयोः पादावभिवाद्येदमब्रवीत् ॥ ६६ ॥ वनं द्रष्टुमभीच्छेद्य आज्ञां मह्यं प्रदीयताम् । उवाच वाक्यं वाक्यज्ञा वरमेनं प्रयच्छथ ॥ ६७ ॥ तच्छ्रुत्वा भाषितं वाक्यं सावित्र्या द्विजसत्तम । वरं वृणीष्व भद्रं ते यं त्वमिच्छसि भामिनि ॥६८॥ ततः सा वचनं श्रुत्वा श्वश्रूश्वशुरयोस्तदा । उवाच वचनं साध्वी वरमेकं प्रयच्छथ ॥ ६९ ॥ भर्त्रा सह वनं गंतुमेव मे त्वरते मनः । तस्यास्तद्वचनं श्रुत्वा द्युमत्सेनोऽब्रवीदिदं ॥ ७० ॥ व्रतं कृतं त्वया भद्रे पारणं कुरु सुव्रते । पारणांते वनं भीरु ततो गंतुं त्वमर्हसि ॥ ७१ ॥ सावित्र्युवाच । नियमश्च कृतोऽस्माकं रात्रौ चंद्रोदये सति । जाते मया प्रकर्तव्यं तात मे शृणु भोजनम् ॥ ७२ ॥ वनदर्शनकामास्मि भर्त्रा सह मयाद्य वै । न मे तत्र भवेद्ग्लानिर्भर्त्रा सह नराधिप ॥ ७३ ॥ इत्युक्तस्तु तदा राजा द्युमत्सेनो मही-

पतिः । यत्तेऽभिलषितं पुत्रि तत्कुरुष्व सुमध्यमे ॥ ७४ ॥ नमस्कृत्वा तु सावित्री श्वश्रूं च श्वशुरं तथा । सहिता मुनिशार्दूल तेन सत्यवता विभो ॥ ७५ ॥ विलोकयंती भर्तारं तं च कालं मनस्विनी । वनं च फलितं दृष्ट्वा पुष्पितं द्रुमसंकुलं ॥ ७६ ॥ द्रुमाणां चैव नामानि मृगाणां चैव भामिनी । पश्यंती मृगयूथानि हृद्येन प्रवेपती ॥ ७७ ॥ तत्र गत्वा सत्यवान्वै फलान्यादाय सत्वरं । काष्ठानि च समादाय बबंध भारकं तदा ॥७८॥ कठिनं पूरयामास कृत्वा वृक्षावलोकनं । वटवृक्षस्य सा साध्वी उपविष्टा महासती ॥ ७९ ॥ काष्ठान्यावृणुतस्तस्य जाता शिरसि वेदना । ग्लानिश्च महती जाता गात्राणां वेपथुस्तदा ॥ ८० ॥ आगत्य वृक्षसामीप्यं सावित्रीमिदमब्रवीत् । ग्लानिश्च महती जाता शिरसश्चापि वेदना ॥ ८१ ॥ कंटकैर्भिद्यते भद्रे शिरो मे मूलसंस्थितैः । उत्संगे तव सुश्रोणि स्वप्तुमिच्छामि सुव्रते ॥ ८२ ॥ अभिज्ञा सा विशालाक्षी तस्य मृत्योर्मनस्विनी । प्राप्तं कालं मन्यमाना तस्मै तत्रैव भामिनी ॥ ८३ ॥ सत्यवानपि सुप्तस्तु कृत्वोत्संगे शिरस्तदा । तावत्तत्र समागच्छत्पुरुषः कृष्णपिंगलः ॥ ८४ ॥ जाज्वल्यमानं वपुषा ददृशे चाथ भामिनी । उवाच वाक्यं वाक्यज्ञा कस्त्वं लोकभयंकरः ॥ ८५ ॥ नाहं धर्षयितुं शक्या पुरुषेणापि केनचित् । इत्युक्तः प्रत्युवाचेदं यमो लोकभयंकरः ॥ ८६ ॥ क्षीणायुस्तु वरारोहे भर्ता तव मनस्विनि । केनापि न महादेवि नेतुं शक्यस्त्वदंकतः ॥ ८७ ॥ अन्यैर्दुर्विषहं तेजः सोढुं शक्यं न ते शुभे । इति मत्वा वरारोहे स्वयमागमनं मम ॥ ८८ ॥ इत्युक्त्वा तां वरारोहां तस्य देहान्महात्मनः । अंगुष्ठमात्रं पुरुषं बद्ध्वा पाशेन दुस्तरं ॥ ८९ ॥ निचकर्ष ततो वेगाद्गृहीत्वा प्रस्थितः पुरम् । सावित्री तु ततः पश्चादनुयाति स तं पतिं ॥ ९० ॥ यम उवाच । निवर्तस्व महाभागे त्वं दूरं समुपागता । गत्वा स्वभवनं शीघ्रं कुरु चैवौर्ध्वदेहिकम् ॥ ९१ ॥ एवमुक्ता तु सा तेन प्रत्युवाच समं तदा । न श्रमो नैव च ग्लानिः सकाशे तव मानद ॥ ९२ ॥ विशेषतश्च भर्तुर्मे कुतो ग्लानिः सुरेश्वर । धर्मेण त्वं पालयसे धर्मेण त्वं विध्वंससे ॥९३॥ नाफलं दर्शनं देव सतामुक्तं कदाचन । आहुः साप्तपदं मैत्रमिति नीतिविदो विदुः ॥ ९४ ॥ ईश्वर उवाच । संतुष्टस्तेन वा

क्येन धर्मराजः स्वयं तदा । वराणामीश्वरो दाता वरं तस्मै दिदे-शह ॥ ९५ ॥ सा वव्रे चात्मनः पुत्रान्पितुः पुत्रशतं तथा । चक्षुः-प्राप्तिं च सा वव्रे श्वश्रूश्वशुरयोस्तदा ॥ ९६॥ राज्यप्राप्तिं तथा ब्रह्मन्जीवितं च तथा विभो । भर्तुः कमलपत्राक्षी निवृत्ता सा सुमध्यमा ॥ ९७ ॥ प्रदक्षिणां ततः कृत्वा धर्मराजाय सुव्रता । पुनः सा प्रार्थयामास धर्मं लोकहितेच्छया॥९८॥ मदीयं च व्रतं देव भक्त्या नारी करिष्यति। भर्तुः सापि हिता साध्वी समस्तफल-भाग्भवेत् ॥ ९९ ॥ तथेत्युक्त्वा धर्मराजो जगाम स्वीयमालयम्। सा गत्वा वटसामीप्यं कृत्वोत्संगे शिरस्ततः ॥ १०० ॥ प्रबुद्धस्तु ततो ब्रह्मन्सत्यवानिदमब्रवीत् । मया स्वप्नं वरा-रोहे दृष्टमद्यैव भामिनि ॥ १०१ ॥ तत्सर्वं कथितं तस्मै यद्वृत्तं सर्वमेव तत् । तया च कथितः सर्वः संवादोपि यमेन हि ॥१०२॥ ईश्वर उवाच । अस्तं गते ततः सूर्ये द्युमत्सेनो महीपतिः । पुत्रस्यागमनाकांक्षी इतश्चेतश्च धावति ॥ १०३ ॥ आश्रमादाश्रमं गच्छन्पुत्रदर्शनलालसः । आवयोरंधयोर्यष्टिः क्व गतोऽसि विनावयोः ॥ १०४ ॥ एवं स विविधं क्रोशन्सपत्नीको मही-पतिः । चकार दुःखसंतप्तः पुत्रपुत्रेति चासकृत् ॥ १०५ ॥ अकस्मादेव राजेंद्रो लब्धचक्षुर्बभूवह । तद्दृष्ट्वा परमाश्चर्यं चक्षुः-प्राप्तिं द्विजोत्तम ॥ १०६ ॥ सांत्वपूर्वं तदा वाक्यमूचुस्ते तापसा नृपम् । चक्षुःप्राप्त्या महाराज सूचितास्ते महोदयाः ॥ १०७ ॥ उपस्थितं महाराज्यं न शोकं कर्तुमर्हसि । पुत्रेण च समायोगं प्राप्स्यसे नृपसत्तम ॥ १०८ ॥ ईश्वर उवाच । यावदेवं वदं-त्येते तापसा इतरेतरम् । सावित्रीसहितः प्राप्तः सत्यवान्द्विज-सत्तम ॥ १०९ ॥ नमस्कृत्य द्विजान्सर्वान्मातरं पितरं तथा । सावित्री च ततो ब्रह्मन्ववंदे चरणाविति । श्वश्रूश्वशुरयोर्ब्रह्म-न्नृषीणां कमलेक्षणा ॥ ११० ॥ मुनय ऊचुः । किं तु सावि-त्रि जानासि कारणं वरवर्णिनि । वृद्धस्य चक्षुषः प्राप्तेः श्वशु-रस्य वरानने ॥ १११ ॥ सावित्र्युवाच । न जानामि मुनिश्रेष्ठा-श्चक्षुषः प्राप्तिकारणम् । चिरं सुप्तस्तु मे भर्ता तेन कालव्यति-क्रमः ॥ ११२ ॥ सत्यवानुवाच । अस्याः प्रभावात्संजातं दृश्यते चात्र कारणम् । तत्सर्वं विद्यते प्राप्तं सावित्र्यास्तपसः फलं । व्रतस्यैव तु माहात्म्याद्दृष्टमेतन्मयाधुना ॥ ११३ ॥ ईश्वर

उवाच । एवं तु वदतस्तस्य तदा सत्यवतः प्रभो । पौराः समागतास्तस्य ह्याचख्युर्नृपतिं हि ते ॥ ११४ ॥ येन राज्यं बलाद्राजन्हृतं क्रूरेण मंत्रिणा । अमात्येन हृतः सोपि इति पौराः समागताः ॥ ११५ ॥ पौरा ऊचुः । उत्तिष्ठ राजशार्दूल स्वं राज्यं पालय प्रभो । अभिषिंचस्व राजेंद्र पुत्रं मंत्रिपुरोहितैः ॥ ११६ ॥ ईश्वर उवाच । स गत्वा राजशार्दूलः स्वपुरं जनसत्कृतः । पितृपैतामहं राज्यं संप्राप्तं च महात्मभिः ॥ ११७ ॥ सावित्री सत्यवांश्चैव परां मुदमवापतुः । जनयामास पुत्राणां शतं वै बाहुशालिनां ॥ ११८ ॥ व्रतस्यैव तु माहात्म्यात्तस्याः पितुरजायत । पुत्राणां तु शतं ब्रह्मन्प्रसन्नात्तु यमात्तथा ॥ ११९ ॥ एतत्ते कथितं सर्वं व्रतमाहात्म्यमुत्तमम् । क्षीणायुर्जीवितो भर्ता व्रतस्यास्य प्रभावतः । कर्तव्यं सर्वनारीभिरवैधव्यफलप्रदम् ॥ १२० ॥ सावित्र्युवाच । मदीयं तु व्रतं देव भक्त्या नारी करिष्यति । भर्तुः सापि हिता साध्वी समस्तफलभागिनी ॥ १२१ ॥ यम उवाच । सुभगा विधवा वापि अपुत्रा वा सपुत्रका । मृतपुत्राऽबांधवा वा कुर्याद्व्रतमिदं शुभं ॥ १२२ ॥ तस्या मनीषितं साध्वि भविष्यति न संशयः ॥ १२३ ॥ इति भविष्योत्तरे सावित्रीव्रतकथा ॥

अथोद्यापनम् । भविष्ये—कथमुद्यापनं कर्म कर्तव्यं फलसिद्धये । येन संपूर्णतां याति तद्वदस्व कृपानिधे । स्कन्दपुराणे । ज्येष्ठे मासि तु संप्राप्ते पौर्णमास्यां पतिव्रता । कुर्वीत भोजनं रात्रावब्दमेकं समाहिता । तथैव वटवृक्षं च पक्षे पक्षे च सिंचयेत् । संप्राप्ते च पुनर्ज्येष्ठे लघुभुग्द्वादशीं नयेत् । भविष्ये । ज्येष्ठशुक्लचतुर्दश्यां दंतधावनपूर्वकं । संकल्पपूर्वं नियमं गृह्णीयाद्भक्तिभाविता । त्र्यहं स्थिता निराहारा जितक्रोधा जितेंद्रिया । चतुर्थेऽहनि भोक्ष्येहं दंपत्या सह सुव्रते । निगमः—अशक्ता तु त्रयोदश्यां नक्तं कुर्याज्जितेंद्रिया । अयाचितं चतुर्दश्यामुपवासेन पूर्णिमा[1] । शुचौ देशे तु संलिप्य कृत्वा मंडपिकां शुभां । फलैर्नानाविधैर्युक्तां पुष्पमालासुशोभिताम् । कदलीस्तंभसंयुक्तां पूगपोतैरलंकृताम् । तन्मध्ये सर्वतो-

१ 'पूर्णिमायामुपावसेत्' इति स्यात्.

भद्रं विरच्य खलु वर्णकैः। ब्रह्माद्या देवतास्तत्र स्थापयेत्कुंकुमाक्षतैः। तन्मध्ये स्थापयेत्कुंभं ताम्रं मृन्मयमेव च। पंचपल्लवसंयुक्तं पंचरत्नसमन्वितम्। पुष्पमालाचंदनाद्यैरर्चितं वस्त्रसंयुतम्। तस्योपरि न्यसेत्पात्रं राजतं वापि वैणवं। तस्योपरि स्वर्णमयीं सावित्रीं ब्रह्मणा सह। प्रतिमां स्थापयेद्विद्वाँल्लक्षण्यां शक्तितः कृताम्। स्कान्दे—पलेनैव तदर्धेन तदर्धेनैव वा पुनः। सौवर्णी चैव सावित्रीं सत्येन सह कारयेत्। रौप्यपर्यंकमारोप्य तस्योपरि निवेशयेत्। पलादूर्ध्वं यथाशक्त्या रथं रौप्यमयं शुभम्। काष्ठभारं कुठारं च वटं चैव सुविस्तृतं। एवं च मिथुनं कृत्वा पूजयेद्गतमत्सरा। सावित्र्या दक्षिणे पार्श्वे सौवर्णं तु न्यसेद्यमं। संपूज्य विधिवत्तत्र मंत्रपूर्वं यथाक्रमं। (आवाहनादिपूजा पूर्वलिखिता कार्या।) अभ्यर्च्यैवं क्रमेणैव शास्त्रोक्तविधिना शुभे। ततो रजतपात्रेण अर्घ्यं दद्याद्द्वयोरपि। अर्घ्यमंत्रः—ॐकारपूर्वके देवि वीणापुस्तकधारिणि। वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे। पतिव्रते महाभागे वह्निजाते शुचिस्मिते। दृढव्रते दृढमते भर्तुश्च प्रियवादिनि। अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते। पुत्रपौत्रांश्च सौख्यं च गृहाणार्घ्यं नमोस्तु ते। सत्यवतोर्घ्यं। त्वया सृष्टं जगत्सर्वं सदेवासुरमानुषम्। सत्यव्रतधरो देव ब्रह्मरूप नमोस्तु ते। यमार्घ्यं। त्वं कर्मसाक्षी लोकानां शुभाशुभविवेचकः। वैवस्वत गृहाणार्घ्यं धर्मराज नमोस्तु ते। धर्मराज पितृपते साक्षिभूतोसि जंतुषु। कालरूप गृहाणार्घ्यमवैधव्यं च देहि मे। गंधपुष्पैश्च नैवेद्यैः फलैः कुसुमदीपकैः। रत्नवस्त्रैरलंकारैः पूजयेद्गतविस्मया। सावित्रीप्रार्थना। सावित्रि ब्रह्मगायत्रि सर्वदा प्रियभाषिणि। तेन सत्येन मां पाहि दुःखसंसारसागरात्। त्वं गौरी त्वं शची लक्ष्मीस्त्वं प्रभा चंद्रमंडले। त्वमेवात्र जगन्माता त्वमुद्धर वरानने। सौभाग्यं कुलवृद्धिं च देहि त्वं मम सुव्रते। यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि। भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे। सत्यवत्प्रार्थना। अवियोगो यथा देव सावित्र्या सहितस्तव। अवियोगस्तथास्माकं भूयाज्जन्मनि

१ 'देवमातः' पाठः.

जन्मनि । **यमप्रार्थना** । कर्मसाक्षी जगत्पूज्य सर्ववंद्य प्रसीद मे । संवत्सरकृतं सर्वं परिपूर्णं तदस्तु मे । सावित्री त्वं यथा देवी चतुर्वर्षशतायुषम् । पतिं प्राप्तासि गुणिनं मम देवि तथा कुरु । सावित्री च [1]प्रसावित्री सततं ब्रह्मणः प्रिये । पूजितासि द्विजैः सिद्धैस्त्रीभिर्मुनिगणैस्तथा । त्रिसंध्यं देवि भूतानां वंदनीयासि सुव्रते । मया दत्ता च पूजेयं त्वं गृहाण नमोस्तुते । जागरं तत्र कुर्वीत गीतनृत्यादि मंगलैः । सुवासिन्यस्ततः पूज्या दिवसे दिवसे गते । सिंदूरं कुंकुमं चैव तांबूलं सपवित्रकम् । तथा दद्याच्च शूर्पाणि भक्ष्यसौभाग्यमष्टकम् । संतिष्ठेच्च दिवा रात्रौ कामक्रोधविवर्जिता । दिनत्रयेपि कर्तव्यमेवमर्घ्यादि पूजनम् । ततश्चतुर्थे दिवसे यत्कार्यं तच्छृणुष्व मे । मिथुनानि चतुर्विंशत्षोडशद्वादशाष्टकम् । पूजयेद्वस्त्रगोदानैर्भूषणाच्छादनाशनैः । अथवा गुरुमेकं च व्रतस्य विधिकारकम् । सर्वलक्षणसंपन्नं सर्वशास्त्रार्थपारगम् । वेदविद्याव्रतस्नानं शांतचित्तं जितेंद्रियम् । सपत्नीकं समभ्यर्च्य वस्त्रालंकारकुंडलैः । शय्यां सोपस्करां दद्याद्गृहं चैवातिशोभनम् । गामेकां च तथा दद्याद्व्रतस्य परिपूर्तये । अशक्तस्तु यथाशक्त्या स्तोकं स्तोकं समाचरेत् । सौवर्णीं प्रतिमां चैव पतिना सह दापयेत् । **दानमंत्रः**—सावित्री त्वं यथा देवि चतुर्वर्षशतायुषं । [2]सत्यव्रतं पतिं लब्धा मया दत्ता तथा कुरु । **प्रतिमादानम्** । सावित्री जगतो माता सावित्री जगतः पिता । मया दत्ता च सावित्री ब्राह्मण प्रतिगृह्यताम् । **प्रतिग्रहणम्**—मया गृहीता सावित्री त्वया दत्ता सुशोभने । यावच्चंद्रश्च सूर्यश्च सह भर्त्रा सुखी भव । गुरुं च गुरुपत्नीं च ततो भक्त्या क्षमापयेत् । यन्मया व्रतवैकल्यं व्रतेस्मिन्दुरधिष्ठितम् । तत्सर्वं पूर्णतां यातु युवयोर्दर्शनेन तु । **प्रतिमासं वटसेचनमंत्रः** । धर्मराजो १ यमो २ धाता ३ मृत्युः ४ कालो ५ तको ६ यमः ७ । वैवस्वत ८ श्चित्रगुप्तो ९ दान्तो १० मृत्युः ११ क्षयो वटः १२ । मासि मासि तथा चैतैर्नामभिः सेचयेद्वटं । न्यग्रोधेऽहं[3] वसे पुत्रि तस्माद्यत्नेन सेचयेत् । ततो गुरुं सपत्नीकं पूजयेद्गतविस्मया । भूष-

१ 'प्रसवित्री च' पाठः. २ 'सत्यवंतं'. ३ 'हंयतः पुत्रि' पाठः.

णैश्च सवस्त्रैश्च कुंकुमैश्च मनोहरैः । भविष्ये—न्यग्रोधस्य समीपे तु गृहे वा स्थंडिले शुभे । सावित्र्याश्चैव मंत्रेण घृतहोमं च कारयेत् । पायसं जुहुयाद्भक्त्या घृतेन सह भामिनी । व्याहृत्या चैव मंत्रेण तिलव्रीहियवांस्तथा । होमान्ते दक्षिणां दद्याद्वित्तशाठ्यविवर्जिता । क्षमापयेत्ततो विप्रं वंद्य पादौ प्रयत्नतः । भुंजीत वासरांते तु नक्तं शांता तपस्विनी । अर्घ्यं दत्त्वा त्वरुंधत्यै दृष्ट्वा चैव प्रणम्य च । अरुंधति नमस्तेस्तु वसिष्ठस्य प्रिये शुभे । सर्वदेवनमस्कार्ये पतिव्रते नमोस्तु ते । गृहाणार्घ्यं मया दत्तं फलपुष्पसमन्वितम् । पुत्रान्देहि सुखं देहि सौभाग्यं च नमोस्तु ते । सखिभिर्ब्राह्मणैः सार्धं भुंजीत विजितेंद्रिया । एवं करोति या नारी व्रतमेतदनुत्तमम् । भ्रातरः पितरः पुत्राः श्वशुरौ स्वजनस्तथा । चिरायुषस्तथारोग्याः स्युश्च जन्मशतत्रयम् । भर्त्रा च सहिता साध्वी ब्रह्मलोके महीयते । इती श्रीस्कन्दपुराणे सावित्रीव्रतोद्यापनम् ।

अस्मिंश्च व्रते पूर्णमास्यमावास्ययोर्देशभेदेन यथाचारं व्यवस्था । तिथिद्वैधे चतुर्दशीविद्धे एव ते ग्राह्ये । सावित्रीव्रतमंतरेण भवतोऽमापौर्णमास्यौ परे—इति दीपिकोक्तेः । नचात्र नवमुहूर्तपरिमितचतुर्दशीवेधो दूषकः । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् । इति वाक्येन यत्र दूषकत्वं प्राप्तं तदनुवादेनैव परिमाणविशेषनियमनमिति प्रागुक्तत्वात् । पूर्णमास्यमावास्यानिर्णयानुरोधेन च प्राक्तनतिथ्योरुपादानं कार्यम् । प्रधानाधीनत्वादंगानां । यत्तु मदनरत्ने भविष्योत्तरोक्तं भाद्रपदपूर्णिमायां सावित्रीव्रतं तत्सभार्यपुंकर्तृकत्वात्, गायत्र्यधिष्ठातृब्रह्मपत्नीभूतसावित्रीदेवत्यत्वात्, प्रकृतव्रतदेवताभूतसावित्र्याः पित्रानुष्ठितस्य तस्य सावित्र्यात्मककन्याप्रापकतया निर्दिष्टत्वान्न प्रकृतव्रताभेदेन तद्व्रतं निर्देशार्हमिति अवसरे वक्ष्यामः । एवंच यत्प्राच्यैः—मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत् । ज्येष्ठशुक्लचतुर्दश्यां सावित्रीमर्चयंति याः । वटमूले सोपवासा न ता वैधव्यमाप्नुयुः । इति पराशरोक्तं चतुर्दश्यां प्रदोषव्रतमुच्यते । तदपि त्रिरात्रव्रततया प्रसिद्धाद्व्रतात् एकरात्रसाध्यत्वाद्भिन्नतया स्फुटमिति न प्रसिद्धव्रतेन सह विकल्प इति बोध्यं ।

अस्यामेव पौर्णमास्यां योगविशेषो ज्योतिःशास्त्रे—ऐंद्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा। पौर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्तिता। इति। अतः स्नानादौ तादृशयोगसंकीर्तनं कार्यं। अस्यामेव पौर्णमास्यां मन्वादित्वादपिंडं श्राद्धमपि कर्तव्यम्। येनार्जितानि युधि भूमिपतीन्विजित्य दुर्गाणि दुर्ग्रहतराणि धनैर्युतानि। श्रीबाजबाहदुरसंज्ञनृपस्य तस्य वाचा हरेरिव गिरावनिदेवतुष्ट्यै ॥ १ ॥ योऽनंतदेवकृतमंथनसंनिवद्धक्षीराब्धिजोऽथ कमलापतिना धृतो यः। नित्यं निजे हृदि सतां प्रमुदेऽस्तु तस्य शुक्राख्यदीधितिरियं स्मृतिकौस्तुभस्य॥२॥ इति ज्येष्ठकृत्यं ॥

अथाषाढकृत्यं निर्णयामृते महाभारते—आषाढमेकभक्तेन स्थित्वा मासमतंद्रितः। बहुधान्यो बहुधनो बहुपुत्रश्च जायते। इति। अत्रैव वामनपुराणे—उपानद्युगुलं छत्रं लवणामलकानि च। आषाढे वामनप्रीत्यै दातव्यानि तु भक्तितः॥ इति। अत्र शुद्धद्वितीयायां रथोत्सव उक्तस्तिथितत्त्वे स्कांदे—आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता। तस्यां रथे समारोप्य रामं मां भद्रया सह। यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजान्बहून्। ऋक्षाभावे तिथौ कार्या यात्रा संप्रीतये समा। इति।

अथ षष्ठ्यां स्कन्दव्रतं निर्णयामृते वाराहे—आषाढशुक्लषष्ठी तु तिथिः कौमारिला स्मृता। कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै दिनम्। इति।

अथ सप्तम्यां मदनरत्ने ब्राह्मे—आषाढशुक्लसप्तम्यां विवस्वान्नाम भास्करः। जातः पूर्वासु तस्मात्तं तत्रोपोष्य यजेत्सदा। रथचक्राकृतौ रम्ये मंडले सर्वकामदम्। भक्ष्यैर्भोज्यैस्तथा पेयैः पुष्पैर्धूपविलेपनैः। इति।

अथाष्टम्यां निर्णयामृते देवीपुराणे—अष्टम्यां च तथाषाढे निशातोयेन स्नापयेत्। महिषघ्नीमिति शेषः। निशा हरिद्रा। स्वयं स्नात्वा च कर्पूरैश्चंदनैस्तां विलेपयेत्। धूपैश्चंदनकर्पूरैर्वालकैः सितसिह्लकैः। भक्ष्यान्शर्करया पूर्णान्पानकानि शुभानि च। दापयेत्कन्यकाविप्रभोजनं चात्मनस्तथा शक्तितो दक्षिणां दद्यान्महिषघ्नीं च कीर्तयेत्। दीपमाला घृतेनैवं सर्वान्कामान्प्रयच्छति। इति।

अथ नवम्यां तत्रैव भविष्ये—उपवासपरो भक्त्या नवम्यां पक्षयोर्द्वयोः । आषाढे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् । पूजयेच्छ्रद्धया दुर्गामैंद्रीनाम्नीं तु नामतः । ऐरावतगतां शुभ्रां श्वेतवस्त्रेण रूपिणीं । ऐरावतसमारूढ इंद्रस्यानुचरो भवेत् । इति ।

अथैकादश्यां हेमाद्रौ ब्राह्मे—एकादश्यां तु शुक्लायामाषाढे भगवान्हरिः । भुजंगशयने शेते यदा क्षीरार्णवे सदा । तदा तत्प्रतिमा कार्या सर्वलक्षणसंयुता । सुप्ता तु शेषपर्यंके शैलमृद्भिस्तु चारुभिः । ताम्रारकूटसहितैस्तथा चित्रपटेषु वा । लक्ष्म्या उत्संगहस्ते च विन्यस्तचरणांबुजा । ( लक्ष्म्या स्वहस्तविन्यस्तमनोज्ञचरणांबुजा ) इत्यपि पाठः । नानाविधोपकरणैः पूज्या च विधिपूर्वकं । उपवासश्च कर्तव्यो रात्रौ जागरणं तथा । तस्यां रात्र्यां व्यतीतायां द्वादश्यां पूजयेत्तथा । त्रयोदश्यां ततो गीतं वाद्यं नृत्यं निवेदयेत् । इति । उत्संगहस्ते उत्संगस्थितहस्ते । पुराणसमुच्चये—आषाढस्य सिते पक्षे एकादश्यामुपोषितः । स्थापयेत्प्रतिमां तत्र शंखचक्रगदाधराम् । पीताम्बरधरां सौम्यां पर्यंके स्वास्तृते शुभे । शुक्लवस्त्रसमाच्छन्ने सोपधाने युधिष्ठिर । इतिहासपुराणज्ञो विष्णुभक्तोथवा पुमान् । स्नापयित्वा दधिक्षीरघृतक्षौद्रजलैस्तथा । समालभ्य शुभैर्गंधैर्धूपैर्दीपैरलंकृताम् । पूजितां कुसुमैः शुक्लैर्मंत्रेणानेन पांडव । मंत्रश्च—सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् । विबुद्धे त्वयि बुध्येत तत्सर्वं सचराचरं । इति । हेमाद्रौ भविष्ये—आभाकाद्येषु मासेषु मिथुने माधवस्य च । द्वादश्यां शुक्लपक्षे तु प्रस्वापावर्तनोत्सवः । इति । मिथुन इति सिंहतुलास्थयोरुपलक्षणम् । उत्सवः प्रबोधनम् । द्वादश्यां संधिसमये ऋक्षाणामप्यसंभवे । आभाकासितपक्षेषु शुभमावर्तनादिकम् । इति । एकादशीद्वादश्योर्देशभेदेन व्यवस्थेति केचित् । तन्न । उक्तब्राह्मपर्यालोचनया शयनीव्रते दिनत्रयसाध्यतया प्रतीयमाने एकदेशान्वयित्वेन पूर्णमासेष्ट्यां पूर्णमासीप्रतिपदोरिव समुच्चयसंभवे विकल्पस्यान्याय्यत्वात् ।

अत्र द्वादश्यां पारणायां विशेषो हेमाद्रौ भविष्ये—आभाकासितपक्षेषु मैत्रश्रवणरेवती । संगमे नहि भोक्तव्यं द्वादश द्वादशीर्हरेत् । इति । आभाकेति त्र्यक्षरैराषाढभाद्रपदकार्तिका उच्यंते । मैत्रमनुराधा । क्रमेण तिस्रो द्वादश्यः नक्षत्रयुताः पार-

णायां वर्ज्या इत्यर्थः । अत्र **विशेषो विष्णुधर्मे**—मैत्राद्यपादे स्वपितीह विष्णुः पौष्णांत्यपादे प्रतिबोधमेति । श्रुतेश्च मध्ये परिवर्तमेति सुप्तिप्रबोधपरिवर्तनमेव वर्ज्यम् । इति । पौष्णं रेवती । श्रुतिः श्रवणः । मध्यो मध्यमा विंशतिः । एवकारादितरनक्षत्रभागस्यावर्ज्यत्वमुक्तं । स्वल्पायां द्वादश्यां वर्जनीयनक्षत्रयोगो यदा भवति तदा निषेधमनादृत्य द्वादश्यामेव पारणं कार्यं सावकाशयोर्विधिनिषेधयोर्मध्ये अनन्यापेक्षत्वेन विधेर्बलवत्त्वात् । कर्णे चेन्मांसवर्जनमिति निषेधस्य पाशुकमांसभक्षविधेश्च बलाबलवत् ।

पारणोत्तरं च सायं पूजां कृत्वा चातुर्मास्यव्रतसंकल्पं कुर्यात् । **रामार्चनचंद्रिकायां**—पारणाह्ने पूर्वरात्रौ घंटादीन्वादयेद्बहून् । विधाय महतीं पूजां विष्णुमभ्यर्च्य वैष्णवान् । इत्युपक्रम्य भगवत्प्रार्थनापूर्वकं व्रतस्वीकारस्योक्तत्वात् । तद्यथा—सुप्ते त्वयि जगन्नाथेति पूर्वोदाहृतमंत्रेण संप्रार्थ्य भगवदग्रे व्रतस्वीकारं कुर्यात् ।—श्वेतद्वीपे भोगिनाथे योगिनाथे स्थिते त्वयि। चातुर्मास्यव्रतेऽनुज्ञां देहि लक्ष्मीपते मम । लब्ध्वानुज्ञां शंखहस्तो यथा प्रोषितभर्तृका । चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि । इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत । इदं व्रतं मया देव गृहीतं पुरतस्तव । निर्विघ्नं सिद्धिमायातु प्रसादात्ते रमापते । गृहीतेऽस्मिन्व्रते देव पंचत्वं यदि मे भवेत् । तदा भवतु संपूर्णं प्रसादात्ते जनार्दन । इत्यभ्यर्थ्याथ देवाय शंखेनार्घ्यं निवेदयेत् ।

श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा । दुग्धमाश्वयुजे मासि कार्तिके चामिषं त्यजेत् । प्राण्यंगचूर्णं चर्मांबु जंबीरं बीजपूरकम् । अयज्ञशिष्टमन्नाद्यं यद्विष्णोरनिवेदितम् । दग्धमन्नं मसूरं च मांसं चेत्यष्टधामिषम् । रुच्यं तत्तद्देशलभ्यं फलमूलादि वर्जयेत् । निष्पावान्राजमाषांश्च मसूरं संधितानि च । वृंताकं च कलिंगं च सुप्ते देवे विवर्जयेत् । चतुर्ष्वपि हि मासेषु हविष्याशी न पापभाक् । हैमंतिकं सितास्विन्नं धान्यं मुद्गयवास्तिलाः । कपालकंगुनीवारं वास्तुकं हिमलोचिका । षष्टिका कालशाकं च मूलकं केमुकेतरत् । कंदं सैंधवसामुद्रे गव्ये च दधिसर्पिषी । पयोऽनुद्धृतसारं च पनसाम्रहरीतकी । पिप्पली

जीरकं चैव नागरं चाथ तिंतिणी । कदली लवली धात्रीफलानि गुडमैक्षवं । अतैलपक्वं मुनयो हविष्याणि प्रचक्षते । इति । संधितानि लवणशाकान् । सितास्विन्नं गौडेषु प्रसिद्धो धान्यविशेषः । सच हेमंतोत्पन्न एव हविष्यं । कलायं कुलित्थः । कंगु कांग इति भाषया प्रसिद्धं । हिलमोचिका गौडेषु हिलासा इति प्रसिद्धः । पत्रशाकः । कालशाकः पर्वतदेशे प्रसिद्धः शाकः । केमुकं गौडेषु केंवु इति प्रसिद्धं । मूलकं । कंदः सूरणः । नागरं शुंठिः । लवली रायआंवळी इति महाराष्ट्रे । हरफारेवरीति मध्यदेशे प्रसिद्धा । अतैलपक्वमिति उक्तानां विशेषणम् । नृसिंहपरिचर्यायां भविष्ये—श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा । दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् । इति । पाद्मे—कार्तिके वर्जयेद्राजन्द्विदलं बहुबीजकम् । इति ।

द्विदलं च तत्रैव ।—माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः । निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतम् । नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत् । इति । अन्यत्र च—बीजमेव समुद्भूतं द्विदलं चांकुरं विना । दृश्यते यत्र सस्येषु द्विदलं तन्निगद्यते । इति । एतेषामेव नित्यत्वमुक्तं स्कांदे—चत्वार्येतानि नित्यानि चतुराश्रमवर्णिनाम् । इति । तत्रैव—द्विदलं बहुबीजं च वृंताकं च विवर्जयेत् । जंवीरं राजमाषांश्च मूलकं रक्तमूलकं । कूष्मांडं चेक्षुदंडं च चातुर्मास्ये त्यजेद्बुधः । बहुबीजग्रहणेन प्राप्तनिषेधस्यापि वृंताकस्य पुनर्वचनं दोषाधिक्यार्थं । एवं रक्तमूलकस्यापि ।

महाभारते दानधर्मेषु ।—कंचिद्धर्मं प्रवक्ष्यामि मानुषाणां सुखावहम् । इति प्रकृत्य—चतुरो वार्षिकान्मासान्यो ददाति तिलोदकम् । भोजनं च यथाशक्ति ब्राह्मणे वेदपारगे । अग्निकार्यं च कर्तव्यं परमान्नेन भोजनम् । दीपकश्चापि कर्तव्यः पितॄणां सतिलोदकः । एतेन विधिना मर्त्यः श्रद्दधानः समाहितः । पशुबंधशतस्येह फलं प्राप्नोति पुष्कलम् । इति । अत्र क्रमेण पैतृकाण्येव तर्पणश्राद्धदीपदानानि विधीयंते । अग्निकार्यमग्नौकरणं । परमान्नेनेत्यस्य मध्यमणिन्यायेनान्वयः । काम्यान्यपि मदनरत्ने भविष्ये—चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि । स्त्री वा नरोपि वा भक्त्या धर्मार्थं सुदृढव्रतः ।

गृह्णीयान्नियमानेतान्दंतधावनपूर्वकम् । तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक् पृथक् । मधूकतैलत्यागेन सौभाग्यमतुलं लभेत् । मधुरस्वरो भवेन्नित्यं नरो गुडविवर्जनात् । तैलस्य वर्जनात्पार्थ सुंदरांगः प्रजायते । कटुतैलपरित्यागाच्छोकनाशः प्रजायते । योगाभ्यासी भवेद्यस्तु स सत्पदमवाप्नुयात्[1] । तांबूलवर्जनाद्भोगी रक्तकंठः प्रजायते । शाकपत्राशनत्यागी पक्वान्नादी नरो भवेत् । पादाभ्यंगपरित्यागाद्वपुःसौरभ्यमाप्नुयात् । दधिदुग्धतक्रनियमान्मम लोकं लभेन्नरः । लभते संततिं दीर्घां स्थालीपाकविवर्जनात् । भूमौ प्रस्तरशायी च विष्णोरनुचरो भवेत् । भूमौ भुंक्ते नरो यस्तु स नरो भूपतिर्भवेत् । सदा मुनिः सदा योगी मधुमांसविवर्जनात् । निर्व्याधिर्नाऽरुगोजस्वी विष्णुभक्तः प्रजायते । ना पुमान् अरुगिति छेदः । एकान्तरोपवासेन विष्णुलोकमवाप्नुयात् । धारणान्नखरोम्णां च गंगास्नानं दिने दिने । मौनव्रती भवेद्यस्तु तस्याज्ञास्खलिता भवेत् । नमोनारायणायेति जप्त्वा मानसजं फलम् । पादाभिवंदनाद्विष्णोर्भवेद्गोदानजं फलम् । विष्णुपादांबुजस्पर्शात्कृतकृत्यो भवेन्नरः । विष्णोर्देवालये कुर्यादुपलेपनमार्जनम् । कल्पस्थायी भवेद्राजा स नरो नात्र संशयः । प्रदक्षिणाशतं यस्तु करोति स्तुतिपाठकः । हंसयुक्तविमानेन स तु विष्णुपुरं व्रजेत् । कृत्वा प्रेक्षणकं दिव्यं स्थानमप्सरसां व्रजेत् । तीर्थजांबुहरिस्नानान्निर्मलं देहमाप्नुयात् । एकभक्ताशनान्नित्यमग्निहोत्रफलं लभेत् । अयाचितेन चाप्नोति वापीकूपप्रपाफलम् । षष्ठाह्नःकालभोगेन स्थायी स्वर्गे नरो भवेत् । भोगेन भोजनेन । पत्रेषु यो नरो भुंक्ते कुरुक्षेत्रफलं लभेत् । शिलायां भोजनं नित्यं प्रयागे स्नानजं फलम् । एवमादिव्रतैः पार्थ तुष्टिमायाति केशवः । इति । मासचतुष्टयसाधारणव्रतानां विशेषरूपेण संकल्प इहैव कर्तव्यः । तत्तन्मासविशेषव्रतानामपि चातुर्मास्यव्रतत्वेन सामान्येन इहैव संकल्पः । शाकं वर्जयिष्ये इति विशेषसंकल्पश्च ।

अत्र शाकपदार्थः—मूलपत्रकरीराग्रफलकांडाधिरूढकाः । त्वक् पुष्पं कवचं चेति शाकं दशविधं स्मृतम् । इत्यभियु-

१ 'सत्पदमाप्नुयात्'.

क्तोक्तिसत्वेपि न मूलाग्रादिमात्रकम् । व्यंजनतया सुप्रसिद्धेष्वेव फलमूलादिषु शाकपदस्य लोकव्यवहारभूयस्त्वात् । द्रव्यशब्दस्य शास्त्रकारैः पृथिव्यादिनवद्रव्यवाचितयोक्तस्यापि सुवर्णादौ सुप्रसिद्धत्ववलेन द्रव्यवांश्चैत्र इत्यादिप्रयोगे द्रव्यशब्देन व्यवहारदर्शनात् । गोशब्दस्यानेकार्थवाचकत्वेपि प्रकरणादितात्पर्यनिर्णायकप्रमाणाभावेऽपि गां दद्यादित्युक्तेः सास्नादिमत्या एव व्यवहाराच्च । यत्तु—तत्तत्कालोद्भवाः शाका वर्जनीयाः प्रयत्नतः । वहुबीजमबीजं च विकारी च विवर्जयेत् । इति भविष्यवचनं तत्प्रयत्नत इति विशेषग्रहणादेतेषां शाकानां दोषाधिक्यज्ञापनार्थं । वहुबीजमिति च ह्यधिकबीजवत्फलमित्यर्थः । अबीजं विकारीति पदद्वयेन कालादिकृतविकारवशेन विनष्टबीजं फलमुच्यते । चकारद्वयमेकस्मिन्धर्मिणि विशेषद्वयसूचनार्थं । यच्च—वृंताकं च कलिंगं च विल्वोदुंवरभिःसटाः । उदरे यस्य तिष्ठंति तस्य दूरतरो हरिः । इति । तत्तु सर्वकालं वैष्णवं प्रति निषेधपरं । कालविशेषमनधिकृत्य प्रवृत्तत्वात् । यत्तु—न शैशवं न मौढ्यं च शुक्रगुर्वोर्न वार्धकं । खंडत्वं चिंतयेच्चादौ चातुर्मास्यविधौ नरः । इति हेमाद्रौ वृद्धगार्ग्यवचनं तत् नित्यव्रतानां प्रथमद्वितीयादिसर्वारंभविषयम् नतु काम्यव्रतारंभविषयं । प्रतिप्रसवापेक्षितायां अवश्यकर्तव्यतायाः क्लृप्तायाः लाभे कल्पनायोगात् । अतएव नित्यत्वान्मलमासे प्राप्ता कर्तव्यता कालादर्शे निषिध्यते । ईशानस्य वलिं विष्णोः शयनं परिवर्तनं । इत्यादिना ।

आशौचे तु प्रथमारंभो न भवत्येव ।—आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् । इति विष्णुवचनात् । आरंभशब्दस्य दर्शपूर्णमासावारभ्यमाण इत्यादौ प्रथमप्रवृत्तावेव दृष्टत्वात् । इति शयनीनिर्णयः ।

अथ द्वादश्यां महाभारते दानधर्मेषु—आषाढे मासि द्वादश्यां वामनेति च पूजयेत् । नरमेधमवाप्नोति पुण्यं च लभते महत् । इति । अथ चतुर्दश्यां हेमाद्रौ ब्राह्मे—आषाढे मासि भूतायां शिवं संपूज्य मानवः । सर्वपापविनिर्मुक्तः

१ जीर्यते. २ 'फलम्' इति ।

सर्वसंपदमाप्नुयात् । इति । अथ पौर्णमास्यां निर्णयामृते ब्राह्मे—चतुर्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिं । इति । अस्यामेव पूर्वाषाढायुतायामन्नदानमुक्तं । तत्रैव विष्णुना—आषाढ्यामषाढायुतायां अन्नदानादिदानेन तदेवाक्षयमवाप्नोतीति। अस्यामेव शिवशयनोत्सव उक्तो हेमाद्रौ वामनपुराणे—पौर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे । वैयाघ्रे च जटाभारं समुद्ग्रथ्याहिवर्ष्मणा । इति । इयं पूर्वविद्धा ग्राह्या—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । इति वचनात् ।

अस्यामेव शिवपवित्रारोपणमुक्तं हेमाद्रौ शिवधर्मपुराणभविष्ययोः—पूर्णमास्यां तथाषाढ्यां शिवं संपूज्य यत्नतः । उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् । पुनरेव च कार्तिक्यां पूज्य शंभुं क्षमापयेत् । यतिभ्यो दक्षिणां दद्यात्सूत्रवस्त्रादिपूर्विकाम् । यः कुर्यात्सकृदप्येवं चातुर्मास्यं पवित्रकं । कल्पकोटिशतं दिव्यं रुद्रलोके महीयते । इति । अत्रैव कालांतरविधिपूर्वकं नित्यत्वमुक्तं कालोत्तरे—आषाढांते चतुर्दश्यां नभस्यनभसोस्तथा । अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोः समम् । पवित्रारोपणं कार्यं न तु कालांतरे स्थितम् । अत्राषाढः कृष्णादिः । एवं काले ह्यतिक्रांते प्रायश्चित्तं समाचरेत् । इति । अत्र चतुर्दश्यामष्टम्यां वा पवित्रारोपणपक्षे त्रयोदश्यां सप्तम्यां चाधिवासनपूर्वकं गंधपवित्रारोपणं शिवे कार्यं । पूर्णमास्यामनुष्ठानपक्षे चतुर्दश्यामष्टम्यां वाधिवासनं कार्यं—सप्तम्यां वा त्रयोदश्यां तत्र गंधपवित्रकं । इति हेमाद्रौ वचनात् । पवित्रारोपणं शंभोः कुर्यान्नभसि वा शुचौ । चतुर्दश्यामथाष्टम्यामधिवास्य विधानतः । श्रावण्यां प्रौष्ठपद्यां वा पवित्रारोपणं तु यः । कुरुते ना पवित्रः स्यात्स तु संवत्सरांतरे । इति शिवरहस्यवचनाच्च । शुचौ आषाढे । आषाढस्याधिमासत्वे तत्रेदं न कार्यं । आषाढे तु न कर्तव्यं प्रसुप्ते तु जनार्दने । इति वचसस्तदभिप्रायेण निबंद्धृभिर्व्याख्यानात् । उक्तमासत्रये तदकरणे कन्यागतेपि सूर्ये तत्कार्यं ।—उक्तमासत्रये यस्तु न कुर्यात्सूत्ररोपणम् । असौ कन्यागते भानौ यथा दक्षाणुना युतं । कुर्यात्पवित्रं शंभोस्तु तुलायां न कथंचन । इति वचनात् । दक्षाणुना अघोरमंत्रेणेति व्याख्यातं हेमाद्रिणा । ग्रहकाला-

संभवे सद्योपि तत्कर्तव्यं । यद्वा तदैव कर्तव्यं यदि व्यग्रतया तदा । गोदोहांतरितं कृत्वा साधिवासं पवित्रकम् । इति वचनांतरात् । मंत्रातिरिक्तविधिस्तु विष्णोः पवित्रारोपणवद्बोध्यः ।

अस्यामेव पूर्णमास्यां संन्यासिनामौत्सर्गिकसंचरणे चातुर्मास्यगतापवादस्य परिपालनसंकल्पांगत्वेन क्षौरं **व्यासपूजादिकं** विहितं । उत्सर्गशास्त्रं तावद्विश्वेश्वरीये—एकरात्रं वसेद्ग्रामे पत्तने तु दिनत्रयम् । पुरे दिनद्वयं भिक्षुर्नगरे पंचरात्रकम् । वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजनावृते । आत्मवत्सर्वभूतानि पश्यन्भिक्षुश्चरेन्महीं । इति । ग्रामादिलक्षणं राजधर्मदीधितौ वक्ष्यामः । **आरुणस्मृतौ**—वर्षासु ध्रुवशीलस्तु मास्स्वेकाकी यतिश्चरेत् । द्वावेव वा चरेदिति । अत्र वर्षासु मास्स्वति कार्तिकांताश्चत्वारो मासा उच्यंते । द्वाविति द्वयोर्वा श्रावणभाद्रपदयोरित्यर्थः । ध्रुवशील एकत्रस्थिरः । चरेदिति भिक्षाटनाद्यनुवादः । **मेधातिथिः**—आषाढ्यां पौर्णमास्यां च कारयेद्वपनं यतिः । चातुर्मास्यस्य मध्ये तु वपनं वर्जयेद्यतिः । इति । **तथा**—वपनांते पुनः स्नात्वा मृद्भिर्द्वादशभिर्यतिः । द्वादशैव प्रकुर्वीत क्षौरांते प्राणसंयमान् । इति । **अत्रिः**—वपनानंतरं स्नात्वा पूजयेत्पुरुषोत्तमम् । इति । **यतिधर्मसमुच्चये**—देवं कृष्णं मुनिं व्यासं भाष्यकारं गुरोर्गुरुं । गुरुं देवं गणाध्यक्षौ दुर्गां देवीं सरस्वतीं । गणं गणेशं । अध्यक्षं क्षेत्रपालं । तत्र कृष्णव्यासभाष्यकाराः सव्यूहाः पूज्याः । तत्र कृष्णस्य वासुदेवसंकर्षणौ प्रद्युम्नानिरुद्धौ पुरोदेशमारभ्य प्रादक्षिण्येन व्यूहः । व्यासस्य सुमंतुजैमिनिवैशंपायनपैलैः । भाष्यकारस्य पद्मपादविश्वरूपत्रोटकहस्तामलकाचार्यैः । मध्ये कृष्णपंचकं । तस्य दक्षिणतो व्यासपंचकं । वामतो भाष्यकारपंचकं । कृष्णपंचके भगवत्पार्श्वयोर्ब्रह्मरुद्रौ । परितः प्रादक्षिण्येन प्रागादिक्रमेण सनत्कुमारादयः पूज्याः । एवमितरयोरपि व्यूहयोश्चतुर्णांचतुर्णां प्रागादिक्रमेण पूजनं बोध्यं । भगवद्व्यूहात्पुरतः गुरुपरमगुरुपरमेष्ठीगुरूनन्यांश्च ब्रह्मविद्याचार्यान्पूजयेत् । तेच—ब्रह्म ब्रह्मा वसिष्ठश्च शक्तिश्चैव पराशरः । व्यासः शुको गौडपादो गोविंदस्वामिशंकराः । आग्नेये गणेशं । ईशान्ये क्षेत्रपालं । वायव्ये दुर्गां । नैर्ऋत्ये सरस्वतीं । यथादिशं लोकपालान् । ततः श्रीकृष्णोऽष्टाक्ष-

रमूलमंत्रेण पूज्यः । अन्ये पुनः प्रणवादिभिर्नमोंतैस्तत्तन्नाममंत्रैः पूज्याः । एवं संपूज्य पूर्वसंगृहीतगोपीचंदनमृत्तिकां दंतकाष्ठानि दोरकांश्च यथासंभवं दद्यात् । मृत्संग्रहश्च वृष्टेः प्राक्ज्येष्ठाषाढयोर्मध्ये न कार्यः । मंत्रः—येनोद्धृतासि देवि त्वं क्रोडरूपेण दंष्ट्रया । त्वया सह स मां पातु केशवो धरणीधरः । इति । ततः संकल्पमाहात्रिः—असति प्रतिबंधे तु मासान्वै वार्षिकानिह । निवसामीति संकल्प्य मनसा बुद्धिपूर्वकम् । प्रायेण प्रावृषि प्राणिसंकुलं वर्त्म दृश्यते । आषाढ्यादिचतुर्मासं कार्तिक्यंतं तु संवसेत् । इति वाचिकसंकल्पे संन्यासिवक्तव्यान्मंत्रानाह । स एव—माधवश्चतुरो मासान्सर्वभूतहिताय वै । निद्रां यास्यति शेषांके लक्ष्म्या सह जगत्पतिः । सुप्तश्चैवोत्थितो यावन्न भवेत्स सनातनः । अहं तावन्निवत्स्यामि सर्वभूतहिताय वै । प्रायेण प्रावृषि प्राणिसंकुलं वर्त्म दृश्यते । अतस्तेषामहिंसार्थं पक्षान्वै श्रुतिसंश्रयात् । स्थास्यामश्चतुरो मासानत्रैवासति बाधके । एवं संन्यासिभिरुक्ते गृहस्थाः प्रतिब्रूयुः । निवसंतु सुखेनात्र गमिष्यामः कृतार्थताम् । यथाशक्ति च शुश्रूषां करिष्यामो वयं मुदा । इति ।—वृद्धाननुक्रमेणैव नमस्कृत्य विधानतः । अनेन विधिना भिक्षुराषाढ्यां तु समाहितः । स्थानाद्भावाद्व्रजेद्भक्त्या यावद्भवति पंचमी । इति । स्थानान्मठात् । व्रजेत् गुरुवृद्धनमस्कारार्थं । तत्रैव यावत्पंचमीत्यवधिनिर्देशः । अत्र च क्षौरादिसंकल्पकर्मणि औदयिकी त्रिमुहूर्ता पूर्णमासी ग्राह्या ।—त्रिमुहूर्तादिकं ग्राह्यं पर्व क्षौरप्रणामयोः । इत्यभियुक्तोक्तेः । केनापि प्रतिबंधेन पूर्णमास्यां अस्य संकल्पविधेरसंभवे द्वादश्यामेषोऽनुष्ठेयः । द्वादश्यां पूर्णमास्यां वा कुर्यात्संकल्पमात्मवित् । इत्यत्रिवचनात् ।

अथ कृष्णप्रतिपदि मृगशीर्षव्रतं हेमाद्रौ पाद्मे—श्रीभगवानुवाच । श्रावणे कृष्णपक्षे तु शंकरः प्रथमेऽहनि । त्रिपर्वणा त्रिशल्येन शरेण त्रिमुखेन तु । मुखानि त्रीणि चिच्छेद यज्ञस्य मृगरूपिणः । तैः शिरोभिस्तपस्तप्तं वरः प्राप्तोऽथ शंकरात् । त्रिशल्येन त्रिमुखेन । शल्यरूपमुखत्रयेणेत्यर्थः । स्त्रीभिः पूज्यानि तानीति न मनुष्यैः कदाचन । मृगशीर्षं ततः कृत्वा लिंगाकारं तु मृन्मयं । क्षीरेण स्नपनीयं वै पूजनीयं यथाविधि ।

अर्घ्यैः पुष्पैश्च धूपैश्च नैवेद्यैर्विविधैरपि । शाकैः सौवर्चलाभिश्च कृतैः पुष्पमयैः शुभैः । कांस्यभाजनवाद्यैश्च पश्चात्कार्यं च वादनं । इति । सौवर्चलाभिः अतसीमिश्रपिष्टविकृतिभिः । पिष्टमयैर्भक्ष्यांतरैः। अत्र श्रावणः कृष्णादिरिति हेमाद्रिः ।

अथ द्वितीयामारभ्य **अशून्यशयनव्रतं मदनरत्ने भविष्ये**—श्रीकृष्ण उवाच । शेते जगत्पतिः कृष्णः श्रिया सार्धं यदा नृप । अशून्यशयना नाम तदा ग्राह्या तु सा तिथिः । कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत । अस्मिन्व्रते श्रावणः शुक्लान्तो ग्राह्यः । **वामनपुराणे** । द्वादश्यादितिथिषु क्रमेण श्रीकृष्णकामयक्षोमापतिब्रह्मविश्वकर्मणां स्वापमभिधाय—यस्यां तिथ्यां प्रस्वपिति विश्वकर्मा प्रजापतिः । द्वितीया सा शुभा पुण्या सुपुण्यशयनोचिता । तस्यां तिथावभ्यर्च्य हरिं श्रीवत्सांकं चतुर्भुजम् । पर्यंकस्थं समं लक्ष्म्या गंधपुष्पादिभिर्मुने । ततो देवाय शय्यायां फलानि प्रक्षिपेत्क्रमात् । इत्यादिना आषाढ्यव्यवहितद्वितीयायामेवाभिधानात् । इममुच्चारयेन्मंत्रं प्रणम्य च जगत्पतिम् । श्रीवत्सधारिन्श्रीकांत श्रीवासः श्रीपतेऽव्यय । गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदं । शुचयो मा प्रणश्यंतु मा प्रणश्यंतु निर्जराः । याम्यगा मा प्रणश्यंतु मत्तो दंपत्यभेदतः । शुचयोऽग्नयः । निर्जरा देवाः । याम्यगाः पितरः । लक्ष्म्या वियुज्यते देव न कदाचिद्यथा भवान् । तथा कलत्रसंबंधो देव मा मे वियुज्यताम् । लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा । शय्या ममाप्यशून्यास्तु तथात्र मधुसूदन । **विष्णुरहस्ये** तु—पत्नी भर्तुर्वियोगं च भर्ता भार्यासमुद्भवम् । नाप्नुवंति यथा दुःखं दंपत्यानि तथा कुरु । यथा श्रिया युतो विष्णुर्लक्ष्मीर्देव त्वया यथा । प्रसादात्तव देवेश भक्तिरस्तु तथावयोः । मा स्म पुत्राः प्रणश्यंतु मा धनं मा कुलक्रमः । अग्नयो मा प्रणश्यंतु गृहभंगस्तु मावयोः । इत्येते मंत्राः । एवं प्रसाद्य पूजां च कृत्वा लक्ष्म्यास्तथा हरेः । चंद्रायार्घ्यस्तथा देयो दध्यक्षतफलादिभिः । अर्घ्यमंत्रः । गगनांगणसंदीप क्षीराब्धिमथनोद्भव । भभासितदिगाभोग रमानुज नमोस्तु ते । इति । नक्तं प्रणम्यायतने हरिं भुंजीत वाग्यतः । ब्राह्मणाय द्वितीयेह्नि शक्त्या देयाश्च दक्षिणाः । यानि तत्र महाबाहो काले संति फलानि च ।

मधुराणि न तीव्राणि न चापि कटुकानि च । दातव्यानि नृप-श्रेष्ठ स्वशक्त्या शयनेऽनघ । मधुराणि च दत्वा तु मनोवल्लभतां व्रजेत् । तस्मात्कटुकतीव्राणि स्त्रीलिंगानि च वर्जयेत् । खर्जूरमातुलिंगानि स्थितेन शिरसा सह । स्थितेन शिरसा दृढनारीकेलफलेनेत्यर्थः । एतान्येव तु विप्रस्य गांगेय सहितानि च । द्वितीयेऽह्नि प्रदेयानि भक्त्या शक्त्या च भारत । वासोदानं तथा धान्यं फलदानसमन्वितम् । एवं करोति यः सम्यङ्नरो मासचतुष्टयम् । सप्तजन्मत्रयं वीर गृहभंगो न जायते । इति । पाद्मे—गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् । घंटा वाद्यमशक्तस्य सर्ववाद्यमयी यतः । एवं संपूज्य गोविंदमश्नीयात्तैलवर्जितम् । नक्तमक्षारलवणं यावन्मासचतुष्टयं । ततः प्रभाते संजाते लक्ष्मीपतिसमन्विताम् । दीपान्नभोजनैर्युक्तां शय्यां दद्याद्विचक्षणः । पादुकोपानहच्छत्रचामरासनसंयुताम् । अभीष्टोपस्करैर्युक्तां शुक्लपुष्पांबरैर्वृताम् । सोपधानकविश्रामां फलैर्नानाविधैर्युताम् । तथाभरणधान्यैश्च यथाशक्त्या समन्विताम् । अव्यंगा गौश्च विप्राय वैष्णवाय कुटुंबिने । दातव्या वेदविदुषे न बकव्रतिने क्वचित् । तत्रोपवेश्य दंपत्यमलंकृत्य विधानतः । पत्न्यास्तु भोजनं दद्याद्भक्ष्यभोज्यसमन्वितम् । ब्राह्मणस्यापि सौवर्णीमुपस्करसमन्विताम् । प्रतिमां देवदेवस्य सोदकुंभां निवेदयेत् । एवं यस्तु पुमान्कुर्यादशून्यशयनं हरेः । न तस्य चित्तविरहः कदाचिदपि जायते । नारी वा विधवा राजन्यावच्चंद्रार्कतारकम् । इति । मात्स्ये—न विरूपं न शोकार्तं दंपत्यं जायते क्वचित् । न पुत्रपशुरत्नानि क्षयं यांति द्विजोत्तम । सप्तकल्पसहस्राणि सप्तकल्पशतानि च । कुर्वन्नशून्यशयनं सूर्यलोके महीयते । इति । अस्मिन् चंद्रोदये पूजाविधानाच्चंद्रोदयव्यापिन्येव तिथिर्ग्राह्या । दिनद्वयेऽपि तत्सत्वासत्वयोः परैव ।—चतुर्ष्वसितपक्षेषु मासेषु श्रावणादिषु । अशून्याख्यं व्रतं कुर्याज्जयया तु फलाधिकं । इति वचनात् । येनार्जितानि युधि भूमिपतीन्विजित्य दुर्गाणि दुर्ग्रहतराणि निजैः कटाक्षैः । श्रीबाजबाहदुरसंज्ञनृपस्य तस्य वाचा हरेरिव गिरावनिदेवतुष्ट्यै ॥ १ ॥ योऽनंतदेवकृतमंथनसन्निबंधक्षीराब्धिजोऽथ कमलापतिना धृतो यः । नित्यं निजे हृदि सतां प्रमुदेस्तु तस्य आषाढदीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥

अथ श्रावणकृत्यं निर्णयामृते महाभारते—श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् । यत्र तत्राभिषेच्येण(?)पूज्यते ज्ञातिवर्धनः। इति। तत्रैव स्कांदपुराणे—घृतं क्षीरं लैलासांश्च घृतधेनुफलानि च । श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चिता । इति । अत्र शुक्लपक्षे प्रतितिथिदेवताभेदेन पवित्रारोपणमुक्तं तत्त्वसारसंहितायां—प्रतिपद्धनदस्योक्ता द्वितीया च श्रियो मता । तृतीया पार्वतीदेव्याश्चतुर्थी विघ्नहारिणः । पंचमी शशिनः प्रोक्ता षष्ठी प्रोक्ता गुहस्य तु । सप्तमी भास्करस्योक्ता दुर्गाया-श्चाष्टमी मता । मातृणां नवमी प्रोक्ता धर्मस्य दशमी स्मृता । एकादशी मुनीनां तु द्वादशी चक्रपाणिनः । त्रयोदशी त्वनंगस्य शिवस्योक्ता चतुर्दशी । पूर्णमासी सुरश्रेष्ठ पितॄणां कथिता तिथिः। देव्यास्त्रिपुरभैरव्याः कथिता च चतुर्थिका । अन्येषामपि देवानामष्टमी नवमी स्मृता । इति ।

अत्र सोमभौमवासरयोः कार्यं शिवरहस्ये—तस्य केदारनाथस्य श्रावणे सोमवासरे । पूजा कार्या विशेषेण साधनैर्विविधैः शुभैः । सोमवारव्रतं कार्यं प्रयत्नेन यथाविधि । शक्तेनोपोषणं कार्यमथवा निशि भोजनम् । कामाक्षीं प्रकृत्य—तत्रापि श्रावणे मासि प्रत्यहं विधिवज्जनैः । पूजा कार्या विशेषेण सर्वथा भौमवासरे । इति ।

अथ श्रावणशुक्लपंचम्यां नागपूजोक्ता हेमाद्रौ—श्रावणे मासि पंचम्यां शुक्लपक्षे नराधिप । द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः । पूजयेद्विधिवद्वीर दधिदूर्वांकुरैः कुशैः । गंधपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः । एतस्यां पूजयंतीह नागान्भक्तिपुरःसराः । न तेषां सर्पतो वीर भयं भवति कुत्रचित् । इति ।

अथ नवम्यां कौमारीनामकदुर्गापूजनमुक्तं निर्णयामृते भविष्ये—श्रावणे मासि राजेंद्र यः कुर्यान्नक्तभोजनम् । क्षीरषाष्टिकभक्तेन सर्वभूतहिते रतः । उपवासपरो वीर नवम्यां पक्षयोर्द्वयोः । कौमारीमिति वै नाम्ना चंडिकामर्चयेत्सदा । कृत्वा शैलमयीं शक्त्या दुर्गां वै पापनाशिनीं । करवीरस्य पुष्पैस्तु गंधैरगरुचंदनैः । धूपेन च दशांगेन मोदकैश्चापि पूज-

१ लतामांश्च ?

येत् । कुमारीर्भोजयेद्भक्त्या स्त्रियो विप्रांश्च शक्तितः । भुंजीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः । एवं यः पूजयेदार्यां श्रद्धया परयान्वितः । स याति परमं स्थानं यत्र देवो गुहः स्थितः । इति ।

अथ द्वादश्यां पवित्रारोपणोत्सवो **हेमाद्रौ विष्णुरहस्ये**—न करोति विधानेन पवित्रारोपणं तु यः । तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम । तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । वर्षे वर्षे प्रकर्तव्यं पवित्रारोपणं हरेः । इति । **तंत्रप्रकाशे**—कर्कटकगते सूर्ये तथा सिंहगतेपि वा । द्वादश्यां शुक्लपक्षस्य हरेर्दद्यात्पवित्रकम् । एतस्मिन्कालेऽसंभवे तु कार्तिकावधिर्गौणः काल उक्तो **दीपिकायां**—पवित्रारोपणं विद्याच्छ्रावणे न भवेद्यदि । कार्तिक्यवधि शुक्रास्ते कर्तव्यमिति नारदः । इति । शुक्रास्तेऽपि कर्तव्यमित्यर्थः ।

अथ संक्षेपेण प्रयोगः । दशम्यां हेमरौप्यताम्रान्यतरसूत्रस्य कुमारीकर्तितकार्पाससूत्रस्य वा नवसूत्रीं विधाय पंचगव्येन प्रोक्ष्य प्रणवेन प्रक्षाल्य मूलेनाष्टोत्तरशतमभिमंत्र्य शुचिदेशेष्टोत्तरशततदर्धतदर्धगुणितनवसूत्र्या देवस्य जानूरुनाभिपर्यंतानि षट्त्रिंशच्चतुर्विंशतिद्वादशग्रंथिकान्युत्तममध्यमकनिष्ठानि पवित्राणि विधायाष्टोत्तरसहस्रनवसूत्र्याष्टोत्तरशतग्रंथिनवकमालां विधाय द्वादशनवसूत्रीभिः तावद्ग्रंथ्येकं गंधपवित्रं सप्तविंशतिनवसूत्र्या गुरुपवित्रं च कृत्वा ग्रंथीन्कुंकुमेन रंजयित्वा अपामार्गबिल्वान्यतरकाष्ठेन दन्तान्संशोध्य ।—क्रियालोपविघातार्थं[1] यत्त्वया विहितं प्रभो । मयैतत्क्रियते देव तव तुष्ट्यै पवित्रकम् । न मे विघ्नो भवेदत्र कुरु नाथ दयां मयि । सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः । इति प्रार्थ्यैकभक्तेन तद्दिनमतिवाह्य एकादश्यां कृतनित्यक्रियः श्रीहरिं महामंडपे राजोपचारैः संपूज्य । हरेः पुरतः सर्वतोभद्रस्थोदकुंभे वैणवं पटलं निधाय । तत्र पूर्वनिर्मितसकलसूत्राणि निधाय त्रिसूत्र्यां ब्रह्मविष्णुशिवान्नवसूत्र्यां ॐकारसोमवह्निब्रह्मनागशशिसूर्यसदाशिवविश्वेदेवान् ग्रंथिषु क्रिया पौरुषी विराज्यपराजिता विजया मुक्तिदा सदाशिवा मनोन्मनी सर्वतोमुखीः प्रणवादिनमोंतैरेतैरेव यावद्ग्रंथिसंख्या-

---

१ विधानार्थे ।

मावर्त्यमाननामभिरावाह्य गंधादिभिरभ्यर्च्य गंधपवित्रं धूपितमादाय प्रणवेनाभिमंत्र्य—विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनं । सर्वकामप्रदं देव तवांगे धारयाम्यहम् । इति मंत्रेण मूलसंपुटितेन भगवत्पादयोः समर्प्य प्रार्थयेत् । ॐ आमंत्रितोसि देवेश पुराणपुरुषोत्तम । प्रातस्त्वां पूजयिष्यामि सांनिध्यं कुरु केशव । क्षीरोदधिमहानागशय्यावस्थितविग्रह । प्रातस्त्वां पूजयिष्यामि सन्निधौ भव ते नमः । इति सत्कथाजागरणेन तां रात्रिमतिवाह्य । द्वादश्यां कृतनित्यक्रियः श्रीहरिं पवित्राणि च संपूज्य गंधदूर्वाक्षतयुक्तं कनिष्ठपवित्रमादाय दद्यात् । मंत्रः—देवदेव नमस्तुभ्यं गृहाणेदं पवित्रकम् । पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । पवित्रं मे कुरुष्वाद्य यन्मया दुष्कृतं कृतं । शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर । इति । एवं मध्यमोत्तमवनमाला एतन्मंत्रावृत्त्या समर्प्याः । अंगदेवताभ्योपि यथासंभवं समर्प्य नीराज्य प्रार्थयेत् । ॐ मणिविद्रुममालाभिर्मंदारकुसुमादिभिः । इयं सांवत्सरी पूजा तवास्तु गरुडध्वज । वनमालां यथा देव कौस्तुभं सततं हृदि । तद्वत्पवित्रतंतूंस्त्वं पूजां च हृदये वह । जानताजानता वापि यत्कृतं न तवार्चनम् । केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे । मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे । अपराधसहस्राणि क्रियंतेऽहर्निशं मया । दासोऽयमिति मां मत्वा क्षम्यतां परमेश्वर । ततो गुरुं संपूज्य पवित्रं समर्प्य ब्राह्मणैः सह पारणं विधाय त्रिरात्रं ब्रह्मचर्यादिनियमवान्देवे पवित्रं सदर्भमभिषेकान्यकाले संस्थाप्य त्रिरात्रांते देवं संपूज्य पवित्राणि विसर्जयेत् । इति हेमाद्रौ कालोत्तरे पवित्रारोपणप्रकरणे—कृते मणिमयं कार्यं त्रेतायां हेमसंभवं । पट्टजं द्वापरे सूत्रं कार्पासं तु कलौ स्मृतं । यतिभिर्मानसं कार्यं । इति पवित्रारोपणोत्सवः ।

अस्यामेव महाभारते दानधर्मेषु—अहोरात्रेण द्वादश्यां श्रावणे मासि श्रीधरं । पूज्य यज्ञमवाप्नोति विमानस्थश्च मोदते । इति । अथ चतुर्दश्यां देव्याः पवित्रारोपणोत्सवो मदनरत्ने देवीपुराणे ब्रह्मोवाच । पवित्रं कारयेद्यस्तु तस्य पुण्यफलं शृणु । सर्वयज्ञव्रतं दानं सर्वतीर्थाभिषेचनम् । प्राप्नुयान्नात्र संदेहो

१ 'पंचयज्ञ' इति पाठः ।

यस्मात्सर्वगता शिवा । नाधयो न च दुःखानि न पीडा व्याधयोऽपि च । न भयं शत्रुजं तस्य न ग्रहैः पीड्यते क्वचित् । सिध्यंति सर्वकार्याणि अल्पानि च महांत्यपि । नातः परतरं वत्स अन्यत्पुण्यविवृद्धये । नराणां च नृपाणां च स्त्रीणां चैव विशेषतः । सौभाग्यजननं शक्र तव स्नेहात्प्रकाशितम् । सप्तम्यां वा त्रयोदश्यामधिवासं सुराधिप । सर्वोपहारसंयुक्तो नंदायां भक्तिमास्थितः । सर्वाणि पूजाद्रव्याणि पुष्पगंधफलानि च । नैवेद्यानि विचित्राणि वसून्याभरणानि च । पादुके वाथ खड्गं वा क्षुरिका कार्मुकेऽपि वा । दंतधावनपूर्वं तु पंचगव्ये चरुं श्रपेत् । दत्वा दिशां बलिं वत्स कार्यं चैवाधिवासनं । सदशैर्वस्त्रपत्रैर्वा छादयेत्तत्पवित्रकम् । शताभिमंत्रितं कृत्वा ततो देव्यै निवेदयेत् । रात्रौ जागरणं कुर्यात्सर्वशोभासमन्वितम् । नटनर्तकवेश्यानां संघानि विविधानि च । तिष्ठंति वाद्यगेयादिनिरतानि पुरंदर । प्रभातसमये वत्स प्राप्ते दद्यात्पुनर्बलिं । प्रत्यूषे विधिवत्स्नात्वा तथा देवीं हुताशनम् । इष्ट्वा[1] कुर्याद्यथान्यायं स्त्रियो भोज्यास्तथा द्विजाः । पवित्रारोपणाद्यंते दक्षिणामुपपादयेत् । यथाशक्त्या भवेद्वत्स नियमः कार्यकारिणः । राजानं त्रिविधान्मंत्री रक्षेत्क्रीडामृगावधात् । द्विजाचार्यैश्च स्वाध्यायो न कार्यं कर्षणं कृषैः । वणिग्भिर्न च वाणिज्यं दिनानि सप्त पंच च । अथवा त्रीणि चैकं वा दिनं यामार्धमेव वा । देव्या व्यापार आसक्तिः कर्तव्या सततं हरेः । इति । अधिवासने सप्तमीत्रयोदश्योर्विकल्पनिर्देशेन प्रधानेपि पवित्रारोपणे अष्टमीचतुर्दश्योर्विकल्पो ज्ञाप्यते । प्रकरणान्नंदाशब्देन देव्युच्यते । अधिवासं कुर्यादिति विशेषः । कार्मुकेपि चेत्यंते संपादयेदिति शेषः । वैष्णवपवित्रनिर्माणवत्पवित्रनिर्माणपूर्वकं तत्पूजां कुर्यादित्यर्थः । सदशैः साग्रैः । शताभिमंत्रितमिति शतवारं देवीमंत्रेणाभिमंत्रितमित्यर्थः । एतदेव विधातुं ततो देव्यै निवेदयेदिति परदिनकर्तव्यनिवेदनानुवादः । पुनर्बलिमिति पूर्ववद्दिग्भ्यो बलिं दत्वेत्यर्थः । हुताशनं बल्यर्थचरुश्रपणार्थमग्निमिष्ट्वा पूजयित्वा यथान्यायं यथोचितं उत्तममध्यमकनिष्ठभेदेन पवित्रारोपणं कुर्यादित्यर्थः । यथान्यायमित्यंते पवित्रार्पणं

[1] 'दत्वा' इति पाठः ।

कुर्यादिति शेषः। पवित्रेति एतत्प्रयोगस्यादावंते च दक्षिणादानं कार्यमित्यर्थः। क्रीडामृगावधादित्यंतः समाहारद्वंद्वः। द्यूतात् मृगयातः अन्यवधाच्चेत्यर्थः। अस्मिंश्च व्रते चतुर्दशी पूर्वविद्धैव ग्राह्या। मधोः श्रावणमासस्येति वचनात्। व्याख्यातमेव तद्दमनकारोपणप्रकरणे।

अथ पौर्णमास्यां **निर्णयामृते ब्राह्मे**—श्रावण्यां श्रवणे चैव पूर्वं हयशिरा हरिः। जगाद सामवेदं तु सर्वकिल्बिषनाशनम्। सिंधुर्नदी वितस्तायां प्रविष्टा तत्र चैव हि। अतोत्र श्रवणे तत्र स्नानं सर्वार्थसिद्धिदं। तत्र संगमे। कृत्वा संपूजयेद्विष्णुं शार्ङ्गचक्रगदाधरं। श्रोतव्यान्यथ सामानि पूज्या विप्राश्च सर्वदा। क्रीडितव्यं च भोक्तव्यं तत्रैव स्वजनैः सह। जलक्रीडा तु कर्तव्या नारीभिर्भर्तृलब्धये। इति।

**अत्रैवोपाकर्म। तत्र गोभिलः।** पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः। बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः। इति। अथर्ववेदिनां तूपाकर्मकाल उक्तः **कौशिकगृह्ये**—अथ वेदस्याध्ययनविधिं वक्ष्यामः। श्रावण्यां प्रौष्ठपद्यां वोपाकृत्य अर्धपंचमासानधीयीरन्नेवं छंदांसि लोम्नां चानिवर्तयन्। अर्धमासं वोपाकृत्य क्षपेरन्। त्र्यहमुत्सृज्य आरंभः श्रावण्यामुक्तः पौष्यामुत्सर्ग इति। यत्तु अभिजिति शिष्यानुपनीय श्वोभूते संभारान्संभरति दधिसक्तूनित्यादि तेनैव सूत्रांतरे उक्तं तद्वशेन पर्वाभिजितोः समुच्चय इति केचित्। तन्न। अभिजितः पर्ववदुपाकर्मान्वयाप्रतीतेः। उपनीयेति चोपाकर्मार्थमाचार्यसमीपे शिष्याणां नयनमुच्यते। तथैव संप्रदायविद्भिरंगीकारात्। गोभिलवाक्ये च श्रावणमिति श्रावणे मास्यनुष्ठेयत्वं ज्ञाप्यते। तथाच **शौनकः**—अथातः श्रावणे मासे श्रवणर्क्षयुते दिने। श्रावण्यां श्रावणे मासि पंचम्यां हस्तसंयुते। दिवसे विदधीतैतदुपाकर्म यथोदितम्। इति गोभिलवाक्ये च औदयिकत्वस्य श्रवणहस्तयोरप्यनुषंगः। अतएवोक्तं **परिशिष्टे**—धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम्। श्रावणं कर्म कुर्वंति ऋग्यजुःसामपाठकाः। इति। त्वाष्ट्रं चित्रा। अत्र सामान्यवाचकोपि यजुःपाठकशब्दो गोभिलवाक्यात्तैतिरीयपरो बोध्यः। अतो वाजसनेयिभिः पूर्वविद्ध-

पौर्णमास्यामिदं कार्यं। तद्विषयमेव—श्रावणी दुर्गनवमी दुर्गा चैव हुताशनी । पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् । इति ब्रह्मवैवर्तवचनमिति हेमाद्रिमदनपारिजातादयः। मदनरत्ने तु—पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः । बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रांतिवर्जिते । इति बह्वृचपरिशिष्टवाक्ये तैत्तिरीयग्रहणं यजुर्वेदिमात्रोपलक्षणार्थं । वाक्यस्य बह्वृचान्प्रति औदयिकश्रवणपरत्वात् । तैत्तिरीयाणां तु परस्तुत्यर्थमुपादानात्। अनुवादे च लक्षणायाः अदोषावहत्वात्। श्रावणी दुर्गनवमीत्यादिशास्त्रं तु श्रावण्यां पूर्णमास्यां विहितकर्मांतरविषयमित्युक्तं । तैत्तिरीयशब्दस्य प्रसिद्धार्थबोधप्रसंगात् । गोभिलवाक्यस्य बह्वृचान्प्रति श्रवणविधानमात्रपरत्वेन नेतुमशक्यत्वाच्च । अथ तदपि सामगान्प्रति हस्तमात्रविधिपरमिति चेन्न । होलाकाधिकरणे स्मृतीनां गृह्यग्रंथानां चाध्ययनव्यवस्थया प्रामाण्यव्यवस्थां प्राप्तां दूरीकृत्य सर्वान्प्रति प्रामाण्यस्य स्थापितत्वेन तत्तत्परिशिष्टे तत्तच्छाखीयपुरस्कारेण प्रवृत्तविधेर्विवक्षामंगीकृत्येतरशाखीयान्प्रति प्रतीयमानविध्यविवक्षांगीकारस्य निर्हेतुकत्वात् । यदा श्रावणे मास्यौषधयो न प्रादुर्भवंति तदा भाद्रपदे मासि श्रवणपर्वहस्तेषु बह्वृचादिभिः उपाकर्म कार्यं । तथाच बह्वृचपरिशिष्टे—अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवंति चेत्। तदा भाद्रपदे मासि श्रवणेन तदिष्यते। इति । वसिष्ठोपि—श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य युक्तश्छंदांस्यधीयीतेति। वृत्तिकारेणापि एतद्वार्षिकमित्याचक्षत इति सूत्रव्याख्यानावसरे ओषधिप्रादुर्भावाभावे भाद्रपदे मासि श्रवणनक्षत्रे उपाकर्माभिधानाच्च ।

कातीयानां तत्र विशेषमाह कात्यायनः—अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां पंचम्यां हस्तेन वा इति। एतद्व्याख्यानावसरे च कर्कः कालद्वयाभिप्रायेण स्वयं व्याख्याय तच्चतुष्टयाभिप्रायेण परव्याख्यानमुक्तवान्। एतदेव स्पष्टीचकार हरिहरः। अत्राध्यापयतोपि निरग्नेः साग्नेरप्यनध्यापयतो नाधिकारः । ओषधिप्रादुर्भावश्रवणौ च पौर्णमास्यां विशेषणं। तयोस्तत्र प्रायशः संभवात् । तस्माद्विशेषणाभावे पौर्णमास्या भवति । एवं पंचम्यां हस्तोपि

प्रायशो भवतीत्युपन्यस्तः। अतः श्रावणी पौर्णमासी पंचमी वा विशिष्टाविशिष्टा चोपाकर्मकालः। एवं स्वमतेन व्याख्याय परमतमुदाजहार। श्रवणेन पौर्णमास्यां वा पंचम्यां वा हस्तेन वेति। अत्र पूर्वव्याख्यायां श्रवणाभाव इव ओषधिप्रादुर्भावाभावेपि पौर्णमास्यां कार्यमिति कर्काद्यभिमानः प्रतीयते। अत एव रेणुकाकारिकायां कर्कमतानुवादपूर्वं मतांतरोपन्यासः। कर्कोक्त्या चैवमुभयं पौर्णमासीविशेषणम्। अनादरस्तयोर्यस्मान्नित्यत्वादस्य कर्मणः। पंचम्यां प्रायिको हस्त इत्युपाध्यायसंमतिः। पंचमी हस्तयुक्तैव याज्ञवल्क्यादिसंमतं। अवृष्ट्यौषधयस्तस्मिन्मासेपि न भवंति चेत्। प्रौष्ठपद्यां तदैतत्स्यादिति मन्वादिशासनम्। पूर्णिमा प्रतिपद्युक्ता तत्रोपाकर्मणः क्रिया। उक्तोर्थोऽयं प्रसंगेन भविष्योत्तरसंज्ञके। इति। अत्रौषधिप्रादुर्भावाभावेपि श्रावण्यां कार्यमिति मुख्यकर्कमतविरुद्धौषधिप्रादुर्भावाभावे प्रौष्ठपद्यां कार्यमिति मतोपन्यासेन सह परविद्धपूर्णिमा ग्राह्येत्युपन्यासात् नात्रैव कारिकाकारस्याभिमानो बोध्यः। सामगानां तु भाद्रपदशुक्ले हस्तनक्षत्रं मुख्यः कालः। प्रोष्ठपदीहस्तेनोपाकरणमिति गोभिलसूत्रात्। प्रोष्ठपदीं प्राप्येति व्याख्यातं हेमाद्रौ। गोभिलसूत्रभाष्ये तु प्रोष्ठपदीमिति द्वितीया प्रतिशब्दाध्याहारार्था। तेन प्रतिवर्षमुपाकर्म कर्तव्यमिति ज्ञाप्यत इत्युक्तं।

उक्तकाले अस्तादिना उपाकर्मारंभासंभवे श्रावण्यां पौर्णमास्यामुपाकृत्य भाद्रपदशुक्लहस्तनक्षत्रपर्यंतं न पठेयुः। श्रावणीमेकामुपाकृत्यैतमासावित्रात्कालं कांक्षत इति गोभिलसूत्रात्। श्रावणी पौर्णमासी। सावित्रं हस्तः। श्रावणीमिति द्वितीयायाः प्रयोजनं प्रोष्ठपदीशब्देन व्याख्यातमिति व्याख्यातं भाष्यकारेण। यदि श्रावणे मासि श्रवणनक्षत्रादिकालः ग्रहसंक्रांतिदूषितस्तदा श्रावणशुक्लपंचम्यां तत्रैव हस्तनक्षत्रयुक्तदिनांतरे वा उपाकर्म कार्यं—उपाकर्म प्रकुर्वंति क्रमात्सामर्ग्यजुर्विदः। ग्रहसंक्रांत्यदुष्टेषु हस्तश्रवणपर्वसु। इति निषेधद्योतनात्। तत्र गृह्यसूत्रेषु पंचम्यादिविधेरनुकल्पत्वेन तत्कालविधिपरतायाः व्याख्यातृभिर्निबंधृभिः स्वीकाराच्च। उक्तं च महार्णवे—संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते। तन्मासे

हस्तयुक्तायां पंचम्यां वा तदिष्यते । इति बह्वृचगृह्यकारिकायां—अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु । तन्मासे हस्तयुक्तायां पंचम्यां वा तदिष्यते । इति। येषां गृह्यसूत्रे पंचमी नोक्ता तेषां औषध्यप्रादुर्भाव इव श्रावणगतकालस्य ग्रहादिदुष्टत्वेपि भाद्रपद एवोचितश्रवणादिकालेषूपाकर्म उचितम् । एतद्वार्षिकमित्याचक्षत इत्यादिवाक्यानां ओषध्यप्रादुर्भाव इव ग्रहसंक्रांतिदोषेपि भाद्रपदप्रापकतायास्तुल्यत्वात् । अतएव—संक्रांतिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् । उपाकृतिस्तु पंचम्यां कार्या वाजसनेयिभिः । इति महार्णववाक्ये वाजसनेयिग्रहणं तैत्तिरीयोपलक्षणमंगीकृत्य तैत्तिरीयाणामपि पंचम्यामुपाकर्म कर्तुमुचितमिति मतं दूषयित्वोपसंहृतं हेमाद्रौ । ग्रहसंक्रांतिदुष्टायां श्रावणपौर्णमास्यां तैत्तिरीयकैः प्रोष्ठपद्यामुपाकर्म कार्यं । इति । बौधायनीयानां तु श्रावण्याः पौर्णमास्याः ग्रहादिदुष्टत्वे आषाढ्यां तदनुष्ठानमुचितम् । श्रावण्यां पौर्णमास्यां आषाढ्यां वोपाकृत्य छंदांस्यधीयीतेति बौधायनवचनात् । ग्रहसंक्रांतियोगश्चोपाकर्मसंबंधिन्यहोरात्रे भाव्यर्धरात्रात्पूर्वं नक्षत्रपर्वणोर्विद्यमानस्तयोर्दूषकः । नत्वर्धरात्रात्परस्ताद्विद्यमानः । तथातीतादर्धरात्रात्परतो विद्यमानो दूषको न तत्पूर्वः । नाप्युपाकर्मांगभूततिथिनक्षत्रयोः पूर्वोत्तरकालीने तिथ्यंतरे नक्षत्रांतरे वा विद्यमानः । अर्धरात्रात्परस्ताच्चेत्संक्रांतिर्ग्रहणं तथा । उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् । इति गर्ग्यवचनात् । यद्यर्धरात्रादर्वाक्तु ग्रहः संक्रांतिरेव तु । नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेऽपि चेत् । इति शास्त्रांतराच्च—बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रांतिवर्जिते । इत्यादौ श्रवणादिसामानाधिकरण्येन ग्रहणादिपर्युदासश्रवणाच्च । यानि तु ग्रहवेधवाक्यानि—त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवं । मांगल्येषु समस्तेषु ग्रहणे चंद्रसूर्ययोः । द्वादश्यादितृतीयांतो वेध इंदुग्रहे स्मृतः । एकादश्यादितः सौरे चतुर्थ्यंतः प्रकीर्तितः । खंडग्रहे तयोः प्रोक्तमुभयत्र दिनद्वयम् । इत्येवमादीनि तानि नोपाकर्मविषयाणि । —नित्ये नैमित्तिके जप्ये होमयज्ञक्रियादिषु । उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते । इति मदनरत्ने वचनात् ।

पर्वादीनामौदयिकानामपि ग्राह्यत्वे विशेष उक्तः पृथ्वीचंद्रोदये—उदये संगवस्पर्शे श्रुतौ पर्वणि चार्कभे। कुर्युर्नभस्युपाकर्म ऋग्यजुःसामगाः क्रमात्। इति। श्रुतौ श्रवणे। अर्कभे हस्ते। नभसीत्युपलक्षणं भाद्रपदस्य। तथाच मदनरत्ने निगमे—श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्तकैः। विद्धा स्याच्छंदसां तत्रोपाकर्मोत्सर्जनं भवेत्। इति। अत्र चौदयिकग्राह्यत्वानुवादेन संगमस्पृग्ग्राह्यत्वनियमात् पंचधा विभक्तदिनस्य प्रथमभागात्मकप्रातःकालमात्रव्यापिनां श्रवणादीनामग्राह्यत्वं। प्रातःसंगवात्मकभागद्वयव्यापिनां तु ग्राह्यत्वमित्येके। अन्ये तु पृथ्वीचन्द्रोदयोदाहृतवचने संगवस्पर्श इति स्पर्शग्रहणात्संगवैकदेशव्याप्तिः प्रतीयते। निगमवाक्ये तु षण्मुहूर्तकैः इति पूर्वभागद्वयव्याप्तिः तदधिकव्याप्तिरपि गार्ग्यवचनात्प्रतीयते—श्रावणी पौर्णमासी तु संगवात्परतो यदि। तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्। इति। एषां वचसां यथाश्रुतार्थपरत्वे संभवति नान्यतरस्यावयुत्यानुवादत्वं पाक्षिकानुवादत्वं वा वक्तुमुचितं। नापि विकल्पपरत्वं। तस्याष्टदोषदुष्टत्वात्। अनेकश्रुतिकल्पनाप्रसंगाच्च। किंतु येषां शाखिनां षण्मुहूर्तसाध्यमेवोपाकर्म तान्प्रति षण्मुहूर्तव्याप्तिरेव ग्राह्यत्वनियामिका। एवमितरे अपि व्याप्ती तत्तच्छाखिनः प्रति ग्राह्यत्वनियामिके बोध्ये। अतएव स्फुटा स्मृत्यर्थसारोक्तिः। तिथिखंडे सत्युदयव्यापिनी प्रयोगपर्याप्ता तिथिरुपाकरणे ग्राह्येति। एवंच नोक्तवचनेषु क्वापि स्वार्थत्यागः। नाप्यनेकश्रुतिकल्पनाप्रसक्तिः। सर्वेषां कर्मकालव्याप्तिशास्त्रप्रपंचनरूपत्वात्। नापि येषां मुहूर्तत्रयमात्रसाध्यमुपाकर्म तेषामपि संगवव्याप्तिप्रयुक्ताऽदृष्टांतरकल्पनापत्तिः। नापि सामगानां कर्मकालव्याप्तिशास्त्रबाधेन परदिने उपाकर्मप्रसक्तिः। तेषां हि अपराह्ण उपाकर्मकालः। सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः। छंदोगा मिलिताः कुर्युरुत्सर्गं सर्वछंदसां। शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकम्। इति गर्गवचनात्। यदि केषांचित्सामगानां प्रातःसंगवावेवोपाकर्मकालत्वेन विहितौ तदभिप्रायेण संगवस्पृग्ग्रहणं। यदि तु न विहितौ तदा कर्मकालव्याप्तिशास्त्रवशेन प्रसक्तस्य पूर्वदिनगतापराह्णव्यापिहस्तग्राह्यत्वस्य बाधेन संगव-

स्पृग्घस्तगोचरापूर्वविधेः ऋग्यजुरथर्ववेदविद्भिलक्षणस्य परैर-भ्युपेयत्वात् । अस्मत्पक्षेपि सामवेद्यंशे कर्मकालव्याप्तिप्रपंच-नरूपत्वत्यागेनापूर्वविधित्वोपगमनिमित्तं वैलक्षण्यं न दोषाये-त्याहुः । उक्तगर्गवाक्ये सिंहे रवावित्यस्योत्सर्जनोपाकर्मभ्यां द्वाभ्यामपि संबंधः । अतएव स्मृत्यंतरे—वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ । उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके । इति । कुलीरः कर्कटः । यत्तु इदं वाक्यं छंदोगातिरिक्तानां सिंहस्थे रवावुपाकर्मकर्तव्यतापरमिति । तन्न । छंदोगविषयत्वे अस्य वाक्यस्योक्तगर्गवाक्येन सह मूलभूतैकश्रुतिकल्पनालाघ-वात् । नन्वेवं—नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके । कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे । इति व्यवस्थाविध्यनुपपत्तिः। एकपुरुषं प्रति पक्षद्वयप्राप्तौ व्यवस्थाविध्यनुपपत्तेरिति चेन्न। पूर्वार्धे यत्सिंहयुक्ते कार्यं तन्नर्मदोत्तरे । इति सामगान्प्रत्येव विध्युपपत्तेः । दक्षिणभागे कदा कार्यमित्यपेक्षायां च उत्तरार्ध-स्यापि तान्प्रत्येव प्रवृत्तेरिति केचित् । तच्चिंत्यं । प्रोष्ठपदीं हस्तेनोपाकरणमिति गोभिलगृह्यसूत्रे प्रोष्ठपदशुक्लपक्षे हस्तेने-त्यादिपरिशिष्टे च भाद्रपदशुक्लपक्षे हस्तनक्षत्र एवोपाकर्म-विधिबलेन कस्मिन्नपि देशे सामगानां कर्कस्थे उपाकर्मानुष्ठाना-संभवात्। गृह्यसूत्रस्थोत्पत्तिशिष्टगुणविरुद्धगुणविधेः स्मार्तस्यासं-भवात्। अतएव पूर्वार्धगतनियमवशेन अर्थप्राप्तस्यानुवाद उत्तरा-र्धमप्यपास्तम्। पूर्वार्धे देशस्य विधेयत्वं उत्तरार्धे चानुवाद्यत्वमिति वाक्यार्थवैषम्यस्यान्याय्यत्वाच्च । परंतु नर्मदोत्तरेत्यादिबृहस्पति-वाक्यस्य सिंहे रवौ तु पुष्यर्क्ष इत्यादिगर्गवाक्येन सामगविषयत्वे-नोपसंहार इत्याहुः।तदपि चिंत्यं।अनारभ्याधीतसाप्तदश्यवाक्यस्य सप्तदश वैश्यस्येत्यनेन वैश्यार्थत्वबोधकतया समानविषयेणो-पसंहारवत्कर्तृदेशात्मकपरस्पराधिकारार्थतया उक्तशास्त्रयोरपि परस्परोपसंहारसंभवात् । नच बृहस्पतिवाक्ये कैश्चिन्निबंद्धृभि-रलिखितत्वेनानाश्वास उचितः । प्रयोगपारिजातपराशरमाध-वाद्युदाहृतत्वेन तदयोगात् । तस्माद्येषां शाखिनां विहितकालस्य ग्रहसंक्रांत्यादिदुष्टत्वे सति स्वगृह्योक्तपंचम्यादिकालविध्यत्व-भावेन (?) शाखांतरीये कालेऽवश्याश्रयणीये श्रावणशुद्धपंचम्यां भाद्रपदगतपर्वादेश्चाव्यवस्थितविकल्पप्रसक्तिस्तेषां अर्थप्राप्तसिंह-

कर्कव्यवस्थापनं क्रियत इत्युचितं । नहि यत्र यच्छब्दतः प्राप्तं तत्रैव तद्व्यवस्थापनमुचितं । वार्त्रघ्नीवृधन्वत्योः पूर्णमास्यमावास्याकालाभ्यां कर्मभ्यां वा सह शब्दतः संबंधानवगमेपि अर्थप्राप्तसंबंधोपजीवनेनैव व्यवस्थादर्शनादिति ।

**प्रथमोपाकर्म** गुरुशुक्रास्तादौ न कार्यं । यथोक्तं **ज्योतिर्निबंधे संग्रहे**–गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेपि वा । तथाधिमाससंसर्पमलमासादिषु द्विज । प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत् । इति । अत्रादिशब्देन सिंहस्थगुर्वादिग्रहणं । द्वितीयाद्युपाकर्म तु अस्तादावपि कार्यमित्यभिप्रेत्योक्तं तत्रैव **स्मृतिसारसमुच्चये**–यज्ञोपवीतं कर्तव्यं श्रावणे गुरुशुक्रयोः । मौढ्येपि वार्धके बाल्ये नित्यवत्कर्म नोदितम् । इति । द्वितीयादिप्रयोगोप्यधिमासे न कार्यः । उपाकर्म तथोत्सर्गं प्रसवाहोत्सवोष्टकाः । मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकम् । इति तत्रैव ज्योतिःपराशरवचनात् । प्रसवाहोत्सवो जातेष्टिः। यत्तु–दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु । उपाकर्म महाषष्ठ्योर्ह्येतदिष्टं वृषादितः । इति ऋष्यशृंगवचनं तच्छंदोगविषयं । तेषां सिंहार्के एवोपाकर्मविधानात् । इदंचोपाकर्म यद्यपि–श्रावण्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि । युक्तश्छंदांस्यधीयीत मासान्विप्रोऽर्धपंचमान् । इत्यादिशास्त्रपर्यालोचनया ब्राह्मणस्य ब्रह्मचारिणो ग्रहणाध्ययनांगत्वेन[1] प्रतीयते । तथापि त्रयाणामपि वर्णानां ब्रह्मचारिगृहस्थान्यतराश्रमिणां ग्रहणाध्ययनांगतया धारणाध्ययनांगतया वानुष्ठेयं । वानप्रस्थाश्रमिणामपि धारणाध्ययनांगतयानुष्ठेयं । नच गृहस्थस्य ग्रहणाध्यापनाभावः । समावृतो ब्रह्मचारीकल्पेन यथान्यायमितरे जायोपेयेत्येके इत्याश्वलायनसूत्रे गृहस्थानामपि ग्रहणाध्ययनविधानात् । व्याख्यातं ह्येतदित्थं वृत्तिकारेण ब्रह्मचारिधर्ममित्यर्थः । स्वाध्यायकाले विहिता ये धर्माः मधुमांसस्त्रीगमनखट्वादिवाशयनादिवर्जनादयः तैर्युक्तोऽधीयीत समावृत्तः । मेखलादयस्तु न भवंति अस्वाध्यायधर्मत्वात् । इतरे ब्रह्मचारिण इत्यर्थः । अस्मिन्नध्ययने ब्रह्मचारिणामपि प्रवृत्त्यर्थमिदं । इतरथा समावृत्तानामेवेति शंका स्यात् । समावृत्तो जायां गच्छेदित्येक आहुः ।

१ 'ग्रहणांगत्वेन'.

ऋतावेव गच्छेन्नानृताविति। वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा। इत्यादि श्रुतिभिरपि वेदसमाप्त्यभावेपि समावर्तनविधानेन गृहस्थानामपि वेदाध्ययनसूचनाच्च। न च धारणाध्ययनांगत्वे मानाभावः। उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते। धारणाध्ययनांगत्वाद्गृहिणां ब्रह्मचारिणाम्। इति गोभिलवचनात्। प्रत्यब्दमनुष्ठेयं चेदं—प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः। क्रियते छंदसां तेन पुनराप्यायनं भवेत्। अयातयामैश्छंदोभिर्यत्कर्म क्रियते बुधैः। क्रीडमानैरपि सदा तत्तेषां सिद्धिकारणम्। इति कात्यायनवचनात्—उत्सर्जनं च वेदानामुपाकरणमेव च। अकृत्वा वेदजप्यस्य फलं नाप्नोति मानवः। इति नित्यब्रह्मयज्ञोपयोगित्वेन नित्यत्वप्रतीतेश्च। द्विजैरिति त्रयाणामपि वर्णानामधिकारसिद्धिः। यत्तु मासान्विप्रोऽर्धपंचमान् इत्युदाहृतशास्त्रे विप्रग्रहणं तत् ब्राह्मणस्यैव स्वतोधिकारः क्षत्रियवैश्ययोस्तदन्वारंभमात्रमेवेति ज्ञापनार्थं। अध्येष्यमाणोऽध्याप्यैरन्वारब्ध इत्याश्वलायनसूत्रे अध्यापकपरेणाध्येष्यमाणपदेन अध्यापनाधिकृतब्राह्मणस्यैव स्वतंत्राधिकारप्रतीतेः। ब्राह्मणोपि यदान्यैः सह कर्म कुर्यात्तदा लौकिकाग्नौ। अन्याग्नौ क्रियमाणेन कर्मणान्येषां फलासंभवात्। यदात्वेकः कुर्यात्तदा स्वगृह्याग्नौ कुर्यात्। बाधकाभावे गृह्यकर्मणां तत्रैवानुष्ठानौचित्यात्। अतएव जयंतः—उपाकर्मप्रयोगारंभे औपासनं विहृत्येत्यौपासनसाध्यतामुक्त्वापि प्रयोगान्ते अध्याप्यैः समन्वारब्धाः केचिल्लौकिकाग्नौ कुर्वंतीत्याह। प्रधानभूतोऽप्याचार्यो बहुभिरपि चतुरवत्तिभिः सहोपाकर्म कुर्वन् एकस्यापि जामदग्न्यस्यानुरोधेन पंचावत्तमेव कुर्यात्। आग्रयणे जघन्यैकद्यावापृथिव्यनुरोधेन मुख्यानेकैंद्राग्नादीनां प्रसूनमयनियमसाधकतया द्वादशाध्यायोक्तस्य कांस्यभोजिन्यायस्य प्रकृतेपि तुल्यत्वात्। उक्तं हि चतुरवत्तिनं प्रत्यपि पाक्षिकपंचावत्तानुष्ठानं कात्यायनेन तस्य द्विरवद्यति त्रिर्जामदग्न्यानां सर्वेषां चोभयमविरोधादिति। व्याख्यातं चैतत् कर्काचार्यैर्देवयाज्ञिकैश्च शाखांतरे। पंचावत्तं जमदग्नीनामित्युक्तेस्तेषां पंचावत्तमेव, अन्येषां चतुरवत्तं पंचावत्तं वेति सत्यप्यत्राव्यवस्थितविकल्पप्रसक्तौ जामदग्न्यानुज्ञयैवाजामदग्न्यः पंचावत्तं

कुर्यात् । अजामदग्न्योपि जामदग्न्यमात्रं[1] पंचावत्तं कुर्वीतेत्या-पस्तंबोक्तेः । अतएव तनूनपान्नराशंसयोरिव चतुरवत्तपंचावत्त-योर्व्यवस्थाभावात्—अजामदग्न्यानां जामदग्न्यैर्या सहानधिकार-शंका; यश्च एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति वचनात्, कुलाययज्ञइव—उपाकर्मणि चोत्सर्गे यथाकालं समेत्य तु । ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः । इति कार्ष्णाजिनि-वचनात्सहाधिकार इति परिहारः; तदुभयमप्युक्तं वांतमिवेत्यु-पेक्षणीयं[2] । नच कुलायदृष्टांतेन समाधानमप्युचितं । वसिष्ठशु-नकादिगोत्रोत्पन्नेन पुरोहितेन सहैव राज्ञोऽधिकारं प्रतिपादयतो वचनस्योपपत्तौ सत्रवत्कुलायेपि प्रयाजगोचरभिन्नकल्पार्हाणां सहाधिकारकल्पनानुपपत्तेः । सोमचमसफलचमसार्हत्वेन भिन्नकल्पयोर्विप्रक्षत्रिययोः सहाधिकारप्रतिपादकतया चास्या-धिकरणस्य तुल्यकल्पाधिकाराधिकरणापवादत्वसंभवादित्यालो-चयितुमुचितं विद्वद्भिः । इत्युपाकर्मनिर्णयः ॥

**अथोपाकर्मप्रयोगः ।** नूतनब्रह्मचारिणामुपाकर्मार्थतया नूतनकटिसूत्राद्युपकल्पनं स्वस्तिपुण्याहवाचनं नांदीश्राद्धं च कृत्वा तादृशब्रह्मचार्यभावे तूपकल्पनमात्रं कृत्वा । आचम्य प्राणा-नायम्य देशकालौ संकीर्त्य अधीतानामध्येष्यमाणानां छंदसामा-प्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थं एभिर्ब्राह्मणैः सहोपाकर्म करिष्ये इति संकल्प्य व्याहृतिभिरग्निप्रतिष्ठापनांतं कुर्यात् । केवल आचार्य इदं कर्मकुर्वन्नेभिर्ब्राह्मणैः सहेत्येतद्रहितं संकल्पं कृत्वा गृह्याग्नेरुपसमिंधनं कुर्यात् । अन्वाधाने चक्षुषी आज्येनेत्यंते सावित्रीं ब्रह्माणं श्रद्धां मेधां प्रज्ञां धारणां सदसस्पतिं अनुमतिं छंदांस्यृषीन् एताः प्रधानदेवता आज्येन । अग्निं अनृणसूर्यान् अग्निं शकुंतं अग्निं मित्रावरुणौ अग्निं अपः अग्निं मरुतः अग्निं विश्वा-न्देवान् देवब्रह्माणि अग्निं इंद्रासोमौ इद्रं अग्नामरुतः पवमानसोमं पवमानसोमं अग्निं संज्ञानं एताः प्रधानदेवताः दधिसक्तुद्रव्येण इति वृत्तिकृन्मते । उत्सर्जनप्रकरणस्थदेवताग्रहणेन अग्न्यादीनां सावित्र्यादिभिः सह तेनोक्तत्वात् । जयंतमते सावित्र्यादीनां न प्रधानदेवतात्वेन संकल्पः । तत्र आज्यशेषात्स्विष्टकृते नावद्यति

---

१ 'जामदग्न्यमामंत्र्य'. २ 'अभुक्तंवतं'.

सावित्र्यादीनामंगत्वादिति तदुक्तेः । शेषेण स्विष्टकृतमिध्म-संनहनेन रुद्रं यज्ञोपवीतेन परमात्मानं अयासमग्निमित्यादि । ततो विशेषः कारिकायां—आज्यसंस्कारपर्यंतमुपलेपादि पूर्ववत् । आज्येन दधिसक्तूनां त्रिः पर्यग्निकरणं भवेत् । उत्पूतमात्रमाज्यं चे-त्तेषां त्रिःप्रोक्षणं भवेत् । इध्माभिघारणं तस्मादाज्यस्योद्वासना-दिकम् । अन्वारब्धोऽधुना शिष्यैः स्वयमेव न संति चेत् । प्रकु-र्वीताज्यभागांतमिध्माधानादि पूर्ववत् । इह्वाज्यभागौ नित्यौ स्तस्तथैवोत्सर्जनेपि तौ । हुत्वाज्यं नवभिर्मंत्रैः सावित्र्याद्यैरतः परं । हुत्वावदानधर्मेण तान्सक्तून्दधिसंयुतान् । हुत्वाऽग्निमीळ-इत्याद्यैर्मंत्रैर्विंशतिभिः क्रमात् । शाकलानां समानीव इत्यृचांत्या-हुतिर्भवेत् । वाष्कलानां तु तच्छंयोरित्यृचांत्याहुतिर्भवेत् । ऋग्वेदः पंचशाखाभेदः । आश्वलायनी सांख्यायनी शाकला वाष्कला मांडूकाश्चेति । तेषां मध्ये शाकलानां वाष्कलानां चेदमेवाश्वलायनसूत्रे कर्मानुष्ठानार्थमुपकरोतीति प्रदर्शित-मनेन । इति । आज्याहुत्यंते चतुरवत्त्यपि आचार्यः पंचाव-त्तिनं शिष्यमामंत्र्य विंशतिकृत्वः पंचावत्तं कुर्वीत । प्रतिहो-ममध्ययनकालप्रसिद्धार्थादिस्मरणं च कुर्यात् । आज्याहुती-र्जुहुयात् । सावित्र्यैस्वाहा १ ब्रह्मणेस्वा० २ श्रद्धायै० ३ मेधायै० ४ प्रज्ञायै० ५ धारणायै० ६ सदसस्पतये० ७ अनु-मतये० ८ छंदोभ्यऋषिभ्यः० ९ । अवदानधर्मेण सक्तवव-दाय । अग्निमीळे मधुछंदाअग्निर्गायत्री उपाकर्मप्रधानदधिसक्तु-होमेविनियोगः । अग्नि० तमंस्वाहा अग्नय इदं न मम । एवमग्नि-दैवत्येषु सर्वत्र त्यागः । सर्वत्र त्यागमाचार्य एव कुर्यात् । प्राक्सं-स्थान्युदक्संस्थानि वावत्तानि जुहुयादिति जयंतः । कुषुंभकस्त-दगस्त्योमृणसूर्या अनुष्टुप् । अमृणसूर्येभ्य इदं० । त्वमग्ने गृत्स-मदोग्निर्जगती । अग्नय इदं० । आवदन्गृत्समदः शकुंतो जगती । शकुतायेदं० । सोमस्यमागाथिनोविश्वामित्रोग्निस्त्रिष्टुप् । अग्नय इदं० । गृणानाजमदग्निर्मित्रावरुणौ गायत्री । मित्रावरुणाभ्या-मिदं० । त्वांह्यग्ने वामदेवोग्निरष्टी । अग्नयइदं० । धामं ते वामदेव आपो जगती । अद्भ्यइदं० । अवोध्यात्रेयोबुधगविष्ठिरावग्निस्त्रि-ष्टुप् । अग्नय इदं । गंतानपवया मरुन्मरुतोतिजगती । मरुद्भ्य इदं० । त्वंह्यग्ने भारद्वाजोग्निस्त्रिष्टुप् । अग्नय० । योनःस्वःपायुर्देव-

ब्रह्मवर्माण्यनुष्टुप्। इति संप्रदायविदः। देवानां ब्रह्मणश्च देवतात्वमिति तु युक्तं। अस्या ऋचः देवाः ब्रह्म च देवते इति भाष्यकृताभिधानात्। ब्रह्म मंत्रः। स मे आंतरं शराणां निवारकं वर्म विद्यते इति व्याख्यानदशायामपि भाष्यकृतैव वर्मपदस्य ब्रह्मगतगुणाभिधायित्वेन स्वातंत्र्यनिराकरणाच्च। एवंच ऋष्यादिस्मरणकालेपि देवब्रह्माण्यनुष्टुप् इत्येव पठितुमुचितं। त्यागश्च देवब्रह्मभ्य इदमिति। अग्निनरोवसिष्ठोग्निर्विराट्। अग्नय०। प्रतिचक्ष्ववसिष्ठेंद्रासोमावनुष्टुप्। इंद्रासोमाभ्यामिदं०। माचित्काण्वः प्रगाथ इंद्रोबृहती। इंद्रायेदं०। आग्नेयाहि सोभरिरग्नामरुतोनुष्टुप्। अग्नामरुद्भ्यइदं०। स्वादिष्ठयामधुच्छंदाः पवमानसोमोगायत्री। पवमानायसोमायेदं०। यत्तेराजन्कश्यपः पवमानः सोमःपंक्तिः। प० सोमायेदं०। अग्नेबृहन्नाप्त्यस्त्रितोग्निस्त्रिष्टुप्। अग्नय इदं०। समानीवः संवननः संज्ञानमनुष्टुप्। संज्ञानायेदं०। ततः स्विष्टकृतमुपस्तीर्य आज्यस्य सकृत्। पंचावत्तिसत्वे द्विरवदाय[1] तथैव दधिसक्तून्सकृद्द्विरवदाय द्विरभिघारयेद्वृत्तिकृन्मते जयंतमतेतु नाज्यावदानं॥

ततो विशेषः कारिकायां—अथ स्विष्टकृतं हुत्वा दधिसक्तुभिरेव च। दधिसक्तून्स्वयं शिष्याः प्राश्याचम्य ततः परं। परिस्तरणदर्भैस्तैरंतर्दधति चांजलीन्। अन्येन सेचयित्वापस्ताभिः कुर्वीत मार्जनम्। इति। स्विष्टकृदंत इध्मसंनहनं हुत्वा। दधिक्राव्णो वामदेवो दधिक्रावानुष्टुप्। दधिक्राव्ण इतिमंत्रेण प्राङ्मुखाः प्रत्येकं दधिसक्तून्प्राश्याचामेयुः। अग्नेः पश्चादेकधारणया एकैकः प्राङ्मुख उपविश्य मार्जनं कुर्यात्। ततो यज्ञोपवीतस्य होमदाने कृत्वा धारणं कुर्यात्—कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप। हुत्वाग्नौ गुरवे दत्वा पितृभ्यो धारयेत्ततः। इति गालववचनात्। वेदारंभणतः पूर्वं सक्तुप्राशनतः परं। नवयज्ञोपवीतानि दद्याद्वै धारयेत्ततः। इति कार्ष्णाजिनिवचनाच्च पितृभ्य इत्यस्यापि दत्वेत्यनेनान्वयः। होमे धारणे च यज्ञोपवीतमिति मंत्रेण। ब्रह्मचारी च नूतनमेखलादि धारयेत्। मौंजीं यज्ञोपवीतं च नवं दंडं च धारयेत्। अजिनं कटिसूत्रं च नववस्त्रं तथैव च। इति कालादर्शोदाहृतवचनात् एषां धारणे

1 'द्विर्वावदाय'.

क्रमो मंत्राः प्रकारश्चोपनयनवद्बोध्यः। ततः कर्तव्यं कारिकायां —पश्चादग्नेस्तु दर्भेषु प्रागग्रेषूपविश्य च। आसिच्यापः शरावादौ दर्भांस्तत्र निधाय च प्रागग्रदर्भगर्भांस्ते कुर्युर्ब्रह्मांजलीनथ। सव्याहृतिं वदन्त्युच्चैः सावित्रीं ब्रह्मयज्ञवत्। त्रिरभ्यसेत्पुरोंकारं व्याहृतींश्चात्र कर्मणि। अग्निमीळे इदं सूक्तमनुवाकं यथाविधि। प्रारभेरन्नृचं वापि त्वध्याप्यान्वाचयेद्गुरुः। प्रायश्चित्तादिसकलं होमशेषं समापयेत्। इति।

शौनकोपि—ततोग्नेः पश्चिमे देशे प्राङ्मूलकुशसंस्तृते। कृत्वा ब्रह्माञ्जलीन्पूर्वमासीनः प्राङ्मुखो गुरुः। जपित्वा सकृदोंपूर्वाः समस्ता व्याहृतीर्गुरुः। प्रणवाद्यां च सावित्रीं सकृदुच्चारयेत्ततः। पश्चाद्वेदादिमारभ्यादध्यायं सूक्तमेव वा। तृचं वाधीत्य तत्सर्वं शिष्यानध्यापयेत्ततः। इत्युपाकर्मप्रयोगः।

अथोत्सर्जनकालः। तत्राश्वलायनः।—मध्यमाष्टकाया- मेताभ्यो देवताभ्योन्नेन हुत्वाऽपोभ्यवयंति एता एव देवतास्तर्पयं- न्त्याचार्यानृषीन्पितॄंश्चैतदुत्सर्जनम्। इति। व्याख्यातं चैतद्वृत्तिकारेण। मध्यमाष्टकाग्रहणं षण्मासांतलक्षणार्थं। तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थ इति। बौधायनस्तु पौष्यामप्युत्सर्जनमाह। श्रावण्यां पौर्णमास्यां आषाढ्यां वोपाकृत्य तैष्यां माघ्यां चोत्सृजेदिति। अत्र कातीयसूत्रं। अर्धषष्ठान्मासानधीत्योत्सृजेयुरिति। अर्धसप्तमान्वेति। तथा पौषस्य रोहिण्यां मध्यमायां वाष्टकायां अध्यायानुत्सृजेयुरिति। तत्र हरिहरः पौषे उत्सर्जनकर्तव्यतामभिधायाह। ततस्त्रिरात्रानंतरं शुक्लपक्षेषु छंदांस्यधीयीरन्कृष्णपक्षेष्वंगानि। ततः पुनरर्धषष्ठानर्धसप्तमान्वा मासानधीत्य एवमेवोत्सर्गं विधाय त्रिरात्रमेकरात्रं वावस्थाय यथेष्टं विप्रतिष्ठेरन्। ततः पुनरुपाकृत्य अध्ययनं यावदुत्सर्गमिति। अनेनोत्सर्गद्वयं कातीयानां कर्तव्यमिति प्रतीयते। इदमेव स्पष्टीकृतं गंगाधरेण। मध्यमाष्टकायां रोहिण्यां वा मंत्रब्राह्मणयोरुत्सर्गः पौषस्य रोहिण्यामिति सूत्रेण कर्तव्यः। तदूर्ध्वं शुक्लपक्षेषु मंत्रब्राह्मणयोरध्ययनं कृष्णपक्षेष्वंगानां यावदाषाढकृष्णदशमी श्रावणकृष्णदशमी वागच्छति तत्रोत्सर्गः अर्धषण्मासानिति सूत्रेण विहितः कार्य इति। इत्थमुपन्यस्य मतांतरमप्युदाजहार। अपरे तु एकस्यैवोत्सर्गस्य

कालचतुष्टयं मन्यंते नोत्सर्गद्वयमिति । द्वितीयमतमेव चानुसृतं **रेणुकारिकायां**—पौषमासस्य रोहिण्यां कृष्णाष्टम्यामथापि वा । माघस्याद्यतिथौ तत्र पूर्वाह्णे फाल्गुनस्य वा । उत्सर्गं विधिवत्कुर्याज्जलांते छंदसां बहिः । इति । अत्र द्वितीयमतमेव सूत्रस्वरसानुसारीति प्रतीयते । **परिशिष्टे कात्यायनः**—उपाकृत्योद्गयने ततोऽधीयीत धर्मवित् । उत्सर्गश्चैक एवैषां तैष्यां प्रौष्ठपदेपि वा । इति । इदं च सामगविषयं । तेषां ग्रामाध्येयसामाध्ययनांगमेकमुपाकर्म सिंहार्के हस्ते विहितम् । अरण्याध्येयसामाध्ययनांगमपरमुपाकर्म मकरार्के हस्ते विहितं । तथैवोत्सर्जनद्वयप्रसक्तौ उत्सर्गश्चैक एव एषामित्युच्यते । प्रोष्ठपदग्रहणं च सिंहार्कपरं । सिंहे[1] रवौ तु पुष्यर्क्षे इत्युक्तगार्ग्यवचनात् । एवमुत्सर्जनोत्तरमध्ययनव्यवस्थोक्ता **कारिकायाम्**—अत आरभ्य षण्मासान्षडंगानि त्वधीयते । शुक्ले वेदमधीयीत कृष्णेंऽगानीति केचन । इति । आपस्तंबधर्मप्रश्ने श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत । तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत् । अर्धपंचमांश्चतुरो मासानित्येक इति । अत्रोज्वलायां प्रदोषे ग्रहणाध्ययनं धारणाध्ययनं च न कुर्यात् । प्रदोषग्रहणाद्रात्रावप्यूर्ध्वे न दोष इति व्याख्याय विरमेदित्यंतेऽनयोः पक्षयोः पंचमासानधीयीतेत्युक्त्वा शिष्टसूत्रव्याख्यावसरेऽस्मिन्पक्षे प्रोष्ठपद्यां उपाकरणं शास्त्रांतरदर्शनात् । उत्सर्जनस्याप्रतिकर्ष इत्युक्तं । अस्मिन्पक्षे पौष्यनंतरामायामुत्सर्जनमिति केचित् । शास्त्रांतरसंवादेन तदनंतराष्टम्यां तूचितं । किंचिदूनत्वेपि पंचसंख्यावत्सार्धचतुःसंख्याया अपि संभवात् । मंदमतिभिस्तूपाकर्मदिन एव । ततः पूर्वमुत्सर्जनं कार्यं—पुष्येतूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवा । इति **खादिरगृह्यात्** । इत्युत्सर्जनकालनिर्णयः ।

**अथ प्रयोगः** । सचोपाकर्मवज्ज्ञेयः । संकल्पे अधीतानां छंदसामाप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थमिति विशेषः । दधिसक्तुद्रव्येणेत्यस्य स्थाने गृहसिद्धान्नद्रव्येणेत्यन्वाधाने विशेषः । यज्ञोपवीतेन परमात्मानमित्यस्य लोपः । दधिसक्तुवद्गृहसिद्धान्नस्य पर्यग्निकरणादि । नवाज्याहुत्यनंतरं गृहसिद्धान्नेनैव विश-

1 'सिंहे गुरौ'.

त्याहुतयः । सन्नहनहोमानंतरं न सक्तुप्राशनादियज्ञोपवीतधारणांतं । समानं वेदारंभादि । ततः कर्तव्यमुक्तं कारिकायां— अथ तीरमपां गत्वा तेऽवगाह्य ततो जलम् । सावित्र्याद्यास्तथाऽऽद्या देवतास्तर्पयंति च । सावित्रीं तर्पयाम्यग्निं तर्पयामीति तर्पयेत् । जयंतस्त्वग्निमीळादिमंत्रैस्तर्पणमब्रवीत् । ब्रह्मयज्ञांगमुक्तं यत्तर्पणं स्यादिहापि च । इति । अत्रावगाह्येत्यनेन भस्मगोमयमृत्तिकास्नानानि शास्त्रांतरसिद्धानि विहितानीति शिष्टव्यवहारः । अतएव विवाहादूर्ध्वकाले प्रसिद्धस्य—पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणं । इत्यादिनिषेधस्य नात्र प्रवृत्तिः । न चात्र नदीनां रजोदोषप्रसक्तिः —उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यते । इति गार्ग्यवचनात् । वेदाश्छंदांसि सर्वाणि ब्रह्माद्याश्च दिवौकसः । जलार्थिनोऽथ पितरो मरीच्याद्या महर्षयः । उपाकर्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः । पिपासूननुगच्छंति संहृष्टाः स्वशरीरिणः । समागमस्तु यत्रैषां तत्र हन्यादपां मलात् । नूनं सर्वे क्षयं यांति किमुतैकं नदीरजः । इति छंदोगपरिशिष्टाच्च । स्नानानंतरं च ऋषिपूजातर्पणे कार्ये—उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च । ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः । इति स्मृतिचंद्रिकोदाहृतवचनात् । तत्रत्यजलोपस्पर्शनपानाभ्यामभ्युदयप्राप्तिः ।—ऋषीणां सिच्यमानानामंतरालं समाश्रितः । संपिबेद्यः शरीरेण पर्षन्मुक्तजलच्छटः । विद्यादीन्ब्राह्मणः कामान्वरादीन्कन्यका तथा । आमुष्मिकानपि सुखान्प्राप्नुयात्स न संशयः । इति छंदोगपरिशिष्टात् । सुखयंतीति व्युत्पत्त्या सुखशब्दो विषयपरः । ततः प्रकृतदेवतातर्पणं ब्रह्मयज्ञांगतर्पणं स्वपित्रादितर्पणं च कार्यं । ततो यमतर्पणं च कुर्यादिति शिष्टाः । तदित्थं । यमं तर्पयामि धर्मराजं० मृत्युं० अंतकं० वैवस्वतं० कालं० सर्वभूतक्षयं० औदुंबरं० दध्नं० नीलं० परमेष्ठिनं० वृकोदरं० चित्रं० चित्रगुप्तं० इत्येतैस्तर्पयाम्यंतैः प्रत्येकमेकैकं जलांजलिं दद्यादिति । ततो यमोनिहंतेतिश्लोकं दशवारं पठेयुः । इत्युत्सर्जनप्रयोगः ।

अस्यामेव पौर्णमास्यां रक्षाबंधो मदनरत्ने—कृष्ण उवाच । संप्राप्ते श्रावणस्यांते पौर्णमास्यां दिनोदये । स्नानं कुर्वीत मतिमान्श्रुतिस्मृतिविधानतः । ततो देवान्पितॄंश्चैव तर्पयेत्परमां-

मला । उपाकर्मादिकं कृत्वा ऋषीणां तर्पणं तथा । कुर्वीत ब्राह्मणैः सार्धं वेदानुद्दिश्य भक्तितः । शूद्राणां मंत्ररहितं स्नानं दानं च शस्यते । ततोऽपराह्णसमये कुर्यात्पोटलिकां शुभां । कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैर्हेमचर्चितां । वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्जितैः । विचित्रतंतुग्रथितां स्थापयेद्भाजनोपरि । कार्या गृहस्य रक्षा गोमयरचितैः सुवृत्तकुंडलकैः । दूर्वापर्णैः सहितैर्नियतं दुरितोपशमनाय । उपलिप्ते गृहमध्ये वृत्तचतुष्के न्यसेत्कुंभं । पीठं दत्वोपविशेद्राजामात्यैर्युतश्च सुमुहूर्ते । वेश्याजनेन सहितो मंगलशब्दैः समुत्थितैश्चिह्नैः । रक्षाबंधः कार्यः शांतिध्वनिना नरेंद्रस्य । देवद्विजातिशस्त्राण्यस्त्राणि रक्षाभिरर्चयेत्प्रथमं । तदनु पुरोधा नृपते रक्षां बध्नीत मंत्रेण । येन बद्धो बली राजा दानवेंद्रो महाबलः । तेन त्वामभिबध्नामि रक्षे मा चल मा चल । इति । ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः । कर्तव्यो रक्षिकाबंधो द्विजान्संपूज्य भक्तितः । अनेन विधिना यस्तु रक्षाबंधनमाचरेत् । स सर्वदोषरहितः सुखी संवत्सरं वसेत् । इति । अस्मिन्कर्मण्यौदयिकी तिथिर्ग्राह्या । पौर्णमास्यां दिनोदये इत्युपक्रमात् । उपाकर्मोपलक्षितोत्तरकालताप्रतीतेश्च । इदं कर्म भद्रायां न कर्तव्यं । भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हंति ग्रामं हंति च फाल्गुनी । इति वचनेन श्रावणीपदस्य तत्र कर्तव्यरक्षाबंधविषयत्वेन निबंद्धृभिर्व्याख्यानात् । इति रक्षाबंधविधिः ।

अस्यामेव पौर्णमास्यां रात्रौ **श्रवणाकर्म** । श्रावण्यां पौर्णमास्यां श्रवणाकर्मेत्युपक्रम्य अस्तमिते स्थालीपाकं श्रपयित्वेत्याश्वलायनवचनात् । अस्य च श्रवणाकर्मणः मुख्यकाले दैवादकरणे लोपः । मुख्यकालेपि सकृदेव करणमिति केचित् । यथोक्तमेतत्तुल्यन्यायायाष्टकाप्रकरणे कर्केण सकृत्करणं चाभ्यासाश्रवणादिति । अन्ये त्वीदृशपाकयज्ञानां प्रत्यब्दमावृत्तिं मन्यंते । उक्तं हि **रेणुकारिकायां** । अथातः श्रवणाकर्म शास्त्रदृष्टं मयोच्यते । श्रावण्यामेव तत्कार्यमभावाद्गौणकालतः । वचनात्सूत्रकारस्य सकृदस्य क्रिया भवेत् । एवमेवेतरेषां स्यादावृत्तिर्वा स्मृतेर्बलात् । सकृत्करणमिच्छंति पाकयज्ञेषु केचन । आवृत्तिं केचिदिच्छंति तत्रावृत्तिः सतां मता । इति । सा अस्तमयप्रभृतिप्रकृत-

कर्मपर्याप्तकालव्यापिनी पूर्वैव चेत्सैव ग्राह्या । दिनद्वयेपि तत्संबंधे सत्यसति वा परैव। खंडपर्वणि प्रकृत्युत्तरविकृतिकर्तव्यतानियमस्य सामान्यप्रवृत्तस्य विकृतिविशेषे पर्वविशेषविधायिशास्त्रानुरोधेन नेतुमुचितत्वात् । विशेषशास्त्राविरोधे विकृतिसामान्यनिर्णयस्येहाप्यहेयत्वात्। यत्तु कर्मणो यस्य यः काल इतिशास्त्रात्प्रदोषव्यापिन्या ग्राह्यत्वाभिधानं तत्पूर्वदिने घटिकान्यूनपूर्वाह्णव्याप्यप्रवृत्ते परदिनेपि घटिकामात्रव्यापिन्यपि पर्वणि परदिने प्रकृत्युत्तरविकृतिकर्तव्यतायाः सकलनिबंधयाज्ञिकसंमतायाः कथं न बाधमावहेदिति चिंत्यं । यच्च प्रकृतकर्मणि निशीष्टेः रात्रावनुष्ठानस्य दृष्टांतत्वाभिधानं तदपि चिंत्यं । गृहदाहे निमित्ते क्षामवतीवद्यदि रक्षोभ्यो विभीयादिति निमित्ते विहिताया निशीष्टेः निमित्तानंतरं कर्तव्यत्वेन अनैमित्तिकविकृतिनिर्णयाविषयायाः तादृशप्रकृतकर्मणि दृष्टांतत्वायोगात्। सामवेदिनामपि अत्रैव श्रवणाकर्म सर्पबलिश्च । अथातः श्रवणाकर्म पौर्णमास्यां कृत्यमित्यादिना श्रवणाकर्म विधाय अहरहस्तूष्णीं बलिं हरेत् सायंप्राग्घोमादाग्रयण्या इति तदीयगृह्यसूत्रात् । अत्र पौर्णमासीसामान्योक्तावपि गृह्यांतरवशेन पौर्णमासीविशेषे तदुपसंहारसंभवाच्च । कातीयसूत्रेपि—अथातः श्रवणाकर्म श्रावण्यां पौर्णमास्यां इत्यादिना श्रवणाकर्मोक्त्वा तदंते सर्पबलिरप्युक्तः ।

**अथ प्रयोगः** । अत्र प्रथमप्रयोगे प्रातः स्वस्तिवाचनं वृद्धिश्राद्धं च कुर्यात् । ततः कार्यं **कारिकायां**—पूरयेदह्नि कलशं नवं यावकसक्तुभिः । निधाय तन्नवे शिक्ये दर्वीं वैकंकतीमपि। प्राच्यां दिशि शुचिं देशं बल्यर्थं परिगृह्य च । यवधाना विभज्यैकं भागमभ्यज्य सर्पिषा । इति । पात्रांतरे अनक्ता धाना निदध्यादिति शेषः । सर्पिषेति असंस्कृताज्येनेत्यर्थः । यवैर्व्रीहिभिर्वा सक्तून्कारयित्वेति जयंतः । **शौनकः**—नवे शिक्ये निधायैव शिक्यं क्वापि निवेशयेत् । धानाश्चाखंडिताकाराः संपाद्याः प्रस्थमात्रिकाः । इति ।

अस्तमिते औपासनं हुत्वा प्राणानायम्य देशकालौ संकीर्त्य मम पुत्रपौत्रादीनां रोगनिवारणसमस्तपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रवणाकर्म करिष्ये इति संकल्प्य अन्वाधानादिचक्षुषी

आज्येनेत्यंते अग्निं चतुर्वारं चरुणा अच्युतं भौमं पुरोडाशेन अग्निमाशयाज्येन वाजिनो धानाभिः शेषेण स्विष्टकृतमित्यादि । पात्रासादने स्थालीं कपालं शरावत्रयं[1] उपवेषमिति दक्षिणेन हस्तेन सव्येन प्रोक्षणीं चासाद्य दर्व्यादि प्रकृतिवत् । दर्व्या सह भुवि न्युब्जपात्रासादनं । प्रोक्षणकाले अन्येन पुरुषेण प्रोक्षणं । पुरोडाशहोमकाले कारिकायां तत्सूचनात् । उलूखलमुसले शूर्पे कृष्णाजिनं मदंतीं दर्भांश्चेति—पुरोवदवघातादि स्याद्विभज्य च तंडुलान् । तत्रैकेन पुरोडाशमन्येन श्रपयेच्चरुं । इति कारिकायां विभागविधिवलेन एकशूर्प एव द्वयोर्निर्वापप्रतीतेः । जयंतस्त्वाह केचित्पृथगेव निर्वापं कुर्वंतीति । **शौनकोपि**—पुरोडाशार्थमन्यस्मिन्कृत्वा निर्वपणं पृथक् । इति । तदा शूर्पयोरासादनं । पूर्णपात्रनिधानांते चर्वर्थं पुरोडाशार्थं च तूष्णीं चतुरश्चतुरो मुष्टीन्निरुप्य तथैव प्रोक्षणं । **कारिकायां**—हविर्द्वयस्य तूष्णीं तु निर्वापप्रोक्षणे इह । इति वचनात् । पृथङ्निरुप्तान् पृथगवहत्य सहनिरुप्तांस्तु सहैवावहत्य तंडुलान्द्विधा विभज्य पुरोडाशीयान्स्वयं किंचित्पिष्टीकृत्य कृष्णाजिने प्रस्कन्द्य पत्न्या पिष्टं कारयित्वा स्थालीमग्नावधिश्रित्य परिस्तरणात्पश्चाद्द्वावंगारौ पृथक्कृत्य तयोरेकं वायव्यदेशे निरस्याप उपस्पृश्य शिष्टमंगारमवस्थाप्य तस्मिन्कपालं निधाय तत्रान्यमंगारं[2] निक्षिप्य पात्रांतरेण पिष्टार्थमपः(?) प्रताप्य प्रक्षालितमेकशरावमग्नौ प्रताप्य स्वाग्रे निहिते सपवित्रे तस्मिन्पिष्टं समोप्य वाचंयमः स्रुवेण पूर्णपात्रोदकं पिष्टे निनीय तप्ताभिरद्भिः पिष्टं परिप्लाव्य पिंडमश्वशफमात्रं कूर्माकृतिं कृत्वा कपालादंगारं दर्भैरपोह्य स्थाल्यां तंडुलानोप्य कपाले पुरोडाशं निधाय तदुत्तरतः शरावांतरे धाना निक्षिप्य पुरोडाशं श्लक्ष्णीकृत्य आज्यचरुपुरोडाशधानाः पर्यग्निकृत्य पुरोडाशमुल्मुकैः प्रताप्य दर्भैः प्रज्वाल्य सांगारेण भस्मनाभिवास्य विसृष्टवाग्घस्तं प्रक्षाल्य आज्योद्वासनादि संमार्गांतं कुर्यात् । स्रुक्संमार्गानंतरं पाणिसंमार्गः । पुरोडाशाद्भस्म दर्भैरपोह्य चरुपुरोडाशावभिघार्योदगुद्वास्य पात्रांतरे उपस्तीर्य तत्र पुरोडाशमासाद्य लौकिकाज्येन पूरयित्वा आविःपृष्ठं वा कृत्वा चरोरुत्तरत आसाद्य पुरोडाशादुत्तरत अक्ता धाना अनक्ता धानाश्च

---

[1] 'त्रयमिति'. [2] 'तत्रान्यावंगारौ'.

आसाद्य आज्यभागांतं कृत्वा अवदानधर्मेण चरोरवदाय। अग्ने-नयेतिचतसृणामगस्त्यऋषिः अग्निर्देवता त्रिष्टुप्छंदः होमेविनि-योगः। अग्नेनयसुपथा० १ अग्नेत्वंपारया० २ अग्नेत्वमस्मत्० ३ पाहिनोअग्ने० ४ इति ऋक्चतुष्टयेन स्वाहाकारसमकालं जुहु-यात्। अग्नयइदं०। सव्येन पाणिना दक्षिणे पाणावुपस्तीर्य कृत्स्नं पुरोडाशं निधाय द्विरभिघार्य अच्युताय भौमाय स्वाहेति जुहुयात्। अच्युताय भौमायेदं०। यस्मिन्नाज्ये पुरोडाशः स्थापितस्तदाज्यं स्रुवेणावदाय। मानोअग्ने इत्यस्यागस्त्योग्निस्त्रि-ष्टुप्। होमे विनियोगः। मानो अग्ने इति हुत्वा अग्नय इदं०। स्वांजलावन्येनोपस्तीर्य धाना द्विरोप्य हविरवत्तं चाभिघार्य। शन्नो भवंत्वित्यस्य वसिष्ठो वाजिनस्त्रिष्टुप् होमेवि०। शन्नोभ-वंतु० वाजिभ्यइदं०। ततोऽनक्ताधानाः पुत्रादिभ्यो दत्त्वा चरुधानैकदेशतः स्विष्टकृतं हुत्वा होमशेषं समाप्य ब्राह्मणा-न्भोजयेत्। इति श्रवणाकर्म।

**अथ सर्पबलिः**। श्रवणाकर्मानंतरं प्राणानायम्य देश-कालौ संकीर्त्य मम भार्यादिसहितस्य भौमादिसर्वसर्पेभ्यः संभावितबाधापरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सर्पबलिरूपं कर्म करिष्ये इति संकल्प्य शिक्यस्थदर्वीकलशावादाय निहितसक्तु-भिर्दर्वीं पूरयित्वा गृहान्निष्क्रम्य शुचौ देशेऽपोवनिनीय तत्र जुहुयात्। सर्पदेवजनेभ्यः स्वाहेति। ततः कृतांजलिर्नमस्करोति—ये सर्पाः पार्थिवा ये अंतरिक्ष्या ये दिव्या ये दिश्यास्तेभ्य इमं बलिमाहार्षं तेभ्य इमं बलिमुपाकरोमीति। बलिं प्रदक्षिणीकृत्य पश्चादस्योपविश्य। सर्पोसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान्यज्ञेन देवांस्त्वयि मा संतं त्वयि संतः सर्पा माहिंसिषुर्ध्रुवां ते परिददामि इति उपांशु मंत्रावृत्त्या पुत्रादीन्निवेदयेत्। अत्र विशेषः **कारिकायां**—ज्येष्ठानुक्रमतः पुत्रानप्रत्ता दुहितॄस्तथा। ततः पत्नीं ध्रुवामुं त इत्याद्यावर्तते त्विह। पुत्रादिनाम वक्तव्यं द्वितीयांतममुंपदे। ध्रुव मां ते परीत्यादिनात्मानं परिदाय च। अन्यः कुर्वीत चेदाह गृहिणो नाम मांपदे। इति। बलिदानप्रभृत्यापरिदानात् बलिं कर्तारं

---

१ 'परिददामीति ध्रुवामुं ते ध्रुवामुं त' इति.

चांतरा न व्यंपेयुः[1] । ततः सायंप्रातर्बलिं हरेदाप्रत्यवरोहणात् सर्पदेवजनेभ्यःस्वाहेति मंत्रेण । नात्र नमस्कारादि । आप्रत्यवरोहणादित्यस्य व्याख्यामाह **वृत्तिकारः** । आचतुर्दश्या आपौर्णमास्या वा यस्मिन्नहनि प्रत्यवरोहणं करोतीति । (यद्वा तदहरेव तावतो बलीन्दद्यात् ) । मार्गशीर्षस्य चतुर्दश्यां पौर्णमास्यां वा तस्मादर्वाचीनान्यहानि ह्रासवृद्धिभ्यां परिगणय्य तेष्वहस्सु यावंतः प्रातःसायंकालास्तावंतो बलींस्तदहरेव दद्यादिति केचिन्मन्यंते। इति सर्पबलिः । एवं गृह्यांतरोक्ता अपि प्रयोगा ज्ञेयाः।

अथ चतुर्थ्यां **संकष्टचतुर्थीव्रतं मदनरत्ने स्कान्दे**— गणेश उवाच । श्रावणे बहुले पक्षे चतुर्थ्यां तु विधूदये । गणेशं पूजयित्वा च चंद्रायार्घ्यं च दीयते । पार्वत्युवाच । क्रियते केन विधिना किं कार्यं किं च पूजनम् । उद्यापनं कदा कार्यं के मंत्रा यैस्तु पूजनम् । गणेश उवाच । चतुर्थ्यां प्रातरुत्थाय दंतधावनपूर्वकम् । ग्राह्यं व्रतमिदं पुण्यं संकष्टतरणं शुभं । कर्तव्यमिति संकल्प्य व्रतेस्मिन्गणपं स्मरेत् । स्वीकारमंत्रः । निराहारोऽस्मि देवेश यावचंद्रोदयो भवेत् । भोक्ष्यामि पूजयित्वाहं संकष्टात्तारयस्व मां । एवं संकल्प्य राजेंद्र स्नात्वा कृष्णतिलैः शुभैः । आह्निकं तु विधायैवं पश्चात्पूज्यो गणाधिपः । त्रिभिर्माषैस्तदर्धेन तृतीयांशेन वा पुनः । यथाशक्त्या तु वा हैमी प्रतिमा क्रियतेऽमला । माषमात्रा तदर्धस्य तृतीयांशेन वा पुनः । हेमाभावे तु रूप्यस्य ताम्रस्यापि यथासुखं । सर्वथैव दरिद्रेण क्रियते मृन्मयी शुभा । वित्तशाठ्यं न कर्तव्यं कृते कार्यं विनश्यति । जलपूर्णं वस्त्रयुतं कुंभं तस्याग्रतो न्यसेत्। पद्ममष्टदलं पुण्यं गंधपुष्पैः प्रपूजयेत् ।

**अथ षोडशोपचारमंत्राः**। लंबोदरं चतुर्बाहुं त्रिनेत्रं रक्तवर्णकं । नानादंतैः सुवेषाढ्यं प्रसन्नास्यं विचिंतयेत् । ध्यायेद्गजाननं देवं तप्तकांचनसुप्रभम् । चतुर्भुजं महाकायं सूर्यकोटिसमप्रभम् । ध्यानं ॥ आगच्छेह जगन्नाथ सुरासुरनमस्कृत । अनाथनाथ सर्वज्ञ विघ्नराज कृपां कुरु । गजास्याय नमः । आवाहनं । गोप्ता त्वं सर्वदेवानामिंद्रादीनां विशेषतः। भक्तदारिद्र्यविच्छेत्ता एकदंत नमोस्तु ते॥ विघ्नराजाय॰ आसनं। मोदका-

---

१ 'व्यवेयुः'.

नामर्पणेन भक्तानां वरदायक । देवदेव नमस्तेस्तु भक्तानां फलदो भव । लंबोदराय० पाद्यं । महाकाय महारूप अनंतफलदायक । देवदेव नमस्तेस्तु सर्वेषां पापनाशन । शंकरसूनवे० अर्घ्यं । कुरुष्वाचमनं देव सुमुखं चाखुवाहन । सर्वाघदलनस्वामिन्नीलकंठ नमोस्तु ते । वक्रतुंडाय० आचमनं । स्नानं पंचामृतेनैव गृहाण गणनायक । अनाथनाथ सर्वज्ञ नमो मूषकवाहन । उमासुताय शुद्धस्नानं पंचामृतस्नानं महाभिषेकं च० । रक्तवस्त्रकयुग्मं च देवानामपि दुर्लभं । गृहाण मंगलं देव लंबोदर हरात्मज । शूर्पकर्णाय रक्तवस्त्रयुग्मं० । ब्रह्मसूत्रं सोत्तरीयं गृहाण गणनायक । आरक्तं ब्रह्मसूत्रं च कनकस्योत्तरीयकं । कुब्जाय० यज्ञोपवीतं । गृहाणेश्वर सर्वज्ञ दिव्यं चंदनमुत्तमं । करुणाकर गुंजाक्ष गौरीसुत नमोस्तु ते । गणेश्वराय० गंधं । सुगंधं दिव्यमाल्यं च गृहाण गणनायक । विनायक नमस्तुभ्यं शिवसूनो नमोस्तु ते । विघ्नविनाशिने नमः पुष्पं । अनेनैव नाम्ना कुंकुमाक्षता दूर्वाश्च देयाः । दशांगं गुग्गुलं धूपमुत्तमं गणनायक । गृहाण देवदेवेश उमासुत नमोस्तु ते । विकटाय० धूपं । सर्वज्ञ सर्वतत्त्वाद्य सर्वेश विबुधप्रिय । गृहाण मंगलं दीपं घृतकर्पूरसंयुतं । वामनाय० दीपं । नैवेद्यं गृह्यतां देव नानामोदकसंयुतम् । सर्वान्नफलसंयुक्तं सर्वभक्ष्यैः समन्वितम् । सर्वदेवाय० नैवेद्यं । फलान्यमृततुल्यानि सुगंधान्यघनाशन । मयानीतानि वै शक्त्या गृहाणेमानि सर्वदा । सर्वार्तिनाशिने० फलानि । तांबूलं गृह्यतां देव नागवल्लीदलैर्युतं । कर्पूरपूगसंयुक्तं सुगंधं वक्त्रभूषणम् । विघ्नहर्त्रे० तांबूलं । महासंकष्टदग्धोऽहं गणेश शरणं गतः । तस्मान्मनोरथं पूर्णं कुरु सर्वेश्वरप्रिय । धूम्राय० प्रदक्षिणां । सर्वदेवाधिदेवेश सर्वसिद्धिप्रदायक । भक्त्या कृतामिमां पूजां गृहाणोमासुत प्रभो । सर्वदेवाधिदेवाय० नमस्कारः । एवं पूजा प्रकर्तव्या षोडशैरुपचारकैः । मोदकान्कारयेन्मातस्तिलजान्दश पार्वति । देवाग्रे स्थापयेत्पंच पंच विप्राय कल्पयेत् । पूजयित्वा तु तं विप्रं भक्तिभावेन देववत् । दक्षिणां च यथाशक्त्या दत्वा पंचैव मोदकान् । भक्षयेन्निशि चंद्राय अर्घ्यं दत्वा यथाविधि । अर्घ्यमंत्रः । क्षीरसागरसंभूत सुधारूप निशाकर । गृहाणार्घ्यं मया दत्तं

गणेश प्रीतिवर्धन । मोदकदानं । विप्रवर्य नमस्तुभ्यं मोदकान्वै ददाम्यहम् । सुपक्वान्सफलान्पंच देव दक्षिणयान्वितान् । आपदुं[1]त्तारणायापि गृहाण द्विजसत्तम । प्रार्थना । अवद्धमतिरिक्तं वा द्रव्यहीनं मया कृतं । तत्सर्वं पूर्णतां यातु विप्ररूप गणेश्वर । ब्राह्मणान्भोजयेद्देवि यथान्नेन यथासुखम् । स्वयं भुञ्जीत पंचैव मोदकान्फलसंयुतान् । अशक्तश्चैकमन्नं वा भुञ्जीत दधिसंयुतम् । अथवा भोजनं कार्यमेकवारं हिमाद्रिजे । प्रतिमां गुरवे दद्यादाचार्याय सदक्षिणां । वस्त्रकुंभसमायुक्तामादौ मंत्रमिमं जपेत् । विसर्जनं । गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं त्वं गणेश्वर । व्रतेनानेन मे विप्र यथोक्तफलदो भव । एवं व्रतं तु कर्तव्यं प्रतिमासं त्वयाऽद्रिजे । यावज्जीवं तु वा वर्षाण्येकविंशति पार्वति । अशक्तावेकवर्षं वा प्रतिवर्षमथापि वा । इति ।

**अथोद्यापनं** । उद्यापनं तु कर्तव्यं चतुर्थ्यां श्रावणेऽसिते । स्वीकारश्च तथा कार्यः संकष्टहरणे तिथौ । गाणपत्यं तथाचार्यं सर्वशास्त्रविशारदम् । श्रद्धया प्रार्थयेदादौ तेनोक्तं विधिमाचरेत् । एकविंशतिविप्रांश्च वस्त्रालंकारभूषणैः । पूजयेद्गोहिरण्याद्यैर्हुत्वादौ विधिनाऽनलम् । होमयेन्मोदकान्मातस्तिलजान्घृतसंयुतान् । अष्टोत्तरसहस्रं वा नो चेदष्टोत्तरं शतम् । अष्टाविंशतिसंख्याकैर्मोदकैर्वा सशर्करैः । अशक्तोऽष्टौ शुभान्स्थूलाञ्जुहुयाज्जातवेदसि । पुष्पमंडपिका कार्या गणेशाह्लादकारिणी । पूजयेत्तत्र गणपं भक्तसंकष्टनाशनम् । गीतैर्वादित्रनिनदैर्भक्तिभावपुरस्कृतैः । पुराणवेदाध्ययनैस्तोषयेच्छ्रीगणेश्वरम् । एवं जागरणं कार्यं शक्त्या दानादिकं तथा । सपत्नीकमथाचार्यं भूषयेद्वस्त्रभूषणैः । उपानच्छत्रगोदानकमंडलुफलादिभिः । शय्यावाहनभूदानधनधान्यगृहादिभिः । यथाशक्त्या प्रकर्तव्यं दारिद्र्याभावमिच्छता । एकविंशतिविप्रांश्च भोजयेन्नामभिर्मम । गजास्यो विघ्नराजश्च लंबोदरशिवात्मजौ । वक्रतुंडः शूर्पकर्णः कुब्जश्चैव गणेश्वरः । विघ्ननाशो हि विकटो वामनः सर्वदेवतः । सर्वार्तिनाशो भगवान्विघ्नहंता च धूम्रकः । सर्वदेवाधिदेवश्च सर्वे षोडश वै स्मृताः । एकदंतः कृष्णपिंगो भालचंद्रो गणेश्वरः । गणपश्चैकविंशश्च सर्वे एते गणेश्वराः । दुर्गोपेंद्रैश्च रु-

१ 'दुद्धारणाय' इति पाठः.

द्रैश्च कुलदेव्याधिकं भवेत् । विशेषेणाष्टादशभिर्मोदकैर्हवनं स्मृतम् । एवं कृते विधाने तु प्रसन्नोऽहं न संशयः । ददामि वाञ्छितान्कामांस्तद्व्रतं मत्प्रियं कुरु । विद्यार्थी लभते विद्यां धनार्थी धनमाप्नुयात् । पुत्रार्थी पुत्रमाप्नोति रोगी रोगात्प्रमुच्यते ॥

अथ कथा । युधिष्ठिर उवाच । देव देव जगन्नाथ प्रपन्नार्तिविनाशन । यद्वर्तते मे हृदये त्वां पृच्छामि वद प्रभो । आपत्सु वर्तमानानां नृणां व्याकुलचेतसां । चिंतया ग्रस्तमनसां वियोगे सुहृदां तथा । दुर्लभं प्रापयेन्नित्यं कार्यसिद्धिः कथं भवेत् । अर्थसिद्धिः कथं नृणां पुत्रसौभाग्यसंपदः । सर्वसंकष्टनाशाय किं कार्यं मानवैः प्रभो । श्रीभगवानुवाच । शृणु राजन्प्रवक्ष्यामि विधानं सर्वकामदं । गणेशं पूजयेद्भक्त्या मंत्रैरागमसंभवैः । कृष्णपक्षे चतुर्थ्यां वै निशि चंद्रोदये नृप । ओषधीभिः शुक्लतिलैर्दिवा स्नात्वा प्रसन्नधीः । कार्यं संकल्प्य मनसा ध्यात्वा देवं गजाननं । नित्यकर्म समाप्यादौ निशि चंद्रोदये नृप । तत्र पीठं गणेशस्य पूजयेत्कुसुमाक्षतैः । स्वयं न वेत्ति गुरुणा कारयेच्च यथोचितम् । स्थापयेत्तत्र देवेशमागमोक्तविधानतः । पाद्यार्घ्याचमनस्नानैः पृथक् पंचामृतादिभिः । उपचारैः षोडशभिर्मंत्रेणानेन पूजयेत् । ॐ नमो हेरंब मदमेदित मम संकष्टान्निवारय निवारय स्वाहा । इंद्रादींल्लोकपांश्च समंतादर्चयेत्सुधीः । पक्वमुद्गतिलैर्युक्तान्मोदकान्घृतपाचितान् । भक्ष्याण्यन्यानि तांबूलं यथाशक्त्या प्रकल्पयेत् । ततो दूर्वांकुरान् गृह्य गजवक्त्रं च भक्तितः । एभिर्नामपदैर्देवमर्चयेत्सुसमाहितः । गणाधिप नमस्तेस्तु उमापुत्राघनाशन । एकदंतेभवक्त्रेति तथा मूषकवाहन । विनायकेशपुत्रेति सर्वसिद्धिप्रदायक । कुमारगुरवे तुभ्यं सर्वसंकष्टनाशन । प्रार्थयेच्च ततो देवं भक्तिनम्रः प्रसन्नधीः । विघ्नराज नमस्तेस्तु उमापुत्राघनाशन । यदुद्दिश्य कृतं मेऽद्य यथाशक्त्या प्रपूजनम् । तेन तुष्टो ममाद्याशु हृत्स्थान्कामान्प्रपूरय । विघ्नान्नाशय मे सर्वान्नाशायोपस्थितान्प्रभो । त्वत्प्रसादेन कार्याणि सर्वाणीह करोम्यहं । शत्रूणां बुद्धिनाशं च मित्राणामुदयं कुरु । इति विज्ञाप्य देवेशं प्रणिपत्य पुनः पुनः । ततो होमं प्रकुर्वीत शतमष्टोत्तरं तथा । मोदकैर्वाणकं कार्यं व्रतसंपूर्णहे-

१ 'शं निगमोक्त' पाठः.

तवे। लड्डूकैर्वटकाद्यैर्वा सप्तभिः फलसंयुतम्। गणेशप्रीणनार्थाय ब्राह्मणाय ददाम्यहम्। कथां श्रुत्वा ततः पुण्यां दद्यादर्घ्यं प्रयत्नतः। चंद्राय सप्तवारं तु मंत्रेणानेन पार्थिव। क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव। गृहाणार्घ्यं शशांकेदं रोहिण्या सहितः शशिन्। ततः क्षमापयेद्देवं शक्त्या विप्रांश्च भोजयेत्। स्वयं भुञ्जीत तच्छेषं यद्देवब्राह्मणार्पितम्। सप्तग्रासान्मौनयुक्तो ह्यशक्तस्तु यथासुखम्। इत्थं कुर्यात्तु मासेषु चतुर्ष्वपि विधानतः। उद्यापनं पंचमे च कुर्याद्धीमान्प्रयत्नतः। सौवर्णं वक्रतुंडं च शक्त्या कुर्याद्विधानतः। पूर्वोक्तेन विधानेन पूजयेद्भक्तिमान्नरः। चंदनेन सुगंधेन पुष्पैर्नानाविधैः शुभैः। नारिकेलफलेनैव दद्यादर्घ्यं समाहितः। तस्मै भुक्तवते दद्याद्वाणकं फलसंयुतम्। शूर्पं पायससंयुक्तं रक्तवस्त्रेण वेष्टितम्। सौवर्णं गणपं तस्मै दद्याच्चैव सदक्षिणम्। तिलानामाढकं दद्याद्व्रतसंपूर्णहेतवे। ततः क्षमापयेद्देवं विघ्नेशः प्रीयतामिति। इत्थं चोद्यापनं कार्यं हयमेधफलं लभेत्। सर्वकार्याणि सिध्यंति मनोभिलषितान्यपि। पुरा स्कंदे गते राजन्पार्वत्या वै कृतं किल। चतुर्ष्वपि च मासेषु हरवाक्येन पार्थिव। पंचमे मासि दृष्टस्तु कार्तिकेयो ह्यपर्णया। समुद्रपानवेलायामगस्त्येन पुरा कृतम्। त्रिषु मासेषु विघ्नेशप्रसादात्प्रीतिमान्द्विजः। षण्मासावधि राजेंद्र दमयंत्या कृतं त्विदम्। नलमन्वेषयंत्या तु ततो दृष्टो नलोऽभवत्। नीतेऽनिरुद्धे बाणस्य नगरं चित्ररेखया। क्व गतः केन नीतोऽसौ यादवो व्याकुलोऽभवत्। प्रद्युम्नं पुत्रशोकार्ता रुक्मिणी प्रत्यभाषत। शृणु पुत्र प्रवक्ष्यामि यद्वृत्तं मामके गृहे। शंबरेण पुरा नीते बालके त्वयि षड्दिने। त्वद्वियोगजदुःखेन हृदयं मम दारितम्। कदा द्रक्ष्यामि ते पुत्र मुखमत्यंतसुंदरं। अन्यस्त्रीणां सुतान्दृष्ट्वा मम चेतो व्यदीर्यत। मम पुत्रो भवेतासौ समोऽनेन प्रमाणतः। इति चिंताकुलाया मे गतान्यब्दानि भूरिशः। ततो मद्दैवयोगेन लोमशो मुनिरागतः। तेनोपदिष्टं विधिवत्सर्वचिंताहरं व्रतम्। संकष्टाख्या चतुर्थी च चतुर्वारं मया कृता। तत्प्रभावात्समायातो हत्वा शंबरमाहवे। ज्ञात्वा चाशु प्रकुर्यास्त्वं ततो ज्ञास्यसि वै फलं। प्रद्युम्नेन कृतं राजन्

१ 'सुतम्' पाठः.

गणनाथस्य तोषणं । श्रुतो बाणासुरपुरेऽनिरुद्धो नारदात्तदा । ज्ञात्वोद्धवेन चादिष्टं कृतवानस्मि तद्व्रतम् । एकवारं महेशस्य संग्रामाद्भीत एव हि । गत्वाशु शोणितपुरं हत्वा बाणासुरं मृधे । आनीतो ह्युखया सार्धं अनिरुद्धस्तदा नृप । अन्यैर्देवासुरैः पूर्वं कृतं विघ्नेशतुष्टये । ऋषिभिर्मानवैश्चैव तथा राक्षसकिंनरैः । आपद्यपि च संकष्टे प्रकुर्याद्रोगशांतये । अनेन सदृशं लोके सर्वसिद्धिकरं व्रतं । तपो दानं च तीर्थं च विद्यते नैव कुत्रचित् । यच्छेषं द्विजदेवानां भोक्तव्यं सहबंधुभिः । कार्यगौरवमालक्ष्य कुर्यान्मासान्बहूनपि । बहुनात्र किमुक्तेन नास्त्यन्यत्कार्यसिद्धये । नोपदेश्यं त्वभक्ताय नास्तिकाय शठाय च । देयं पुत्राय शिष्याय श्रद्धायुक्ताय साधवे । मम प्रियोसि राजर्षे धर्मिष्ठः पांडुनंदन । कार्यकर्तासि लोकानामुपदिष्टं तवानघ । तस्मात्सर्वेषु कार्येषु कर्तव्यं प्रार्थितं त्वया । सिध्यंति सर्वकार्याणि नान्यथा ऋषिभाषितं । यदा यदा पश्यति कार्यमुद्यतं नारी नरो वा विदधाति सद्व्रतम् । संप्रेक्ष्य कार्याणि समीहितानि किं दुर्लभं विघ्नहरे प्रसन्ने । इति श्रीब्रह्मांडपुराणे संकष्टहरचतुर्थीव्रतकथासमाप्ता ॥

अथाष्टम्यां **जन्माष्टमीव्रतं** । भविष्ये जन्माष्टमीव्रतं प्रकृत्य—प्रतिवर्षं विधानेन मद्भक्तो धर्मनंदन । नरो वाप्यथ वा नारी सौभाग्यमतुलं लभेत् । इह धर्मरतिर्भूत्वा मृतो वैकुंठमाप्नुयात् । इति । तथा—मम जन्मदिने पुण्ये सर्वालंकारभूषितः । पूज्यते पांडवश्रेष्ठ जनैरुत्सवसंयुतैः । परचक्रभयं तत्र न कदाचिद्भवेन्नृप । पर्जन्यः कालवर्षी स्यादीतिभ्यो न भयं भवेत् । गृहे वा पूज्यते यस्मिन्देवक्याश्चरितं मम । तत्र सर्वसमृद्धिः स्यान्नोपसर्गादिकं भयम् । इति । तथा स्कान्दे—व्रतेनाराध्य देवेशं देवकीसहितं हरिं । त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम् । जन्माष्टमीव्रतं ये वै प्रकुर्वंति नरोत्तमाः । कारयंत्यथवा लोका लक्ष्मीस्तेषां सदा स्थिरा । स्मरणं वासुदेवस्य मृत्युकाले भवेन्मुने । सिध्यंति सर्वकार्याणि कृते जन्माष्टमीव्रते । इति । एवं फलश्रवणादिदं काम्यं नित्यं च । उदाहृतभविष्यवाक्ये प्रतिवर्षमिति वीप्साश्रवणात् ।—श्रावणे बहुले पक्षे

१ 'परं' इति पाठः.

कृष्णजन्माष्टमीव्रतम् । न करोति नरो यस्तु भवति क्रूरराक्षसः । इति । कृष्णाष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम । त्रैलोक्यसंभवं पापं तेन भुक्तं न संशयः । ब्रह्मघ्नस्य सुरापस्य गोवधे स्त्रीवधेपि वा । तल्लोके मुनिशार्दूल जयंतीविमुखस्य च । जयंतीवासरे प्राप्ते करोत्युदरपूरणं । पोथ्यते तिलमात्रं तु यमदूतैः कलेवरम् । इति भविष्यस्कान्दयोरकरणे दोषश्रवणाच्च । अत्र भोजनकरणे प्रत्यवायश्रवणेनोपवासाकरणस्य प्रत्यवायनिमित्तत्वज्ञापनात् ।— केवलेनोपवासेन तस्मिञ्जन्मदिने मम । शतजन्मकृतात्पापान्मुच्यते नात्र संशयः । इति माधवोदाहृतवाक्ये केवलोपवासस्य फलसंबंधप्रतीतेरुपवास एव प्रधानं । पूजादेः स्पष्टतृतीयाश्रुत्या फलसंबंधाश्रवणात्तदंगत्वं ।—तस्यामभ्यर्चनं शौरेर्हंति पापं त्रिजन्मजं । इत्यादिफलश्रवणं तु अपापश्लोकश्रवणवत्स्तुतिमात्रं । अतएव निर्णयामृते ऐहिकामुष्मिकफलश्रवणात्सर्वैरेवात्रोपवासव्रतं कार्यमित्युक्तमिति प्राञ्चः । नव्यास्तु—अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदा । मुख्यकालः स विज्ञेयस्तत्र जातो हरिः स्वयम् । इति वसिष्ठवाक्ये मुख्यस्य प्रधानस्य काल इति व्युत्पत्त्या अर्धरात्रस्य प्रधानकालत्वप्रतीतेः । उपवासस्यैव प्राधान्ये तदनुपपत्तिः । पूजाया अपि प्राधान्ये तु तस्या अर्धरात्रे एव विधानादर्धरात्रस्य प्रधानकालत्वं संगच्छते । अत उभयोरपि प्राधान्यमित्याहुः । नव्यतरास्तु उभयोः प्राधान्ये चित्रोद्भिद्वन्निरपेक्षफलश्रवणात्प्रयोगभेदापत्तिः । नच— श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् । इत्यादि वाक्येषु व्रतशब्देनोभयोरुपादानाद्राजसूयवत्प्रयोगैक्यमिति वाच्यं । प्रातिस्विकवाक्यैः पृथक्फलसंबंधे परस्परनैरपेक्ष्येणैवेतिकर्तव्यतान्वयेन भिन्नप्रयोगत्वस्यावर्जनीयत्वे सति एकपदोपादानस्य य इष्ट्या पशुनेत्यादिवदविरोधात् । नच पृथक्प्रयोगत्वमिष्टं स्वकृतपद्धतावेकप्रयोगत्वलेखविरोधात् । तस्मात्सोपवासो हरेः पूजामिति, तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः । इति वाक्ययोरुपवासस्य गुणत्वप्रतीतेः । ततो धावति हतोवती(?)त्यादिवदुपवासः फलिसंस्कारतया अंगं । एवं चोपवासे फलश्रुतिरर्थवादः । न चैवं संकल्पवाक्ये उपवासं करिष्यामीत्युपवासकीर्तनमनुपपन्नमिति शंक्यं । मंत्रस्य क्रियासंबंधिप्रकाशनेनाप्यंग-

त्वोपपत्तेरित्याहुः । तन्न । भाष्यकारमतेऽङ्गयर्थत्वेन निरपेक्षविहितयोरप्याधानपवमानेष्ट्योः संवत्सरे निर्वपेद्द्वादशरात्रे निर्वपेत्सद्योवेत्यादिकालशास्त्रपर्यालोचनया परस्परसापेक्षयोरेवाग्निजनकत्वमिति पंचमे मिश्रोक्तन्यायेन—सोपवासो हरेः पूजां—तस्मान्मांपूजयेत्तत्रेत्यादावेककाले परस्परसापेक्षकर्तव्यत्वप्रतीतेः। तथैव चित्रोद्भिन्न्यायाविषयत्वात् । विजातीयानेकफलसंबंधिनोरप्युपवासपूजयोः काम्यसामिधेनीकल्पदर्शेष्ट्योरिव न पृथक्प्रयोगत्वापत्तिः । तथाहि । एकविंशतिमनुब्रूयात्प्रतिष्ठाकाम इत्यादिवाक्येषु फलाय विहितानामनुवचनांतराणामाश्रयतया प्रकृतयागानपेक्षत्वेपि अनुब्रूयादिति दर्शप्रयुक्तनिगदानंतरविहितत्वान्न दर्शात्पृथक्प्रयोगत्वं । तथा पौराणव्रतविधिषु उपवाससंकल्पोत्तरं पूजाचंद्रार्घ्यदानादिकर्तव्यताविधानान्नोपवासापेक्षया पूजादेः पृथक्प्रयोगापत्तिः । भविष्यपुराणे हि—सप्तम्यां त्वल्पभुक्कुर्याद्दंतधावनपूर्वकम् । उपवासस्य नियमं रात्रौ सुप्याज्जितेंद्रियः । केवलेनोपवासेन तस्मिन्जन्मदिने मम । सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः । उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः । ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले । सुदेशे शोभने कुर्याद्देवक्याः सूतिकागृहम् । इत्यादिग्रंथे पूर्वकृतोपवाससंकल्पोत्तरकालत्वस्य विधित्सितसूतिकागृहनिर्माणपूर्वके पूजादौ पाठप्राप्तस्यापि ततोष्टम्यामिति ततःशब्देनानुब्रूयादित्यनुशब्देनैव विधेः एकप्रयोगतैव फलं प्रत्युत भवन्मते श्रीकृष्णपूजाया इव देवकीपूजाया अपि फलसंबंधात्कृष्णपूजातः पृथक्प्रयोगत्वमापद्यते । श्रूयते हि भविष्ये—प्रणवादिनमोंतेन पृथङ्नामानुकीर्तयन् । कुर्यात्पूजां विधिज्ञश्च सर्वपापापनुत्तये । इति । एवं चास्मदुक्तप्रकारेणैव पूजयोरेकप्रयोगत्वं भवद्भिरप्युपपादनीयं । तत्पूजोपवासयोरपि किमिति नोपपाद्यते । फलिसंस्कारत्वेनोपवासविधित्सायां च केवलेनोपवासेनेत्युक्तवचने केवलस्योपवासस्य फलसाधकत्वकीर्तनं न युज्यते । नचांगमेव प्रधाननिरपेक्षं फलं साधयतीति स्तुतिरपि वक्तुं युक्ता । किंच—वासुदेवं समुद्दिश्य सर्वपापप्रशांतये । उपवासं करिष्यामि कृष्णाष्टम्यां

नभस्यहं । इत्यादिसंकल्पवाक्ये उपवासस्यैव संकीर्तनं तत्फलि-संस्कारार्थत्ववादिभिः कथमुपपादनीयं । प्रधानसंकल्पेनैवांगसंकल्पसिद्धेः । दर्शाद्यारंभे दर्शपूर्णमासाभ्यां यक्ष्ये, सोमेन यक्ष्ये इति प्रधानविषयाण्येव संकल्पवाक्यानि बौधायनाद्याः कल्पकाराः स्मरंति । प्रयुंजते च तथैव याज्ञिकाः । न तु क्वचिदपि श्रौते स्मार्ते वा कर्मणि प्रथमसंकल्पवाक्ये अंगस्याप्यनुकीर्तनं कल्पकारेणोक्तं केनापि याज्ञिकेन क्रियमाणं वा दृश्यते । नतरां केवलांगस्य । यच्चोक्तं अंगत्वेप्युपवासं क्रियासंबंधिनं प्रकाशयन्मंत्रः करणत्वं भजत इति तदपि चिंत्यम् । नह्ययं मंत्रः पूजांगं यत्तत्संबंधितयोपवासं प्रकाशयन् तत्र करणतां गच्छेत् । श्रुतिलिंगाभ्यां मानसक्रियारूपसंकल्पांगमयं । न चोपवासस्तदंगतया तत्संबंधी येन तत्प्रकाशस्य संकल्पांगत्वं घटेत इत्यादि सुधिय एव विवेचयंतु । वस्तुतस्तु मदनरत्नाद्युदाहृतभविष्योत्तरपुराणस्थजन्माष्टमीशास्त्रे तावदालोच्यमाने जन्माष्टमीसंज्ञकव्रतस्यैव प्राधान्यमिति प्रतीयते । तत्र हि—कीदृशं तद्व्रतं देव देवैः सर्वैरनुष्ठितम् । जन्माष्टमीतिसंज्ञं हि पवित्रं पापनाशनं । इत्युपक्रम्य । श्रीकृष्ण उवाच । मासि भाद्रपदेष्टम्यामित्यादिना उपवाससंकल्पविधिपूर्वकं श्रीकृष्णपूजां देवक्यादिपूजां जागरणं च विधाय । प्रसंगेनापि यो भक्त्या व्रतं पश्येज्जनाकुलम् । सर्वपापविनिर्मुक्तः प्रयाति हरिमंदिरं । इति व्रतेनोपसंहारः कृतः । व्रतशब्दश्च मानससंकल्पवाची । स्नातकव्रताधिकारपठितेषु विधिनिषेधेषु संकल्पपरतायाः स्मृतिव्याख्यातृभिरभ्युपगमात् । चातुर्मास्याद्यंगभूतव्रताधिकारपठितेषु केशान्निवर्तयीतेत्यादिसौत्रविधिनिषेधेषु सूत्रव्याख्यातृभिर्नारायणवृत्तिकृदादिभिः संकल्पपरतायाः स्वीकारात् । जातेष्टिन्यायेनोपक्रमोपसंहारैकरूप्याच्चैकव्रतपरत्वे निर्णीते किंविषयसंकल्पात्मकं व्रतं विधित्सितमित्याकांक्षायां यावत्योंतराले फलसंबंधितया निर्दिष्टाः क्रियास्तावद्विषयकसंकल्पस्य फलसंबंधस्य ज्ञापन एव सकलश्रुतीनां जातेष्टिफलश्रुतीनामिव तात्पर्यावगमात् उपवासपूजादिविषयकसंकल्पस्यैव प्राधान्यम् । जातेष्टिवाक्यशेषस्थाष्टाकपालादीनामिव व्रतावयवभू-

तोपवासपूजादीनां कस्य प्राधान्यमिति, प्रयोगैक्यं प्रयोगभेद इति च चिंताद्वयमपि न प्रेक्षावद्भिः कर्तुमर्हं। संगच्छते चैवं सति व्रतस्यैव नित्यकाम्यत्वसिद्ध्यर्थमनेकशास्त्रोदाहरणं हेमाद्र्यादिषु। अतएव हेमाद्रिणा स्वोदाहृतेषूपवासनित्यत्वकाम्यत्वबोधकवाक्येषु उपवासशब्दः संकल्पपरतयैव व्याख्यातः। उपवासो नाम सेतिकर्तव्यताकोऽभोजनसंकल्प इति। संभवति चैवं सति संकल्पांगमंत्रे उपवासशब्देन प्रधानक्रियाप्रकाशनं। तस्माज्जन्माष्टम्यां संकल्पस्यैव प्राधान्यमित्यनवद्यम्। एवमेव जयंतीव्रतमपि व्याख्यातम्। तत्रापि उक्तनिबंधोदाहृताग्निपुराणस्थवाक्यनिचये—कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी नृप। जयंती नाम सा ज्ञेया उपोष्या सा प्रयत्नतः। इति जयंतीसंज्ञयोपक्रम्य।—अतः परं महीपाल संप्राप्ते तामसे कलौ। जन्मनो वासुदेवस्य भविता व्रतमुत्तमम्। इति मध्ये परामृश्य—यः कुर्याद्व्रतमेतत्तु पुण्यवान्भक्तितः[1] सदा। इहामुत्र सुखी [illegible] विद्वान्परात्परतरं व्रजेत्। इत्युपसंहृतं। अतोऽत्रापि जन्मकृतपवासादिसंकल्पात्मकव्रतस्यैव प्राधान्यमिति व्रतस्वरूपनिर्णयः।

**अथ कालनिर्णयः।** तत्राष्टमी द्विविधा। विद्धा शुद्धा च। अर्धरात्रादर्वाक् सप्तमीवेधवती विद्धा। तद्रहिता शुद्धा। नात्राष्टम्यास्तिथ्यंतर इव दिवासत्त्वं वेध्यत्वप्रयोजकं। उक्तरीत्या सत्युपवासादिप्राधान्ये[2] तस्या अर्धरात्रव्याप्तेरेव ग्राह्यत्वनिर्णयहेतुत्वात्। यथाह **वसिष्ठः**—अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदि। मुख्यकालः स विज्ञेयस्तत्र जातो हरिः स्वयम्। इति। तत्र न मुख्यस्य काल इति षष्ठीतत्पुरुषः। उक्तरीत्योपवासस्यापि प्रधानशरीरनिविष्टत्वेनाहोरात्रस्यापि प्रधानकालत्वात्। पूजामात्रप्राधान्ये तस्या अपि अर्धरात्र इव कालांतरेपि कर्तव्यतायाः— त्रिकालं पूजयेद्देवं दिवा रात्रौ विशेषतः। अर्धरात्रावपि तथा पुष्पैर्नानाविधैरपि। इति भविष्यवचसा प्रतीतेः। मुख्यस्य काल इति तत्पुरुषात् मुख्यः काल इति कर्मधारयस्य स्थपत्यधिकरणन्यायेनौचित्यात्। कालस्य मुख्यत्वं च स्वव्याप्त्याऽसाधारण्येन निर्णायकत्वं। अतो युक्तमर्धरात्रादर्वाक्सप्तमीयोगेन विद्धत्वमिति। द्वयोरपि शुद्धाविद्धयोः दिनांतरासत्त्वे नैव संदेहः। को-

१ 'भक्तिमान्सदा'. २ 'सत्यामुपवासादि' इति.

त्यंतराभावात् । दिनद्वयसत्वे रोहिणीयोगाभावे चत्वारः पक्षाः । पूर्वेद्युरेव निशीथव्यापित्वं, परेद्युरेव वा, उभयत्रापि तत्, नोभयत्रापि च इति । आद्यपक्षे पूर्वैव । निर्णायकनिशीथव्याप्तेस्तत्रैव सत्त्वात् । अतएव द्वितीये परैव । तृतीयचतुर्थयोरपि परैव । उक्तनिर्णायकस्योभयत्रापि सत्त्वेऽसत्त्वे वा अधिककालव्यापित्वेन परस्या एव प्रशस्तत्वात् ।—मुहूर्तेनापि संयुक्ता संपूर्णा साष्टमी भवेत् । किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा । इति यमवाक्ये नवमीयोगेन प्राशस्त्याभिधानाच्च । एवं रोहिणीयोगेपि पूर्वेद्युरेव निशीथे अष्टमीरोहिणीयोगः, परेद्युरेव तत्र संयोगः, दिनद्वयेपि तत्र संयोगः, इति पक्षत्रयेपि पूर्ववन्निर्णयः । आद्ययोर्निर्णायकस्यैव व्यवस्थितत्वात् । तृतीये अधिककालव्याप्तेर्नवमीयोगस्य च प्राशस्त्याधायकत्वात् । दिनद्वये निशीथे रोहिणीयोगाभावास्तु रोहिणीयुक्ताष्टम्यां पंचधा संभवंति । परेद्युरेव निशीथादन्यत्र रोहिणीयुक्ताष्टमी निशीथव्यापिनीत्येकः । दिनद्वये ततोन्यत्र रोहिणीयुक्ता परेद्युरेव निशीथव्यापीनीति द्वितीयः । दिनद्वयेपि निशीथव्यापिनी परेद्युरेव रोहिणीयुक्तेति तृतीयः । दिनद्वयेपि तदव्यापिनी पूर्वेद्युरेव रोहिणीयुक्तेति चतुर्थः । पूर्वेद्युरेव निशीथव्यापिनी परेद्युरेव रोहिणीयुक्तेति पंचमः । तत्राद्येषु चतुर्ष्वपि परैव । आद्यपक्षत्रये अर्धरात्रव्याप्तिरोहिणीयोगयोस्तदन्यतरस्य च एकत्रैव सत्वेन निर्णयात् । चतुर्थे संकल्पकालसत्वस्याहोरात्रसंबंधस्य नवमीयोगस्य सप्तमीवेधराहित्यस्य च अष्टम्याः प्राशस्त्यातिशयाधायकत्वेन बहूनामनुरोधेनार्धरात्रादूर्ध्वं सतो रोहिणीयोगस्यैकस्य क्वचिदपि कर्मण्यनुपयोगेनानादरणीयत्वात् । पंचमपक्षे तु पूर्वस्या एव ग्राह्यत्वे निशीथव्याप्तेर्निर्णायकता प्रसक्ता । सा—दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला । रात्रियुक्तां प्रकुर्वीत विशेषेणेंदुसंयुतां । इति ब्रह्मवैवर्तवचनेनापोद्यते । अत्रहि चंद्रोदयसंयुतां अर्धरात्रव्यापिनीमित्यर्थः । दिनद्वयेपि अर्धरात्रव्यापित्वाभावे बहुरात्रिसंयुतां वा कुर्वीत तद्दिनावच्छेदेन रात्र्यवच्छेदेन वाऽष्टम्यां कलामात्राया अपि रोहिण्यायोगाभाव इति विधीयते । तेन रोहिणीयोगस्य निशीथव्याप्तेश्च विरोधे

रोहिणीयोग एव च निर्णायको न निशीथव्याप्तिः । ईदृशे एव विषये रोहिणीयोगस्यैव निर्णायकतेति ज्ञापितं भवति ।

वचोंतराणामपि फलवत्त्वं **विष्णुरहस्ये**—प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी । मुहूर्तमपि लभ्येत सोपोष्या सा महाफला । इति । **स्कांदे**—उदये चाष्टमी किंचिन्नवमी सकला यदि । भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता । अपि वर्षशतेनापि लभ्यते यदि वा नवा । इति । **वह्निपुराणेऽपि**—कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि । जयंती नाम सा प्रोक्ता उपोष्यैव प्रयत्नतः । इति । अयमेव निर्णयो माधवादिसकलदाक्षिणात्यनिबंधकर्तॄणामपि संमतः । गौडनिबंधतिथितत्वकृतोपि । उक्तं हि तेन—वासरे वा निशायां वा यत्र युक्ता तु रोहिणी । विशेषेण नभोमासि सैवोपोष्या सदा तिथिः । इत्यादिवचःसु एवकारात्—एकादशीव्रताद्राजन्नधिकं रोहिणीव्रतम् । ततोपि दुर्लभं मत्वा तस्यां यत्नं समाचरेत् । इति ब्राह्मवचने [illegible]स्य रोहिणीव्रतत्वश्रवणात् । तिथि[illegible] रोहिणी नियामिकैव । बुधवा[illegible]योगे तु [illegible]तिशयमात्रं । अतः षष्टिदंडामपि रोहिणीरहितां परित्यज्य रोहिणीसहिता स्वल्पाप्यष्टमी परैवेति संमतं चाचार्यचूडामण्योरपि परदिने स्वल्पाप्यष्टमी रोहिणीयुताचेत्सर्वोपवादिका परैवोपोष्येति । यत्तु तेन बुधसोमवासरयोः रोहिणीतुल्यत्वमुक्तं तद्युक्तिविरोधान्निबंधविरोधाच्चोपेक्षणीयं । अत्र केचिन्निशीथस्य कर्मकालत्वात्कर्मकालशास्त्रस्य सर्वापेक्षया प्राबल्याद्रोहिणीयोगस्य बुधवारादिसहपठितस्य तद्वदेवानिर्णायकत्वात् उक्तविषये निशीथव्यापिन्येव ग्राह्या । नच ब्रह्मवैवर्तादिवाक्यं कर्मकालशास्त्रस्य बाधकं तस्यान्यथासिद्धत्वात् । तत्र तावद्ब्रह्मवैवर्तादिवाक्ये इंदुसंयुतामित्यत्र इंदुशब्दः सोमवारपरः । सोमेनापि विशेषत इत्यनेन एकमूलत्वलाभात् । एवं चाहोरात्रावच्छेदेन रोहिण्यभावे निशीथगा ग्राह्येति नार्थः । निशीथवाचकशब्दाभावात् । किंतु दिनद्वयेपि निशीथस्पर्शाभावे सोमवाराधिकरात्रिव्याप्त्योः निर्णायकत्वं विधीयत इति । यद्वा अर्स्त्वदुसंयुतामित्यस्य निशीथपरत्वं तथापि रात्रिपदेनाधिकव्याप्तिं लक्षयित्वाहोरात्रावच्छेदेन रोहिणीयोगाभावे-

ऽधिकरात्रिव्यापिनीं कुर्वीतेत्युक्त्वा तदपोद्यते विशेषेणेति । सत्यपि रोहिणीयोगे निशीथगैव ग्राह्येत्यर्थः । अथवा दिनद्वये वैषम्येण मुहूर्तात्मकनिशीथस्पर्शे अहोरात्रावच्छेदेन रोहिणीयोगाभावे विशेषेणेंदुसंयुतां अधिकनिशीथव्यापिनीमिति यावत्कुर्वीत । रोहिणीयोगे तु अधिकनिशीथव्यापिनीमपि विहाय स्वल्पनिशीथयोगिनीं रोहिणीयुक्तामेव कुर्वीतेति स्कान्दवाक्येपि उदयशब्दः चंद्रोदयपरः । तारापत्युदये सतीत्यनेनैकमूलत्वकल्पनालाघवात् । अन्यथा रोहिणीबुधयुक्तैवोत्तरा ग्राह्या स्यान्नतु बुधाभावेपि । स्कान्दवाक्ये रोहिणीबुधयोः सहितयोरेव श्रवणाद्रोहिणीयोगमात्रादिव बुधमात्रयोगादप्युत्तरा ग्राह्या स्यात्कथमर्धजरतीयाभ्युपगमः । विष्णुरहस्यवह्निपुराणस्थवचनयोस्तु मुहूर्तपदं निशीथपरं। कलापदं तद्वर्तिकलापरं । वस्तुतस्तु दिनद्वयेऽष्टम्यां निशीथव्याप्तावेकदेशव्याप्तौ वोक्तपक्षद्वयमपि निर्णायकं नतु कर्मकालव्याप्तिशास्त्रबाधकं । तस्मादुक्तविषये रोहिणीयुक्तां परां परित्यज्य निशीथव्यापिन्येव ग्राह्येत्याहुः । तन्न । यत्तावद्ब्रह्मवैवर्तवाक्ये प्रथमव्याख्यायामिंदुशब्दस्य सोमवारपरत्वे एकमूलकल्पनालाघवमुक्तं तत्स्वोक्तिविरुद्धं । नहि सोमवारयुक्ताधिकरात्रिव्याप्तेः निर्णायकत्वमत्र विधित्सितत्वेन स्वाभिमतं शास्त्रांतरे वा क्वचिदपि सिद्धमिति भवद्भिः स्वीकर्तुमुचितं बुधसोमयोः प्राशस्त्यमात्रार्थत्वं नतु निर्णायकत्वमिति रोहिण्या अनिर्णायकत्वदृष्टांतमसकृद्वदद्भिः । इंदुशब्दस्य वारवाचित्वे लक्षणापत्तिर्दोषः । चंद्रवाचको ह्ययं तद्देवत्यत्वाल्लक्षणयैव काले प्रवर्तेत नागशब्द इव पंचम्यां । अस्मन्मते तूदितस्यैव सत्तासंयोगसंभवान्नोदये लक्षणा । उदितेषु शुक्रादिषु बाल्यव्यवहारो ह्यस्तावस्थायामसत्तामेव द्योतयति । नचासत्तासंयोगसंभवः । सत्ताक्षिप्तोदयस्य विशेषणत्वसंभवे उपलक्षणत्वस्यान्याय्यत्वात्प्रथमोपस्थितावस्थात्यागे मानाभावाच्च। उद्यदवस्थस्यैव संयोगनिरूपकत्वेन निशीथलाभः । किंच सोमवाराधिकरात्रिव्यापित्वस्य भवदभिमतग्राह्यतावच्छेदकस्य निशीथगतितिथि-

१ 'सत्तया'.

साधारणत्वात्तस्या अपि रोहिणीयोगाभावे ग्राह्यत्वमित्यनिष्टापत्तिस्तदवस्थैव स्यात् । अथोभयदिने निशीथस्पर्शाभावे इत्यध्याह्रियते काऽत्र वाक्यार्थबोधापूर्णता यत्प्रयुक्तोऽध्याहारः । सति वा तस्मिन्नुभयदिने निशीथस्पर्शे इति नाध्याहार्यमित्यत्र किं विनिगमकं प्रत्युत दिनद्वये निशीथाव्याप्तौ रोहिणीयोगाभावे च पूर्वदिने कलामात्राधिकरात्रिव्याप्तौ सोमवारयुतायां पूर्वदिनोपवासः सकलनिबंधविरुद्धः सकलशिष्टाचारविरुद्धश्चापद्येतेति प्रथमव्याख्यानमयुक्तं । अत एवापरार्के—मुहूर्तमप्यहोरात्रे यस्मिन्युक्तैव लभ्यते । अष्टमी रोहिणीमृक्षं तां सुपुण्यामुपावसेत् । इति । व्याख्यातमेतत्तेनैव । अत्राष्टम्याः प्राधान्यं । रोहिणी तु तद्विशेषणं । नात्र सातत्येन नक्षत्रयोगोपेक्षणीयो मुहूर्तमपि वचनादिति । अनेन ग्रंथेन अष्टमी रोहिण्यृक्षयुक्ता प्राप्तेति योजितं भवति । नचात्र मुहूर्तशब्दो निशीथपरत्वेन व्याख्यातुं शक्यते । अहोरात्रपदवैयर्थ्यापातात् । द्वितीयेपि कुर्वीतेति सत्क्रियाश्रवणेन प्रतीयमानैकवाक्यताभंगोऽन्याय्य आपद्यते । रात्रिपदेधिकरात्रिलक्षणा च जर्तिलयवाग्वादिवाक्यवत् पूर्वविधेरुत्तरविधिशेषभावः पूर्वविध्यर्थनिंदाया अश्रवणेन स्वीकर्तुमुचितः । स्वीक्रियमाणश्च प्रतीयमानैकवाक्यताभंगेन प्रथमतो वाक्यभेदमंगीकृत्य पुनरेकवाक्यत्वकल्पनायासात् पिंडं समुत्सृज्य करं लेढि इति न्यायं नातिवर्तेत । सर्वा चैषा कल्पना वाक्यानर्थक्यपर्यवसायिन्येव स्यात् । निशीथव्यापिन्या ग्राह्यत्वस्य शास्त्रांतरे सुप्रसिद्धत्वात् । तृतीयेपि वैषम्येण निशीथस्पर्शस्याशब्दार्थस्य न वाक्यार्थांतर्गतत्वकल्पनमुचितं । नापि तृतीयपादस्य वैयर्थ्यं स्वीकर्तुमुचितं । रोहिणीयोगानुरोधेनाधिकनिशीथव्यापिनीं विहाय स्वल्पनिशीथगाया रोहिणीयुक्ताया ग्रहणे कथं कर्मकालशास्त्रबाधः । तद्ध्येकस्मिन्नेव दिने निशीथव्याप्तौ यथा तामेव प्रापयेत् तथैकस्मिन्दिनेऽधिकनिशीथव्याप्तौ तामेव प्रापयेत् । तद्यदि रोहिणीयोगानुरोधेनोक्तशास्त्रस्य कदाचिद्बाधोऽभ्युपगम्यते उचितस्तर्हि वचनस्वरसात्प्रतीयमानो निःसंकोचः सदैव तद्बाधः स्वीकर्तुमिति सर्वथैव नेदं वाक्यं

कर्मकालशास्त्रबाधमंतरेणान्यथासिद्धं । यत्तु स्कांदवाक्ये उदयपदं तारापत्युदयपरमिति । तदप्यसत् । सकला नवमी- त्यस्यानन्वयापत्तेः । नहि निशीथोत्तरप्रवृत्तां नवमीमाबालं के- चिदपि सकलत्वेन व्यवहरेयुः। यत्त्वेवंसति बुधस्यापि रोहिणी- तुल्यत्वापादनं तदुक्तब्रह्मवैवर्तवाक्यवद्बुधनिर्णायकत्वप्रापकान- न्यथासिद्धवचनभावेनैव विद्वद्भिर्वक्तुमर्हं । स्कान्दवाक्यंतु स्वतो रोहिणीबुधयोः प्राशस्त्यापादकतां तुल्यवदेव बोधयतीति नार्ध- जरतीयापत्तिः । यत्तु वह्निपुराणविष्णुरहस्यस्थवाक्ययोः मुहू- र्तपदस्य निशीथपरत्वं कलापदस्य तद्वर्तिकलापरत्वमिति व्या- ख्यानं तदपि वचनयोरानर्थक्यापादकमिति न रमणीयं मुहूर्त- मपीत्यपिशब्दस्यानन्वयापादकं च । नहि मुख्यतमकालस्य न- क्षत्रसंबंधे सति उचितयोगाभावद्योतकोऽपिशब्दः संगच्छते । यत्तु वस्तुतस्त्वित्यादिनोक्तं तदप्ययुक्तं । मुहूर्तपदस्य स्वोक्तनि- शीथपरत्वत्यागापत्तेः । स्कांदवाक्यादुक्तविषयत्रये रोहिणीयो- गवद्बुधवारस्यापि निर्णायकत्वापत्तेः कोहि स्कांदवाक्यस्योक्त- वाक्याभ्यां विशेषः । तथा चोक्तविषयत्रये यदैकत्र रोहिणी- योगः अपरत्र बुधयोगस्तदा निर्णयाभावएवापद्येत । तस्मात्कर्म- कालशास्त्रं बाधित्वानन्यथासिद्धोक्तानेकशास्त्रेभ्यः पूर्वदिनस्थां निशीथव्यापिनीमपि विहाय स्वल्पापि रोहिणीयुक्ता परैवोपो- ष्येति सिद्धं । एतेन जन्माष्टमीजयंतीव्रतयोर्भेदमभ्युपगच्छतां मा- धवाचार्याणां मतेपि स्वल्परोहिणीयुक्ताष्टम्यां निशीथव्यापिनीं विहायोपवासद्वयस्य तंत्रेण सिद्धिरुपपन्ना । उक्तविधया ब्रह्मवैवर्त- वाक्यस्य व्रतद्वयेपि निशीथव्याप्तिनिर्णायकापवादकत्वेन रोहि- णीयोगनिर्णायकताया औचित्यस्य स्फुटत्वात् । यत्तु कर्मभेद एवायुक्त इति । तन्न । जन्माष्टमीजयंतीति नामभेदस्य भेदक- त्वात् । ननु—रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम । जयंती नाम सा प्रोक्ता सर्वपापहरा तिथिः । इति विष्णुध- र्मोत्तरे तिथिवाचकोयं जयंतीशब्दो न कर्मनामधेयमिति चेत् । अहो माधवाचार्यान्प्रत्यविदितज्ञापनमेतत् श्रीमद्भिः क्रियते । विदितं तु तेषामप्येतत् । उक्तंहि तैः—यस्मिन् वर्षे जयंत्याख्यो योगो जन्माष्टमी तदा । अंतर्भूता जयंत्यां स्यादृक्षयोगप्रश-

१ कालपदस्य.

स्तितः । अत्र हि योगस्य जयंत्याख्यत्वोक्त्यां नक्षत्रयुक्ताष्टम्याः जयंत्याख्यत्वं प्रतीयते । कथं तर्हि नाम्ना कर्मभेद इति चेत् । तिथेः स्वतः पापहरत्वासंभवेन उक्तवाक्यस्थिततिथिपदस्य तदधिकरणकव्रतपरत्वावश्यंभावे तत्सामानाधिकरण्येन जयंतीपदस्य व्रतनामत्वमेवेति वाक्यार्थतत्त्वविदाचार्याभिप्रायप्रतीतेः । अनयैव दिशा वाक्यांतरेष्वपि कर्मनामत्वे निर्णीते योगादौ लाक्षणिकप्रयोगाभिप्रायेण जयंत्याख्यत्वस्योपपादनीयत्वात् । अन्यथा जन्माष्टमीशब्दस्य कर्मनामत्वं न स्यात् ।—जन्माष्टमी जनिभतो नयनाभिरामा पापापहा सुगतिनंदितनंदगोपा। यो देवकीं सुतयुतां यजतीह तस्यां पुत्रानवाप्य समुपैति पदं स विष्णोः । इति हेमाद्रौ भविष्यवाक्ये तस्यापि तिथौ प्रयोगात्तिथिवाचिनोरपि जयंतीजन्माष्टमीशब्दयोः पूर्णमास्यमावास्याशब्दयोरिव तत्प्रख्यन्यायेन संभवेत्कर्मनामत्वं । कथमन्यथा हेमाद्रौ मदनरत्ने च अथ जयंतीव्रतमथ जन्माष्टमीव्रतमिति पृथगुपक्रमेण सेतिहासभेदं पृथगुपन्यासः अहृदयवाग्वन्नेतुं[1] शक्यः । दृश्यते च प्रधानरूपयोर्वैलक्षण्यं । जयंतीव्रते हि देवकीवासुदेवयोरेव पूजनविधिना द्विदैवत्यत्वं[2] प्रतीयते । जन्माष्टमीव्रते तु नंदयशोदादीनामन्येषामपि पूजनविधानाद्बहुदैवत्यत्वं । हेमाद्रौ जयंतीव्रताख्यायिकायां—नाहं वियोगं संसोढुमर्हास्म्येव सुलोचन । इति देवक्या प्रार्थितेन वासुदेवेन उक्तं । त्वां च पुष्पादिभिर्देवि पूजयिष्यंति मानवाः । दिनेस्मिन्मां महाभागे तवोत्संगगतं शिशुं । इति । जन्माष्टमीव्रताख्यायिकायां तु—प्रणवादि नमोंतं च पृथङ्नामानुकीर्तयन् । कुर्यात्पूजां विधिज्ञश्च सर्वपापापनुत्तये । देवक्यै वसुदेवाय वासुदेवाय चैवहि । बलदेवाय नंदाय यशोदायै पृथक्पृथक् । इति बहुदैवत्यत्वमुक्तं । शक्यते चेदृशस्थले भावनावच्छेदकधात्वर्थभेदेन भावनाभेदो निरूपयितुमिति युक्तिविरुद्धं सकलमाधवहेमाद्र्यादिमहानिबंधविरुद्धं च जन्माष्टमीजयंतीव्रतयोरैक्यं न विद्वद्भिर्वक्तुमुचितं । सत्यपि चैवं व्रतभेदे यथा नोपवासद्वयप्रसक्तिस्तथा ब्रह्मवैवर्तवचसैवोपपादितं । नचैवं तद्वचनबलादेव पूर्वदिने निशी-

१ 'अहृदयवदुन्नेतुं'. २ 'द्विदेवत्वं'.

थोत्तरप्रवृत्ताष्टम्यां मुहूर्तमात्ररोहिणीयोगिन्यां परदिनस्थनिशीथव्यापिनीं रोहिणीयोगरहितामष्टमीं विहायोपोषणं प्रसज्येतेति वाच्यं । पूर्वोक्तरीत्या संकल्पात्मकव्रतस्य प्रधानत्वेन— प्रातःसंकल्पयेद्विद्वानुपवासव्रतादिकं । इति प्रातःकालस्य प्रधानकालत्वेन तद्व्यापिन्या एव ग्रहीतुमुचितत्वात् । नच दिवा वा यदि वा रात्रौ इत्यादि शास्त्रं निशीथव्याप्तेरिव प्रातःकालव्याप्तेरपि निर्णायकत्वापवादकं । रात्रियोगनिशीथव्याप्त्योरिव प्रातःकालव्याप्तेस्तत्रानुपादानात् । नचैवं निशीथव्यापिनीमपि विहाय प्रातःकालव्यापिन्या उपादानं स्यादिति वाच्यं । मुख्यकालः स विज्ञेय इत्याद्युदाहृतशास्त्रैस्तदपवादात् । नच प्रातःकालव्याप्तिवाधकस्य निशीथव्यापित्वस्य वाधकेन रोहिणीयोगेन प्रातःकालव्याप्तिनिर्णायकत्ववाधः सुतरामुचित इति शंक्यं । यावद्वचनंवाचनिकमित्यधिककल्पनाया अन्याय्यत्वात् । पूर्वदिने सप्तमीवेधे तु निशीथव्यापिन्या अपि ग्राह्यत्वापवादो वैष्णवविषयः । यथोक्तं ज्योतिर्निबंधे पाद्मे—सर्वथा सप्तमीयुक्ता संत्याज्या सर्ववैष्णवैः । उपोष्या नवमीयुक्ता तदुक्तं पुष्करे[1] स्फुटं । वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी । सऋक्षापि न कर्तव्या सशल्या सा प्रकीर्तिता । उक्तश्चैषोपवादो वैष्णवनिबंधकर्तृभिर्नृसिंहपरिचर्याकर्तृप्रभृतिभिः । अनुसृतश्च सकलदेशस्थवैष्णवधुरीणैः । एवं सति गौरीव्रततृतीयायां द्वितीयावेधनिंदार्थवादसहिताचारवलेनौदयिकी स्वल्पापि तृतीया ग्राह्येति स्वीकुर्वद्भिर्जन्माष्टम्यां वैष्णवाचारनिंदाप्रवृत्तैर्वैष्णवधर्मद्वेष एव स्वगतः प्रकटीक्रियत इत्यलं विस्तरेणेति कालनिर्णयः ।

अथ प्रयोगः । व्रतात्पूर्वाहनि दंतधावनपूर्वकं कृतैकभक्तः व्रतदिने कृतनित्यक्रियो देवताः प्रार्थयेत् । सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपा । पावको दिक्पतिर्भूमिराकाशं खचरा नराः । ब्राह्मं शासनमास्थाय कल्पध्वमिह संनिधिं । इति । ततः पवित्रपाणिः प्राङ्मुखो वद्धशिखः जलपूर्णं ताम्रपात्रं दक्षिणहस्तेनादाय देशकालौ संकीर्तयेत् । तत्र सप्तम्या वर्तमानत्वेऽप्यष्टमीमेव कीर्तयेत् । यां तिथिं समनुप्राप्येत्यादिशास्त्रेणापादितसाकल्यायास्तिथेः कृत्स्नप्रयोगांगत्वेन संकल्पांगत्वस्या-

---

१ 'पष्पके' पाठः ।

वर्जनीयत्वात् । श्रीकृष्णप्रीत्यर्थं जन्माष्टमीव्रतं करिष्ये इति संकल्प्य । वासुदेवं समुद्दिश्य सर्वपापप्रशांतये । उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् । अथ कृष्णाष्टमीं देवीं नभश्चंद्रं सरोहिणिं । अर्चयित्वोपवासेन भोक्ष्येऽहमपरेहनि । एनसो मोक्षकामोस्मि यद्गोविंद त्रियोनिजम् । तन्मे मुंचतु मां त्राहि पतितं शोकसागरे । आजन्म मरणं यावद्यन्मया दुष्कृतं कृतम् । तत्प्रणाशय गोविंद प्रसीद पुरुषोत्तम । इति पात्रस्थं जलं क्षिपेत् । यद्वा । अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर । भोक्ष्यामि देवकीपुत्र अस्मिन्जन्माष्टमीव्रते । इत्येवं संकल्पयेत् । ततो देवकीप्रसूतिमंडपं विचित्रवासोभिः पुष्पफलसजलैर्नवकलशैर्दीपावलीभिः पुष्पमालाभिश्च रमणीयं चंदनागरुधूपितं नृत्यगीतवादित्रवीणावेणुरवाद्याकुलितं दधिहरिद्रादिमंगलद्रव्योपेतं रक्षामणिविभूषितं अग्निखड्गकृष्णच्छागनागमुसलयुतद्वारं षष्ठ्यादेव्याधिष्ठितं विधाय । तन्मध्ये सर्वतोभद्रोपरि श्वेतपटावृतमंचके प्रसुप्तदेवकीस्तनं पिवंतीं श्रीकृष्णप्रतिमां निधाय । देवकीचरणौ संवाहयंतीं पंकजासनस्थितां श्रीप्रतिमां च स्थापयेत् । भित्तिषु च खड्गचर्मधरं वसुदेवं नंदगर्गगोपीगोपालान् सकुसुमाञ्जलीन् देवगंधर्वादीन्कंसनियुक्तान्कुंजरादींश्च यमुनाह्रदस्थं कालियं अपरमपि यथासंभवं तत्कालीनं श्रीकृष्णचरितं लिखित्वा । तत्रैव प्रदेशान्तरे मंचकोपरि प्रसूतकन्यया सह यशोदाप्रतिमां च स्थापयेत् । तथा प्रदेशांतरे पीठोपरि वसुदेवदेवकीनंदयशोदाश्रीकृष्णबलदेवचंडिकाप्रतिमाः स्थापयेत् । प्रतिमाश्च—काञ्चनी राजती ताम्री पैत्तली राजती तथा । वार्क्षी मणिमयी चैव वर्णकैर्लिखितास्तथा । इत्यन्यतरपक्षेण कार्याः । अन्यपक्षे भित्तिस्थचित्रांतर्गता एव पूज्याः । ततो नद्यादिजले तिलैः स्नात्वा प्रतिमास्वग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां कुर्यात् । तद्विधिं च मूर्तिप्रतिष्ठाविधौ वक्ष्यामः । मध्याह्ने संध्योत्तरं च यथाशक्ति पूजाद्वयं विधाय—अर्धरात्रे शुचिर्भूत्वा देशकालौ संकीर्त्य श्रीकृष्णप्रीत्यर्थं सपरिवारकृष्णपूजां करिष्ये इति संकल्प्य । गायद्भिः किंनराद्यैः सततपरिवृता वेणुवीणानिनादैः शृंगारादर्शकुंतप्रवरकृतकरैः किंनरैः सेव्यमाना । पर्यंके स्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते सा देवी देवमाता जयति सुव-

दना देवकी दिव्यरूपा। इति देवकीं ध्यात्वा। मां चापि बालकं ध्यात्वा पर्यंके स्तनपायिनम्। श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविं। इति श्रीकृष्णं ध्यात्वा लक्ष्मीं च देवक्याश्चरणांतिके पंकजे निषण्णां तस्याश्चरणौ संवाहयंतीं ध्यायेत्। ततो देवक्यै नम इति देवकीमावाह्य मूलमंत्रांते वासुदेवाय नम इति संकीर्त्य श्रीकृष्णमावाहयामीति तत्प्रतिमायामावाहयेत्। ततो ॐनमोदेव्यै श्रियै द्वितीयमंचके यशोदायै नमश्चंडिकायै नम इति उभे आवाह्य श्रियमावाह्य देवक्यै नमो वसुदेवाय यशोदायै नंदाय बलदेवाय चंडिकायै नम इति पीठे चेतरदेवता आवाह्य। भित्तिस्थचित्रे समस्तपरिवारदेवताभ्यो नम इति सामान्येनावाहयेत्। ततः सपरिवाराय श्रीकृष्णायासनपाद्यार्घ्याचमनीयानि तैरेव मंत्रैर्नित्यविधिना दद्यात्। ततः कर्तव्यं **हेमाद्रौ भविष्ये**—क्षीरादिस्नपनं कृत्वा चंदनेनानुलेपयेत्। इति। क्षीरादि परिमाणं तत्पूर्वकर्तव्याभ्यंगपरिमाणं चापेक्षितत्वान्महापूजाप्रकरणोक्तं शिवरात्रिव्रते वक्ष्यमाणं ग्राह्यं। **स्नानादिषु मंत्राः भविष्ये**—योगेश्वराय देवाय योगानां पतये विभो। योगोद्भवाय नित्याय गोविंदाय नमोनमः। इति। ततः आचमनीयादि पुष्पांतं पूर्वोक्तमंत्रैर्दत्वा। यज्ञेश्वराय देवाय तथा यज्ञोद्भवाय च। यज्ञानां पतये नाथ गोविंदाय नमोनमः। इति धूपादौ। विश्वेश्वराय विश्वाय तथा विश्वोद्भवाय च। विश्वस्य पतये तुभ्यं गोविंदाय नमोनमः। इति नैवेद्ये। **हेमाद्रौ तु**—यज्ञेश्वराय विश्वेश्वरायेति मंत्रद्वयस्य पूजामंत्रत्वेनोक्तत्वात्। स्नानोत्तरं गंधादिदीपांतोपचारैः पूजनमुक्तमंत्रद्वयेन कार्यमिति प्रतीयते। तत्रैव—जगन्नाथ नमस्तुभ्यं संसारभयनाशन। जगदीश्वराय देवाय भूतानांपतये नमः। इति नैवेद्ये। धर्मेश्वराय धर्माय संभवाय जगत्पते। धर्मज्ञाय च यज्ञाय गोविंदाय नमोनमः। इति शयनमंत्र इत्युक्तं। **गारुडे** त्वन्ये मंत्राः। यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञसंभवाय गोविंदाय नमोनमः। इति अर्घ्ये। यज्ञपदस्थाने योगशब्दयुक्त ईदृश एव मंत्रः स्नाने। विश्वपदयुक्तो नैवेद्ये। धर्मपदयुक्तः स्वाहांतो घृताक्ततिलहोमे। सचाष्टोत्तरशतमष्टोत्तरसहस्रं वा कार्यः। विश्वपदयुक्तएव शयने। तच्च भगवतो देवकीपर्यंके। सोमपदयुक्त उक्त-

मंत्रश्चंद्रपूजायामिति । भगवतो नमस्कारप्रदक्षिणांतपूजने समाप्ते स्थंडिले रोहिणीसहितं शशांकं उक्तमंत्रेण संपूज्य–शंखे तोयं समादाय सपुष्पकुशचंदनं । जानुभ्यां धरणीं गत्वा चंद्रायार्घ्यं निवेदयेत् । क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव । गृहाणार्घ्यं शशांकेश रोहिण्या सहितो मम । ज्योत्स्नापते नमस्तुभ्यं ज्योतिषां पतये नमः । नमस्ते रोहिणीकांत अर्घ्यं नः प्रतिगृह्यताम् । इति मंत्रद्वयेन । अर्घ्यदानसमये विशेषो भविष्ये–चंद्रोदये शशांकाय अर्घ्यं दद्याद्धरिं स्मरन् । अनघं वामनं शौरिं वैकुंठं पुरुषोत्तमम् । वासुदेवं हृषीकेशं माधवं मधुसूदनम् । वाराहं पुंडरीकाक्षं नृसिंहं ब्राह्मणप्रियम् । समस्तस्यापि जगतः सर्वसंस्थितिकारिणम् । अनादिनिधनं विष्णुं त्रैलोक्येशं त्रिविक्रमम् । नारायणं चतुर्बाहुं शंखचक्रगदाधरम् । पीतांबरधरं नित्यं वनमालाविभूषितम् । श्रीवत्सांकं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिं । इति । पुराणांतरेतु क्षीरोदार्णवेत्यादिना एकेन मंत्रेणार्घ्यं दत्वा—ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः। नमस्ते रोहिणीकांत सुधावास नमोस्तु ते । नभोमंडलदीपाय शिरोरत्नाय धूर्जटेः । कलाभिर्वर्धमानाय नमश्चंद्राय चारवे। इति चंद्रं प्रणम्य । अनघं वामनं शौरिं वैकुंठं पुरुषोत्तमं । वासुदेवं हृषीकेशं माधवं मधुसूदनम् । वाराहं पुंडरीकाक्षं नृसिंहं दैत्यसूदनम् । दामोदरं पद्मनाभं केशवं गरुडध्वजं । गोविंदमच्युतं कृष्णमनंतमपराजितम् । अधोक्षजं जगद्बीजं सर्गस्थित्यंतकारिणम् । अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् । नारायणं चतुर्बाहुं शंखचक्रगदाधरं । पीतांबरधरं नित्यं वनमालाविभूषितम् । श्रीवत्सांकं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिं । प्रपद्येहं सदा देवं सर्वकामप्रसिद्धये। प्रणमामि सदा देवं वासुदेवं जगत्पतिं । इति श्रीकृष्णं प्रणमेत् । ततः श्रीकृष्णायार्घ्यं दद्यात्। तत्र मंत्रः—जातः कंसवधार्थाय भूभारोत्तारणाय च । देवतानां हितार्थाय धर्मसंस्थापनाय च । कौरवाणां विनाशाय दैत्यानां निधनाय च। गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे। पांडवानां हितार्थायेति क्वचित्पाठः । ततो भगवन्तं प्रार्थयेत्। त्राहि मां सर्वलोकेश हरे संसारसागरात् । त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो । सर्वलोकेश्वर त्राहि पतितं मां भवार्णवे।

देवकीनंदन श्रीश हरे संसारसागरात् । त्राहि मां सर्वदुःखघ्न रोगशोकार्णवाद्धरे । दुर्गतांस्त्रायसे विष्णो ये स्मरन्ति सकृत्सकृत् । सोहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् । पुष्कराक्ष निमग्नोहं मायाविज्ञानसागरे । त्राहि मां देवदेवेश त्वत्तो नान्योस्ति रक्षिता । यद्वा क्वचन कौमारे यौवने यच्च वार्धके । तत्पुण्यं वृद्धिमायातु पापं हन हलायुध । इति ।

ततः कार्यमुक्तं तत्रैव । अर्धरात्रे वसोर्धारां पातयेद्गव्यसर्पिषा । ततो वर्धापयेन्नालं षष्ठीनामादिकं मम । कर्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने । यथा मम तथा कार्यो भगवत्या महोत्सवः । ब्राह्मणान्भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणां । हिरण्यं मेदिनीं गावो वासांसि विविधानि च । यद्यदिष्टतमं तत्तत्कृष्णो मे प्रीयतामिति । यं देवं देवकी देवी वसुदेवादजीजनत् । भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः । नमस्ते वासुदेवाय गोब्राह्मणहिताय च । शान्तिरस्तु शिवं चास्तु इत्युक्त्वा मां विसर्जयेत् । ततो बंधुजनौघं च दीनानाथजनं बहु । भोजयित्वा सुशांतात्मा[१] स्वयं भुंजीत वाग्यतः । एवं यः कुरुते देव्या देवक्याः सुमहोत्सवम् । प्रतिवर्षं विधानेन मद्भक्तो धर्मनंदन । नरो वा यदि वा नारी यथोक्तं लभते फलं । इह धर्मरतिर्भूत्वा मृतो वैकुंठमाप्नुयात् । इति ।

जयंतीयोगसत्वे तु संकल्पकाल एव जन्माष्टमीव्रतं जयंतीव्रतं च तंत्रेण करिष्ये इति संकल्प्य । अर्धरात्रे देवक्या उत्संगगतः श्रीकृष्णः पूज्यः । एवं च युगपत्पूजाद्वयसिद्ध्यर्थं देवक्याः श्रीकृष्णस्य च द्वे द्वे प्रतिमे कार्ये । जन्माष्टमीव्रते पर्यंकस्थितयोः पूजनं । जयंतीव्रते तु देवक्या उत्संगगतस्य श्रीकृष्णस्येति विशेषात् । द्वादशांगुलविस्तारं रोहिणीयुक्तं रौप्यमयं चंद्रं संपूज्य सौवर्णपात्रे राजते वा शंखे वा सपुष्पफलकांचनं जलमादाय । क्षीरोदार्णवेत्यादिना पूर्ववदर्घ्यदानं । ततः कर्तव्यं । ततो नु पूजयेत्तां तु सकृष्णां देवकीं नृप । गंधपुष्पैश्च नैवेद्यैश्छत्रैश्चाभरणैस्तथा । ततः प्रार्थयेत्—प्रणमे देवजननि त्वया जातस्तु वामनः । वसुदेवात्तथा कृष्णो नमस्तुभ्यं नमोनमः । सपुत्रार्घ्यं प्रदत्तं मे गृहाणेमं नमोस्तुते । अदितिर्देवमाता त्वं वसुदेवस्तु कश्यपः । अजीजनस्त्वं श्रीवासं वासुदेवं सनातनं ।

---

१ 'सुशीलात्मा'.

इति । पुत्रेण सहिता सपुत्रा देवकी तदर्थं दत्तं पूजोपहारं । पूजांते जागरणं कार्यं । तदुपायश्च मदनरत्ने अग्निपुराणे—इत्येवं पूजयित्वा तं पुरुषसूक्तैः सवैष्णवैः । स्तुत्वा वादित्रनिर्घोषैर्गीतवादित्रमंगलैः। सुकथाभिर्विचित्राभिस्तथा प्रेक्षणकैरपि। पूर्वेतिहासैः पौराणैः क्षपेत्तां शर्वरीं नृप । इति । पुरुषसूक्तैरिति बहुवचनं वेदभेदकृतभेदाभिप्रायं । कथासु वैचित्र्यं भाषाकृतं । वैदिकसूक्तानां प्रागभिधानात् । इतिहासपुराणकथानामंतेऽभिधानात् । प्रेक्षणकाणि कुतूहलानि नृत्यादीनि । अत्र वैष्णवसूक्तकरणकस्तुतिभावनाविशिष्टपौराणेतिहाससंभिन्नस्तुतिकथाकरणकजागरणभावना त्रैवर्णिकानां विधीयते । तादृश्या अन्यान्प्रति विधातुमयोग्यत्वात् । हेमाद्रौ पुराणांतरेपि—रात्रौ तु जागरः कार्यो नृत्यगीतसमाकुलः । इति वर्णचतुष्टयसाधारण एष विधिः पूर्ववत्संकोचकाभावात् । नंदगृहस्थजन्मलीलाश्रवणोत्तरं च वैष्णवाः परस्परं दध्यादिभिः सिंचेयुः । श्रीभागवते—गोपाः परस्परं हृष्टा दधिक्षीरघृतांबुभिः । आसिंचंतो विलिंपंतो नवनीतैश्च चिक्षिपुः । इति श्रुतेन पुराणकल्पेन पूर्णमास्यां यजन्निविद्धिध्युन्नयनात् । नचात्र गोपकर्तृकश्रवणात् गोपान्प्रत्येवायं विधिः । इतिहसाहवद्कुर्वाण्णिमाषान्मे पचतेत्यत्र वार्णिकर्तृकत्वस्य श्रुतस्यापि अविवक्षासाधकेन षाष्ठन्यायेन गोपकर्तृकस्याविवक्षितत्वात् ।

स्त्रीकर्तृकव्रते विशेषो हेमाद्रौ पुराणांतरे—अरुणोदयवेलायां नवम्यां च ततः स्त्रियः । रक्तवस्त्रान्विताः सर्वाः पुष्पमाल्यैरलंकृताः । नयंति प्रतिमा ह्येता नानाविभवसंयुताः । नदीतीरं महारम्यं विविक्तं वा महासरः । ततः स्नानं प्रकुर्वीरन्स्नापयंति च ताः स्त्रियः । ततः प्रविश्य च गृहं यावकं भुंजते च ताः । युक्तमिक्षुविकारैश्च मध्वाज्यमरिचैः सह । इति ।

अथ पारणानिर्णयः । तच्च केवलतिथ्युपवासे तिथ्यंते सनक्षत्रोपवासे उभयान्ते कर्तव्यं—जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च । पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम् । इति भृगुवचने ईदृशार्थतात्पर्यस्य मदनरत्नेऽभिधानात् । तिथिनक्षत्रनियमे तिथिभान्ते च पारणं । अतोन्यथा पारणे तु

व्रतभंगमवाप्नुयात् । इति स्कान्दवचनाच्च । यदि तिथिनक्षत्रयोरन्यतरांतो दिने लभ्यते उभयांतस्तु रात्रौ तदा दिवैवान्यतरांते पारणं कार्यं । सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते । अन्यथा पुण्यहानिः स्याद्दते धारणपारणम् । इति ब्रह्मवैवर्तवचनात् । तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः । इति नारदीये अन्यतरान्ते पारणाभ्यनुज्ञानाच्च । जयन्तीं प्रक्रम्य—भान्ते कुर्यात्तिथेर्वापि शस्तं भारत पारणम् । इति वह्निपुराणे विशिष्यापि तदभ्यनुज्ञानात् । यदा तु दिवा नैकस्याप्यंतस्तदा निशीथादर्वाक् अन्यतरांते उभयान्ते वा पारणं कार्यं । निशीथाव्यवहितपूर्वक्षणे तु यद्यन्यतरांत उभयान्तो वा तदा निशीथेपि तत्कार्यं । तिथ्यर्क्षयोर्यदा छेदो नक्षत्रान्तमथापि वा । अर्धरात्रेपि वा कुर्यात्पारणं त्वपरेऽहनि । इति हेमाद्र्युदाहृतवचनांतरात् । अत्र केचित् । यदि अर्धरात्रेपि उभयान्त अन्यतरान्तो वा भवति तदा परेऽहनि दिवैव पारणं कुर्यादित्येतद्वचसो व्याख्यानं कुर्वंति । तदसत् । शास्त्रान्तरादेवास्यार्थस्य सिद्धत्वेन वाक्य[1]द्वयवैयर्थ्यापत्तेः । अपिशब्देन प्रतिप्रसवतात्पर्यद्योतनाच्च । नच आततायिनमायान्तमपि वेदान्तगं रणे । इत्यादिवत्प्रकृतवाक्येऽर्थवादत्वं युक्तं वक्तुं । आततायिवधे दंडप्रायश्चित्ताद्युपदेशेन तत्र स्वार्थे तात्पर्यबाधप्रतीतिवत् इह बाधकप्रतीत्यभावात् । नच हारियोजनस्य सर्व एव लिप्संत इति विधौ अर्थवादगतचमसिपदानन्वयवत्प्रकृते तिथ्याद्यंतान्वितस्या[2]र्धरात्रस्य न पारणान्वय इत्यपि वक्तुं युक्तं । तत्र हि यथा चमसमन्यांश्चमसांश्चमसिनो भक्षयंतीत्यर्थवादे भक्षयंतीति क्रियान्तरान्वितस्य चमसिपदस्य विध्यंतर्गतलिप्सारूपक्रियांतरेणान्वय इति युक्तं । प्रकृते तु यदपरेऽहनि तिथ्याद्यंतविशिष्टं पारणं कुर्यात्तदर्धरात्र इति यथाश्रुतार्थतात्पर्यस्वीकारेण प्रतिप्रसवलाघवसंभवे अहन्येव कुर्यान्नार्धरात्र इति श्रुतहान्यश्रुतकल्पनयोरत्यंतान्याय्यत्वात् । अशक्तस्त्वन्यतरांतस्याप्यभावे उत्सवांते प्रातरेव पारणं कुर्यात् । जयंत्यां पूर्वविद्धायामुपवासं समाचरेत् । तिथ्यंते वोत्सवांते वा व्रती कुर्वीत पारणं । इति कालादर्शमाधवा-

१ 'वाक्यवैयर्थ्यापत्तेः' । २ 'स्यार्धस्य' ।

द्युदाहृतवचनात् । उत्सवशब्देन प्रातः पूजनं विवक्षितम् । अशक्तस्यतु तिथिनक्षत्रयोरुभयोरनुवर्तमानयोरपि प्रातर्देवं संपूज्य क्रियमाणं पारणं न दुष्यतीति **माधवोक्तेः** ।

श्रावणकृष्णाष्टम्यां रोहिणीयोगाभावे भाद्रकृष्णाष्टम्यां तद्योगसत्वे तत्रैव जयंतीव्रतं कार्यं । यथोक्तं **माधवीये वसिष्ठसंहितायां**—श्रावणे वा नभस्ये वा रोहिणीसहिताष्टमी । यदा कृष्णा नरैर्लब्धा सा जयन्तीति कीर्तिता । श्रावणे न भवेद्योगो नभस्ये तु भवेद्ध्रुवं । तयोरभावे योगस्य तस्मिन्वर्षे न संभवः । इति । अत्र श्रावण इति मुख्यः कल्पः नभस्य इत्यनुकल्प इति **माधवोक्तिः** । अस्यैव जयंतीव्रतस्य संवत्सरसाध्यः काम्यः प्रयोग उक्तो **मदनरत्ने अग्निपुराणे** देवकीं प्रति कृष्णोक्तः। प्रतिमासं ततो[1] पूजामष्टम्यां यः करिष्यति । मम चैवाखिलान्कामात्स संप्राप्स्यत्यसंशयं । अनेन विधिना यस्तु प्रतिमासं नरेश्वरि । करोति वत्सरं पूर्णं यावदागमनं हरेः । हर्याविर्भावदिनं जन्माष्टमीपर्यंतमित्यर्थः। दद्याच्छय्यां सुसंपूर्णां गोभिरत्नैरलंकृतां। ब्राह्मणाय नरश्रेष्ठ तस्य पुण्यफलं शृणु । नापुत्रो नाधनो दुःखी न वियोगी न रोगवान् । भवेन्नाकालतो मृत्युर्यावज्जन्मशतं नृप इति ।

**अथोद्यापनम्** । युधिष्ठिर उवाच । त्वत्प्रसादाद्धृषीकेश श्रुतं मे व्रतमुत्तमम् । इदानीं कृपया ब्रूहि व्रतोद्यापनमुत्तमम् । उद्यापनं विना नैव व्रतस्य फलमश्नुते । कर्तव्यं तु कथं भक्तैरखंडफलभोक्तृभिः । श्रीकृष्ण उवाच । शृणु पांडव वक्ष्यामि व्रतोद्यापनमुत्तमं । कृतेन येन राजेंद्र सुफलं विपुलं भवेत् । यथा तथा वा तत्कुर्याद्वित्तशाठ्यं न कारयेत् । वर्षे वर्षे तथाष्टम्यां कुर्यात्पूजामनुत्तमां । सप्तम्यां पंचगव्येन विधिवत्कायशोधनम् । कुर्याद्व्रती तथाष्टम्यां मध्याह्ने चेष्टबंधुभिः । इष्टबंधवोपि तत्र सहाया भवेयुरित्यर्थः । सर्वौषधैः सर्वगंधैः स्नानं शुक्लतिलामलैः । वेदोक्तविधिना स्नात्वा तर्पयेत्पितृदेवताः । ततो यथोक्तविधिना कुर्यादाराधनं हरेः । एह्येहि कृपया कृष्ण क्षीरोदार्णवसंस्थित । पद्मचक्रमहाशंखलक्ष्मीगरुडशोभित । श्रीवत्सकौस्तुभोरस्क फणासप्तान्वित प्रभो । व्रतस्यो-

1 'च ते पूजा' ।

द्यापने मह्यं सर्वकामप्रदो भव । इत्यावाहनमंत्रः । इति प्रार्थ्य ततो देवमर्चितं सनकादिभिः । आगतानर्चयेत्सर्वान्गंध-पुष्पादिभिः पृथक् । पुण्याहवाचनं कुर्यात्संकल्पं च यथाविधि । आचार्यमर्चयेद्विद्वाञ्छ्रोत्रियं च कुटुंबिनं । श्रुतिस्मृतिसमायुक्तं ब्राह्मणं वरयेत्ततः । धर्मशास्त्रार्थतत्त्वज्ञानन्यांश्च वेदपारगान् । वरयेद्यजनार्थं हि ब्राह्मणानां च सप्तकं । आशीर्वादं गृहीत्वाथ सर्वैर्द्विजवरोत्तमैः । शुचौ देशे तु संलिप्य गोमयेन विचक्षणः । मंडलं कारयेत्तत्र पंचवर्णं सुशोभनं । नवनालं सारविदां सर्व-तोभद्रसंज्ञकम् । मंडलं कारयेन्मध्ये मनसो ह्लादकं परं । मंडपं कारयेत्तत्र सुतोरणसमन्वितम् । चतुर्द्वारान्वितं ह्येतत्स्थापयेत्तेषु देवताः । प्रथमद्वारभागे[1] तु वरुणं स्थापयेद्बुधः । अवतेहेळमं-त्रेण नैवेद्यांतं प्रपूजयेत् । द्वितीयद्वारदेशे तु कुबेरं स्थाप-येत्ततः । राजाधिराजमंत्रेण पूजयेत्प्रयतः शुचिः । तृतीयद्वार-देशे तु देवेंद्रं स्थापयेत्ततः । इंद्रंवो विश्वत इति मंत्रेणाराधये-त्ततः । गणानांत्वेति मंत्रेण चतुर्थे गणनायकं । एवं संपूजिते तत्र मंडले पंकजादिभिः । मध्ये च स्थापयेत्कुंभं सौवर्णं राजतं तथा । अभावे ताम्रजं वापि मृन्मयं वाथ कारयेत् । सुधाधव-लितं कृत्वा चंद्रसूर्यनिभं शुभम् । नामांकितं सुवृत्तं च जल-पूर्णं सरत्नकम् । गंधपुष्पादिसंयुक्तं सपल्लवफलं तथा । पात्रं च कारयेत्पश्चाद्धेम्ना वा रजतेन वा । अभावे ताम्रपात्रं तु कुंभस्यो-परि विन्यसेत् । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः । इति जलावाहनं । स्थितं त्वयि जगत्सर्वं ससुरासुरमानुषं । आत्मनः कार्यसिद्ध्यर्थं स्थापयामि घटोपरि । मूर्तिं च कारयेत्तत्र कृष्णस्यैव विचक्षणः । अष्टमाषप्रमाणं तु वित्तशाठ्यं न कारयेत् । तदर्धेनाथवाप्यर्धं शक्त्या वा कारयेद्बुधः । आवाहयेत्प्रयत्नेन पात्रे कलशसंस्थिते । चामरं छत्रशय्यां च पीठिकां चाथ पात्रकं । सोपस्करसमायुक्तं देवस्याग्रे निवेदयेत् । देवसमीपे स्थापयेत् । एवं पंचामृताद्युप-कल्पनं विधातुमाह । पंचामृतेन स्नपनं कुर्याद्देवस्य मंत्रतः । स्नानं च कारयेत्पार्थ पश्चात्पूजां समाचरेत् । ततस्तु पूजयेद्देवं विष्णुं तं विश्वरूपिणं । वस्त्रयुग्मेन संवीतं पीतयज्ञोपवीतिनं ।

---

१ 'द्वारमार्गेतु'.

चंदनेन सुगंधेन कर्पूरागरुगंधिना । विलेपनेन भोगाय प्रीयतां मधुसूदनः । उक्तविलेपनेन सह भोगाय यदपेक्षितं नैवेद्यतांबूलादि तस्याप्युपकल्पनं कार्यमित्याशयः ।

अथ पूजा प्रकर्तव्या मंत्रैर्वेदपुराणकैः । आगच्छ देवदेवेश तेजोराशे जगत्पते । पूजयिष्याम्यहं देव प्रसादात्सुमुखो[1] भव । सहस्रशीर्षेत्यावाहनम् । देवा ब्रह्मादयो येच स्वरूपं न विदुस्तव । अतस्त्वां पूजयिष्यामि मातुरुत्संगवासिनम् । यस्यावताररूपाणि समर्चंति दिवौकसः । अपश्यंतः परं रूपं तस्मै श्रीब्रह्मणे नमः । पुरुषएवेदं आसनं । अवतारसहस्राणि करोषि मधुसूदन । न ते संख्यावताराणां कश्चिज्जानाति तत्त्वतः । एतावानस्येति पाद्यं । जातः कंसवधार्थाय भूभारोत्तारणाय च । देवानां च हितार्थाय धर्मसंस्थापनाय च । कौरवाणां विनाशाय पांडवानां हिताय च । गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे । त्रिपादूर्ध्वं इत्यर्घ्यं । सुरासुरनरेशाय क्षीराब्धिशयनाय च । योगेश्वराय देवाय योगिनां पतये नमः । योगोद्भवाय नित्याय गोविंदाय नमोनमः । कृष्णाय वासुदेवाय दद्यादाचमनं शुभं । तस्माद्विराळित्याचमनीयं । नारायण नमस्तेस्तु नरकार्णवतारक । गंगोदकं समानीतं स्नानार्थं प्रतिगृह्यताम् । यत्पुरुषेणेति स्नानं । पयोदधिघृतक्षौद्रशर्करास्नानमुत्तमम् । तृप्त्यर्थं देवदेवेश गृह्यतां देवकीसुत । पंचामृतस्नानं । शुद्धोदकस्नानं आचमनं । क्षौमं च पट्टसूत्राढ्यं मयानीतांशुकं शुभं । गृह्यतां देवदेवेश भक्त्या दत्तं सुरोत्तम । तंयज्ञमिति वस्त्रं । नमः कृष्णाय देवाय शंखचक्रधराय च । ब्रह्मसूत्रं जगन्नाथ गृहाण परमेश्वर । तस्माद्यज्ञात्सर्वहुतः संभृतमिति यज्ञोपवीतं । नानागंधसमायुक्तं चंदनं चारु चर्चितम् । कुङ्कुमाक्ताक्षतैर्युक्तं गृह्यतां परमेश्वर । तस्माद्यज्ञात्सर्वहुत ऋचः सामानीति गंधं । पुष्पाणि यानि दिव्यानि पारिजातोद्भवानि च । मालतीकेसरादीनि पूजार्थं प्रतिगृह्यताम् । तस्मादश्वेति पुष्पम् । अथांगपूजा । श्रीकृष्णाय नमः पादौ पूजयामि । संकर्षणाय० स्फिजौ पू० । कालात्मने० जानुनी पू० । विश्वकर्मणे० जंघे पू० । विश्वनेत्राय० कटिंपू० । विश्वंभराय० मेढ्रंपू० । पद्मनाभाय० नाभिं पू० । परमात्मने०

१ 'संमुखो भव'.

हृदयं पू० । श्रीकंठाय कंठं पू० । सर्वास्त्रधारिणे० बाहू पू० । वाचस्पतये० मुखं पू० । केशवाय० ललाटं पू० । सर्वात्मने० शिरः पूजयामि । कालात्मने विश्वरूपिणे नारायणाय सर्वांगं पू० । इत्यंगपूजा । वनस्पतिरसो दिव्यो गंधाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । यत्पुरुषं व्यदधुरिति धूपं । त्वं ज्योतिः सर्वदेवानां तेजस्त्वं तेजसां परं । आत्मज्योतिर्नमस्तुभ्यं दीपोयं प्रतिगृह्यताम् । ब्राह्मणोस्येति दीपं । नानागंधसमायुक्तं भक्ष्यभोज्यं चतुर्विधं । नैवेद्यार्थं मया दत्तं गृहाण परमेश्वर । चंद्रमामनस इति नैवेद्यं । रंभाफलानि दिव्यानि तथैवाम्रफलानि च । पूजितोसि सुरश्रेष्ठ गृह्यतां कंससूदन । फलं । तांबूलं च सकर्पूरं पूगीफलसमन्वितम् । मुखवासकरं रम्यं प्रीतिदं प्रतिगृह्यताम् । तांबूलं । सौवर्णं राजतं ताम्रं नानारत्नसमन्वितम् । कर्मसाद्गुण्यसिद्ध्यर्थं दक्षिणां प्रतिगृह्यताम् । दक्षिणां । ततः । नमस्ते देवदेवेश नमस्ते धरणीधर । नमस्ते विश्वरूपाय नमस्ते पुरुषोत्तम । नाभ्या आसीदिति नमस्कारः । लोकात्मन्सर्वभूतात्मन्निमिषत्रुटिसंभव । जन्ममृत्युजराव्याधिसंसारभयनाशन । सप्तास्यासन्निति प्रदक्षिणा । वैदिकमंत्रैः इदंविष्णुरित्यादिभिश्च पुष्पांजलिः । एवं पूजा प्रकर्तव्या रात्रौ जागरणं तथा । गीतवादित्रसंयुक्तं पुराणश्रवणं तथा । प्रतियामं विधायैवं पूजां देवस्य चक्रिणः ।

ततः प्रभातसमये स्नात्वा शुचिजलाशये । आदित्यादिग्रहान्सर्वान्शक्त्या वा धारयेदिह । पूर्ववत्पूजयेद्देवं पश्चाद्धोमं समाचरेत् । स्वगृह्योक्तविधानेन प्रतिष्ठाप्य चरुं ततः । व्रीहितिलयवैश्चैव घृतेन च परिप्लुतैः । अतोदेवेति मंत्रेण शतमष्टोत्तरं क्रमात् । सर्वं हुत्वा विधानेन मंत्रैरेभिः समाहितः । त्रुट्ये स्वाहा । कालात्मने स्वाहा । अहोरात्राय स्वाहा । अर्धमासाय० । मासाय० । संवत्सराय० । सर्वात्मने० । ततः इदंविष्णुरिति मंत्रेण पंचखाद्यं हुतं स्मृतम् । यथासंख्यं हि कर्तव्यं हुतं संपूर्णमेव च । ततो महाव्याहृतयो होममंत्राः प्रकीर्तिताः । जपेत्पुरुषसूक्तं च स्मरेद्देवमनंतकम् । पूर्णाहुतिं ततो हुत्वा यवैर्व्रीहिघृतादिभिः । आदित्यादिग्रहान्सर्वान्शक्त्यैवाराधयेदिह । ततो धौतैरतिश्वेतैर्वस्त्रैराभरणैः शुभैः । कर्णांगुलीभूषणैश्च रौप्यं

कृत्वा पवित्रकं । अर्घ्यपुष्पप्रदानेन आचार्यं तु प्रपूजयेत् । आचार्यं पूजयित्वा च वस्त्रैर्नानाविधैः शुभैः । वस्त्रं छत्रं सहेमं च रत्नादिभिरलंकृतं । सकंकणं हारयुक्तं सपत्नीकाय दापयेत् । मुद्रिकाकर्णभूषैश्च तथा वस्त्रैः प्रपूजयेत् । दद्याच्च दक्षिणां धेनुं सवत्सां च पयस्विनीम् । स्वर्णशृंगीं रौप्यखुरां कांस्यदोहनसंयुतां । ताम्रपृष्ठीं स्वर्णघंटां नासिकामौक्तिकान्विताम् । रत्नपुच्छां वस्त्रयुतां निष्कत्रयसमन्वितां । भक्त्या समर्पयेत्सर्वं यथाविभवसारतः । सुरभिर्वैष्णवी माता नित्यं विष्णुपदे स्थिता । गोग्रासं तु मया दत्तं सुरभिः प्रतिगृह्यतां । गावो ममाग्रतः संतु गावो मे संतु पृष्ठतः । गावो मे हृदये संतु गवां मध्ये वसाम्यहम् । धेनुं स्पृष्ट्वा नमस्कुर्यात्कुर्याच्चैव प्रदक्षिणाम् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा । नमो गोभ्यः श्रीमतीभ्यः सौरभेयिभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । नमस्कारः । गवामङ्गेषु तिष्ठंति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च । गोप्रार्थना । यस्मात्त्वं पृथिवीरूपा धेनुरूपेण संस्थिता । त्वदर्चनाद्धरा प्रीता मम पापं व्यपोहतु । मंत्रैरेभिस्तु संपूज्य आचार्याय निवेदयेत् । पदं चैव प्रदातव्यं वस्त्राद्यष्टकसंयुतम् । पादुकोपानहच्छत्रमुद्रिकादिभिरंकितं । नामांकितं जलकुंभं तंडुलैः पूरितं तथा । सोपस्कारां च प्रतिमामाचार्याय निवेदयेत् । कृष्णायानंतरूपाय दास्यामि प्रतिमामिमां । द्रव्यं विष्णुसमुद्भूतमतः शांतिं प्रयच्छ मे । इति प्रतिमादानमंत्रः । मंडलं फलसंयुक्तं ब्राह्मणाय निवेदयेत् । अन्येभ्यो ब्राह्मणेभ्यश्च भक्त्या दद्याच्च दक्षिणां । अभिषेकं ततः कुर्याद्यजमानस्य मंत्रतः । समुद्रज्येष्ठामंत्रेण सुरास्त्वेति च मंत्रतः । कोटितीर्थसमं पुण्यमाचार्यं तु क्षमापयेत् । मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन । संपूजितो मया देव परिपूर्णं तदस्तु मे । क्षमापनमंत्रः । इष्टमित्रादिसंयुक्तो गृहमागत्य संयतः । ब्राह्मणान्भोजयेत्पश्चाद्यथाविभवसारतः । मिष्टान्नपायसैर्भुक्त्वा पश्चाद्दद्याच्च दक्षिणाम् । दीनानाथांश्च संपूज्य ब्राह्मणांश्च विशेषतः । भुञ्जीत वाग्यतो भूत्वा मिष्टान्नं च स्वयं नरः। भुक्त्वा चैव शुचिर्भूत्वा चिंतयेत्तद्दिने हरिं । एवं कृते धर्मराजकर्मण्यसौ जनार्दनः । स कृष्णरूपी भगवान्प्रीतो भवति स-

वेदा । सगरेण पुरा चीर्णं राजभिर्जनकादिभिः । मनुना च दिलीपेन रघुणा भरतेन च । नृपैरन्यैश्च चरितं राज्यं भुक्त्वा दिवं गताः । यः करोति नृपश्रेष्ठ व्रतस्योद्यापनं मुदा । व्रतस्य फलमाप्नोति विष्णुलोके महीयते । इति जन्माष्टम्युद्यापनविधिः। इति जन्माष्टमीनिर्णयः ।

अथ नवम्यां निर्णयामृते भविष्ये—श्रावणे मासि राजेंद्र यः कुर्यान्नक्तभोजनम् । वरषाष्टिकभक्तेन सर्वभूतहिते रतः । उपवासपरो वापि नवम्यां पक्षयोर्द्वयोः । कौमारीमिति वै नाम्ना चंडिकां पूजयेत्सदा । कृत्वा रौप्यमयीं भक्त्या दुर्गां वै पापनाशिनीं । करवीरस्य पुष्पैस्तु गंधैरगरुचंदनैः । धूपेन च दशांगेन मोदकैश्चापि पूजयेत् । कुमारीर्भोजयेच्छक्त्या स्त्रियो विप्रांश्च शक्तितः । भुञ्जीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः । एवं यः पूजयेदार्यां श्रद्धया परया युतः । स याति परमं स्थानं यत्र देवो गुरुः स्थितः । इति । पक्षयोर्द्वयोरिति निर्देशात् शुक्ल-नवम्यामारंभः कृष्णनवम्यां समाप्तिरिति ज्ञाप्यते ।

अथामावास्यायां कुशग्रहणमुक्तं स्मृत्यर्थसारे—नभोमासस्य दर्शे तु शुचिर्दर्भान्समाहरेत् । अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः । इति । दर्भाश्च तत्रैव—कुशाः काशा यवा दूर्वा उशीराश्च सकुंदकाः । गोधूमा व्रीहयो मुंजा दश दर्भाः सवल्वजाः । इति । विरिंचिना सहोत्पन्न परमेष्ठीनिसर्गज । नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव । एवं मंत्रं समुच्चार्य ततः पूर्वोत्तरामुखः । हुंफट्कारेण मंत्रेण सकृच्छित्त्वा समुद्धरेत् । अच्छिन्नाग्रा अशुष्काग्राः पित्र्ये तु हरिताः स्मृताः। अमूला देवकार्येषु प्रयोज्याश्च जपादिषु । सप्तपत्राः कुशाः शस्ता दैवे पित्र्ये च कर्मणि । अनंतस्तरुणौ साग्रौ प्रादेशौ च पवित्रके । चतुर्भिर्दर्भपिंजूलैः पवित्रं ब्राह्मणस्य तु । एकैकंन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमं । सर्वेषां वा भवेद्धाभ्यां पवित्रं ग्रंथितं न वा । इति । इदं धारणार्थं । उत्पवनार्थं तु सर्वेषां दर्भद्वयमेवेति वक्ष्यामः ॥ येनार्जितानि युधि भूमिपतीन्विजित्य० ।१। योनंतदेवकृतमंथनसंनिबंध० । मासे नभोभिध इयं स्मृतिकौस्तुभस्य स्याद्दीधितिर्हृदि सतां प्रमुदेस्तु तस्य । २ । इति कौस्तुभे श्रावणकृत्यं ।

अथ भाद्रपदकृत्यं । महाभारते—प्रोष्ठपद्यां तु यो मासमेकाहारो भवेन्नरः । धनाद्यारोग्यमतुलं लभते नात्र संशयः । इति निर्णयामृते वामनपुराणे—मासि भाद्रपदे दद्यात्पायसं मधुसर्पिषा । हृषीकेशप्रीणनार्थं लवणं सगुडोदनम् । इति ।

अथ भाद्रपदशुक्लप्रतिपदि महत्तमाख्यं व्रतम् । मदनरत्ने स्कांदे—स्कंद उवाच । मासि भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ । नैवेद्यं तु पचेन्मौनी षोडश त्रिगुणानि च । फलानि पिष्टपक्वानि दद्याद्विप्राय षोडश । देवाय षोडशैतानि दातव्यानि प्रयत्नतः । भुज्यंते षोडश तथा व्रतस्य नियमाश्रयात् । सौवर्णं कारयेद्देवं यथाशक्त्या हिरण्मयं । नेत्रत्रयसमायुक्तं जटामंडलमंडितम् । पंचवक्त्रं महाबाहुं षोडशारस्य मध्यगं । कुंभस्योपरि देवेशं कृत्वा संस्थापयेत्ततः । पंचामृतेन स्नपनं शुक्लवस्त्रयुगान्वितं । गंधपुष्पैः समभ्यर्च्य फलैर्नानाविधैस्तथा । पूजामंत्रः—प्रसीद देवदेवेश चराचरजगद्गुरो । वृषध्वज महादेव त्रिनेत्राय नमो नमः । इति । ततो व्रतसाद्गुण्यार्थं धेनुं दद्यात्पयस्विनीं । अनेन तु विधानेन यः कुर्याद्व्रतमुत्तमम् । स राज्यं लभते देव दीर्घमायुश्च विंदति । सर्वपापविशुद्धात्मा शिवलोके महीयते । इति । अत्र सुवर्णशब्दः कर्षपरिमाणवाचीति मदनरत्ने यथाशक्त्येति पक्षांतरमिति द्योत्यते । हिरण्मयं सौवर्णं राजतं वेत्यर्थः । इदमेव मौनव्रतमित्युक्तं निर्णयामृते । तदसत् । तन्नामकस्य व्रतांतरत्वेन मदनरत्नादौ प्रसिद्धत्वात् । इदं च व्रतं पूर्वविद्धायां कर्तव्यं—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । इति ब्रह्मवैवर्तवचनात् ।

अथ तृतीयायां निर्णयामृते भविष्ये—कांचनीगौरीपूजनं प्रकृत्य—गुडापूपास्तु दातव्या मासि भाद्रपदे तथा । तृतीया शुक्लपक्षस्य सर्वपापहरा स्मृता । इति ।

अस्यामेव हरितालिव्रतं हेमाद्रौ भविष्ये । कृष्ण उवाच—शुक्ले भाद्रपदस्यैव तृतीयायां समाचरेत् । रत्नैर्धान्यैः सवैरूढैः कृत्वा हरितशाद्वलैः । खर्जूरैर्नारिकेलैश्च फलैश्च विविधैस्तथा । मातुलिंगकुसुंभैश्च धान्यकैर्जीरकैस्तथा । गंधैः पुष्पैः फलैर्दीपैर्नैवेद्यैर्मोदकादिभिः । प्रीणयित्वा समास्थाय पद्मरागेण भास्वता । घंटावाद्यादिभिर्गीतैः शुभैर्दिव्यकपानकैः । पूजनीया

महाभाग मंत्रेणानेन भक्तितः । हरेर्नाम्नि समुत्पन्ने हरितालि हरिप्रिये । सर्वदा सस्यमूर्तिस्थे प्रणतार्तिहरे नमः । इत्थं संपूज्य तां देवीं दद्याद्विप्राय दक्षिणाम् । कृत्वा जागरणं रात्रौ प्रभाते किंचिदुद्गते । रात्रौ सुवासिनीभिस्तु सा नेया तु जलाशये । ततो जलाशये रम्ये मंत्रेणैवं विसर्जयेत् । अर्चितासि मया भक्त्या गच्छ देवि सुरालयं । मम दौर्भाग्यनाशाय पुनरागमनाय च । एवं यः पांडवश्रेष्ठ हरितालिव्रतं चरेत् । प्रतिवर्षं विधानेन नारी वा भक्तितत्परा । नीत्वा यत्फलमाप्नोति तदन्येन न लभ्यते । इति । नीत्वा नयनांतप्रयोगं कृत्वेत्यर्थः ।

अस्यामेव हरितालिकाव्रतं । मंदारमालाकुलितालकायै कपालमालांकितशेखराय । दिव्यांबरायै च दिगंबराय नमः शिवायै च नमः शिवाय । एतत्सहितेनैकैकवक्ष्यमाणमंत्रेण शिवयोः पूजनं कार्यं । देवदेव जगन्नाथ प्रार्थयेहं जगत्पते । तावत्त्वं प्रीतिभावेन लिंगेऽस्मिन्संनिधो भव । सहस्रशीर्षेति आवाहनं । देव देव नमस्तुभ्यं सहस्रशिरसे नमः । नमस्ते कृत्तिवासाय नागाधिपतये नमः । कार्तस्वरमयं दिव्यं नानामणिगणान्वितं । अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यताम् । पुरुषएवेदं आसनं । गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतं । तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां । एतावानस्येति पाद्यं । वरेण्य यज्ञपुरुष प्रजापालनतत्पर । नमो माहात्म्यदेवाय गृहाणार्घ्यं नमोस्तुते । त्रिपादूर्ध्वेत्यर्घ्यं । पाटलोशीरकर्पूरसुरभिस्वादुशीतलं । तोयमाचमनीयार्थं निर्मलं प्रतिगृह्यतां । तस्माद्विराळित्याचमनीयं । पयोदधिघृतक्षौद्रशर्करास्नानमुत्तमं । तृप्त्यर्थं देवदेवेश गृह्यतां परमेश्वर । आप्यायस्वेत्यादि पंचामृतस्नानं । मंदाकिन्याः समानीतं हेमांभोरुहवासितं । स्नानाय ते मया दत्तं नीरं स्वीक्रियतामिदं । यत्पुरुषेणेति स्नानं । सर्वभूषाधिके सौम्ये लोकलज्जानिवारके । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यतां । तंयज्ञमिति वस्त्रं । महादेव नमस्तेस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम । तस्माद्यज्ञाद्यज्ञोपवीतं । मलयाचलसंभूतं घनसारं मनोहरं । हृदयानंदनं चारु चंदनं प्रतिगृह्यताम् । तस्माद्यज्ञात्सर्वहुत ऋचो गंधं । रंजिताः कुंकुमाद्येन अक्षतास्तु सुशोभनाः । गृहाण सर्वपापेभ्यस्त्राहि मां

वृषभध्वज । अक्षताः । माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् । तस्मादश्वा इति पुष्पाणि । वनस्पत्युद्भवो दिव्यो गंधाढ्यो गंध उत्तमः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । यत्पुरुषं व्यदधुर्धूपं । आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापह । ब्राह्मणोस्येति दीपं । अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं । भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् । चंद्रमामनसो नैवेद्यं । कर्पूरवासितं तोयं मंदाकिन्याः समाहृतं । आचम्यतामुमानाथ मया दत्तं हि भक्तितः । आचमनीयं । इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि । फलं । पूगीफलं सकर्पूरं नागवल्लीदलैर्युतं । कर्पूरादिसमायुक्तं तांबूलं प्रतिगृह्यतां । तांबूलं । हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे । दक्षिणां । श्रियेजातश्रिय इति कर्पूरार्तिक्यं । नमस्ते देवदेवेश नमस्ते धरणीधर । नमस्ते विश्वरूपाय नमस्ते पुरुषोत्तम । नाभ्याआसीदिति नमस्कारः । संसारार्णवमग्नं च त्राहि मां वृषभध्वज । हराय च नमस्तुभ्यं त्रैलोक्यव्यापिने नमः । सप्तास्यासन् प्रदक्षिणा । लोकात्मन्सर्वभूतात्मन्निमेषत्रुटिसंभव । जन्ममृत्युजराव्याधिसंसारभयनाशन । यज्ञेन यज्ञमिति पुष्पांजलिः । मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे । इति प्रार्थना इत्थमेके पूजामंत्रानाहुः । वस्तुतस्तु कथायां दर्शितविनियोगश्लोकचतुष्टयात्मकेन नमःशिवाय शांतायेत्यनेन मंत्रेणैव पूजा कार्या । वाणकदानं । महेशः प्रतिगृह्णाति महेशो वै ददाति च । महेशस्तारकोभाभ्यां महेशाय नमोनमः । इति । देवस्य त्वा सवितुरिति प्रतिग्रहः । इति पूजाविधिः ।

**अथ कथा** । सूत उवाच—कैलासशिखरे रम्ये गौरी पृच्छति शंकरं । गुह्याद्गुह्यतरं गुह्यं कथयस्व महेश्वर । सर्वेषां धर्मसर्वस्वमल्पायासं महत्फलं । प्रसन्नोसि जगन्नाथ सत्यं ब्रूहि ममाग्रतः । केन चासि मया प्राप्तो दानेन तपसापि वा । अनादिमध्यनिधनो भर्ता त्वं च जगत्प्रभुः । महादेव उवाच । शृणु प्रिये प्रवक्ष्यामि तवाग्रे व्रतमुत्तमं । गुह्यं ममैतत्सर्वस्वं

कथयामि तव प्रिये । यथा चोडुगणे चंद्रो ग्रहाणां भानुरेव च।
यथा विप्रो मनुष्याणां देवानां विष्णुरेव च । नदीनां च यथा
गंगा पुराणानां च भारतं । वेदानां च यथा साम इंद्रियाणां
मनो यथा । पुराणवेदसर्वस्वमागमेन यथोदितं । श्रद्धया च
शृणुष्वेदं यथा दृष्टं पुराकृतं । येन व्रतप्रभावेण प्राप्तमर्धासनं
मम । तत्सर्वं कथयिष्यामि यथा दृष्टं हिमालये । भाद्रे मासि
सिते पक्षे तृतीया हस्तसंयुता । तदनुष्ठानमात्रेण सर्वपापैः प्रमु-
च्यते । शृणु देवि त्वया पूर्वमजानंत्या कृतं व्रतं । वक्ष्ये य-
तोपि तत्प्राप्तं यथा दृष्टं हिमालये । पार्वत्युवाच । यथा कृतं
मया पूर्वं व्रतं मे फलितं च तत् । तत्सर्वं श्रोतुमिच्छामि त्व-
त्सकाशान्महेश्वर । ईश्वर उवाच । अस्ति ते पार्वति पिता हि-
मवान्नग उत्तमः । नानापक्षिरवै रम्यो नानाशृंगविचित्रितः ।
यत्र देवाः सगंधर्वाः सिद्धचारणगुह्यकाः । विचरंति सदा हृष्टा
गंधर्वा गीततत्पराः । स्फाटिकैः कांचनैः शृंगैर्मणिवैडूर्यभू-
षितैः । श्लिष्यन्भुजैरिवाकाशं यथा प्रीतः प्रियं सखा । हिमेन
पूरितः सर्वो गंगापातविचित्रितः । अप्सरोनृत्यगीतैश्च शोभतो
यो नगेश्वरः । तत्र त्वं पार्वति पूर्वं चरंती सुमहत्तपः । अब्द-
द्वादशकं देवि धूम्रपानमधोमुखं । संवत्सरचतुःषष्टिः पक्वपर्णा-
शनं ततः । दृष्ट्वा तातेन तत्कष्टं चिंतया दुःखितोऽभवत् ।
कस्मै देया मया कन्या इति चिंतापरोऽभवत् । एवं विचिंत्यमाने
तु नारदो मुनिराययौ । अर्घ्यादिभिस्तमभ्यर्च्य हिमवानभ्यभाषत ।
हिमवानुवाच । किमर्थमागतो देव कथ्यतां मुनिसत्तम । महा-
भाग्येन मे जातं त्वदीयागमनं मुने । नारद उवाच । शृणुष्वाद्रे
यदर्थं हि विष्णुना प्रेषितोऽस्म्यहं । योग्यं योग्याय दातव्यं कन्या-
रत्नमिदं त्वया । वासुदेवसमो नास्ति ब्रह्मेशानादिषु त्रिषु । ते-
नास्मै स्वस्य कन्येयं दीयतां मम संमतं । हिमवानुवाच । वासु-
देवसमो देवः कन्यां प्रार्थयते यदि । ततो मया प्रदातव्या त्व-
दागमनगौरवात् । तच्छ्रुत्वा प्रययौ तूर्णं नारदः केशवं प्रति ।
उपगम्य मुनिर्देवं शंखचक्रगदाधरं । कृतांजलिपुटो भूत्वा मु-
नींद्रः प्रत्यभाषत । नारद उवाच । देव सिद्धं त्वया कार्यं
वैवाहिकपरो भव । हिमवानब्रवीद्यत्तु तत्सर्वं श्रूयतां वचः ।
इयं कन्या मया दत्ता देवाय गरुडध्वजे । तच्छ्रुत्वा तु मुने-

वाक्यं पार्वती दुःखिताऽभवत् । कर्णोपकर्णैस्तच्छ्रुत्वा अथ तं को निवारयेत् । बलावष्टंभतः सिद्धमीश्वराणां मनीषितं । दुःखभारातिसंतप्तां सखी पप्रच्छ तां शिवां । सख्युवाच । कथं त्वं दुःखिता देवि कथयस्व ममाग्रतः । भद्रायास्तेन भद्रं ते करिष्यामि न संशयः । पार्वत्युवाच । शृणु भो त्वं महाप्रज्ञे मनसा चिंतितं मया । कपर्दिनं तु भर्तारं करिष्येऽहं न संशयः । पार्वत्या वचनं श्रुत्वा सखी वचनमब्रवीत् । सख्युवाच । नगपुत्रि महद्भाग्यं प्रार्थिता विष्णुना यदि । यः प्रार्थ्यो दैवतैः सर्वैर्महेंद्रादिपुरोगमैः । यस्यैकगुणलेशेन गुणवंतो भवंति हि । स गुणानामनंतत्वादनंत इति विश्रुतः । देवानां कन्यका भद्रे स्वकीया इष्टदेवताः । संपूज्य यस्य दास्यं ताः प्रार्थयंति दिवानिशं । अतिभाग्यवशाद्देवि माहिष्यं प्राप्यते यया । किं तया पायसं त्यज्य भिक्षार्थं गम्यतेऽन्यतः । प्राप्यापि कामदं देवं प्राप्यते कामदोहकं । नरोत्तमाय दत्तासि तव पित्रा शुभं कृतम् । मा शोचस्व निवर्तस्व न जानासि गुणांस्तयोः । भ्रामितास्यथ वा केन शृणुष्वेकमनाऽनघे । किरीटी केशवो देवो जटी मृत्युंजयोऽनघे । केशवः सुमुखो भद्रे स च भीममुखः सदा । सुपंक्ती रत्नदंष्ट्रश्च विपंक्तिर्दीर्घदंष्ट्रकः । रत्नकुंडलवान्विष्णुर्नागकुंडलवान् शिवः । विष्णुः कमलनेत्रश्च ज्वलन्नेत्रः सदाशिवः । चतुर्भुजधरो विष्णुः स वै दशभुजो महान् । श्रीवत्सलांछनं विष्णोः शिवस्य ब्रह्मणः शिरः । पीतांबरधरो विष्णुः स च चर्मांबरः सदा । वाहनं गरुडो विष्णोर्जरठोक्षाः शिवस्य च शेषपर्यंकशायी स चिताभस्मशयः स च । गंधर्वध्वनिना हृष्टो भूतानां रोदनेन सः । विष्णुर्भोगी स योगी च कथं चकमसे शिवं । पार्वत्युवाच । न जानासि विमूढा त्वं योगिनं शूलपाणिनं । यस्याज्ञासाक्षिको विष्णुस्त्रिलोकीं पाति नान्यदृक् । राजसेन स्वरूपेण ब्रह्मा सृष्टिं विधास्यति । तामसेन स्वरूपेण रुद्रोत्ति सकलं रुषा । गुणातीतस्य वै शंभोः को वेत्ति महिमां शुभाम् । यस्याज्ञा कमठो भूत्वा विष्णुः पृथ्वीं दधार वै । पुनः स सूकरो भूत्वा तां च दंते दधार ह । यद्दत्तान्भुञ्जते भोगान्विष्णुर्भोगीति वक्ष्यसि । सहस्रकमलैः पूर्वं विष्णुनाराधितः शिवः । वैकुंठं स्वश्रियस्तेजस्तेन दत्तं निजं क्षणात् । इंद्रादीना

तु यो दाता स देवो न श्रुतस्त्वया। यद्दत्तं देवराज्यं तु इंद्रो वै भुंजते सुखं। कुबेरेणापि महती श्रीरवाप्ता वरानने। वरुणेन जलेशत्वं शेषः पातालसंभवं। सूर्यस्तपति यद्भीत्या वायुर्वाति दिवानिशं। यमः संयमिनीशत्वं स देवः किं न वेत्स्यसि। यस्याज्ञया स्वकालेपि मेघा वर्षंति सर्वतः। पावकः सर्वदेवानां वदनं भवितानघे। पितरः पितृलोकत्वं मत्पिता पर्वतेशताम्। चंद्रो ह्युडुगणेशत्वं समुद्रो वै गभीरतां। सोमः प्रापौषधीशत्वं चंदनश्च सुगंधताम्। यस्याज्ञया च काले वै वर्तंते वशवर्तिनः। वृष्टिः शीतं च घर्मश्च स्वस्वकाले निरंतरं। शक्रादयश्च दिक्पालाः स्वदिशं पालयंति ते। येषु कृत्येषु ये देवा योजितास्तेषु तत्पराः। अन्यथाकरणे तेषां स च दंडं विधास्यति। परात्परः स वै देवो निर्गुणः सगुणोऽपि सः। निराकारश्च साकारोऽयोगी योगी स एव हि। केवलो निर्गुणः साक्षी क्षरश्चाक्षर एव सः। को वेद तस्य तद्रूपं यद्ब्रह्मेति प्रचक्षते। ब्रह्माद्या देवताः सर्वा ऋषयश्च तपोधनाः। योगिनो ज्ञाननिष्ठा ये यदर्थे त्यक्तबांधवाः। तेपि तस्य न जानंति स्वरूपं सखि शूलिनः। अतस्तं कामये नूनं विधिनाहं पतिं शुभे। सख्युवाच। सस्यक्कामोऽभिलषितस्तदर्थे त्यक्तजीविता। यत्र वै निश्चिता बुद्धिः स कामो भवति ध्रुवं। ममापि च महद्भाग्यं यतस्त्वत्कर्मकारिका। किंचिद्विज्ञप्तुमिच्छामि यदि त्वं श्रूयसे वचः। अंबिकापूजनं कार्यं यन्मया कामदं श्रुतं। तवेष्टकर्त्री या देवी सापि पूज्या प्रयत्नतः। मयि चानुग्रहो देवि मयि प्रीतिरनुत्तमा। अनुज्ञादानमात्रेण जनिः सफलतां गता। करिष्याम्यहमप्येतद्गौर्या यत्पूजनं शुभम्। पिता यत्र न जानाति व्रज त्वं तद्वनं महत्। ईश्वर उवाच। इत्येवं संमतं कृत्वा नीता शीघ्रं महद्वनं। पिता विलोकयामास हिमवांस्तु गृहे गृहे। किंवा नीता तु मे पुत्री देवदानवकिन्नरैः। सत्यं कृतं मया पूर्वं किं दास्ये गरुडध्वजे। इत्येवं चिंतयाविष्टो मूर्च्छितः पतितो भुवि। हाहाकृतास्ततो लोकाः प्रधावंति गिरिं प्रति। मूर्च्छां प्राप्ता त्वया कस्मात्कथयस्वेति तेऽब्रुवन्। हिमवानुवाच। कस्येदं चेष्टितं क्रूरं कन्यारत्नं हृतं मम। दष्टा वा कालसर्पेण सिंहव्याघ्रेण वा हृता। न जाने क्व गता पुत्री केन दुष्टेन वा हृता।

चकंपे शोकसंतप्तो वातेनेव यथा तरुः । त्वं गतासि वनं घोरं निर्जनं भयवर्धनम् । व्याघ्रसिंहगजक्रोष्टुमृगपक्षिगणाकुलम् । गिरिश्चचार पुत्रीं त्वामन्वीक्षन्निर्जने वने । तस्मिन्घोरे वने त्वं तु सखिभिः सह संस्थिता । दृष्ट्वा तत्र नदीं रम्यां तस्यास्तीरे सुमध्यमा । उपविष्टालिभिः सार्धमन्नाहारविवर्जिता । वालुकायाः कृतां मूर्तिं शिवायाः शंकरस्य च । भाद्रशुक्लतृतीयायामर्चयंती सुमध्यमा ॥ ७५ ॥ तत्र वादित्र[1]गीतेन रात्रौ जागरणं कृतं । तेन व्रतप्रभावेण आसनं चलितं मम । संप्राप्तो देवि तत्राहं यत्र त्वं सखिभिः सह । प्रसन्नोस्मि मया प्रोक्तं वरं ब्रूहि वरानने । पार्वत्युवाच । यदि देव प्रसन्नोसि भर्ता भवतु मे हरः । इत्युवाच प्रसन्नात्मा अजानंती स्वयं गतं । तथेत्युक्त्वा मया देवि कैलासं पुनरागतः । ततः प्रभाते विमले नद्यां सर्वं विसृज्य तत् । पारणं ते कृते तत्र यद्भूतं वनगोचरे । त्वं तत्र च प्रसुप्तासि सख्या सार्धं वरानने । हिमवानपि तं देशमाजगाम महावनं । त्वामपश्यंश्चतुर्दिक्षु पानभोजनवर्जितः । दृष्ट्वा तत्र नदीतीरे प्रसुप्तं कन्यकाद्वयम् । उत्थाप्योत्संगमानीय रोदनं च चकार सः । सिंहव्याघ्रमृगैर्जुष्टं किमर्थं वनमागता । पार्वत्युवाच । मया विचारितो भर्ता महादेवः सदाशिवः । तदन्यथा कृतं तात तेनाहं वनमागता । तथेत्युक्त्वा हिमवता त्वमानीता गृहं प्रति । ततः प्रयुक्ता ते पित्रा मम वैवाहिकी क्रिया । तेन व्रतप्रभावेण सौभाग्यं प्राप्तवत्यसि । तदादिव्रतराजस्तु न कस्यापि निवेदितः । व्रतराजस्य नामेदं शृणु देवि यथाभवत् । हरितालीति नाम्नेदमन्वर्थमभवद्व्रतं । आलिभिर्हरिता यस्मात्तस्मात्सा हरितालिका । त्वमेव मुख्या देव्यत्र तेन त्वन्नामकव्रतम् । देव्युवाच । नामेदं कथितं देव विधिं वद मम प्रभो । किं पुण्यं किं फलं चास्य केन वा विधिना चरेत् । ईश्वर उवाच । शृणु देवि विधिं वक्ष्ये नारीणां व्रतमुत्तमं । कर्तव्यं तु प्रयत्नेन यदि सौभाग्यमिच्छति । तोरणादि प्रकर्तव्यं कदलीस्तंभमंडितम् । आच्छाद्य पट्टवस्त्रैस्तु नानावर्णैर्विचित्रितं । चंदनादिसुगंधेन लेपयेद्गृहमंडपं । शंखभेरीमृदंगैश्च वादित्रैर्बहुभिर्वरैः । नाना-

१ घोषेण पाठः ।

मंगलयोगस्तु कर्तव्यो मम सद्मनि । स्थापनं तत्र कर्तव्यं पार्वत्या सहितस्य मे । पूजयेद्बहुभिः पुष्पैर्गंधधूपैर्मनोहरैः । उपोष्य पूजयेद्भक्त्या कुर्याज्जागरणं निशि । नारिकेलैश्च जंबीरैरन्यैश्च विविधैः फलैः । ऋतुदेशोद्भवैः सर्वैर्नैवेद्यैः कुसुमैर्नवैः । सुगंधैर्धूपदीपैश्च मंत्रेणानेन पूजयेत् । नमः शिवाय शांताय पंचवक्त्राय शूलिने । नंदिभृंगिमहाकालगणयुक्ताय शंभवे । शिवायै शिवरूपायै मंगलायै महेश्वरि । शिवे सर्वार्थदे देवि शिवरूपे नमोस्तु ते । नमस्ते सर्वरूपिण्यै जगद्धात्र्यै नमोनमः । संसारभीतिसंत्रस्तं त्राहि मां सिंहवाहिनि । मयापि येन कामेन पूजितासि महेश्वरि । राज्यं देहि च सौभाग्यं प्रसन्ना भव पार्वति । मंत्रेणानेन मां देवि पूजयेदुमया सह । ततः कथां समाकर्ण्य शक्त्या दद्याच्च दक्षिणां । ब्राह्मणाय प्रदातव्यं वस्त्रधेनुहिरण्यकं । अन्येषां दीयते दानं स्त्रीणां भद्रादिकं तथा । कथां श्रुत्वैकचित्तेन दंपतीभ्यां सहैव तु । संकल्पं च ततः कुर्याद्गंधपुष्पादिपूजनैः । या करोति महादेवि व्रतराजं विधानतः । सौभाग्यं राज्यमायुष्यं पापक्षयमवाप्नुयात् । तृतीयायां तु या नारी किल भोजनमाचरेत् । जन्मजन्म भवेद्वंध्या विधवा च पुनः पुनः । दारिद्र्यं पुत्रशोकं च कर्कशा दुःखभागिनी । याति सा नरकं घोरमुपवासं न या चरेत् । कांचनं रुक्मपात्रं च ताम्रकं वा तथैव च । वेणुमृन्मयपात्राणि पूर्णानि विविधैः फलैः । एवं षोडशसंख्यानि ब्राह्मणेभ्यः प्रदापयेत् । यद्वा ब्राह्मणयोषिद्भ्यः पारणं तदनंतरं । अश्वमेधसहस्राणि वाजपेयशतानि च । कृत्वा यत्पुण्यमाप्नोति तत्कथाश्रवणादपि । एतत्ते कथितं देवि व्रतानामुत्तमं व्रतं । तेन मां त्वं प्रपन्नासि मम देहार्धतां तथा । एवं विधिं या कुरुते च नारी त्वया समाना रमते च भर्त्रा । विनाशकाले मम तुल्यरूपं सायुज्यमुक्तिं लभते च युग्मं । गोभूरत्नसुवर्णादि वस्त्रदानं पुनः पुनः । तदा यागे (?) प्रकर्तव्यं सर्वकामार्थसिद्धये । इति श्रीभविष्योत्तरपुराणे हरितालिकाव्रतकथा समाप्ता ।

**अथोद्यापनं** । युधिष्ठिर उवाच । उद्यापनविधिं ब्रूहि तृतीयायाः सुरेश्वर । भक्तितः श्रोतुमिच्छामि व्रतसंपूर्णहेतवे । श्रीकृष्ण उवाच । उद्यापनविधिं वक्ष्ये सावधानेन वै शृणु ।

त्रिंशद्दंडप्रमाणेन प्रमितं दक्षिणोत्तरे । प्रत्यक्प्रागपि राजेंद्र तद्गोचर्म समिष्यते । गोचर्ममात्रं लेप्यं तद्गोमयेन विचक्षणः । मंडलं कारयेत्तत्र नानावर्णं सुशोभनं । ग्रहमंडलपार्श्वे तु पद्ममष्टदलं लिखेत् । तन्मध्ये स्थापयेत्कुंभमव्रणं मृन्मयं शुभं । ताम्रपात्रं प्रकुर्वीत पलैः षोडशभिस्तथा । तदर्धार्धेन वा कुर्याद्वित्तशाठ्यं विवर्जयेत् । कर्षमात्रसुवर्णेन प्रतिमां कारयेद्बुधः । तदर्धं मध्यमं प्रोक्तं तदर्धं तु कनिष्ठकं । कृत्वा रूपं प्रयत्नेन पार्वत्याश्च हरस्य च । अथ ताम्रमये पात्रे प्रतिमां तत्र विन्यसेत् । श्वेतवस्त्रयुगच्छन्नां श्वेतयज्ञोपवीतकां । भाजनं च तिलैः पूर्णं कलशस्योपरि न्यसेत् । पार्वत्यास्तु युगं दद्यात्स्थापयित्वा विधानतः । वेदोक्तेन प्रतिष्ठाप्य कर्तव्यार्चाथ सूरिणा । पंचामृतेन स्नपनं कृत्वा देवस्य चोत्तमं । स्नानं च कारयेत्पश्चात्ततः पूजां समाचरेत् । धूपं च विभवे दद्याच्चंदनागरुसंयुतम् । नानाप्रकारैर्नैवेद्यैस्तथा दीपं च कारयेत् । अर्चांते पूजयेद्भक्त्या गंधपुष्पैः फलाक्षतैः । आवाहनादि कर्तव्यं पुराणागमसंभवैः । कार्या विधानतः पूजा भक्तिश्रद्धापरैर्नरैः ॥ ॥ देवदेव समागच्छ प्रार्थयेऽहं जगत्पते । इमां मया कृतां पूजां गृहाण सुरसत्तम । सहस्रशीर्षेत्यावाहनं । हराय च नमस्तुभ्यं सहस्रशिरसे नमः । नमस्ते कृत्तिवासाय नागाधिपतये नमः । पुरुषएवेत्यासनं । संसारार्णवमग्नं च त्राहि मां वृषभध्वज। हराय च नमस्तुभ्यं त्रैलोक्यव्यापिने नमः । एतावानस्येति पाद्यं । वरेण्य यज्ञपुरुष प्रजापालनतत्पर । नमो महात्मदेवाय गृहाणार्घ्यं नमोस्तु ते । त्रिपादूर्ध्वेत्यर्घ्यं । पाटलोशीरकर्पूरसुरभि स्वादु शीतलं । तोयमाचमनीयार्थं निर्मलं प्रतिगृह्यतां । तस्माद्विराळित्याचमनीयं । मंदाकिन्याः समानीतं हेमांभोरुहवासितं । स्नानाय ते मया दत्तं नीरं स्वीक्रियतामिदं । गंगोदकं समानीतं हेमकुंभे च निर्मलं। स्नानं प्रगृह्यतां देव प्रीताय हर ते नमः । यत्पुरुषेणेति स्नानं। शुचि वस्त्रयुगं यस्माद्देवदेवस्य वल्लभं । पार्वत्या सह देवेशः प्रीयतां वस्त्रदानतः । तंयज्ञमिति वस्त्रं । महादेव नमस्तेस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं सोत्तरीयं गृहाण सुरसत्तम। तस्माद्यज्ञादिति यज्ञोपवीतं । चंदनेन सुगंधेन कर्पूरागरुसंयुतं। लेपयेहं भवांगानि प्रीयतां च हरो मम । तस्माद्यज्ञात्सर्वहुत

ऋच इति गंधं । पुष्पाणि च सुगंधीनि मालत्यादीनि वै प्रभो । मया हृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् । तस्मादश्वा इति पुष्पं । वनस्पत्युद्भवो दिव्यो गंधाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । यत्पुरुषमिति धूपं । यज्ज्योतिः सर्वभूतानां तेजसां तेज उत्तमं । आत्मज्योतिः परमं धाम दीपोयं प्रतिगृह्यतां । ब्राह्मणोस्येति दीपं । अन्नं चतुर्विधं स्वादु भूतानां जीवनं परं । नैवेद्यं ते मया दत्तं देवेश प्रतिगृह्यतां । चंद्रमामनसइति नैवेद्यं । पूगीफलमिति तांबूलं । इदंफलमिति फलं । हिरण्यगर्भ इति दक्षिणां । लोकात्मन्सर्वभूतात्मन्निमेषत्रुटिसंभव । जन्ममृत्युजराव्याधिसंसारभयनाशन । नीराजनं ॥ नमस्ते देवदेवेश नमस्ते धरणीधर । नमस्ते विश्वरूपाय नमस्ते पुरुषोत्तम । नाभ्याआसीदिति नमस्कारः। यानिकानि०सप्तास्यासन्निति प्रदक्षिणा । यज्ञेन यज्ञमिति पुष्पाञ्जलिः । मंत्रहीनं इति प्रार्थना । गीतनृत्यादिसंयुक्तकथापुस्तकवाचनैः । उपोष्य जागरं तत्र कर्तव्यं भक्तिभावतः । ततः प्रभाते विमले कृत्वा स्नानादिकर्म च । पूर्ववच्चार्चयेद्देवं पश्चाद्धोमं च कारयेत् । स्वगृह्योक्तेन विधिना कृत्वाग्निस्थापनं ततः । प्रारभेच्च ततो होमं नवग्रहपुरःसरं । तिलांश्च यवसंमिश्रानाज्येन च परिप्लुतान् । जुहुयाद्रुद्रमंत्रेण गौरीमंत्रेण वेदवित् । अष्टोत्तरशतं वापि अष्टाविंशतिसंख्यया । एवं समाप्य होमं तु तत्राचार्यं प्रपूजयेत् । अर्घ्यपुष्पप्रदानैश्च वस्त्रालंकारभूषणैः । शय्यां सुलक्षणां कुर्यात्प्रकारैस्तद्गतैश्चितां । धेनुं सुलक्षणां दद्यात्सुशीलां च पयस्विनीं । स्वर्णशृंगीं रौप्यखुरां कांस्यदोहनसंयुताम् । सवत्सामव्रणयुतां धेनुं दद्यात्प्रयत्नतः । सुवर्णेन समोपेतां सदाचाराय साधवे । प्रयत्नेन च कर्तव्यं पक्वान्नं षोडशोन्मितं । षोडशप्रमितैर्युक्तं ब्राह्मणाय निवेदयेत् । वंशपात्रं प्रयत्नेन पक्वान्नैर्वा फलैः शुभैः । अन्येभ्यो विप्रवर्येभ्यो दक्षिणां च प्रयत्नतः । अन्नं च परया भक्त्या प्रदद्यादनुसारतः । बंधुभिः सह भुंजीत नियतश्च परेऽहनि । एवं कृते भवेत्पार्थ परिपूर्णव्रती यतः । इति श्रीभविष्योत्तरपुराणे हरितालिकातृतीयोद्यापनं ॥

अत्र व्रतद्वयेपि तृतीया मुहूर्तमात्रसत्त्वेपि परैव ग्राह्या । चतुर्थीसहिता या तु सा तृतीया शुभप्रदा । अवैधव्यकरी

स्त्रीणां पुत्रपौत्रफलप्रदा । द्वितीयाशेषसंयुक्तां या करोति विमोहिता । सा वैधव्यमवाप्नोति प्रवदंति मनीषिणः । इति माधवीये आपस्तंबवाक्ये परयुतायाः प्राशस्त्याभिधानात्पूर्वयुतायाः निंदाश्रवणाच्च ।

अथ चतुर्थ्यां सिद्धिविनायकव्रतं हेमाद्रौ स्कांदे–श्रीकृष्ण उवाच । गजवक्त्रं तु शुक्लायां चतुर्थ्यां पूजयेन्नृप । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेत्तथा । स्वशक्त्या गणनाथस्य स्वर्णरौप्यमयाकृतिं । स्वर्णमयीं रौप्यदंतीं । गणनाथस्य सिद्धिविनायकस्य । तत्स्वरूपं च मदनरत्ने स्कांदे—एकदंतं शूर्पकर्णं गजवक्त्रं चतुर्भुजं । पाशांकुशधरं देवं ध्यायेत्सिद्धिविनायकं । इति । तां च पृथक्पंचामृतैः संस्नाप्य संपूज्य सर्वप्रदायेति रक्तवस्त्रयुग्मं । ततो गणाध्यक्षायेति गंधं । विनायकायेति पुष्पाणि । उमासुतायेति धूपं । रुद्रप्रियायेति दीपं । विघ्ननाशिन इति नैवेद्यं । ततः फलतांबूलदक्षिणां दत्वा । ततो नीराज्य एकविंशतिदूर्वांकुरान् गृहीत्वा । गणाधिपाय १ उमापुत्राय २ अघनाशनाय० ३ विनायकाय० ४ ईशपुत्राय० ५ सर्वसिद्धिप्रदायकाय० ६ एकदंताय० ७ इभवक्त्राय० ८ मूषकवाहनाय० ९ कुमारगुरवे० १० इति सर्वत्रप्रणवैर्नमोंतैर्नामपदैः प्रत्येकं गंधाद्यलंकृतदूर्वाणां द्वयं द्वयं समर्प्य । तथैवैकां सर्वैर्नामभिः समर्प्य । घृतपाचितानेकविंशतिमोदकान्देवस्य पुरतः संस्थाप्य दशसंख्याकान्विप्राय दत्त्वा सनैवेद्यमेकं देवाय समर्प्य स्वयं ब्राह्मणैः सह तान्दशमोदकान्तैलपक्वं च भुंजीत । एवं–कृत्वा नैमित्तिकं कर्म पूजयेदिष्टदेवतां । वैष्णवाद्यासु दीक्षासु आदौ पूज्यो गणाधिपः । तस्मिन्संपूजिते विष्णुरीशो भानुस्तथा ह्युमा । हव्यवाहमुखा देवाः पूजिताः स्युर्न संशयः । इति । इयमेव शिवाचतुर्थीत्युच्यते–भविष्ये–शिवा शांता शिखा राजंश्चतुर्थी त्रिविधा स्मृता । मासि भाद्रपदे शुक्ला शिवलोके प्रपूजिता । इति । इयमेव रविवारेण भौमवारेण वा युता महाचतुर्थीत्युच्यते । तदुक्तं निर्णयामृते वाराहे–भाद्रशुक्लचतुर्थी या भौमेनार्केण वा युता । महती सात्र विघ्नेशमर्चित्वेष्टं लभेन्नरः । इति ॥

अथात्र प्रकारान्तरेण पूजनम् । एकदन्तं शूर्पकर्णं गजवक्त्रं

चतुर्भुजं । पाशांकुशधरं देवं ध्यायेत्सिद्धिविनायकं । ध्यानं । विघ्नराज नमस्तेस्तु गौरीमलसमुद्भव । इमां मया कृतां पूजां गृहाण सुरसत्तम । आवाहनं । अनेकरत्नसंयुक्तं मुक्तादाम विराजितम् । स्वर्णसिंहासनं चारु प्रीत्यर्थं प्रतिगृह्यतां । आसनं । पाद्यं गृहाण भगवन्दिव्यचंदनमुत्तमं । करुणाकर हेरम्ब गणाध्यक्षाय ते नमः । पाद्यं । गौरीप्रिय नमस्तेस्तु शंकरप्रिय सिद्धिद । गृहाणार्घ्यं मया दत्तं सर्वसिद्धिप्रदायक । अर्घ्यं । गंगादितीर्थसलिलं स्वर्णकुंभे समाहृतं । उमापुत्र नमस्तेस्तु गृहाणाचमनीयकं । आचमनीयं । विघ्नेश्वर विशालाक्ष सप्तार्णवविनोदन । मधुपर्कं गृहाणेदं मया संपादितं विभो । मधुपर्कं । स्नानं पंचामृतं दिव्यं गृहाण द्विरदानन । अनाथनाथ देवेश सुरासुरसुपूजित । पंचामृतस्नानं । सर्वतीर्थात्समुद्धृत्य गंधतोयैः कुशोदकैः । फलतोयैर्जलैर्गंधैः स्नापयामि गणेश्वर । शुद्धोदकस्नानं । रक्तवस्त्रद्वयं दिव्यं देवतार्हं सुमंगलं । सर्वप्रदं गृहाणेदं लंबोदर हरात्मज । वस्त्रयुग्मं । राजतं ब्रह्मसूत्रं च कांचनस्योत्तरीयकं । विनायक नमस्तेस्तु गृहाण सुरसत्तम । यज्ञोपवीतं । गंधं गृहाण भगवन्दिव्यचंदनमुत्तमं । कर्पूरामलसंयुक्तं लंबोदर हरात्मज । गन्धं । अक्षतान्धवलान्देव गृहाण द्विरदानन । अमराणामतिश्रेष्ठ पद्मवासमतिप्रिय । अक्षताः । सुगन्धीनि सुपुष्पाणि जातीकुंदमुखानि च । गृहाण सर्वलोकेश विनायक नमोस्तुते । पुष्पं । अथांगपूजा । ॐ गणेशाय नमः पादौ पूजयामि । विघ्नराजाय० जानुनी० । आखुवाहनाय० ऊरू० । हेरंबाय० कटिंपू० । लंबोदराय० उदरंपू० । गणनाथाय० हृदयं० । स्थूलकंठाय० कंठं० । स्कंदप्रियाय० स्कंधौ पू० । परशुहस्ताय० हस्तौपू० । गजवक्राय० वक्रंपू० । विघ्नराजाय० नेत्रेपू० । शूर्पकर्णाय० कर्णौपू० । भालचंद्राय० भालं पू० । सर्वेश्वराय० शिरः पू० । महागणपतये० सर्वांगं पू०॥ अथैकविंशतिपत्रैः पूजा । सुमुखाय० मालतीपत्रं समर्पयामि १। गणाध्यक्षाय० भृंगराजपत्रं० २ । उमापुत्राय० बिल्वपत्रं० ३ । गजाननाय० श्वेतदूर्वापत्रं० ४। लंबोदराय० बदरी० ५ । हरसूनवे० धत्तूरप० ६ । कुमारगुरवे० तुलसीप० ७। एकदंताय० अपामार्गप० ८ । इभवक्राय० बृहतीपत्रं० ९ । ईशपुत्राय० शमीपत्रं० १० । विकटाय० करवीरपत्रं० ११ । वि-

नायकाय० अश्मंतकपत्रं० १२। कपिलाय० अर्कपत्रं० १३। भिन्नदंताय० अर्जुनपत्रं० १४। पत्नीहिताय० विष्णुक्रांतपत्रं० १५। वटवे० दाडिमीप० १६। सुरेशाय० देवदारुपत्रं० १७। भालचंद्राय० मरुपत्रं० १८। हेरंवाय० सिंदूरपत्रं० १९। शूर्पकर्णाय० जातीप० २०। सुराग्रजाय० गंडकीपत्रं० २१। विनायकाय एकविंशतिपत्राणि समर्पयामि। दशांगं गुग्गुलं धूपं सुगंधं च मनोहरं। उमापुत्र नमस्तेस्तु गृहाण वरदो भव। धूपं। गृहाण मंगलं दीपं घृतवर्तिसमन्वितम्। दीपं ज्ञानप्रदं चारु रुद्रप्रिय नमोस्तु ते। दीपं। सघृतं सगुडं चैव मोदकं घृतपाचितं। नैवेद्यं सफलं दद्यां नमस्ते विघ्ननाशिने। नैवेद्यं। इदं फलमितिफलं। पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतं। कर्पूरादिसमायुक्तं तांवूलं प्रतिगृह्यतां। तांवूलं। हिरण्यगर्भगर्भस्थं०। दक्षिणा। ततो दूर्वांकुरयुग्मं गृहीत्वा गंधसंयुतं। एकैकेन च नाम्ना तु दत्वैकं सर्वनामभिः। ॐगणाधिपतये नमः। दूर्वांकुरयुग्मं समर्पयामि। १ उमापुत्राय० २ अघनाशनाय० ३ एकदंताय० ४ इभवक्राय० ५ मूषकवाहनाय० ६ विनायकाय० ७ ईशपुत्राय० ८ सर्वसिद्धिप्रदायकाय० ९ कुमारगुरवे० १०। गणाधिपनमस्तेस्तु उमापुत्राघनाशन। एकदन्तेभवक्रेति तथा मूषक वाहन। विनायकेशपुत्रेति सर्वसिद्धिप्रदायक। कुमारगुरवे तुभ्यं सर्वसंकष्टनाशन। दूर्वांकुरान्समर्पयामि। ततः श्रियेजात इति नीराजनं। गजाननं भूतगणादिसेवितं कपित्थजंवूफलसारभक्षकं। उमासुतं शोकविनाशनं च नमामि विघ्नेश्वरपादपंकजं। इति नमस्कारः। आखुवाहन देवेश विश्वव्यापिन्सनातन। प्रदक्षिणां करोमि त्वां मम त्वं संनिधौ भव। इति प्रदक्षिणा। गणानांत्वेति पुष्पांजलिः। विनायक नमस्तुभ्यं सततं मोदकप्रिय। अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा। प्रार्थना। गणेशः प्रतिगृह्णाति गणेशो वै ददाति च। गणेशस्तारकोभाभ्यां गणेशाय नमो नमः। वाणकं दशमोदकानां देयं। विनायकस्य प्रतिमां वस्त्रयुग्मसमन्वितां। ब्राह्मणाय प्रदास्यामि सर्वविघ्नोपशांतये। इति प्रतिमादानं। इति पूजाविधिः॥

अथ कथा। ऋषय ऊचुः। निर्विघ्नेन तु कार्याणि कथं

सिध्यंति सूतज । अर्थसिद्धिः कथं नृणां पुत्रसौभाग्यसंपदः । दंपत्योः कलहे चैव बंधुभेदे तथा नृणां । उदासीनेषु लोकेषु कथं सुमुखता भवेत् । विद्यारंभे तथा नृणां वाणिज्यायां कृषौ तथा । नृपतेः परचक्रस्य जयसिद्धिः कथं भवेत् । कां देवतां नमस्कृत्य कार्यसिद्धिर्भवेन्नृणां । एतत्सर्वं विशेषेण सूत नो वक्तुमर्हसि । सूत उवाच । सन्नद्धयोः पुरा विप्राः कुरुपांडव-सेनयोः । पृष्टवान्देवकीपुत्रं कुंतीपुत्रो युधिष्ठिरः । युधिष्ठिर उवाच । निर्विघ्नेन जयो मह्यं वद त्वं देवकीसुत । यां देवतां नमस्कृत्य सम्यग्राज्यं लभेमहि । श्रीकृष्ण उवाच । गजवक्त्रं तु शुक्लायां चतुर्थ्यां पूजयेन्नृप । पूजयस्व गणाध्यक्षमुमामलसमुद्भवं । तस्मिन्संपूजिते देवे ध्रुवं राज्यमवाप्स्यसि । युधिष्ठिर उवाच । देव केन विधानेन पूजनीयो गणाधिपः । पूजितस्तु तिथौ कस्यां सिद्धिदो गणपो भवेत् । श्रीकृष्ण उवाच । शुक्लपक्षे चतुर्थ्यां तु मासि भाद्रपदे नृप । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने देवमर्चयेत् । स्वशक्त्या गणनाथस्य स्वर्णरौप्यमयाकृतिं । अथवा मृन्मयी कार्या वित्तशाठ्यं न कारयेत् । कृत्वा पूजां प्रयत्नेन स्नाप्य पंचामृतैः पृथक् । चंदनेन लिखेत्पद्मं कर्णिकाकेसरान्वितं । आसनाद्यर्घ्यपाद्यं च दत्त्वा पश्चात्प्रयत्नतः । चतुर्भुजं त्रिनेत्रं च सर्वाभरणभूषितं । दंतमेकं करे दद्याद्द्वितीये चाक्षसूत्रकं । तृतीये परशुं दद्याच्चतुर्थे मोदकं स्मरेत् । एवं ध्यात्वा नृपश्रेष्ठ पूजयित्वा गणाधिपं । रक्तं सर्वप्रदे दद्याद्वस्त्रयुग्मं च भक्तितः । गणाध्यक्षेति नाम्ना तु गंधं दद्याच्च भक्तितः। विनायकेति पुष्पाणि धूपं चोमासुताय च । दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने । ततो दूर्वांकुरान् गृह्य विंशतिं चैकमेव च । पूजनीयः प्रयत्नेन एभिर्नामपदैः पृथक् । गणाधिप नमस्तेस्तु उमापुत्राघनाशन । विनायकेशपुत्रेति सर्वसिद्धिप्रदायक । एकदंतेभवक्त्रेति तथा मूषकवाहन । कुमारगुरवे तुभ्यं सर्वसंकष्टनाशन । अथैकविंशतिं गृह्य मोदकान्घृतपाचितान् । स्थापयित्वा गणाध्यक्षसमीपे कुरुनंदन । दश विप्राय दातव्याः स्वयं चाद्यात्तथा दश । एकं गणाधिपे दद्यात्सनैवेद्यं नृपोत्तम । ब्राह्मणान्भोजयेत्पश्चाद्भुंजीयात्तैलवर्जितं । कृत्वा नैमित्तिकं कर्म पूजयेदिष्टदैवतम् । सदक्षिणं सवस्त्रं च गुरोर्दद्याद्विनायकम् ।

एवं कृते धर्मराज गणनाथस्य पूजने । विजयश्च भवेन्नित्यं सत्यं सत्यं वदाम्यहं । त्रिपुरं हंतुकामेन पूजितः शूलपाणिना । शक्रेण पूजितः पूर्वं तथा वृत्रवधे नृप । अन्वेषयंत्या भर्तारं पूजितोऽहल्यया पुरा । नलस्यान्वेषणार्थाय दमयन्त्या पुरार्चितः। रामदेवेन तद्वच्च सीतान्वेषणकाम्यया । दृष्टा सीता महाभागा वीरेण च हनूमता । भगीरथेन तद्वच्च गंगामानयता पुरा । अमृतोत्पादनार्थाय तथा देवासुरैरपि । अमृतं हरता पूर्वं वैनतेयेन पक्षिणा । आराधितो गणाध्यक्षो ह्यमृतं चाहृतं बलात् । यदा पूर्वं तु दैत्येन हृतो रुक्मिणिनंदनः । आराधितो मया तद्वद्रुक्मिण्या सहितेन च । कुष्ठव्याधियुतेनाथ सांबेनाराधितः पुरा । जयकामस्तथा त्वं हि तमाराधय शांकरिं । पुत्रकामो लभेत्पुत्रं धनकामो लभेद्धनम् । पतिकामा च भर्तारं सौभाग्यं च सुवासिनी । विधवा पूजयित्वा तु वैधव्यं नाप्नुयात्कचित् । वैष्णव्याद्यासु दीक्षासु आदौ पूज्यो गणाधिपः । तस्मिन्संपूजिते विष्णुरीशो भानुस्तथा ह्युमा । हव्यवाहमुखा देवाः पूजिताः स्युर्न संशयः । चंडिकाद्या मातृगणाः परितुष्टा भवंति हि । विनायकस्य प्रतिमा वस्त्रयुग्मसमन्विता । ब्राह्मणाय प्रदातव्या सर्वविघ्नोपशान्तये । एवं कृते धर्मराज गणनाथस्य पूजने । प्राप्स्यसि त्वं स्वकं राज्यं हत्वा शत्रूनणाजिरे । सिध्यन्ति सर्वकार्याणि नात्र कार्या विचारणा । एवमुक्तस्तु कृष्णेन सानुजः पांडुनंदनः। पूजयामास देवस्य पुत्रं त्रिपुरघातिनः। शत्रुसंघं निहत्याजौ प्राप्तवान्राज्यमोजसा । पूजयित्वा महाभाग गणेशं सिद्धिदायकं । सिध्यंति सर्वकार्याणि मनसा चिंतितान्यपि । तेन ख्यातिं गतो लोके नाम्ना सिद्धिविनायकः। कार्यारंभेषु सर्वेषु पूजनीयो गणाधिपः । सिध्यंति सर्वकार्याणि सिद्धिदस्य प्रसादतः । विवाहादौ क्रियमाणे पूजनीयो गणाधिपः । विद्याकामो लभेद्विद्यां धनकामो लभेद्धनं । जयं च जयकामस्तु पुत्रार्थी लभते सुतं । य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः । सिध्यंति सर्वकार्याणि विघ्नेशस्य प्रसादतः । इति श्रीस्कन्दपुराणे कृष्णयुधिष्ठिरसंवादे सिद्धिविनायककथापूजनं समाप्तं ॥

आस्यां रात्रौ चंद्रदर्शननिषेधमाह हेमाद्रौ मार्कंडेयः—

सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चंद्रदर्शनं । मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा । इति । तत्रैव **पाराशरोपि**—कन्यादित्ये चतुर्थ्यां तु शुक्ले चंद्रस्य दर्शनं । मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा । इति । अत्र वचनद्वयस्यापि चांद्रभाद्रपद एव तात्पर्यमिति हेमाद्रिः । तत्रैव दोषस्य शान्तये सिंहः प्रसेनमिति पठेत् । सच **विष्णुपुराणे**—सिंहः प्रसेनमवधीत्सिंहो जांबवता हतः । सुकुमारक मारोदीस्तव ह्येषः स्यमंतकः । इति । अत्र विशेषो **निर्णयामृते ब्राह्मे**—वासुदेवोऽभिशप्तस्तु निशाकरमरीचिषु । स्थितश्चतुर्थ्यामाद्यायां मनुष्याणां यतश्च सः । ततश्चतुर्थ्यां चंद्रं तु प्रयत्नाद्वीक्ष्य मानवः । पठेत्पौराणिकं वाक्यं प्राङ्मुखोदङ्मुखोपि वा । इति । प्रयत्नात्पठेदित्यन्वयः । वाक्यं सिंहः प्रसेनेति । आद्यायां भाद्रपदशुक्लचतुर्थ्यामित्यर्थः ।

अथ पंचम्यां **ब्रह्मपुराणे ऋषिपंचमीव्रतं** । नभस्यशुक्लपक्षे तु यदा भवति पंचमी । नद्यादिके तदा स्नात्वा कृत्वा नियममेव च । ब्राह्मणी क्षत्रिया वैश्या शूद्रा वापि वरानने । इत्यादिना व्रतं प्रकृत्य ( ऋषि पंचमी तु मध्याह्नव्यापिनी ग्राह्या । दिनद्वये सत्त्वे परैवेति **हेमाद्रिः** । पूर्वेति **माधवः** । अव्याप्तौ परैव ।) नद्यादितीरे व्रतं संकल्प्य स्नात्वा गृहमागत्य अग्निहोत्रशालायां चतुरस्रां वेदिं कुर्यात् । यथोक्तं **हेमाद्रौ ब्रह्मांडे**—विधाय नित्यकर्मादि गत्वा द्वारवतीं ऋषीन् । स्नापयेदिति । बहुभिर्होमधूमनिर्गमद्वारैर्युक्तत्वात् द्वारवती अग्निहोत्रशालेति व्याख्यातं तेनैव । तां गोमयेनोपलिप्य रंगवल्लीर्विलिख्य पुष्पैरवकीर्य तत्राष्टदर्भग्रंथिषु अरुंधतीसहितान्सप्तऋषीन्पूजयेत् । ततो नाममंत्रैः पूजां विधाय फलपुष्पादिसहितं अर्घ्यं दद्यात् । मंत्रः—कश्यपोत्रिर्भरद्वाजो विश्वामित्रोथ गौतमः। जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः । गृह्णीतार्घ्यं मया दत्तं तुष्टा भवत सर्वदा। इति । एवं पूजां विनिर्वर्त्य कथां श्रृणुयात्।

साच **हेमाद्रौ ब्रह्मांडे**—सिताश्व उवाच । श्रुतानि देवदेवेश व्रतानि सुबहूनि च । सांप्रतं मे समाचक्ष्व व्रतं पापप्रणा-

---

१ चांद्रपद एव.

शनं । ब्रह्मोवाच । शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । ऋषिपंचमीति विख्यातं सर्वपापहरं परं । येन चीर्णेन राजेंद्र नरकं नैव पश्यति । अत्रैवोदाहरंतीममितिहासं पुरातनम् । विदेहेऽभूद्द्विजवर उत्तंको नाम नामतः । तस्य भार्या सुशीला च पातिव्रत्यपरायणा । तस्यामपत्ययुगलं पुत्रो हि सुविभूषणः । स्वधीतवान्सुतस्तस्य वेदान्सांगपदक्रमान् । समानेन कुलीनेन सुता चापि विवाहिता । विवाहितैव सा दैवाद्वैधव्यं प्राप सत्तम । सतीत्वं पालयंती सा आस्ते निजपितुर्गृहे । तस्या दुःखेन संतप्तः सुतं संस्थाप्य वेश्मनि । गंगातीरवनं प्राप्तः सकलत्रस्तया सह । स तत्राध्यापयामास शिष्यान्वेदं द्विजोत्तमः । सुता च कुरुते तस्य पितुः शुश्रूषणं सदा । पितुः शुश्रूषणं कृत्वा परिश्रान्ता कदाचन । निशीथे किल संसुप्ता कृमिराशिरजायत । तां ते तथाविधां दृष्ट्वा विवस्त्रां प्रस्तरस्थितां । शिष्या निवेदयामासुस्तन्मातुः करुणान्विताः । न जानीमो वयं किंचिद्देवि साध्वी तथाविधा । कृमिराशिमयी जाता मातः संप्रति दृश्यते । वज्रपातसदृक्षं[१] तच्छ्रुत्वा शिष्यैरुदीरितं । संभ्रान्तमानसा शीघ्रं तत्समीपमुपागता । तां सा तथाविधां दृष्ट्वा विललाप सुदुःखिता । उरश्च ताडयामास सुतरां मोहमाप च । क्षणेन प्राप्य चैतन्यमुत्थाप्य प्रेतिसृज्य[२] च । समालिंग्य च बाहुभ्यां निन्ये तत्पितुरंतिकं । स्वामिन्कथय मे साध्वी केन दुष्कृतकर्मणा । निशीथे संप्रसुप्तेयं जायते कृमिसंकुला । एतच्छ्रुत्वा ततो वाक्यमृषिर्धर्मपरायणः । ज्ञात्वा निवेदयामास तस्याः प्राग्जन्मचेष्टितम् । ऋषिरुवाच । प्रागियं सप्तमेऽतीते जन्मनि ब्राह्मणी ह्यभूत् । नोत्ससार च भांडेभ्यः संजातापि रजस्वला । अस्यास्तत्पापजातेन जायते कृमिवद्वपुः । रजस्वलायाः पापेन युक्ता भवति सानघे । प्रथमेहनि चांडाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति । तथानया सखीसंगाद्व्रतं दृष्ट्वावमानितं । दृष्टव्रतप्रभावेण जाता द्विजकुलेऽमले । अवमानाद्व्रतस्यास्य कृमिराशिमयीधुना । एतत्ते कथितं सर्वं कारणं कन्यकाकृते । सुशीलोवाच । दर्शनादपि

---

१ समं वृत्तं श्रुत्वा. २ प्रतिपूज्य च.

यस्य स्याद्विप्राणां निर्मले कुले । जन्म युष्मद्विधानां हि जायते ब्रह्मतेजसां । अवज्ञया प्रजायन्ते विग्रहे क्रमिराशयः । महाश्चर्यकरं नाथ तद्व्रतं कथयस्व मे । ऋषिरुवाच । सुशीले शृणु तत्सम्यग्व्रतानामुत्तमं व्रतम् । येन चीर्णेन सहसा पापादस्माद्विमुच्यते । दुःखत्रयाभिघातश्च जायते नात्र संशयः । कल्याणानि च वर्धंते संपदश्च निरापदः । नभस्यशुक्लपक्षे तु यदा भवति पंचमी । नद्यादिषु तदा स्नानं कृत्वा नियममेव च । विधाय नित्यकर्मादि गत्वा द्वारवतीमृषीन् । स्नापयेद्विधिवद्भक्त्या पंचामृतरसैः शुभैः । चंदनागरुकर्पूरैर्विलिप्य च सुगंधिभिः । पूजयेद्विविधैः पुष्पैर्गंधपुष्पादिदीपकैः । समाच्छाद्य शुभैर्वस्त्रैः सोपवीतैर्यथाविधि । ततो नैवेद्यसंपन्नमर्घ्यं दद्याच्छुभैः फलैः । कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः । श्रोतव्यमिदमाख्यानं शाकाहारं प्रकल्पयेत् । स्थातव्यं ब्रह्मचर्येण ऋषिध्यानपरायणैः । अनेन विधिना सम्यग्व्रतमेतत्समाचरेत् । तस्य यज्जायते पुण्यं तच्छृणुष्व समाहिता । सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् । सर्वदानेषु दत्तेषु तदस्य व्रतधारणात् । कुरुते या व्रतं चैतत्सा नारी सुखभागिनी । रूपलावण्यसंयुक्ता पुत्रपौत्रादिसंयुता । इह लोके सदैव स्यात्परत्राप्यक्षया गतिः । व्रतस्यास्य प्रभावेण जातिं स्मरति पौर्विकीं । इति । इति ब्रह्मांडपुराणोक्ता ऋषिपंचमीव्रतकथा समाप्ता ॥

एवं कथां श्रुत्वा । अकृष्टपृथिवीजातं शाकाहारं प्रकल्पयेत् । ततो ब्रह्मचर्येण रात्रिमतिवाह्य द्वितीयदिने पारणं कुर्यात् । एवं सप्त वर्षाणि कुर्यात् । अनेन विधिना सप्त वर्षाणि व्रतमाचरेत् । आदौ मध्ये तथा चांते कुर्यादुद्यापनं बुधः । इति हेमाद्रौ ब्राह्मोक्तेः ।

अथ तत्रैवोद्यापनम् । आचार्यान्वरयेत्सप्त वेदवेदांगपारगान् । प्रतिमाः सप्त कुर्वीत सुवर्णेन स्वशक्तितः । जटिलाः साक्षसूत्राश्च कमंडलुसमन्विताः । संस्थाप्य कलशेष्वेता मृन्मयेष्वव्रणेषु च । स्नापयेद्विधिवद्भक्त्या पंचामृतैर्यथाविधि । एवं पूजां विनिर्वर्त्य अर्घ्यं दद्याद्यथा पुरा । ततो होमं प्रकुर्वीत तिलव्रीहियवक्रमात् । सहस्तोमेति मंत्रेण होमं कुर्वीत वै पृथक् ।

सप्त गाश्चैव दातव्याः स्वलंकारैश्च संयुताः । आचार्यान्पूजयेद्भक्त्या वस्त्रालंकारभूषणैः । अनुज्ञया गुरोः पश्चाद्ब्राह्मणेभ्यो निवेदयेत् । प्रतिमा वस्त्रसंयुक्ता भोजयित्वा यथाविधि । इति ।

भविष्ये त्वयं विशेषः ।—पूर्वस्मिन्दिवसे कुर्यादेकभक्तं समाहितः । प्रातरुत्थाय सुस्नातस्ततो गुरुगृहं व्रजेत् । प्रार्थयेत्तं ममाचार्यो भवोद्यापनकर्मणि । शुचौ देशे समालिप्य सर्वतोभद्रमंडले । अव्रणं सजलं कुंभं ताम्रं मृन्मयमेव वा । संस्थाप्य वस्त्रसंवीतं कंठदेशे सुशोभितं । पंचरत्नसमायुक्तं फलगंधाक्षतैर्युतं । सहिरण्यं समाच्छाद्य ताम्रेण पटलेन वा । वंशमृन्मयपात्रेण यवपूर्णेन चैव हि । आच्छादयेत चैलेन लिखेदष्टदलं ततः । सौवर्णाः प्रतिमाः कार्या ऋषीणां भावितात्मनां । पलेन वा तदर्धेन तदर्धार्धेन वा पुनः । शक्त्या वा कारयेत्तत्र वित्तशाठ्यविवर्जितः । वितानं पंचवर्णं च फलपुष्पसमन्वितं । बध्नीयादुपरि श्रीमत्संभारान्संनिधाय च । मध्याह्ने पूजयेद्भक्त्या ऋषीन्श्रद्धासमन्वितः । कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुंधती । मंत्रेणानेन राजेन्द्र कृत्वा पूजां समाहितः । रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः । कृतनित्यक्रियः प्रातर्जुहुयात्तिलसर्पिषा । वैदिको वापि पौराणः स्वाधिकारान्मनुः स्मृतः । वैदिकः सहस्तोमाः सहछंदस० इति वर्णत्रयविषयः । पौराणः कश्यपोऽत्रिरिति शूद्रविषयः । अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । पुनः पूजां ततः कृत्वा गुरुं संपूजयेद्व्रती । स्वर्णांगुलीयवासोभिः कुंडलामृतभाजनैः । दद्यादेकां सवत्सां च गुरवे गां पयस्विनीम् । पूजयेदृत्विजः सप्त वासोभिर्दक्षिणादिभिः । कलशानुपवीतानि दद्यात्तेभ्यः स्वभक्तितः । आचार्यं च सपत्नीकं प्रणिपत्य क्षमापयेत् । भोजयेद्ब्राह्मणान्शक्त्या दीनानाथान्प्रतर्प्य च । सोपस्करां तां प्रतिमामाचार्याय निवेदयेत् । लब्ध्वानुज्ञां तु भुंजीत इष्टबंधुजनैः सह । उद्यापनविधिः प्रोक्तः सर्वत्रायं फलार्थिनां । इति ।

अथ षष्ठ्यां निर्णयामृते भविष्ये—येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ । इयं पापहरा पुण्या शिवा शान्ता शुभा नृप । स्नानदानादिकं सर्वमस्यामक्षय्यमुच्यते । तस्यां पश्यंति

गांगेयं दक्षिणापथमाश्रितं । ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः । इति । गांगेयः स्कंदः ।

इयमेव चंपाषष्ठीत्युक्तं **हेमाद्रौ स्कांदे** ।—षष्ठी भाद्रपदी शुक्ला वैधृतेन समन्विता । विशाखाभौमयोगेन सा चंपेतीह विश्रुता । देवासुरमनुष्याणां दुर्लभा षष्टिहायनी । कृते त्रेतायां पंचाशद्धायनी द्वापरे पुनः । चत्वारिंशत्कलौ त्रिंशद्धायनी दुर्लभा ततः । इति । **ब्रह्मांडे मल्लारीमाहात्म्ये** एतैरेव श्लोकैरुपक्रम्य—यस्तु पश्यति देवेशं मल्लारिं पूजयत्यपि । सर्वजन्मकृतं पापं दर्शनात्तस्य नश्यति । इत्युक्तं । अस्यां व्रतविशेषो **मदनरत्ने स्कांदे**—पंचम्यां नियमं कुर्यादुपवासस्य च व्रती । चंपाषष्ठीव्रतं कुर्याद्यथोक्तवचनाद्गुरोः । उपवासस्य नियममिति उपवासांगभूतनियममित्यर्थः । ततः प्रभाते विमले दंतधावनपूर्वकं । कृत्वा सम्यग्व्रतं तस्य संकल्पं कुरुते नरः । सम्यग्व्रतं कृत्वेति सांगव्रतकरणशक्तिं निर्धार्येत्यर्थः । निराहारोऽद्य देवेश त्वद्भक्तस्त्वत्परायणः । पूजयिष्याम्यहं भक्त्या शरणं भव भास्कर । इति । ततो मृदा स्नानं विधाय शुक्लतिलैः स्नात्वा । सवितः परमस्त्वं हि परं धाम जले मम । त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा । इति सूर्यं प्रार्थ्य । आपस्त्वमसि देवेश ज्योतिषां पतिरेव च । पापं नाशय देवेश वाङ्मनःकर्मभिः कृतम् । इति स्नानं कृत्वा नित्यं निर्वर्तयेत् । ततश्चैत्यगृहं मौनी पाखंडालापवर्जितः । नानाफलपुष्पादिपरिशोभितमंडपांतश्चतुरस्रं स्थंडिलं कृत्वोपलिप्य पंचरत्नान्वितं रक्तचंदनचर्चितं रक्तवस्त्रयुगच्छन्नं नवमव्रणं कुंभं संस्थाप्य । तदुपरि सौवर्णराजतताम्रान्यतमपात्रे कुंकुमेन द्वादशारमालिख्य पंचामृतादिभिः स्नापितं सरथारुणं सौवर्णं सूर्यं आदित्याय नम इति मंत्रेण कर्णिकायां पूजयेत् । ततः पूर्वादिदलक्रमेण । ॐ तपनाय नमः पूष्णे० भानुमते० भानवे० अर्यम्णे० विश्वचक्राय० अंशुमते० सहस्रांशवे० खनायकाय० सुराय० सूर्याय० खगाय० इति संपूज्य प्रार्थयेत् । जन्मांतरसहस्रेषु दुष्कृतं यन्मया कृतं । तत्सर्वं नाशमायातु दिवाकर तवार्चनात् । इति । ततः सरथमरुणं पूजयेत् । विनतातनयो देवः कर्मसाक्षी तमोनुदः । सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु ।

इति । ततः संपूजयेद्देवमच्युतं तद्रथस्थितम् । अष्टाक्षरेण मंत्रेण गंधपुष्पादिभिः क्रमात् । अष्टाक्षरश्च घृणिमंत्रो बोध्यः। ततः—कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः । जन्ममृत्युजरारोगसंसारभयनाशनः । इत्यनेन सूर्योदयेऽर्घ्यं दद्यात् । ततोऽलंकृतां सवत्सां पयस्विनीं शुक्लां धेनुं पूजयेत् । ब्रह्मणोत्पादिते देवि सर्वपापप्रणाशिनि । संसारार्णवमग्नानां गौर्मातस्त्रातुमर्हसि । सुरूपा बहुरूपाश्च मातरो लोकमातरः । गावो मामुपसर्पंतु सरितः सागरं यथा । या लक्ष्मीः सर्वदेवानां या च वेदेषु संस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । या लक्ष्मीर्लोकपालानां या लक्ष्मीर्धनदस्य च । चंद्रार्कशक्रशक्तिर्या सा धेनुर्वरदास्तु मे । इति । तिलहोमं ततः कुर्यात्सावित्र्याष्टोत्तरं शतं । ततस्तां कल्पयेद्धेनुमर्कों मे प्रीयतामिति । कल्पनं दानार्होपस्करयुक्तत्वेनोपकल्पनं । ततः सोपस्करं भास्करमप्याचार्याय निवेदयेत् । ददामि भानुं भवते सर्वोपस्करसंयुतं । मनोभिलषितावाप्तिं करोतु मम भास्करः । इति । आचार्यः प्रतिगृह्णाति—गृह्णामि भास्कर रवे भवंतं विश्वतोमुखं । मनोभिलषितावाप्तिमुभयोः कर्तुमर्हसि । इति । ततः—सर्वतीर्थमयीं धेनुं सर्वयज्ञमयीं शुभां । सर्वदानमयीं देवीं ब्राह्मणाय ददाम्यहं । इति गां ददाति । गृह्णामि सुरभीं देवीं सर्वयज्ञमयीं शुभां । उभौ पुनीहि वरदे उभयोस्तारका भव । इति प्रतिग्रहमंत्रः । ततस्तु भोजयेद्विप्रान्द्वादशैव स्वशक्तितः । दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य विसर्जयेत् । अवैकल्यं व्रते तस्य शंसेयुर्द्विजसत्तमाः । ततस्तु स्वयमश्नीयाद्द्विजानां शेषमिष्टकं । एवं यः कुरुते चंपां सोऽनंतफलमश्नुते । इति । निर्णयामृते तु विशेषः—शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनं । प्राशनं पंचगव्यस्य अश्वमेधफलप्रदं । इति ।

अथ सप्तम्यां **मुक्ताभरणव्रतं हेमाद्रौ भविष्ये ।** भूमौ लिखितप्रतिमायां—एह्येहि भगवन्देव सर्वपापप्रणाशन । तव पूजां करिष्यामि संनिधौ भव शंकर । इति भवानीशंकरावावाह्य षोडशोपचारैः संपूज्य । नमस्ते भूतनाथाय नमस्ते शशिशेखर । नमस्ते दक्षयज्ञघ्न नमस्ते कामनाशन । नमस्ते पार्वतीदेव्यै चंडिकायै नमोनमः । वरदायै नमस्तेस्तु भद्र-

काल्यै नमोनमः । इति प्रार्थ्य शर्कराघृतमिश्रतंडुलपिष्टमुपहारं निवेद्य एकादशतंतुयुतसूत्रमेकादशग्रंथिविशिष्टं वामहस्ते बद्ध्वा कथां शृणुयात् ।

अथ प्रकारांतरेण पूजा भविष्ये—अथ देशकालौ स्मृत्वा ममेहजन्मनि जन्मांतरे च अनेकदुरितातिशयजन्यसंततिक्षयनिरासार्थं पुत्रपौत्रादिसंततिवृद्ध्यर्थं अमुक्ताभरणसप्तमीव्रतमहं करिष्ये । तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं कार्यं । देव देव महेशान परमात्मन्जगद्गुरो । प्रतिपादितया सोम पूजया पूजयाम्यहं । सहस्रशीर्षेत्यावाहनं । अनेकरत्नखचितं सौवर्णं मणिसंयुतं । मुक्तान्वितं महादेव गृहाणासनमुत्तमं । पुरुष एवेदं इत्यासनं । पाद्यं गृहाण देवेश सर्वतीर्थसमाहृतं । ध्यानगम्य सतां शंभो सर्वेश्वर नमोस्तु ते । एतावानस्येति पाद्यं । इदमर्घ्यमनर्घ्यं त्वममराधीश शंकर । किंकरीभूतया सोम मया दत्तं गृहाण वै । त्रिपादूर्ध्वेत्यर्घ्यं । गंगादिसर्वतीर्थेभ्यः समानीतं सुशीतलं । जलमाचमनीयार्थं गृहाणेशोमया सह । तस्माद्विराळाचमनीयं । मध्वाज्यशर्करामिश्रसुधया परिकल्पितं । शंकरप्रीतये त्वाहं मधुपर्कं निवेदये । मधुपर्कं । वेदोक्तमंत्रेण पंचामृतस्नानं । आदौ पंचामृतस्नानं पश्चाच्छुद्धेन वारिणा । स्नानं कुरु महादेव निजया कांतया सह । यत्पुरुषेणेति स्नानं । उमेश देवदेवेश मया प्रीत्या समर्पितं । वस्त्रयुग्मं शुचिर्दत्तमहतं प्रतिगृह्यतां । तंयज्ञमिति वस्त्रं । उपवीतं सोत्तरीयं नानाभूषणभूषितं । गृहाण सोम विमलं मया दत्तमिदं शुभं । तस्माद्यज्ञात्सर्वहुतः संभृतमिति यज्ञोपवीतं । मलयाचलसंभूतं घनसारं मनोहरं । चंदनं पंचवदन गृहाणेशोमया सह । तस्माद्यज्ञा० ऋचः सामानि गंधद्वारामिति गंधं । अक्षता विमलाः शुद्धाश्चंद्ररश्मिसमप्रभाः । गृहाण देवदेवेश पार्वत्या सह शंकर । अक्षताः । जातीचंपकपुन्नागबकुलैः पारिजातकैः । शतपत्रैश्च कह्लारैरर्चयेऽहमुमापतिं । तस्मादश्वा इति पुष्पाणि । त्रैलोक्यपावनानंत परमात्मन्जगद्गुरो । चंदनागरुकर्पूरधूपं दास्यामि शंकर । यत्पुरुषमिति धूपं । शुभवर्तियुतं सर्पिर्लोलितं वह्निना युतं । दीपमेकमनेकार्कप्रतिमं कल्पयाम्यहं । ब्राह्मणोस्येति दीपं । पायसापूपकृसरं दुग्धाढ्यं

सगुडोदनं । दिव्यान्नषड्रसोपेतं सुधारससमन्वितम् । समर्पयामि देवेश किंकरः शंकराय वै । चंद्रमा मनस इति नैवेद्यं । पुनराचमनं शुद्धं कुरु सोमांबुनामुना । मुखशुद्धिकरं पूरं कृपया त्वं गृहाण वै । पुनराचमनं । कस्तूरिकासमायुक्तं मलयाचलसंभवं । गृहाण चंदनं सोम करोद्वर्तनकं शुभं । इति करोद्वर्तनं । नारिकेलं जंबुफलं नारिंगं कदलीफलं । कूष्मांडं पनसं भक्त्या कल्पितं प्रतिगृह्यतां । फलं । पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतं । कर्पूरादिसमायुक्तं तांबूलं प्रतिगृह्यतां । तांबूलं । हिरण्यगर्भेति दक्षिणा । भक्त्या दीपं प्रयच्छामीत्यनेन नीराजनं । नाभ्या आसीदिति नमस्कारः । सप्तास्यासन्निति प्रदक्षिणा । यज्ञेनयज्ञेति पुष्पाञ्जलिः । प्रार्थना । महादेव जगन्नाथ प्रीत्या पापप्रणाशन । यन्मया च कृता पूजा साधु वाऽसाधु योजिता । ज्ञानतोऽज्ञानतो वापि भवतो विहिता च या । संपूर्णं नय विश्वेशो विमलः कोमलोस्तु मां । इति प्रार्थना । देवदेव जगन्नाथ सर्वसौभाग्यदायक । गृह्णामि दोररूपं त्वां ग्रंथ्येकादशसंयुतं । सूत्रग्रंथिस्थितं नित्यं धारयामि स्थिरो भव । इति दोरकबंधनं । हर पापानि सर्वाणि तुष्टिं कुरु दयानिधे । प्रसन्नस्त्वमुमाकान्त दीर्घायुःपुत्रदो भव । इति जीर्णदोरकोत्तारणं । मंडकान्वेष्टितान्कृत्वा शर्कराज्येन पाचितान् । संख्ययैकादश कृतान्ब्राह्मणाय निवेदयेत् । वेदशास्त्रप्रवीणाय दद्यात्सोमस्य तुष्टये । शंकरः प्रतिगृह्णाति शंकरो वै ददाति च । शंकरस्तारकोभाभ्यां शंकराय नमो नमः । इति वायनदानं । एवं च याजनं कुर्यात्सोमस्य सुखदस्य च । सर्वान्कामानवाप्नोति पुत्रपौत्रैश्च मोदते । इत्थमेके पूजा मंत्रानाहुः ।

अथ कथा । श्रीकृष्ण उवाच । मुनींद्रो लोमशो नाम मथुरायां गतः पुरा । सोऽर्चितो वसुदेवेन देवक्या च युधिष्ठिर । उपविष्टः कथाः काश्चित्कथयित्वा मनोरमाः । ततः कथयितुं भूयः कथामेतां प्रचक्रमे । लोमश उवाच । कंसेन निहताः पुत्रि पुत्रा जाताः पुनः पुनः । मृतवत्सा देवकि त्वं पुत्रदुःखेन दुःखिता । यथा चंद्रमुखी दीना बभूव नहुषप्रिया । पश्चाच्चीर्णव्रता सैव बभूवाऽमृतवत्सका । त्वमेव देवकि तथा भविष्यसि न संशयः । देवक्युवाच । का सा चंद्रमुखी ब्रह्मन्बभूव

नहुषप्रिया । किं च चीर्णं व्रतं पुण्यं तया संतानवर्धनं । सपत्नीदर्पदलनं सौभाग्यारोग्यदं विभो । लोमशउवाच । अयोध्यायां पुरा राजा नहुषो नाम विश्रुतः । तस्यासीद्रूपसंपन्ना देवी चंद्रमुखी प्रिया । तथा तत्रैव नगरे विष्णुगुप्तोऽभवद्विजः । आसीद्भद्रमुखी तस्य पत्नी गुणवती तथा । तयोरासीद्दृढा प्रीतिः स्पृहणीया परस्परं । अथ ते द्वेपि सख्यौ वै स्नानार्थं सरयूतटे । प्राप्ते प्राप्ताश्च तत्रैव वाह्याख्ये नगरांगनाः । वाह्याख्ये इति तटविशेषणं । ताः स्नात्वा मंडलं चक्रुस्तन्मध्येऽव्यक्तरूपिणं । लेखयित्वा शिवं शान्तमुमया सह शंकरं । गंधपुष्पाक्षतैर्भक्त्या पूजयित्वा यथाविधि । प्रणम्य गंतुकामास्ताः पप्रच्छतुर्वरस्त्रियः । आर्याः किमेतत्क्रियते किंनाम व्रतमीदृशम् । ता ऊचुः शंकरोऽस्माभिः पार्वत्या सह पूजितः । वद्धा सूत्रमयं तंतुं शिवस्यात्मा निवेदितः । धारणीयमिदं तावद्यावत्प्राणविधारणं । मुक्ताभरणकं नाम व्रतं संतानवर्धनम् । अस्माभिः क्रियते सख्यौ सुतसौभाग्यदायकं । तासां तद्वचनं श्रुत्वा सख्यौ चैतेपि देवकि । स्नात्वा च समयं तत्र बद्धा दोर्भ्यां च दोरकं । ततस्ताः स्वगृहं जग्मुः स्वसखीभिः समावृताः । कालेन महता तस्यास्तद्व्रतं विस्मृतं शुभं । चंद्रमुख्याः प्रमत्ताया विस्मृतः स च दोरकः । भद्रमुख्यास्तथा भद्रे विस्मृतं सर्वमेव तत् । मृते कैश्चिदहोरात्रैः सा वभूव प्लवंगिनी । भद्रास्या कुक्कुटी जाता व्रतभंगाच्छुभानने । कालेन पंचतां प्राप्ते सखीभावात्सहैव ते । अदेवमातृके देशे जाते गोकुलसंकुले । ब्राह्मणी ब्राह्मणी जाता क्षत्रियी क्षत्रियी तथा । राज्ञो जाया वभूवाथ पृथ्वीनाथस्य वल्लभा । ईश्वरी नाम विख्याता यासीच्चंद्रमुखी पुरा । नाम्ना भद्रमुखी यासीद्भूषणा नाम साभवत् । अग्निमीलस्य सा दत्ता पित्रा तस्य पुरोधसे । अतीव वल्लभा चासीद्भूषणा भूषणप्रिया । भूषिता भूषणवरै रूपेणालंकृता स्वयं । तस्या वभूवुरष्टौ च पुत्राः सर्वगुणान्विताः । मातृवद्रूपसंपन्नाः पितृवद्धर्मशालिनः । सख्यौ ते चैव तद्वच्च जाते जातिस्मरे किल । पुनर्निरंतरा प्रीतिस्तयोरासीद्यथा पुरा । काले बहुतिथे जाते त्यक्ताशा त्यक्तवल्लभा । मध्ये वयसि सा राज्ञी पुत्रमेकमजीजनत् । ईश्वरी रोगिणं मूकं प्रज्ञाहीनं च विस्वरं । तादृशोऽपि महाभागे मृतो-

ऽसौ नववार्षिकः। ततस्तां भूषणा द्रष्टुमीश्वरीं पुत्रदुःखितां। सखीभावादतिस्नेहा पुत्रैश्च परिवारिता। अमुक्ताभरणा भद्रा स्वरूपेणैव भूषिता। तां दृष्ट्वा तादृशीं भव्यां प्रजज्वालेश्वरी रुषा। ततो गृहं प्रेषयित्वा ब्राह्मणीं तां समत्सरा। चिंतयामास सा राज्ञी तस्याः पुत्रवधं प्रति। निश्चित्य चेतसा क्रूरा घातयामास तत्सुतान्। कस्मिंश्चिद्दिवसे सा च तानाहूय गृहं प्रति। भोजनस्य मिषात्तेषामन्नमध्ये विषं ददौ। तत्पुत्रा हर्षवदना भुक्त्वान्नं गृहमागताः। सामर्थ्याद्व्रतराजस्य मातुर्न निधनं गताः। पुनस्तान्प्रेषयामास यमुनाया ह्रदं प्रति। तच्छिक्षिता ह्रदे भृत्या पातयामास पुत्रकान्। जानुदघ्नाऽभवत्सा तु यमुना तत्प्रभावतः। पुनः सा पापचित्ता स्वान्भृत्यानाहूय यत्नतः। हता हताश्च ते पुत्राः पुनर्जीवंत्यनामयाः। तदद्भुततरं दृष्ट्वा सतीमाहूय भूषणा। उपवेश्यासने श्रेष्ठे बहुमानपुरःसरं। अपृच्छद्विनयाविष्टा राज्ञी सा नृपवल्लभा। ब्रूहि तथ्यं महाभागे किं त्वया सुकृतं कृतं। दानं व्रतं तपो वापि शुश्रूषणमुपोषितं। येन ते निहताः पुत्राः पुनर्जीवंत्यनामयाः। तथाहि बहुपुत्रा च जीववत्सा शुभानने। अमुक्ताभरणा नित्यं भर्तुश्चेतस्यवस्थिता। अतीव शोभसे भद्रे विद्युद्धर्मात्यये यथा। भूषणोवाच। शृणु देवि प्रवक्ष्यामि जन्मांतरविचेष्टितम्। किं तद्धि विस्मृतं सर्वं मयोध्यायां कृतं च यत्। आवाभ्यां व्रतवैकल्यं प्रमत्ताभ्यां वरानने। येन त्वं प्लवगी जाता जाताहं कुक्कुटी तथा। तथापि व्रतवैकल्यं त्वया चापल्यतः कृतं। मया तु सर्वभावेन चेतसा ध्याय शंकरं। तिर्यग्योन्यनुतापेन मनोवृत्त्या ह्यनुष्ठितम्। एतद्धि कारणं भद्रे नान्यत्किंचित्करोम्यहं। लोमश उवाच। इत्याकर्ण्य च संस्मृत्य पूर्वजन्मविचेष्टितम्। ईश्वरी च तया सार्धं पुनः सम्यक् चकारह। व्रतस्यास्य प्रभावेण पुत्रपौत्रादिसंभवं। भुक्त्वा च सौख्यमतुलं मृता शिवपुरं गता। तस्मात्त्वमपि कल्याणि व्रतमेतत्समाचर। आरब्धेऽस्मिन्व्रते दिव्ये जीवपुत्रा भविष्यसि। देवक्युवाच। ब्रह्मन्नाख्याहि मे सम्यग्व्रतमेतत्सुखप्रदं। संतानवृद्धिकरणं शिवलोके स्थितिप्रदं। लोमश उवाच। भद्रे भाद्रपदे मासि सप्तम्यां सलिलाशये। स्नात्वा शिवं मंडलके लेखयित्वा तथांबिकां। भक्त्या संपूज्य

समयं कुर्याद्बद्धा करे गुणं। यत्तदेतद्व्रतं पूर्वं त्वया सह मया कृतं। तन्मया चरितं भक्त्या तेनाहं सुस्थिरा सुखी । त्वया नाचरितं सम्यग्दर्पोद्विग्नशरीरया। तेन ते संततिश्छिन्ना राज्येपि सति दुःखिनी। एष प्रभावः कथितो व्रतस्यास्य मया तव। अर्धपुण्यं प्रदास्यामि स्वस्य पुण्यस्य सुव्रते। यावज्जीवं मयात्मा तु शिवस्य विनिवेदितः । इत्येवं समयं कृत्वा ततःप्रभृति दोरकं। सौवर्णं राजतं वापि सौत्रं वा धारयेत्करे । मंडकान्वेष्टिका दद्यादस्वपक्षेऽथवा द्विजे । स्वयं ताश्चैव भोक्तव्या व्रतभंगभयाच्छुभे। पारिते मुद्रिकां चैव हैमीं रौप्यां स्वशक्तितः। ताम्रपात्रोपरि स्थाप्य ब्राह्मणेभ्यो निवेदयेत्। आचार्याय विशेषेण दातव्यं चांगुलीयकं। पुष्पकुंकुमसिंदूरतांबूलांजनसूत्रकैः। सुवासिनीः पूजयित्वा व्रतसंपूर्णहेतवे। एवं तत्पारयित्वा तु व्रतं संततिवर्धनं। सर्वपापविनिर्मुक्ता भुक्त्वा सौख्यं मनोरमम्। संतानं वर्धयित्वा च शिवलोके महीयते। एतत्ते सर्वमाख्यानमाख्यातं व्रतमुत्तमं। कुरु देवकि यत्नेन जीवपुत्रा भविष्यसि। कृष्ण उवाच। इत्युक्त्वा तु मुनिश्रेष्ठस्तत्रैवांतरधीयत। चकार सर्वं यत्नेन यदुक्तं तेन धीमता । व्रतस्यास्य प्रभावेन देवकी मामजीजनत्। तस्मात्पार्थ नरैः कार्यं स्त्रीभिः कार्यं विशेषतः। व्रतं पापहरं भक्त्या सुखसंततिदं सदा। इदं यः शृणुयाद्भक्त्या यश्चापि प्रतिपादयेत् । व्रतमाख्यानसहितं सोपि पापैः प्रमुच्यते। साख्यानकं व्रतमिदं सुखसौख्यकामा या स्त्री चरिष्यति शिवं हृदये निधाय। हित्वा च दुःखमतुलं गतकल्मषौघा सा स्त्री व्रताद्भवति शोभनजीववत्सा। इति श्रीभविष्योत्तरपुराणे कृष्णलोमशसंवादे मुक्ताभरणव्रतकथा॥

अथाष्टम्यां दूर्वाष्टमीव्रतं मदनरत्ने भविष्ये। विष्णुरुवाच। ब्रह्मन्भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः। पूजयेच्छंकरं भक्त्या यो नरः श्रद्धयान्वितः। स याति परमं स्थानं यत्र देवस्त्रिलोचनः। गणेशं पूजयेद्यस्तु दूर्वया सहितं मुने । फलानां सकलैर्दिव्यैर्गंधपुष्पैर्विलेपनैः । गणेशः सदाशिवः । फलानां सकलैः सकलैः फलैरित्यर्थः । ग्राह्यदूर्वागतविशेष आदित्यपुराणे—दूर्वाप्रतानमुच्चैतमुत्तराशाभिगामिनं । पूजयेद्गृहमानीय गंधपुष्पानुलेपनैः । इति। उच्चैतं उच्चस्थानगतं। तत्रैव—

दूर्वांकुरस्थां संपूज्य विधिना यौवनश्रियं । यौवनं स्थिरमाप्नोति यत्र यत्राभिजायते । इति । यौवनावस्थदूर्वांकुरगतां शोभामित्यर्थः । दूर्वां पूज्य तथेशानं मुच्यते सर्वपातकैः । शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तमः । स्थाप्य लिंगं ततो गंधैः पुष्पधूपैः समर्चयेत् । खर्जूरैर्नारिकेलैश्च मातुलिंगफलैस्तथा । पूजयेच्छंकरं भक्त्या दूर्वया विधिवद्द्विज । दध्यक्षतैर्द्विजश्रेष्ठ अर्घ्यं दद्यात्रिलोचने । दूर्वाशमीभ्यां संपूज्य मानवः श्रद्धयान्वितः । विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात् । धनार्थी धनमाप्नोति भार्यार्थी लभते च तां । कृतोपवासः सप्तम्यामष्टम्यां पूजयेच्छिवं । दूर्वासमन्वितं देवं दध्यक्षतफलैः शुभैः । दूर्वापूजनमंत्रः—त्वं दूर्वेऽमृतजन्मासि वंदितासि सुरासुरैः । सौभाग्यं संततिं देहि सर्वकार्यकरी भव । यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले । तथा ममापि संतानं देहि त्वमजरामरं । इति । स्वलिंगमंत्रैरीशानमर्चयेत्प्रयतः शुचिः । स्वलिंगमंत्रैः रौद्रमंत्रैः । ततः संपूजयेद्विप्रान्फलैर्नानाविधैर्द्विज । अनग्निपक्वमश्नीयाद्न्नं दधि फलं तथा । अक्षारलवणं ब्रह्मन्नश्नीयान्मधुरान्वितं । दद्यात्फलानि विप्रेषु दध्याहारः स्वयं भवेत् । प्रणम्य शिरसा देवं दूर्वां शिवमवाप्नुते । एवं यः कुरुते भक्त्या महादेवस्य पूजनं । गणत्वं यात्यसौ ब्रह्मन्मुच्यते ब्रह्महत्यया । एवं पुण्या पापहरा अष्टमी दूर्वसंयुता । चतुर्णामपि वर्णानां स्त्रीजनानां विशेषतः । इति । अत्र च व्रते विद्याभार्यादिपुंगतस्येष्टफलश्रवणात् अधिकारिविशेषेण पुंस्त्वश्रवणाच्च स्त्रीणां चैव विशेषतः इत्युपसंहाराच्च स्त्रियः पुरुषांश्च प्रति काम्यप्रतीतेः । ये स्त्र्यधिकारिकमेवेदं व्रतं न पुरुषाधिकारिकमिति प्रतिज्ञां कृत्वा अत्रकृत्यं मदनरत्ने भविष्यपुराण इत्युपक्रम्य-शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तम इत्युपन्यासं कृतवंतो नमस्तेभ्यः ।

मदनरत्ने भविष्ये त्वन्यत् दूर्वाव्रतमुक्तं—अष्टम्यां फलपुष्पैश्च खर्जूरैर्नारिकेलकैः । द्राक्षामलकपिंडैश्च बदरैर्लकुचैस्तथा । नारिंगैर्जंबुकैराम्रैर्बीजपूरैश्च दाडिमैः । दध्यक्षतैः स्रजोभिश्च धूपैर्नैवेद्यदीपकैः । मंत्रेणानेन राजेंद्र शृणुष्वावहितो मम । त्वं दूर्वेऽमृतजन्मासि देहि त्वमजरामरं । दत्वा पिष्टानि

विप्रेभ्यः फलं च विविधं प्रभो । तिलपिष्टकगोधूमधान्यपिंडानि पांडव । भोजयित्वा सुहृन्मित्रसंबंधिस्वजनांस्तथा । ततो भुंजीत तच्छेषं स्वयं श्रद्धासमन्वितः । इति । इदं च केवल-दूर्वापूजनात्मकं व्रतं स्त्रीणामेव नित्यं । या न पूजयते दूर्वां मोहादिह यथाविधि । त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः । तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैः । सुखसंतान-जननी भर्तुः सौख्यकरी सदा । इति । मदनरत्ने पुराणसमु-च्चयेऽकरणे दोषस्य वीप्सायाश्च श्रवणात् । इदं व्रतं रौहिणसं-ज्ञकदिननवममुहूर्तव्यापिन्यां ज्येष्ठामूलविवर्जितायामष्टम्यां कार्यं। मुहूर्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा । दूर्वाष्टमी तु सा ज्ञेया ज्येष्ठामूलं विवर्जयेत् । इति वचनात् । अत्र च ज्येष्ठामू-लविवर्जितायाः परदिन एव रौहिणव्याप्तौ परा ग्राह्या । दिन-द्वये तद्व्याप्तितदव्याप्त्योः पूर्वदिने च ज्येष्ठामूलयुतायां परैव ग्राह्या । दिनद्वयेऽपि निषिद्धयोगरहितायास्तद्व्याप्तौ तदव्याप्तौ तदेकदेशव्याप्तौ पूर्वैव ग्राह्येत्यभिप्रेतं । श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । इति वाक्ये दूर्वाष्टम्याः पूर्वविद्धात्वनियमात् । यदा तु पूर्वदिने रौहिण्यव्यापिन्यपि निषिद्धनक्षत्रयोगिनी पर-दिने तादृशनक्षत्रयोगरहितापि रौहिणासंस्पर्शिनी तदा यां तिथिं समनुप्राप्येत्यादि आपाद्य साकल्यमादाय परदिन एव रौहिणमुहूर्ते एतद्व्रतं स्त्रीभिरनुष्ठेयं । ऐंद्रर्क्षे पूजिता दूर्वा हन्त्य-पत्यानि नान्यथा । भर्तुरायुर्हरी मूले तस्मात्तां परिवर्जयेत् । इति निषेधस्य गौरीव्रते द्वितीयावेधस्येवानुल्लंघ्यत्वात् । तथा कन्यार्केऽगस्त्योदये च नेदं व्रतं स्त्रीभिः कार्यं । शुक्ला भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी । सिंहार्के एव कर्तव्या न कन्यार्के कदाचन। सिंहस्थे सोत्तमा सूर्येऽनुदिते मुनिसत्तम । इति मदनरत्ने स्कांदात् । अतएव शुक्ले अगस्त्योदये भाविनि संनिहिततत्पूर्वकृष्णाष्टम्यामेतद्व्रतं कार्यमिति हेमाद्रिप्रभृतयः । अनिषिद्धकालस्य सर्वथैवालाभे निषिद्धकालेपि स्त्रीभिर्व्रतानु-कल्पोऽनुष्ठेयः । कर्तव्या चैकभक्तेन ज्येष्ठामूलं यदा भवेत् । दूर्वामभ्यर्चयेद्भक्त्या न वंध्यं दिवसं नयेत् । इति वचनात् । ज्येष्ठामूलग्रहणं सकलनिषिद्धकालोपलक्षणं इति मदनरत्ना-करः । एकभक्तेनेति निषिद्धकालेऽनुकल्पत्वेनाभिपक्वभोजनवि-

धानादनिषिद्धकाले स्त्रीकर्तृत्वेपि दूर्वाव्रते ब्राह्मणेभ्यः पिष्टकादिदानानंतरमनग्निपक्वभोजननियमसिद्धिरित्युक्तं निर्णयामृते। दूर्वामभ्यर्चयेदित्यनंतरोदाहृते वचने चांतर्णीतो ण्यर्थः। ततश्च ब्राह्मणद्वारा पूजां कृत्वा स्वयमेकभक्तं कुर्यादिति मदनरत्नकारः। भाद्रस्याधिमासत्वे तत्रैवेदं व्रतं कार्यं। अधिमासे तु संप्राप्ते नभस्ये तूदये मुनेः। अर्वाग्दूर्वाव्रतं कार्यं परतो नैव कुत्रचित्। इति निर्णयदीपे स्कांदात्। इति दूर्वाव्रतं।

अथास्यामष्टम्यां ज्येष्ठाव्रतमुक्तं कालादर्शे—भाद्रे शुक्लाष्टमी ज्येष्ठानक्षत्रेण समन्विता। महती कीर्तिता तस्यां ज्येष्ठां देवीं प्रपूजयेत्। उपहारैर्बहुविधैरलक्ष्मीविनिवृत्तये। इति। लिंगपुराणेपि—कन्यास्थार्काष्टमी शुद्धा ज्येष्ठर्क्षे महती स्मृता। अलक्ष्मीपरिहाराय ज्येष्ठां तत्र प्रपूजयेत्। इति। अत्र कन्यास्थोक्तिः प्राशस्त्यार्था। तथा भानुवारेणापि प्राशस्त्यमुक्तं स्कांदे—तत्राष्टम्यां यदा भानोर्वारो ज्येष्ठर्क्षमेव च। नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिका। इति। अत्र सेति नक्षत्रमेव परामृश्यते। स्त्रीलिंगं च सा वैश्वदेवीतिवद्विधेयापेक्षं। अतो नक्षत्रमात्रापेक्षे व्रते तस्य खंडत्वे अष्टमीभानुवारयोगिनः प्राशस्त्यार्थमिदं वचनमिति केचित्। तन्न। सा वैश्वदेवीत्यत्र विधेयसमर्पकामिक्षापदसामानाधिकरण्यवत्प्रकृते शेषस्य नीलज्येष्ठापदसामानाधिकरण्याभावात्। इतिकरणशिरस्कत्वेन नीलज्येष्ठेति शब्देन सा प्रोक्तेति वाक्यार्थबोधात्। अतो वारनक्षत्रोभययुक्ता अष्टम्येव सेति परामृश्यते। पूजामंत्राश्च निर्णयामृते—ज्येष्ठायै ते नमस्तुभ्यं श्रेष्ठायै ते नमोनमः। सर्वायै ते नमस्तुभ्यं शांकर्यै ते नमोनमः। इति। अत्र चाष्टम्या दिनद्वये सत्वे या ज्येष्ठानक्षत्रयुता सैव ग्राह्या। मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते। यस्मिन्कस्मिन्दिने वापि ज्येष्ठां देवीं प्रपूजयेत्। इति पुराणसमुच्चयवचनात्। दिनद्वयेपि ज्येष्ठानक्षत्रयोगाभावेप्यष्टम्यामेवेदं कार्यं नतु तद्युक्ततिथ्यंतरेपि। प्रत्याब्दिकं तिथावुक्तं यज्ज्येष्ठादैवतं व्रतम्। प्रतिज्येष्ठाव्रतं यच्च विहितं केवलोडुनि। तिथावेवाचरेदाद्यं द्वितीयं केवलर्क्षतः। इति निर्णयामृते प्रत्याब्दिकव्रतविषये नक्षत्रानादरकथनात्। अष्टमी चोक्तविषये परा ग्राह्या। दिनद्वयेपि नक्षत्रयोगे तु पर-

दिने मध्याह्नादूर्ध्वं नक्षत्रसत्वे परा ग्राह्या । अन्यथा रात्रावपि नक्षत्रयोगे पूर्वैव । यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः । तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे । नवमीसहिता कार्या अष्टमी नात्र संशयः । मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुता । रात्रिर्यस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनं । इति स्कान्दात् । इति ज्येष्ठाव्रताष्टमीनिर्णयः ।

अस्यामेवारभ्य **महालक्ष्मीव्रतं मदनरत्ने स्कांदे**—स्कंद उवाच । सौभाग्यजननं स्त्रीणां दौर्भाग्यपरिकृंतनं । परमैश्वर्यजननं तद्व्रतं ब्रूहि शंकर । श्रीशंकर उवाच । साधु साधु महाबाहो यत्पृष्टोऽहं त्वयानघ । तत्तेऽहं संप्रवक्ष्यामि व्रतानामुत्तमं व्रतं । येन चीर्णेन न नरो दुर्गतिं याति कर्हिचित् । सुभगा दुर्भगा वापि स्त्रियो न विधवा गुह । अस्ति देव्या व्रतं पुण्यं महालक्ष्म्याः षडानन । नारीणां च नराणां च सर्वदुःखापहं तथा । स्कंद उवाच । देव्याश्चरितमाहात्म्यं मर्त्ये केन प्रकाशितं । विधानं कीदृशं ब्रूहि व्रतस्यास्य महाविभो । शंकर उवाच । देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा । वृत्रे सुराणामधिपे देवानां च पुरंदरे । तत्र देवैर्महावीर्यैर्नारायणबलाश्रयात् । असुरा निर्जिताः सर्वे पातालतलमाययुः । केचिल्लंकां गताः केचित्प्रविष्टा वरुणालयं । गिरिदुर्गं समाश्रित्य केचित्तस्थुर्महाबलाः । तत्र कोलासुरो नाम महावीर्यो महाबलः । गोमंतं दुर्गमं दुर्गं गिरिमाश्रित्य निर्भयः । या राजकन्यका लोके रूपवत्यो महागुणाः । आनीय गिरिदुर्गस्थो रमयामास सर्वशः । आनीता न्यक्षिपत्तत्र कामरूपी विहंगमः । एकस्मिन्नेव काले तु आगतौ मुनिसत्तमौ । श्रुतप्रभावसंपन्नौ पुलस्त्यो गौतमः सह । तीर्थयात्राप्रसंगेन श्रुत्वार्तिं च जनस्य तां । कोलासुरेण जनितां कन्याहेतोः शिखिध्वज । तावूचतुर्जनं सर्वमगस्त्योऽस्ति महामुनिः । येन तोयनिधिः पीतो विंध्याद्रिश्च निपातितः । वातापील्वलनामानौ दैत्यौ येन विनाशितौ । तं गच्छामो वयं सर्वे कोलासुरवधाप्तये । इत्यामंत्र्य जनाः सर्वे गत्वा तमभिवाद्य च । ऊचुः सर्वे यथावृत्तं कोलासुरविचेष्टितं । तच्छ्रुत्वा भगवानाह मैत्रावरुणिरग्रणीः । सृष्टिस्थितिविनाशानां कारणं भक्तवत्सलाः । रामस्याद्रौ तप-

स्यंति ब्रह्मविष्णुमहेश्वराः । तिस्रः संध्या मूर्तिमत्यस्तेषां शुश्रूषणे रताः । प्रविश्य ता महालक्ष्मीः शक्तिरूपेण संस्थिता । सर्वशक्तियुता देवी लोकानां हितकाम्यया । इत्युक्त्वा त्वरितं गत्वा कोलासुरवधाप्तये । निवेद्य निखिलं तेभ्यस्तस्थुः प्रांजलयो जनाः । तच्छ्रुत्वा निखिलं तेभ्यो ब्रह्मविष्णुमहेश्वराः । संध्यात्रयं समाहूय वाचं प्रोचुर्जनेश्वराः । वंदारुसुरवृंदेंद्रमौलिमाणिक्यमंडला । हनिष्यति महालक्ष्मीर्युद्धे कोलासुरं रिपुं । भगवत्यो मूर्तिमत्यो दंडशूलादिभिर्घनैः । आयुधैर्विविधैः कृत्वा जयमाप्स्यथ संयुगे । युष्माकं च सहायोऽसौ युष्मत्क्रोधसमुद्भवः । भूतनाथो भूतपूर्वः सहायो वै भविष्यति । इत्युक्त्वा त्वरितं गत्वा रुरुधुः कोलराक्षसं । निरुद्धय च पुरीं देव्यो जगर्जुर्जलदस्वनाः । भिंदंत्यश्च दिशां वृन्दं वर्धयंत्यश्च तत्क्रुधं । कोलासुरोपि तच्छ्रुत्वा प्रोतपपात महासनात् । रोषणः क्रोधरक्ताक्षो मेरोरिव गजांतकः । हस्त्यश्वरथपादातचतुरंगबलान्वितः । निर्ययौ पृतना योद्धुं कालिकाया महाशनिः । सकुंडलशिरस्त्राणः कवची धृतबाणधिः । बद्धगोधांगुलित्राणः क्रुद्धो वृत्र इवापरः । ततो राक्षससैन्यं तद्भूतनाथेन संगतं । देवतारिभिर्होल्काभिर्युद्धं चक्रेऽतिभीषणं । चर्मारवैर्भीमघोषैर्बाणक्रेंकारनिःस्वनैः । निशाननिनदैश्चैव लोकः शब्दमयोऽभवत् । जहि भिंधीति वदतां धावतामितरेतरं । ववृधे समरे घोरं मुष्टामुष्टि कचाकचि । उद्धते राक्षसबले भूतनाथो महाबलः । ममर्द राक्षसानीकं शरैरतिविदारणैः । हतं दृष्ट्वाऽसुरबलं क्रुद्धः कोलासुरो रणे । अभिद्रुत्य गदापाणिस्ताडयामास भैरवं । ययौ मूर्च्छां महावीर्यस्तेनाभिहतमस्तकः । ततो देव्योऽतिवेगेन ह्यभिदुद्रुवुरुद्धतं । त्रिशूलैरभिभिंद्युस्तं पट्टिशैश्च व्यदारयन् । मुष्टिभिस्ताडयामासुर्नखरैश्च व्यदारयन् । पादघातैः समाजघ्नुः सिंहाः करिवरं यथा । सकुंडलशिरस्त्राणो दष्टोष्ठो रक्तलोचनः । कृतभृकुटिचक्रोऽसौ राक्षसस्तां मुहुर्मुहुः । गदया ताडयामास शिरःकंठांसकुक्षिषु । बभंजुस्तां गदां तास्तु हसंत्यः संमदाकुलाः । ततो धनुर्धरो भूत्वा बाणजालमवाकिरत् । तासां शरीरवर्माणि भिंदन्शरपुरोगमैः । ननाद बद्धवैरोऽसौ हृदये चाभिनच्छरैः । ततः क्रुद्धतरास्तास्तु तं पादे जगृहुर्भृशम् ।

आकाशे भ्रामयित्वा तं चिक्षिपुर्गगने क्रुधा । कोलासुरो निपतितो यावदुत्थातुमिच्छति । तावन्निर्गत्य लक्ष्मीस्तं पादाभ्यां प्रत्यपीडयत् । तत्पादपीडितं रक्षो विहत्य नयने भृशं । मुक्तकंठस्वनं कृत्वा ततो मोहमुपेयिवान् । ततो देवाः सगंधर्वा मनुष्या ऋषयस्तथा । अस्तुवन्देवनार्यश्च ननंदुः संमदाकुलाः । देवदुंदुभयो नेदुः पुष्पवृष्टिः पपात ह । दिशः प्रसेदुर्मरुतो ववुर्मंदं स्थिरं जगत् । सुरासुरशिरोरत्नचंचत्पादा महाबलाः । देव्यो दिव्येन यानेन यांति कोलासुरं प्रति । आयांतीं पद्मजां वीक्ष्य मुक्तपादाग्रशृंखलाः । तुष्टुवुः परया भक्त्या राजकन्या मनोमुदा । राजकन्या ऊचुः । वंदारुवीरसुरवृंदकिरीटकोटिरोचिश्छटानिकरकल्पितरत्नदीपं । देवि त्वदीयचरणं शरणं जनानां सेवामहे सकलमंगलवर्धनाय । उत्फुल्लकैरवदलायतलोचनायै गंडोल्लसच्चटुलकुंडलमंडितायै । राकाशशिप्रतिभटाननकोमलायै तस्यै नमः कमललोचनवल्लभायै । सद्भक्तकल्पलतिकां हरिकंठभूषां केयूरहेमकटकोज्ज्वलकंकणांकां । संसारसागरमुखे पततो ममाद्य देहि त्वदीयकरयष्टिमनंगमातः । दृष्टा देवि जनास्त्वयापि विविधा ब्रह्माधिपत्यं गता विष्णोर्वक्षसि या चकार तरला लीलाब्जमालाभ्रमं । क्लेशाग्निप्रहतं त्वदीयचरणद्वंद्वाब्जसेवारतं कारुण्यामृतसारपूरितदृशा मामद्य पश्येश्वरि । मल्लीप्रफुल्लकुसुमोज्ज्वलमध्यभागधम्मिल्लभारजिततारकचित्रिताभ्रा । उत्तप्तहेमनिकषोज्ज्वलकायकांतिर्लक्ष्मीः स्वयं प्रणमतां श्रियमातनोतु । इति स्तुत्वा महालक्ष्मीर्भक्तानामिष्टदायिनी । योगिन्योऽद्य भविष्यध्वमिति तासां वरं ददौ । दृष्ट्वा तास्तु मुदा देवी सारूप्यं तास्वदापयत् । ताभिर्निषेविता देवी वरं वर्यं ददौ मुदा । राजकन्यास्ततः सर्वा मुक्ताः स्वपुरमाययुः । ततःप्रभृति लोकेऽस्मिन्पूज्यास्ताः सर्वकामदाः । ताश्चतुःषष्टियोगिन्यो महालक्ष्मीपरिग्रहात् । नृत्यंति निवहैस्तत्र गीतवादित्रनिःस्वनैः । पुरे देव्यो महालक्ष्म्याः करहाटपुरे निशि । एवंप्रभावा सा देवी विष्णुरामा षडानन । व्रतस्यास्य विधानं च शृणु मत्तो ह्यशेषतः । मासि भाद्रपदे शुक्लपक्षे ज्येष्ठायुताष्टमी । आरब्धव्यं व्रतं तत्र महालक्ष्म्या यतात्मभिः । करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः । तदविघ्नेन मे यातु समाप्तिं त्वत्प्रसादतः । इत्युच्चार्य

ततो बध्वा दोरकं दक्षिणे करे । षोडशग्रंथिसहितं गुणैः षोडशभिर्युतं । ततोऽन्वहं महालक्ष्मीं पूजयेन्नियतात्मवान् । गंधपुष्पैः सनैवेद्यैर्यावत्कृष्णाष्टमीदिनं । तस्मिन्दिने तु संप्राप्ते कुर्यादुद्यापनं व्रती । वस्त्रमंडपिकां कृत्वा माल्यरत्नोपशोभितां । त्रिभूमिकां तु सुश्लक्ष्णां नानादीपैरलंकृतां । चतस्रः प्रतिमाः कृत्वा सौवर्णीस्तत्स्वरूपिणीः । स्नपनं कारयेत्तासां पंचामृतविधानतः । षोडशैरुपचारैश्च धूपदीपादिभिस्तथा । जागरणं च कर्तव्यं गीतवादित्रनिःस्वनैः । ततो निशीथे संप्राप्तेऽभ्युदितेऽमृतदीधितौ । कृत्वा तु स्थंडिले पद्मं सषडंगं प्रपूजयेत् । दद्यादर्घ्यं च रागेण व्रती तस्मै समाहितः । क्षीरोदार्णवसंभूत चंद्र लक्ष्मीसहोदर । पीयूषधाम रोहिण्या सहितोऽर्घ्यं गृहाण मे । जानुभ्यामवनिं गत्वा मंत्रेण प्रार्थयेत्ततः । क्षीरोदार्णवसंभूते कमले कमलालये । प्रयच्छ सर्वकामान्मे विष्णुवक्षस्थलालये । पुत्रान्देहि यशो देहि सौख्यं सौभाग्यमेव च । कालिकालि महाकालि विकरालि नमोस्तु ते । त्रैलोक्यजननि त्राहि वरदे भक्तवत्सले । एकनाथे जगन्नाथे जमदग्निप्रियेऽव्यये । रेणुके त्राहि मां देवि राममातः शिवं कुरु । भूतनाथ जगन्नाथ प्रसीद पुरुषोत्तम । कपालकुंतकाशूलडमरुव्यग्रहस्तक । श्रियं कुरु महालक्ष्मि अश्रियं त्वाशु नाशय । मंत्रैरेतैर्महालक्ष्मीं प्रार्थ्य श्रोत्रिययोषितं । चंदनं तालपत्रं च पुष्पमालादिकं तथा । नवे शूर्पेऽथ लक्ष्माणि क्षिप्त्वा बहुविधानि तु । प्रत्येकं षोडशैतानि पूगपर्णानि चैव हि । तान्यन्येन समास्थाप्य व्रती दद्यात्समंत्रकं । क्षीरोदार्णवसंभूता लक्ष्मीश्चंद्रसहोदरा । व्रतेनानेन संतुष्टा प्रीयतां विष्णुवल्लभा । इंदिरा प्रतिगृह्णाति इंदिरा वै ददाति च । इंदिरा तारकोभाभ्यामिंदिरायै नमोनमः । दत्वाघ्योंपायनादींश्च श्रोत्रियाणां च योषितां । चतस्रः प्रतिमास्तास्तु ब्राह्मणाय निवेदयेत् । एवं कृत्यं स निर्वर्त्य व्रती भोजनमाचरेत् ।

अथ कथा । स्कंद उवाच । केनेदं स्वीकृतं पूर्वं कथमस्मिन्प्रकाशितं । ब्रूहि मे तत्त्वतो देव यद्यहं तव वल्लभः । शंकर उवाच । आसीद्राजा सार्वभौमो मंगलार्ण इति श्रुतः । कुंडिने नगरे रम्ये तस्य पद्मावती प्रिया । तमागतः कश्चिदेकः सेवको ब्राह्मणोत्तमः । अज्ञातनाम्नस्तस्यासौ नाम चक्रे नृप-

स्तदा। तवल्लक इति ख्यातो बभूव द्विजसत्तमः। कदाचिन्मृगयासक्तो भूपालो वनमाविशत्। तत्र वराहादीन्मृगानपि सहस्रशः। क्षुत्तृट्परिगतः श्रान्तो वृक्षमूलमुपाश्रितः। उदकान्वेषणे चारान्प्रेषयामास सर्वशः। वने जलं तु नापश्यन्भ्रमित्वा ते प्रयत्नतः। ते गत्वा तं पतिं प्रोचुर्नात्रांभ इति दुःखिताः। तवल्लकोपि बभ्राम विपिनं तदतंद्रितः। भ्रममाणस्तदापश्यत्तस्मिंश्च वनगह्वरे। रम्यं सरोवरं दिव्यं कुमुदोत्पलमंडितं। तत्रापश्यद्देवकन्या दिव्यरूपा मनोहराः। चार्वंगीश्चारुनयनाः पीनोन्नतपयोधराः। हारकंकणकेयूरनूपुरालंकृताः शुभाः। पूजयंत्यो महालक्ष्मीव्रतरूपं च सादराः। तवल्लकोपि पप्रच्छ किमिदं कथ्यतामिति। स्त्रिय ऊचुः। महालक्ष्मीव्रतमिदं सर्वकामफलप्रदं। क्रियतेऽस्माभिरेकाग्रमनोभिस्तत्र भक्तितः। तवल्लकोपि तच्छ्रुत्वा व्रतं जग्राह भक्तिमान्। तदनुज्ञां गृहीत्वाथ जलमादाय सत्वरः। आजगाम जलं तस्मै दत्वा प्राञ्जलिना सह। जलं पीत्वा नृपस्तस्य दृष्टवान्दोरकं करे। किमिदं दोरकं विद्वन्किं व्रतं कृतवानसि। राज्ञा पृष्टस्तवल्कोपि कथयामास तद्व्रतम्। तच्छ्रुत्वा राजशार्दूलो व्रतं जग्राह भक्तिमान्। तवल्लकेन सहितो राजा स्वपुरमाययौ। पद्मावतीगृहं गत्वा तया रंतुं गतः सह। रममाणाथ सा देवी तेन राज्ञा प्रियेण वै। तं दृष्ट्वा दोरकं हस्ते कुपिता सातिकोपना। कया त्वं वंचितो ब्रूहि कया बद्धः सुदोरकः। मा वादीरन्यथा ह्येतल्लक्ष्मीव्रतमनुत्तमं। इत्युक्तापि प्रियेणासौ हस्ते चिच्छेद दोरकं। ज्वालामालाकुले वह्नौ क्षिप्तवत्यतिकोपिता। हा हा कष्टमिदं पापं कृतं मूढतया इति। निर्भर्त्स्य तां ततो राजा तत्याज वनगह्वरे। सा च हानिं ययौ पापा न च हानिं ययौ नृपः। महालक्ष्म्यपचारेण सारण्ये जलवर्जिते। भ्रममाणा वने तस्मिन्न क्वचिद्वृतिमाप्नुयात्। विचरंती वने तत्र ऋषेः कस्यचिदाश्रमं। ददर्श मृगसंकीर्णं शान्तं कृष्णमृगान्वितं। तत्रापश्यद्वने रम्ये वसिष्ठं मुनिपुंगवं। ववंदे चरणौ तस्य विसंज्ञा दुःखकर्शिता। चिरं ध्यात्वा मुनिस्तस्या ज्ञातवान्दुःखकारणम्। महालक्ष्म्यपचारेण ज्ञातं विज्ञानवज्जनात्। तद्व्रतं कारयामास तया दुःखोपशान्तये। तद्दुःखं तत्क्षणादेव विनष्टमभवत्तदा। पुनश्च मृगयासक्तो भूपालो वनमाविशत्। कंचि-

न्मृगं समाविध्य बाणेनैकेन बाहुमान् । अन्वगच्छन्मृगपदं तस्यां भुवि दयागमः । वरं मुनिं ददर्शाग्रे वसिष्ठं वीतकल्मषं । कृतातिथ्यक्रियो दृष्ट्वा चरंतीं बहिरंतिकात् । हावभावविलासाद्यैर्हरंतीं हरिणेक्षणां । मंदं निर्गत्य नृपतिः प्रोवाच मधुरं वचः । वामोरु कासि कल्याणि किमर्थं चरसे वने । किंनरी मानुषी वा त्वं यक्षिणी चारुहासिनि । किमत्र बहुनोक्तेन भजमानं भजस्व मां । नृपेण तेन भक्त्योक्ता सस्मिता वाक्यमब्रवीत् । पुनर्भजामि चाहं त्वामवैहि महिषीं तव । महालक्ष्म्यपचारेण त्वया हीना वसाम्यहं । मुनींद्रस्याश्रमे रम्ये तरुगुल्मोपशोभिते । ममोपरि कृपाविष्टो महालक्ष्मीव्रतोत्तमं । कारयामास विधिवत्सर्वविघ्नोपशान्तये । तयोक्तं वचनं श्रुत्वा स चोत्फुल्लविलोचनः । ऋषेरनुज्ञामादाय प्रियामादाय सत्वरः । हृष्टपुष्टजनैर्जुष्टं पताकाध्वजशोभितं । पुरं स्वलंकृतं दिव्यं हेमप्राकारशोभितं । प्रविवेश तया सार्धं स पौरैरभिवंदितः । महालक्ष्मीव्रतं भूयस्तया सह चकार ह । भुक्त्वेह भोगानखिलान्पुत्रैः पौत्रैः समावृतः । भूपालः स च भूपोऽभूत्तवल्लोऽमात्यतां ययौ । महालक्ष्मीप्रसादेन संनिधिः सर्वसंपदां । एवंप्रभावा सा देवी नराणामिष्टदायिनी । सर्वपापहरा देवी सर्वदुःखापहारिणी । एवं षोडशवर्षं तु कर्तव्यं व्रतमुत्तमं । या करिष्यति तां भक्त्या स्वयं सिद्धिरुपासते । लोकपालाश्च पुष्णंति ददाति च मनोरथान् । नारी वा पुरुषः करिष्यति मुदा भक्त्या व्रतं यत्नतः सेवंते हरिरुद्रपद्मजसुराः पुष्यंति तस्य प्रियं । तत्पादौ परिरंजयंति मनुजा मौलिप्रभामंडलैस्तस्मिन्नेव कुटुंबिनी वसति सा लक्ष्मीः स्वयं विष्णुना । सद्भक्त्या वाप्यभक्त्या वा कुर्वंतं व्रतमुत्तमं । अंतकाले स्वयं विष्णुः संसारात्परिरक्षति । य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः । न संत्यजति तं लक्ष्मीरलक्ष्मीर्नैव कामयेत् । सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते । इति महालक्ष्मीव्रतकथा समाप्ता ।

इदं च व्रतमष्टम्या द्वैधे यत्र ज्येष्ठायोगस्तत्रारब्धव्यं । तदसंभवे केवलायामपि नवमीयुक्तायां । शुक्लपक्षेष्टमी चैवेति शास्त्रात् । ज्येष्ठायुताष्टमीति स्कांदवचनेन ज्येष्ठायोगस्याष्टम्यां प्राशस्त्यकरत्वज्ञापनात् । प्रथमारंभे विशेषान्तरमुक्तं पुराण-

समुच्चये—श्रियोर्चनं भाद्रपदे सिताष्टमीं प्रारभ्य कन्यामगते च सूर्ये । समापयेत्तत्र तिथौ च यावत्सूर्यस्तु पूर्वार्धगतो युवत्याः । इति । अष्टम्यामित्यर्थः । कन्यामगते सिंहस्थ इत्यर्थः । इदं च प्रारंभान्वयि । युवत्याः कन्यायाः पूर्वार्धे सूर्येऽवस्थिते समापयेदित्यन्वयः । तत्र तिथौ कृष्णाष्टम्यामित्याशयः । समापनांगत्वेन विहितकृष्णाष्टम्यां च दोषचतुष्टयवर्जनमुक्तं **निर्णयामृते पुराणसमुच्चये**—पूजनीया गृहस्थेन अष्टमी प्रावृषि श्रियः । दोषैश्चतुर्भिः संत्यक्ता सर्वसंपत्करी तिथिः । इति । दोषाश्च । त्रिदिने चावमे चैव अष्टमीं नोपवासयेत् । पुत्रघ्नी नवमीविद्धा स्वघ्नी हस्तार्धगे रवौ । इति । अत्र नवमीवेधः हस्तोत्तरदलगतत्वं त्रिदिनत्वं अवमदिनत्वं चेति दोषचतुष्टयं । तथा च—यत्रैकः स्पृशति तिथिद्वयावसानं वारश्चेदवमदिनं तदुक्तमाद्यैः । यः स्पर्शाद्भवति तिथित्रयस्य वारः स त्रिस्पृक्कथितमिदं द्वयं च नेष्टं । इति । परदिने त्रिमुहूर्तनवमीवेधाभावेपि पूर्वदिने सप्तमीयुतैव ग्राह्या । तत्रैव पुष्ययोगे प्राशस्त्यातिशयः । सप्तमीपुष्यसंयुक्ता कर्तव्या चाश्विनाष्टमी । दुर्गोत्सवः सिते पक्षे बहुले श्रीव्रते शुभा । इति **ब्रह्मांड**वचनात् । अत्र च आश्विनशुक्लाष्टम्यां दुर्गोत्सवः कार्य इत्येतावद्विवक्षितं । सप्तमी पुष्यसंयुक्तेति बहुलाष्टम्या एव विशेषणं । सिताष्टम्यां पुष्यनक्षत्रासंभवादित्युक्तं **निर्णयामृते**—सूर्यस्तु पूर्वार्धगतो युवत्या इत्युक्तवचनेन कन्योत्तरार्धनिषेधेनैव हस्तोत्तरार्धनिषेधे प्राप्ते पुनस्तन्निषेधो दोषातिशयज्ञापनार्थः । अतश्च यस्मिन्वर्षे आरब्धस्य महालक्ष्मीव्रतस्योक्तनिषिद्धकाले समाप्तिः प्रसक्ता भवति तस्मिन्वर्षे नास्यारंभो विधेयः । द्वितीयादिप्रयोगे तु सति संभवेऽनिषिद्धकाले एव समापनं विधेयं । असत्यां गतौ तु निषिद्धेपि षोडशवर्षसाध्यस्य व्रतस्य मध्ये त्यागायोगात् । एतद्व्रतसमापने च चंद्रार्घ्यदानविधानेन चंद्रोदयव्रतत्वात्तत्कालव्यापिनी तिथिर्ग्राह्या—चंद्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृता । इति मदनरत्नोदाहृतवचनात् । दिनद्वयेपि तत्कालव्यापित्वे पूर्वैव । कृष्णपक्षेष्टमी चैवेति सामान्यवचनात् । विशिष्याप्यत्र नवमीवेधनिषेधस्य पूर्वमुदाहृतत्वात् । यदा तूत्तरदिने चंद्रोदयोत्तरं मुहूर्तत्रयव्यापिनी सा तदोत्तरस्यामेव समा-

स्तिर्विधेया । पूर्वा वा परविद्धा वा ग्राह्या चंद्रोदये सदा। त्रिमुहूर्तापि सा ज्ञेया परतश्चोर्ध्वगामिनी । इति मदनरत्नाद्युदाहृतवचनात् । अत्र चंद्रोदयादूर्ध्वगामिनी त्रिमुहूर्तापि चेत्तदा परतोपि पूज्येति नवमीविद्धायाः प्रतिप्रसवो विधीयते । न चेत्पूर्वैवेत्यर्थादुक्तं भवति । इति महालक्ष्मीव्रतनिर्णयः ।

अथोद्यापनं । षोडशाब्दे तु संपूर्णे तत उद्यापनं चरेत् । विधिना येन तं विप्र शृणु श्रद्धासमन्वितः। दातव्या धेनुरेकैव स्वर्णशृंगादिसंयुता । आचार्याय सुवर्णं च दत्त्वा पूर्णं भवेद्व्रतम् । यथाशक्त्या सुवर्णं च तथान्नवसनादिकं । द्विजेभ्यः षोडशभ्यश्च प्रदद्याद्वसनादिकं । इति ।

अथ नवम्यां नंदानाम्न्यां कार्यं **निर्णयामृते भविष्योत्तरे**—मासि भाद्रपदे या स्यान्नवमी बहुलेतरा । सा तु नंदा महापुण्या कीर्तिता पापनाशिनी । तस्यां यः पूजयेद्दुर्गां विधिवत्कुरुनंदन । सोऽश्वमेधफलं विंद्याद्विष्णुलोकं च गच्छति । इति ।

अथ दशम्यामारभ्य **दशावतारव्रतं मदनरत्ने भविष्ये**—दशम्यां शुक्लपक्षस्य मासे प्रोष्ठपदे[1] शुचिः । इत्युपक्रम्योक्तं—गृह्णीयाद्धान्यचूर्णस्य स्वहस्तप्रसृतित्रयं । क्रमेण याचयेत्तत्तु पुंसंज्ञं घृतसंयुतं । वर्षे वर्षे दिने तस्मिन्नेवं वर्षाणि वै दश । प्रथमेऽपूपकान्वर्षे द्वितीये घृतपूपकान् । तृतीये पूपकान्सारांश्चतुर्थे मोदकाञ्छुभान् । सोहालकान्पंचमे वै षष्ठेवै खंडवेष्टकान् । सप्तमेऽब्दे कोकरसानर्कपुष्पांस्तथाष्टमे । नवमे कर्णवेष्टांश्च दशमे मंडकाञ्छुभान् । दशात्मनो दश हरेर्दशविप्राय दापयेत् । दशावतारानभ्यर्च्य पुष्पधूपविलेपनैः। मंत्रेणानेन मेधावी हरिमभ्युक्ष्य वारिणा । मत्स्यं कूर्मं वराहं च नारसिंहं त्रिविक्रमम् । रामं रामं च कृष्णं च बौद्धं चैव सकल्किनं । गतोस्मि शरणं देवं हरिं नारायणं प्रभुं । प्रणतोस्मि जगन्नाथं स मे विष्णुः प्रसीदतु । छिनत्तु वैष्णवीं मायां भक्त्या प्रीतो जनार्दनः । श्वेतद्वीपं नयत्वस्मान्मयात्मा संनिवेदितः । एवं यः कुरुते भक्त्या विधिनानेन सुव्रतः । व्रतं दशावताराख्यं तस्य पुण्यफलं शृणु । श्रूयंते यास्त्विमा लोके

1 भाद्रपदे.

पुरुषाणां दश दश । तांश्छिनत्ति न संदेहश्चक्रप्रहरणो विभुः । इति । दशावतारात्मकं हरिं विलेपनैरभ्यर्च्य दशविधं घृतपक्वं वारिणाभ्युक्ष्य मत्स्यमित्यादि मंत्रेण विप्राय दापयेदित्यन्वयः ।

अथैकादश्यां **कटदानोत्सवो** **नृसिंहपरिचर्यायां भविष्योत्तरे**—प्राप्ते भाद्रपदे मासि एकादश्यां सितेहनि । कटदाने भवेद्विष्णोर्महापातकनाशनं । इति । तत्र कर्तव्यं **रामार्चनचंद्रिकायां**—शयन्युत्सवरीत्या तु देवं नीत्वा जलाशयं । कटदानोत्सवं कुर्वे इति संकल्प्य पूजयेत् । देवदेव जगन्नाथ योगिगम्य निरंजन । कटदानं करिष्ये[1]ऽद्य प्राप्ते भाद्रपदे शुभे । अनेककर्णिकावृत्तं दक्षिणांगे प्रकल्पयेत् । महापूजां ततः कृत्वा पूर्ववत्स्वगृहं व्रजेत् । इति ।

अथ **श्रवणद्वादशीव्रतं मदनरत्ने विष्णुधर्मोत्तरे**—श्रीशंकर उवाच । श्रीराम श्रवणोपेता द्वादशी महतीयुता । तस्यामुपोषितः स्नात्वा पूजयित्वा जनार्दनम् । प्राप्नोत्ययत्नाद्धर्मज्ञो द्वादशद्वादशीफलं । इति । अत्र विशेषो **भविष्योत्तरे**—संगमे सरितां स्नात्वा द्वादशीं समुपोषितः । इति । **तथा**—बुधश्रवणसंयुक्ता सैव चेद्वादशी भवेत् । अतीव महती तस्यां कृतं सर्वमिहाक्षयम् । संगमे सरितां स्नात्वा गंगादिस्नानजं फलम् । सोपवासः समाप्नोति नात्र कार्या विचारणा । इति । **विष्णुधर्मोत्तरे** तु—दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे । वस्त्रसंवेष्टितं दत्वा छत्रोपानहमेव च । न दुर्गतिमवाप्नोति गतिमग्र्यां च विंदति । इति । **विशेषोऽत्र भविष्ये**—पंचरत्नसमोपेतं सोपवीतं सुपूजितम् । कलशं स्थापयेदिति शेषः । तस्य स्कंधे सुघटितं स्थापयित्वा जनार्दनम् । यथाशक्त्या स्वर्णमयं शंखशार्ङ्गविभूषितं । स्नापयित्वा विधानेन सितचंदनचर्चितं । सितवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितं । ततः । ॐ नमोभगवते वासुदेवायेति शिरः संपूजयेत् । श्रीधराय० मुखं० । वैकुंठाय० दृशौ० । श्रीपतये० वक्षं० । सर्वास्त्रधारिणे० भुजौ० । व्यापकाय० कुक्षी० । केशवाय० उदरं० । त्रैलोक्यजननाय० मेढ्रं० । सर्वाधिपतये० जंघे० । सर्वात्मने० पादौ० । अनेन विधिना राजन्पुष्पैर्धूपैः

---

1 कुरुष्वाद्य.

समर्चयेत् । प्रभाते विमले स्नात्वा संपूज्य गरुडध्वजं । पुष्पधूपादिनैवेद्यैः फलैर्वस्त्रैः सुशोभनैः । पुष्पांजलिं ततो दत्त्वा मंत्रमेतमुदीरयेत् । नमो नमस्ते गोविंद बुधश्रवणसंज्ञक । अघौघसंक्षयं कृत्वा सर्वसौख्यकरो भव । अनंतरं ब्राह्मणे तं वेदवेदांगपारगे । पुराणज्ञे विशेषेण विधिवत्संप्रदापयेत् । प्रीयतां देवदेवेशो मम संशयनाशनः । अनेन च विधानेन ध्यात्वा पूज्य नरोत्तमः । सर्वं निर्वर्तयेत्सम्यगेकभक्तरतोऽपि सन् । इति । प्रतिमादानांते अर्घ्यदानमुक्तं भक्तिचंद्रोदये—शंखचक्रगदापद्मशरशार्ङ्गविभूषित । गृहाणार्घ्यं मया दत्तं शार्ङ्गपाणे नमोस्तुते । इदं च गोहेमभूदानपूर्वकं कर्तव्यमित्यपि तत्रैवोक्तं । इति श्रवणद्वादश्यां पूजाविधिः ।

विस्तरेण पूजाप्रकारो लिख्यते । वरो वरेण्यो वरदो वराहो धरणीधरः । अपवित्रं पवित्रं मां करोतु भगवान् हरिः । अवाहनं । करकं पूजयिष्यामि सरितां संगमैर्जलैः । पंचरत्नसमायुक्तं तेन तुष्यतु वामनः । आसनं । अतसीपुष्पसंकाशं नीलकृष्णाजिनप्रभं । कुरुक्षेत्रव्रतीजाप्यं वामनं तं भजाम्यहं । पाद्यं । गंगा सरस्वती पुण्या भगवच्चरणच्युता । अच्युतार्घ्यं मया दत्तं गोविंद प्रतिगृह्यतां । द्वादश्यां परया भक्त्या सर्वपापं हरंतु मे । अर्घ्यं । गंगाजलं मयानीतं सुवर्णकलशस्थितं । आचम्यतां हृषीकेश त्रैलोक्याघविनाशन । आचमनं । आपोहिष्ठेति मलस्नानं । ततः पंचामृतस्नानं । गंगासरस्वती पुण्या पयोष्णीनर्मदाजलैः । स्नापितोसि मया देव तथा शांतिं प्रयच्छ मे । शुद्धस्नानं । युवंवस्त्राणीति वस्त्रं । यज्ञोपवीतमिति यज्ञोपवीतं । मलयाचलसंभूतं घनसारं मनोहरं । काश्मीरघनसाराढ्यं चंदनं प्रतिगृह्यतां । चंदनं । हिरण्यरूप इति आभरणं । अक्षताः परमा दिव्याः सर्वकामफलप्रदाः । पूजासंरक्षणार्थाय गृह्यतां परमेश्वर । अक्षताः । मल्लिका शतपुष्पं च जातीपुष्पसमन्वितं । चंपकैर्जलजैर्युक्तं पुष्पं गृह्य नमोस्तु ते । पुष्पं । अथांगपूजा । मत्स्याय नमः पादौ पूजयामि । नारायणाय० गुल्फौ० । केशवाय० जानुनी० । कूर्माय० कटिं० । पद्मनाभाय० नाभिं० । वराहाय० उदरं० । नृसिंहाय० हृदयं० । वैकुंठवासिने कंठं० । दामोदराय० स्कंधौ० । वामनाय०

बाहू० । कृष्णाय० मुखं० । प्रद्युम्नाय० नासिकां० । पुष्कराक्षाय० नेत्रे० । अनंताय० कर्णौ० । माधवाय० ललाटं० । बौद्धाय० केशान्० । कल्किने० शिरः । वामनाय० सर्वांगं० । वनस्पत्युद्भवो दिव्यो नानागंधसुसंयुतः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां । धूपं । अग्निर्ज्योती रविर्ज्योतिस्तथैव ज्योतिषांपते । दीपोयं देव देवेश प्रीत्यर्थं प्रतिगृह्यतां । दीपं । त्वं माता सर्वदेवानां त्वमेव जगतः पिता । मया निवेदितं देव नैवेद्यं प्रतिगृह्यतां । नैवेद्यं । करोद्वर्तनं । पूगीफलैः सकर्पूरैर्नागवल्लीदलैर्युतं । कर्पूरैलासमायुक्तं तांबूलं प्रतिगृह्यतां । तांबूलं । हिरण्यगर्भेति दक्षिणां । इदं फलमिति फलं । अन्नं प्रजापतिर्विष्णुरुद्रेंद्रशशिभास्कराः । अग्निर्वायुर्यमस्त्वष्टा सदा पापं हरंतु मे । दधिभक्तस्थापनं । सिक्योसि दधिभक्तोसि लंवितोसि मया प्रभो । सूत्रेणैव सितोसि त्वं वामनाय नमोस्तु ते । सिक्यपूजनमंत्रः । दधिभक्तघटं पूर्णं करकं जलपूरितं । वामनप्रीणनार्थाय माधवाय ददाम्यहं । घटदानं । वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयं । वामनस्य प्रदानेन वामनस्तृप्यतामिति । प्रतिग्रहमंत्रः । यन्मया मंत्रसंयुक्तं पत्रं पुष्पं फलं जलं । निवेदितं च नैवेद्यं तद्गृहाण जगत्पते । प्रार्थना । अतसीपुष्पसंकाशं पीतवाससमच्युतं । ये नमस्यंति गोविंदं न तेषां विद्यते भयं । मंत्रहीनं० । इति पूजाविधिः ।

अथ कथा । आदित्यपुराणे—सूर्य उवाच । वैश्यः कश्चित्पुरा ब्रह्मन्नासीद्बहुधनो भुवि । हरदत्त इति ख्यातो वणिग्धर्मोपजीवकः । स भांडं विविधाकारं प्रगृह्य बहुवाहनः । अनेकानि सहस्राणि कुंभादीनुपवाहयन् । स तेन सह भांडेन देशांतरमगाद्वणिक् । स गच्छंश्च बहून्देशान्मरुभूमिं वणिक्सह । निर्जलां चैव निर्वृक्षां तप्तवालुकसंयुतां । तत्र दैववशादेव सार्थभ्रष्टो वणिक्पथि । एक एव ययौ मार्गे तृषार्तः श्रमपीडितः । ददर्शाथ महानग्रे पिशाचानां समूहकं । नानावेषधराणां तु भीषणानां स्थितं पथि । तेषां मध्ये महाकायः सुरूपः शुभदर्शनः । पिशाचाधिपतिः श्रीमांस्तैः सर्वैः परिवारितः । वणिक्सोपि तदाश्चर्यं दृष्ट्वांतिकमुपागमत् । भीतभीतस्ततः सोऽथ जगाम पथि चिंतयन् । तेपि गत्वा पिशाचाश्च न्यग्रोधं

सुमहातरुं । शीतच्छायं सुविस्तीर्णं तदादेशादुपाविशन् । प्रविष्टेषु ततस्तेषु एकदेशे स्थितो वणिक् । श्रान्तो बुभुक्षितश्चैव यावदास्ते तरोरधः । तावत्तेषां पिशाचानां यः प्रधानो महान्किल । अंतरिक्षाद्धटो ब्रह्मन्दधिभक्तेन पूरितः । शिक्यारूढः सकरकः सजलः पुरतः स्थितः । तस्याज्ञया ततश्चैकः पिशाचः शीघ्रविक्रमः । सर्वेषां दधिभक्तं तु वटपत्रेष्ववाक्षिपत् । भुक्तेषु तेषु तृप्तेषु पिबत्सूदकमुत्तमं । पिशाचाधिपतिः पश्चाद्बुभुजे वणिजा सह । न च तत्क्षीयते चान्नं न जलं द्विजसत्तम । एवं दिनानि चत्वारि दृष्टवान्महदद्भुतं । पंचमेह्नि ततोऽपृच्छत्पिशाधिपतिं वणिक् । वणिगुवाच । आश्चर्यमेव तद्दिव्यं किमिदं दृश्यते मया । अनुग्रहाय मे सर्वं कथ्यतां यदि मन्यसे । बहुभिर्भुक्तमप्येतदन्नं याति न संक्षयं । पीतं तथैव पानीयं ममाश्चर्यमिदं प्रभो । कश्च त्वं तु महाभाग के चेमे तव किंकराः । एतत्सर्वमशेषेण ब्रूहि त्वं मम पृच्छतः। पिशाचाधिपतिरुवाच । अहमासं पुरा राजा बहुभृत्यो महाधनः । तत्र मे कुर्वता राज्यं बहवो ब्राह्मणा हताः । विधवाश्च कृता नार्यो निर्धनाश्च कृता जनाः । एवं पापप्रवृत्तेन कुर्वता पापमुत्तमं । पुरोहितो मया दृष्टः स्नातो गृहमुपागतः । पुष्पहस्तः सकलशः सजलः समुपोषितः । स च पृष्टो मया विप्रः किमर्थं त्वमुपोषितः । तेनापि कथितं तत्र श्रवणद्वादशीव्रतं । सविधानं तदुद्देशात्कृता सापि मया तदा । तस्येयं कर्मणो व्युष्टिर्वेयं दृष्टास्त्वयानघ । यदन्नं मे तदा दत्तं यज्जलं यच्च कांचनं । फलं प्रभुज्यते तस्य पिशाचत्वेपि नित्यशः । पैशाचमध्ये राज्यं मे प्रसादाद्वामनस्य तु । उपोषणफलं चैव जातिस्मरणमेव च । दधिभक्तप्रदानेन जलान्नं चाक्षयं मम । एते च सर्वे पापिष्ठाः पैशाचत्वमुपागताः । मां वहंति च सेवंते अन्नकामा बुभुक्षिताः । एतत्तु सर्वमाख्यानं तव वैश्यकुलोद्भव । उपकाराय सर्वेषां प्रवक्ष्यामि शृणुष्व तत् । रजतं च मया न्यस्तं सुवर्णं भूगतं पुरा । अभिज्ञानं च ते वच्मि सर्वेषां हितमिच्छता । नगरात्पूर्वदिग्भागे शमीवृक्षादधोगतं । तदानय त्वं गत्वा वै ततः शीघ्रं महामते । त्वया पिंडाः प्रदातव्याः सर्वेषां हितकाम्यया । पिशाचानां मया सार्धं यथा

पापक्षयो भवेत्। तव संपुटिका हस्ते सर्वेषां गोत्रनाम च। उल्लिख्य नाम सर्वेषां कुरुष्वास्मद्धितं परं। श्रुत्वा तस्य वणिग्वाक्यं तथेत्युक्त्वा जगाम ह। राजधानीं ततो गत्वा तदादाय धनं महत्। सोऽगाद्गयां च मेधावी परोपकरणे रतः। ददौ पिंडान्पिशाचानां नामगोत्रानुकीर्तनात्। पिशाचाधिपमारभ्य सर्वेषामनुपूर्वशः। ततस्तु ते विमानस्थास्तमूचुर्वणिजं तदा। वयमुद्धारिताः सर्वे किल्बिषाद्वणिजोत्तम। प्रयामः स्वर्गतिं सर्वे इदानीं त्वत्प्रसादतः। साधुसंगो नहि वृथा कदाचिदिह जायते। एवमुक्त्वा गताः सर्वे विमानैः सूर्यसंनिभैः। दिव्यरूपधराश्चैव द्योतयंतो दिशो दश। हरदत्तोपि तान्सर्वान्समुद्धृत्य जगाम ह। स्वदेशं च स्वनगरं स्वगृहं च विवेश ह। भानुरुवाच। इदं सर्वं मयाख्यातं श्रवणद्वादशीव्रतं। अनुभूतं पुरा राज्ञा मया तेन महात्मना। इयं पापहरा पुण्या सर्वकिल्बिषनाशिनी। कुलं तारयते तेषां पुंसां तु द्विजसत्तम। कृतार्थः स भवेल्लोके श्रवणद्वादशीं नरः। उपोष्य भक्त्या संपूज्य देवदेवं जनार्दनं। गत्वा विष्णुपुरं दिव्यं क्रीडते भोगभुक् पुमान्। पितामहदिनं यावद्दिव्यरूपधरो वशी। यश्चेदं पठते कश्चिच्छृणुयादपि यो नरः। सोपि तद्गतिमाप्नोति विमुक्तः सर्वपातकैः। माघस्नाने प्रयागे च यत्पुण्यं लभते द्विज। तत्पुण्यफलमाप्नोति विमुक्तः सर्वकिल्बिषैः। सर्वयज्ञफलं यच्च तदप्यस्माद्भवेद्ध्रुवं। इत्यादित्यपुराणोक्ता श्रवणद्वादशीव्रतकथा।

अथोद्यापनं। उपोषितो नरो भक्त्या स्थापयेत्प्रतिमां ततः। कृत्वा सौर्णिकं देवं वामनं तमथाव्ययं। गंधैः पुष्पैस्तथा धूपैर्नैवेद्यैर्विविधैरपि। ततस्तस्य समीपे तु दधिभक्तघटं न्यसेत्। करकः पुरतः स्थाप्यो गंधोदकसमन्वितः। छत्रं वस्त्राक्षसूत्रं च सुयष्टिं कुंडिकां तथा। शिक्यं कुंडिकपदार्थः। न्यसेत्तस्य समीपे तु शुचिशुद्धेन तेजसा। नैवेद्यैर्विविधैर्भक्ष्यैः सर्वतस्तं प्रपूजयेत्। पुष्पमंडपिकां कृत्वा जागरं तत्र कारयेत्। शंखतूर्यविनिर्घोषैर्ब्रह्मघोषविमिश्रितैः। ततः प्रभाते विमले स्नात्वा हुतहुताशनः। एवं जागरणं कृत्वा प्रभाते विमले जले। स्नानादिकं विधायाथ होमं कुर्यात्तिलैः सह। पूजांतं पूर्ववत्कृत्वा

वामनस्य समीपतः । दद्यात्तद्द्विजवर्याय वामनं तिलसंस्थितं । वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयं । वामनोऽस्य प्रतिग्राही तेन वामन ते नमः । वामनः प्रतिगृह्णाति वामनो वै ददाति च । वामनस्तारकोभाभ्यां तेन वामन ते नमः। इति दानप्रतिग्रहमंत्रौ । अत्र प्रतिमाग्रत इति उपवासदिने श्रवणद्वादशीव्रतांगत्वेन यस्याः प्रतिमायाः पूजनं कृतं तदग्रे उपवासदिने एवोद्यापनांगत्वेन प्रतिमांतरस्थापनं रात्रौ पूजांतरं विधातुमुच्यते । उपोषित इति चाशक्तस्यापि दिवाहारवर्जनं रात्रिपूजांगत्वेन कथ्यत इति द्रष्टव्यं । एवं जागरणं कृत्वेति श्लोके पूर्वकृतनित्यस्नानादिभिन्नं वक्ष्यमाणहोमांगत्वेन स्नानवासःपरिधानादि विधीयते । उद्यापनांगत्वेन जागरणतुल्यतां दर्शयितुं तदनुवादः । तिलैः सहेति पायसस्याक्षतानां चेति शेषः ।—पौरुषेण तु सूक्तेन पायसं होमयेत्सुधीः । पश्चात्तिलाक्षतांश्चैव पूर्णाहुत्या समन्वितः । दद्यात्तु द्विजवर्याय वामनं विमलं स्थितं । इति शास्त्रांतरसंवादात् ।

अथ प्रयोगः । भाद्रशुक्लश्रवणद्वादश्यां संगमे स्नात्वा नित्यविधिं कृत्वा गृहमागत्य श्रवणद्वादशीप्रयुक्तं विष्णुपूजनं कृत्वा आरब्धश्रवणद्वादशीव्रतांगत्वेनोद्यापनं करिष्य इति संकल्प्य तदंगत्वेन गणेशपूजनाद्याचार्यवरणांतं कुर्याद्यथाविभवं तत्पूजनं च । आचार्यो हेमवामनप्रतिमायामग्न्युत्तारणं कुर्यात् । सायंसंध्योत्तरं पूर्वपूजितप्रतिमाग्रे पुष्पमंडपिकायां सर्वतोभद्रादिमंडलस्थकलशोपरि वामनप्रतिमायां ॐ वामनाय नम इति मंत्रेण सहस्रशीर्षेत्यादिमंत्रसहितेन षोडशोपचारैः संपूजयेत् । तत्र नैवेद्यं बहुविधं प्रकल्पयेत् । पूजांते देवस्य पुरतः दधिघटं गंधोदकपूर्णं करकं छत्रादि चासादयेत् । ततो नानावाद्यघोषैर्ब्रह्मघोषैश्च जागरणं कुर्यात् । सर्वप्रहरेषु नानाविधभक्ष्यनैवेद्यसमर्पणं कुर्यात् । प्रातर्नित्यस्नानहोमौ विधाय पुनः स्नात्वा धौतवासस्तिलकधारणे कृत्वा उद्यापनांगहोमं संकल्पयेत् । आचार्यो यदत्र संस्थितमिति सर्षपविकिरणप्रोक्षणादिदेशशुद्धिं विधाय होमांगत्वेन स्थंडिलेऽग्निं प्रतिष्ठाप्यैशानदेशे वरुणपूजनांतग्रहपूजनं कृत्वाग्नेः पश्चिमदेशे

उपविश्य ग्रहोद्देशे चान्वाधानेऽर्कादिसमिच्चर्वाज्यानि संकीर्त्य पुरुषं नारायणं षोडशपायसाहुतिभिः षोडशतिलाक्षताहुतिभिः शेषेण स्विष्टकृतमित्यादि अष्टपात्रासादनं । प्रणीतानिधानांते आज्यनिर्वापः । गृहसिद्धपायसेन सह तिलैर्यवतंडुलैश्चाज्य-पर्यग्निकरणं । संमार्गांते पायसमग्नावधिश्रित्याभिघार्योदगुद्वा-स्याज्याद्दक्षिणे आसाद्याग्न्यर्चनादि आज्यभागांते यथान्वाधानं त्यागः । प्रायश्चित्तांते वलिदानपूर्णाहुती । ततः पूर्णपात्रनिन-यनसंस्थाजपपरिस्तरणविसर्जनाग्न्यर्चनादि । ततो वरुणकल-शोदकेन यजमानाभिषेकः । आचार्याय धेनुदानं । ततः वाम-नस्य ग्रहाणां चोत्तरपूजांते ताः प्रतिमा आचार्यहस्ते प्रतिपाद्य दशावरब्राह्मणभोजनं संकल्प्येश्वरार्पणं कुर्यात् । इति श्रवण-द्वादशीव्रतोद्यापनं ।

अथोन्मीलिन्यादिषु चतसृषु पूजाविधिर्भक्तिचंद्रो-दये पाद्मे—यस्मिन्मासे महीपाल तिथिरुन्मीलिनी भवेत् । तन्मासनाम्ना गोविंदः पूजनीयो यथाविधि । जातरूपमयः कार्यो मासनाम्ना तु माधवः । स्वशक्त्या विश्वरूपं तु श्रद्धा-भक्तिसमन्वितः । पवित्रोदकसंयुक्तं पंचरत्नसमन्वितं । गंध-पुष्पाक्षतैर्युक्तं कुंभं स्रक्दामभूषितं । पात्रमौदुंबरं कार्यं गोधूमैश्चा-पि पूरितं । तंडुलैर्वा महीपाल स्थापनीयं घटोपरि । स्थापयित्वा तु गोविंदं कुंकुमागरुचंदनैः । दत्त्वा विलेपनं विष्णुः स्थाप-नीयो घटोपरि । प्रदद्याद्वस्त्रयुग्मं तु सोपवीतं तु सोत्तरं । उपानहौ च राजर्षे आतपत्रं शिरोपरि । मार्जनं जलपात्रं च सप्तधान्यं तिलैः सह । रौप्यं चैव सुवर्णेन पलमेकसमं हरेः । धेनुं वा निष्क्रयं वापि दद्यान्माधवप्रीतये । शय्यां सोपस्करां दत्त्वा माधवायाथ भक्तितः । धूपं दीपं च नैवेद्यं फलं पत्रं निवेदयेत् । पूजनीयो महाभक्त्या मंत्रैरेतैस्तु केशवः । तुल-सीपत्रसंयुक्तैः पुष्पैः कालोद्भवैर्हरिं । मासनाम्ना च पादौ तु जानुनी विश्वरूपिणे । गुह्यं तु कामपतये कटिं वै पीत-वाससे । ब्रह्ममूर्तिभृते नाभिमुदरं विष्णुयोनये । हृदयं ज्ञानगम्याय कंठं वैकुंठमूर्तये । उरुगाय ललाटं तु बाहू क्षत्रां-तकारिणे । उत्तमांगं सुरेशाय सर्वांगं सर्वमूर्तये । स्वनाम्ना चायुधादीनि पूजनीयानि भक्तितः । अर्घ्यदानं प्रकर्तव्यं नारि-

केलादिभिः फलैः । शंखोपरि फलं कृत्वा गंधपुष्पाक्षतान्वितं । सूत्रेण वेष्टनं दत्वा दद्यादर्घ्यं विधानतः । देवदेव महादेव महापुरुष पूर्वज । सुब्रह्मण्य नमस्तेस्तु महाकीर्तिविवर्धन । शोकमोहमहापापान्मामुद्धर महार्णवात् । सुकृतं न कृतं किंचिज्जन्मांतरशतैरपि । तथापि मां जगन्नाथ समुद्धर महार्णवात् । व्रतेनानेन देवेश ये चान्ये गतपूर्वजाः । वियोनिं च गताश्चान्ये पापान्मृत्युवशं गताः । ये भविष्यंति येऽतीताः प्रेतलोकात्समुद्धर । आर्तस्य मम दीनस्य भक्तिरव्यभिचारिणी । दत्तमर्घ्यं मया तुभ्यं भक्त्या गृह्ण गदाधर । दत्वार्घ्यं धूपदीपाद्यैर्नैवेद्यैर्हविरुद्भवैः । स्तोत्रैर्नीराजनैर्गीतैर्नृत्यैः संतोषयेद्धरिं । वस्त्रदानैश्च गोदानैर्भोजनैस्तोषयेद्गुरुं । यथा तथापि दातव्यं प्रीतो भवति वै गुरुः । अकुर्वन्वित्तशाठ्यं च व्रतं कार्यं तु वै कलौ । तुष्ट्यर्थं पद्मनाभस्य कार्यं जागरणं तथा । निशांते व्रतकृत्यं तु गुरवे तन्निवेदयेत् । गुरोर्निवेदिते भूप परिपूर्णं भवेद्व्रतं । कृत्वा दिनत्रयं कर्म भोजनं ब्राह्मणैः सह । कर्तव्यं भूपशार्दूल दिनं नेयं कथानकैः । अनेन विधिना यस्तु कुर्यादुन्मीलिनीव्रतं । कल्पकोटिसहस्राणि वसते विष्णुसंनिधौ । इति ।

अथ वंजुलीव्रतं । द्वादश्यां तु निराहारः पारणं वा परेऽहनि । धर्मार्थकाममोक्षार्थं करिष्ये वंजुलीव्रतं । इति नियममंत्रः । स्नात्वा नद्यां नदे वाथ तडागे वा गृहेपि वा । कृत्वा स्नानं गृहे वापि नित्यकर्म समाचरेत् । माषकेन सुवर्णस्य कृत्वा नारायणीं तनुं । रत्नगर्भं घटं कृत्वा ताम्रपात्रोपरि स्थिते । आतपत्रं तु मायूरं वैणवं वा स्वशक्तितः । उपानहौ प्रकर्तव्यौ कांस्यपात्रं घृतान्वितं । गोधूमैः पूरयेत्पात्रं स्थाप्यदेवं न्यसेत्ततः । वस्त्रयुग्मेन संवेष्ट्य कार्यं चैव विलेपनं । अर्चयेदुदकुंभस्थं पुष्पमालाभिवेष्टितं । ततः पूजा प्रकर्तव्या सुगंधैः कुसुमैः शुभैः । नारायणाय पादौ च जानुनी केशवाय च । ऊरुभ्यां माधवायेति गुह्यं कामाधिपाय च । गोविंदाय कटिं पूज्य नाभिं माधवमूर्तये । उदरं विश्वरूपाय वक्षः कौस्तुभधारिणे । वैकुंठाय नमः कंठं चक्षुषी ज्योतिरूपिणे । सहस्रशीर्षे तु शिरः सर्वांगं विश्वरूपिणे । आयुधानि स्वनाम्नैव एवं देवार्चने विधिः । शुभेन नारिकेलेन दद्यादर्घ्यं विधानतः । शंखे कृत्वा तु पानीयं साक्षतं

कुसुमान्वितं । नारायण जगन्नाथ पीतांबर जनार्दन । मामुद्धर महाविष्णो नरकाब्धेः सनातन । सप्तकल्पकृतं पापं यत्कृतं मम पूर्वजैः । अनेनार्घ्यप्रदानेन सकलं तत्प्रणश्यतु । मुक्तिं प्रयांतु पितरो मया सह जगत्पते । मया दत्तार्घ्यदानेन ये चान्ये पितरो गताः । व्रतं च त्वत्समीपे तु देवदेव जनार्दन । कृतं संपूर्णतां यातु वंजुलीसंभवं मम । दशमासं मया देव यत्कृतं द्वादशीव्रतं । अज्ञानादथवा ज्ञानात्परिपूर्णं तदस्तु मे । अनेन विधिना सम्यग्दत्वार्घ्यं मधुसूदने । वसेत्कल्पसहस्रं तु विष्णुलोके महेश्वर । अग्निष्टोमसहस्रेभ्यो वाजपेयो विशिष्यते । वाजपेयसहस्रेभ्यो पौंडरीको विशिष्यते । पौंडरीकसहस्रेभ्यः सौत्रामणिर्विशिष्यते । सौत्रामणिसहस्रेभ्योऽप्यश्वमेधो विशिष्यते । अश्वमेधसहस्रेभ्यो राजसूयो विशिष्यते । राजसूयसहस्रेभ्यो वंजुली चाधिका स्मृता । वंजुलीति कृतोच्चारे कलिकाले तु मानुषैः । जन्मायुतसहस्रस्य कृतपापस्य संक्षयं । दत्वा पूजार्घदानं च धूपनैवेद्यदीपकं । कृत्वा नीराजनं विष्णोर्गुरुं संपूजयेत्ततः । दद्याद्वस्त्राणि गां भूमिं धान्यं चैव सदक्षिणं । कुर्याद्वित्तानुसारेण संपूर्णार्थं व्रतस्य हि । संतुष्टे तु गुरौ विष्णुः प्रीतो भवति नान्यथा । गुरुं संपूजयेत्तस्मात्तुष्ट्यर्थं चक्रपाणिनः । रात्रौ तु जागरः कार्यः श्रोतव्या वैष्णवी कथा । गीता नामसहस्रं तु पुराणं शुकभाषितं । पठनीयं प्रयत्नेन हरेः संतोषकारणात् । प्रत्येकं गोसहस्रं तु पठतां शृण्वतां फलं । गीतं नृत्यं तु वादित्रं कारयेत्पुरतो हरेः । दातव्यं गुरवे सर्वं प्रभाते देवतादिकं । क्षमापयित्वा देवेशं गुरुं चैव विशेषतः । कृत्वा नैमित्तिकं सर्वं भोक्तव्यं बंधुभिः सह । इति ।

इदं व्रतं द्वादश्यां स्वल्पश्रवणयोगेपि कार्यं । नतूपवासकर्मकालभूताहोरात्रव्याप्तिरावश्यकी ।—तिथिनक्षत्रयोर्योगो योगश्चैव नराधिप । द्विकलो यदि लभ्येत स ज्ञेयो ह्याष्टयामिकः । इति नारदीयवचनात् । योगः शिवरात्र्यादौ शिवयोगादिः ।—द्वादशी श्रवणस्पृष्टा कृता पुण्यतमा तिथिः । इति विशेषवचनेन सामान्यवाक्यस्य श्रवणद्वादशीविषयत्वलाभाच्च । तिथिद्वैधे यत्रैकत्रैव श्रवणयोगस्तदा न संदेहः । पूर्वदिने एकादशीविद्धाया आधिक्ये दिनद्वयेपि श्रवणयोगे पूर्वैव ग्राह्या । द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदा । स एव वैष्णवो योगो विष्णु-

शृंखलसंज्ञकः । उपोष्य विधिवत्तत्र नरः संक्षीणकल्मषः । इति मात्स्यवचनात् । श्रवणस्य तिथिद्वयस्पर्शे तु प्राशस्त्यातिशयः ।—संस्पृश्यैकादशीं राजन्द्वादशीं यदि संस्पृशेत् । श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति ।

अत्र रात्रेः—प्रथमपादे चेच्छ्रवणं हरिवासरे । तदा पूर्वामुपवसेत्प्रातर्भाते च पारणं । इति दिवोदासीयवचनात् । रात्रौ द्वितीयप्रहरादौ तिथ्याः श्रवणयोगेपि परदिन एव व्रतं कार्यमिति केचित् । रुद्रेण द्वादशी युक्तेति युग्मवाक्येन युग्मांतरगततिथेरिव प्रकृतद्वादश्या अपि पूर्वविद्धायाः प्राप्ताया वक्ष्यमाणबृहन्नारदीयवचसा प्राप्तापवादाया विष्णुशृंखलवाक्येन प्रतिप्रसवे यथाप्राप्ति एकादशीविद्धद्वादशीप्रापणेन रात्रियोगस्य प्राप्त्यसंभवे सति रात्रिप्रथमयामगतश्रवणैकादशीयोगस्य पूर्वदिनगतद्वादश्युपवासनिमित्तत्वं प्रापयतोक्तवचसा यामांतरगततद्योगस्य तन्निमित्तत्वाभावप्रदर्शनात् । अहनि च कर्मसाकल्यमिति षाष्ठन्यायेन विशेषविधिं विना रात्रेः कर्मकालत्वाभावाच्च । यदा तु द्वादश्यां न श्रवणः तदैकादश्यामेव श्रवणयुक्तायामेतद्व्रतं कार्यं । सन्नपि द्वादश्यां बुधयोगो नादर्तव्यः । यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् । एकादशी तदोपोष्या पापघ्नी श्रवणान्विता । इति नारदीयात् । एकादशी यदा शुक्ला श्रवणेन समन्विता । विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा । इति भविष्योत्तराच्च । नचात्र व्रतांतरविधिः । श्रुतिकल्पनाप्रसंगात् । ततश्च श्रवणद्वादश्युक्तप्रकारेणैव दानादि कर्तव्यं । विद्धाधिकायामेकादश्यां विद्धायाः श्रवणयोगे तत्रैव श्रवणद्वादशीव्रतं कार्यं । दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथिः । श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा । इति वह्निपुराणात् । येषां तत्रैवैकादशीव्रतप्रसक्तिस्तेषां तंत्रेण व्रतद्वयसिद्धिः । अन्येषामुपवासद्वयं । यदा शुद्धाधिका द्वादशी दिनद्वयेपि श्रवणयोगः पूर्वदिने चोदयकाले श्रवणाभावः तदोत्तरैव ग्राह्या—उदयव्यापिनी ग्राह्या श्रवणद्वादशी व्रते । इति बृहन्नारदीयवचनात् । पूर्वत्रोदयकालीनश्रवणयोगे तूक्तविषये पूर्वैव ग्राह्या । कृत्स्नकर्मकालव्यापित्त्यां सनक्षत्रायां निर्णायकवचनानपेक्षणात् । यदा एकादश्युपवासद्वितीयदिने श्रव-

णयोगस्तदा शक्तेनोपवासद्वयं कार्यं । एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत् । न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिः । इति भविष्योक्तेः । यस्त्वतीतवर्षे स्वीकृतश्रवणद्वादशीव्रत उपवासद्वयेऽसमर्थश्च भ्रमादुक्तविषये कृतैकादशीव्रतः श्रवणद्वादश्युपवासे सामर्थ्याभावमनुभवति स तु विहितपूजादानादिकं कृत्वा पारणं कुर्यात् ।—द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि । उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिं । इति मात्स्यवचनात् । उपवासांगत्वेन प्राप्तपूजायाः पुनर्विधानस्योपवासकार्यं तद्विधिपरत्वौचित्यात् । एकादश्याः पूर्वमेतादृशपुंसः उपवासद्वयसामर्थ्यनिर्णये श्रवणद्वादश्युपवास एवोचितः ।—उपोष्य द्वादशीं पुण्यां वैष्णवर्क्षेण[1] संयुतां । एकादश्युद्भवं पुण्यं ततः प्राप्नोत्यसंशयं । इति नारदीयात् । इदं च व्रतं नित्यं काम्यं च । उपवासमकृत्वा तु नरो नरकमृच्छति । इति श्रवणद्वादशीप्रकरणे वामनपुराणात् ।—शृणु राजन्परं काम्यं श्रवणद्वादशीव्रतं । इति गौडनिबंधोदाहृतवचनात् ।

अथ पारणानिर्णयः । उभयांते पारणं मुख्यः पक्षः । तिथिनक्षत्रनियमे तिथिभांते च पारणं । अतोऽन्यथा पारणायां व्रतभंगमवाप्नुयात् । इति हेमाद्रौ स्कान्दात् । अन्यतरांते गौणः पक्षः ।—तिथिनक्षत्रसंयोगे उपवासो भवेद्यदा । पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः । इति तत्रैव नारदीयात् । यत्तु मदनरत्ने—याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः[2] । ऋक्षांते पारणं कुर्याद्विना श्रवणरोहिणीं । इति वचनात्केवलनक्षत्रांतपक्षो न युक्त इत्युक्तं तदसत् । भांते कुर्यात्तिथेर्वापीत्यनेकवचनैर्जयंतीपारणायां विहितस्य केवलनक्षत्रांतपक्षस्य पर्युदासासंभवात् । रोहिण्यंशे उभयांतपक्षमुख्यतात्पर्यस्य वर्णनीयत्वेन तत्साहित्येन श्रवणेऽपि तथैव वक्तुमुचितत्वात् । अतएव विष्णुशृंखलयोगे पूर्वदिने तंत्रेण कृतोपवासद्वयस्य परदिने नक्षत्राद्द्वादश्याधिक्ये नक्षत्रमात्रमतिक्रम्य द्वादश्यां पारणमुचितं । तथा सति व्रतद्वयस्यापि साद्गुण्यात् । यदा तु तिथ्यपेक्षया नक्षत्राधिक्यं पारणदिने भवति तदा एकादशी-

१ श्रवणर्क्षेण. २ योगतः.

व्रतपारणायां द्वादश्या लंघने दोषाच्छ्रवणद्वादशीव्रतपारणायास्तूभयांतेन्यतरांते कर्तव्यत्वाद्विरोधप्रसक्तिः। तस्यां च सत्यामेकादशीव्रतप्रकरणे हेमाद्र्युदाहृतैः—दशम्यामेकभक्तश्च मांसमैथुनवर्जितः। इत्यादिवचनैरेकादशीव्रतस्य त्रिदिनसाध्यत्वावगत्या पूर्वप्रवृत्तत्वात्तंत्रिणस्तंत्रमध्यपातितया श्रवणद्वादशीव्रतं पुरोडाशवत्प्रसंगीति तंत्रिप्रसंगिनो विरोधे तंत्रिणो बलवत्त्वेन द्वादश्यामेव पारणं कार्यं। यदा तु एकादश्यामेव श्रवणयोगः न द्वादश्यां तदोक्तरीत्यैकादश्यामेव व्रतद्वये तंत्रेणानुष्ठिते पारणादिने निःसंदेहं पारणानुष्ठेया। एकादश्याः श्रवणयोगाभावे तु अनुष्ठितैकादशीव्रतस्य अस्वीकृतश्रवणद्वादशीव्रतस्य च पारणायां यद्यपि आभाकासितपक्षेष्विति श्रवणयोगो निषिद्धस्तथापि तत्संकोचः श्रुतेश्च मध्ये परिवर्तमेतीत्युदाहृतवचनेन बोध्यः। सोपि तादृशमध्यभागात् द्वादश्याधिक्येन द्वादश्यां पारणासंभवविषयः। द्वादश्यपेक्षया मध्यभागस्याधिक्ये तु सावकाशनिषेधात्सावकाशविधेर्बलवत्त्वेन द्वादश्यामेव पारणमिति शयनीप्रकरणोक्त एव निर्णयोऽनुसंधेयः। इति **पारणानिर्णयः।**

इहैव श्रवणद्वादशीप्रसंगादन्या अपि **महाद्वादश्यो** लिख्यंते। **ब्रह्मवैवर्ते**—उन्मीलिनी वञ्जुली च त्रिस्पृशा पक्षवर्धिनी। जया च विजया चैव जयंती पापनाशिनी। द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज। तिथियोगेन जायंते चतस्रश्चापरास्तथा। नक्षत्रयोगात्प्रबलं पापं प्रशमयंति ताः। एकादशी तु संपूर्णा वर्धते पुनरेव सा। उन्मीलिनी मुनिश्रेष्ठैः कथिता पापनाशिनी। अत्र वर्धत इति एकादशीवृद्धियुक्ता द्वादशीत्यर्थो बोध्यः। द्वादश्योऽष्टावित्युपक्रमात्।—द्वादश्यामुपवासस्तु द्वादश्यामेव पारणं। वंजुली नाम सा प्रोक्ता हत्यायुतविनाशिनी। अरुणोदय आद्या स्याद्द्वादशी सकलं दिनं। अंते त्रयोदशी प्रातस्त्रिस्पृशा सा प्रकीर्तिता। अरुणोदयः सूर्योदयः।—एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। अहस्पृक्तदहोरात्रमिति **पाद्मे** तिथित्रयस्यैकाहोरात्रप्रवेशेन त्रिस्पृशत्वप्रतीतेः।—कुहूराके यदा वृद्धिं प्रयाते पक्षवर्धिनी। विहायैकादशीं तत्र द्वादशीं समुपोषयेत्। अत्र विहायेति श्रव-

णद्वादश्यामिवोपवासद्वयासमर्थविषयं । पुष्यश्रवणपुष्याद्यरोहिणीसंयुतास्तथा । उपोषिताः [1]समफला द्वादश्योष्टौ पृथक्पृथगिति । अत्र मासांतरगताया अपि श्रवणद्वादश्याः उक्तश्रवणद्वादशीवदेव निर्णयः । इतरनक्षत्रयुतासु तत्सूर्योदयादारभ्यापरसूर्योदयपर्यंतं नक्षत्रयोगो मुख्यः कल्पः । उपवासस्याहोरात्रसाध्यत्वेन तथा सत्येव कर्मकालव्याप्तिलाभात् सूर्योदयप्रभृत्यस्तमयपर्यंतत्वमनुकल्पः ।—प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकं । इति संकल्पकालव्याप्तिलाभात् । नक्षत्रसाध्यव्रतेषु नक्षत्रस्यास्तमयसंबंधेन प्राशस्त्यप्रसिद्धेश्च श्रवणरोहिणीवत्स्वल्पकालस्य नक्षत्रयोगस्य प्राशस्त्यज्ञापकशास्त्रांतरादर्शनाच्च । पारणे तु—तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । इत्यादि सामान्यवचनेभ्यः उभयांतेऽन्यतरांते वा । अत्र श्रवणद्वादशीव्यतिरिक्ताः काम्याः । एकादशी द्वादशीव्रतसंनिपातनिर्णये समयहेमाद्रौ—एकादश्युपवासव्रतं नित्यं द्वादश्युपावासव्रतं काम्यमन्यदेवेति स्पष्टमभिधानात् । तथा निर्णयांतेपि तत्रैवोक्तं श्रवणद्वादशी व्यतिरेकेण द्वादश्यां यावज्जीविककाम्योपवासविधानमिति । उक्तं च दीपिकायां एवमभीष्टकाम्युपवसेदष्टौ महाद्वादशीरिति । व्याख्यानं चैतद्विवरणे अभीष्टं कामी तत्तदुक्तकामाभिलाषीति । यत्तु हेमाद्रिणैवोदाहृतं ।—द्वादश्योऽष्टौ समाख्याता याः पुराणविचक्षणैः । तासामेकापि विहता हंति पुण्यं पुराकृतं । इति । तत्र विहतेत्यारंभोत्तरं विघ्नं प्रापितेत्यर्थः । हंत्यर्थस्य प्रतियोगिसत्तासापेक्षत्वात् । तथासत्येव पूर्वोदाहृताया यावज्जीविककाम्यत्वोक्तेः संभवात् । अत्राहुरभियुक्ता अपि—अन्यासु महतीस्वृक्षुयुतासु द्वादशीषु च । दिने रात्रौ च तत्सत्वं मुख्यं केचिद्यदा तदा । ऋक्षयोगेऽपि पूज्यत्वं जयंतीवत्प्रचक्षते । तिथियुक्तास्वसंदेहः काम्या अष्टावपि त्विमाः । इति । इति प्रसंगान्महाद्वादशीनिर्णयः ।

अस्यामेव भाद्रपदशुक्लद्वादश्यां वामनजयंतीव्रतं कार्यं । तत्र वामनोत्पत्तिरुक्ता श्रीभागवते—श्रोणायां चैव द्वादश्यां मुहूर्तेऽभिजिति प्रभुः । ग्रहनक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणं । द्वादश्यां सविताऽतिष्ठन्मध्यंदिनगतो नृप । विजया नाम सा

१ सफलदा.

प्रोक्ता यस्यां जन्म विदुर्हरेः । इति । यत्तु हेमाद्रौ—एकादशी यदा च स्याच्छ्रवणेन समन्विता । इत्युपक्रम्य—अथ काले बहुतिथे गते सा गुर्विणी भवत् । सुषुवे नवमे मासि पुत्रं वामनरूपिणं । ईति उक्त्वा । एतत्सर्वं समभवदेकादश्यां युधिष्ठिर। इति एकादश्यां वामनजन्मोक्तं । तत्रापि—द्वादश्यास्ते विधिः प्रोक्तः श्रवणेन समन्वितः । इत्युपक्रमात्—पूर्वमेव समाख्याता द्वादशी श्रवणान्विता । इत्युपसंहाराच्च द्वादश्या एव तात्पर्यविषयत्वेन मुख्यत्वप्रतीतेः। एकादशी यदा च स्यादित्यत्र यदाशब्देन एकादश्या एव श्रवणयोगस्य निमित्तत्वप्रतीतेश्च द्वादश्याः श्रवणयोगाभावे श्रवणयुक्तैकादश्याः अनुकल्पत्वेन विधिपरत्वमस्त्येवेति बोध्यं।तिथिद्वयेपि नक्षत्रयोगाभावे तु द्वादश्यामेवोपवासः । तस्या मुख्यत्वप्रतीतेः । नक्षत्रयोगस्य प्राशस्त्यार्थत्वात् । मध्याह्नव्यापिनी चेयं तिथिर्ग्राह्या । मध्याह्ने जन्मश्रवणेन तस्यैव कर्मकालत्वात् । दिनद्वये मध्याह्नव्याप्तौ तदव्याप्तौ च एकादशीयुक्तैव ग्राह्या । एकादशी यदा च स्यादित्यादिसामान्यवचनेभ्यः पारणा तु जयंतीवदेवोभयांतेऽन्यतरांते वा कार्या । वामनायार्घ्यप्रदानमुक्तं भक्तिचंद्रोदये—ततः प्रभाते विमले अर्घ्यं दद्याद्विचक्षणः । नारिकेलेन शुभ्रेण पश्चादेवं प्रपूजयेत् । वामनाय नमस्तुभ्यं क्रांतं त्रिभुवनं यतः । गृहाणार्घ्यं मया दत्तं वामनाय नमोनमः । इति । इति वामनजयंतीनिर्णयः ।

अस्यामेव राज्ञः शक्रध्वजोत्थापनं विहितं निर्णयामृते मात्स्ये—द्वादश्यां च सिते पक्षे मासि भाद्रपदे तथा । शक्रमुत्थापयेद्राजा विश्वनक्षत्रसंयुजि । कन्यार्के शुक्लद्वादश्यां विश्वादिक्र्क्षसंयुजि । शक्रमुत्थापयेदेवं तद्व्रतं च महीपतेः । इति । विश्वादिक्र्क्षं वैश्वदेवमषाढानक्षत्रं ।

अस्यामेव द्वादश्यां रात्रौ भगवत्पूजां कृत्वा दधिव्रतं निवेद्य दुग्धव्रतं स्वीकुर्यात् । यत्र पायसादौ तद्रसोपलंभस्तदपि वर्जयेत् नतु दध्यादि । व्रतविधिगतदुग्धादिशब्दस्य द्रव्यांतरपरत्वे मानाभावात्। यानि तु संधिन्यादिदुग्धानि दुष्टतया निषिद्धानि तन्निषिद्धवाक्येषु तुल्यन्यायतया दध्याद्यलाभेपि तादृशदुग्धविकारत्वनिमित्तस्तद्विकाराणां दध्यादीनां स्वतंत्र एव नि-

१ इति एतत्. २ परमित्येव.

षेधः ।—क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः । सप्तरात्रं व्रतं कुर्यात्प्रयत्नेन समन्वितः । इति शंखस्मृतेः । व्रतं गोमूत्रयावकप्राशनं । इति दुग्धव्रतनिर्णयः ।

अथ चतुर्दश्यामनंतव्रतं । तच्च तिथिद्वैधे उदयानंतरत्रिमुहूर्तव्यापिन्यां कार्यं—उदये त्रिमुहूर्तापि ग्राह्यानंतव्रते तिथिः । इति माधवोक्तेः । तथा भाद्रपदस्यांते चतुर्दश्यां द्विजोत्तम । पौर्णमास्याः समायोगे व्रतं चानंतकं चरेत् । इति निर्णयामृते भविष्योक्तेश्च । नच—मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे । ददर्श शीला सा स्त्रीणां समूहं रक्तवाससां । चतुर्दश्यामर्चयंतं भक्त्या देवं पृथक्पृथक् । इति मध्याह्ने अनंतार्चनसंकीर्तनान्मध्याह्नव्यापिनी ग्राह्येति शंक्यं । सामान्यविशेषप्रवृत्तशास्त्रांतरविरोधे आर्थवादिकविधिकल्पनाया असंभवात् । स्पष्टविधेश्चाश्रवणात्[1] । अन्यथा स्त्रीसमूहेनैवैतद्व्रतं कार्यमिति विध्युन्नयनापत्तेः । पूर्वाह्ने दैवादनुष्ठितस्यास्य व्रतस्य मध्याह्नोपि गौणकालतया स्वीकार्यं इत्येतदर्थवादात्सिध्येत् । दिनद्वयेपि पूर्वाह्नव्यापित्वे पूर्वैव ग्राह्या । संपूर्णायां संदेहासंभवात् । दिनद्वयेपि पूर्वाह्नैकदेशव्याप्तौ परदिने कर्मकालपर्याप्तव्याप्तिसत्वे परैव । अन्यथा पर्वैव मुख्यगौणकालोभयकालव्याप्तिलाभात् । इति निर्णयः ।

अथानंतव्रतविधिः ।—स्नानं कृत्वा नदीतीरे शुचिर्भूत्वा समाहितः । कृत्वा दर्भमयं शेषं फणासप्तकमंडितं । तस्याग्रतो दृढं सूत्रं कुंकुमाक्तं सुशोभनं । चतुर्दशग्रंथियुक्तं संस्थाप्य च प्रपूजयेत् । ततस्तु मूलमंत्रेण नमस्कृत्य चतुर्भुजं । नवाम्रपल्लवाभासं पिंगभ्रूश्मश्रुलोचनं । पीतांबरधरं देवं शंखचक्रगदाधरं । प्रसन्नवदनं विष्णुं विश्वरूपं विचिंतयेत् । ध्यानं । सहस्र० । आगच्छानंत देवेश तेजोराशे जगत्पते । क्रियमाणां मया पूजां गृहाण पुरुषोत्तम । आवाहनं । पुरुषएवेदं० । नानारत्नसमायुक्तं कार्तस्वरविभूषितं । आसनं देवदेवेश गृहाण पुरुषोत्तम । आसनं । एतावानस्य० । गंगादिसर्वतीर्थेभ्यो मया प्रार्थनया हृतं । तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां । पाद्यं । त्रिपादूर्ध्व० । अनंतानंतदेवेश अनंतगुणसागर । अनंतानंतरूपोऽसि गृहाणार्घ्यं

[1] स्पष्टविरोधस्याश्र.

नमोस्तु ते । अर्घ्यं । तस्माद्विराळ० । गंगाजलं समानीतं सुवर्ण-कलशेऽस्थितं । आचम्यतां हृषीकेश त्रैलोक्यव्याधिनाशन । आचमनीयं । वांछितं कुरु मे देव दुष्कृतं च निवारय । कुरुष्व मे दयां देव त्रैलोक्यार्तिभयापह । इति मधुपर्कः । अच्युतानंतगोविंद प्रणतार्तिप्रणाशन । देहि मेद्य मनःसिद्धिं त्वन्नामस्मरणाद्धरे । इति पुनराचमनीयं । पंचामृतमंत्रैः पंचामृतस्नानं । गंगा च गोमती चैव यमुना च सरस्वती । नदीनदसहस्राणि स्नानार्थं तोयमुत्तमं । यत्पुरुषेण० । अनंतगुणरत्नाय विश्वरूपधराय च । नमो माहात्म्यदेवाय अनंताय नमोनमः । स्नानं । तंयज्ञं० । पीतांबरयुगं देव सर्वकामार्थसिद्धये । मया निवेदितं भक्त्या गृहाण सुरसत्तम । वस्त्रयुग्मं । तस्माद्यज्ञात्स० । दामोदर नमस्तेस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं सोत्तरीयं गृहाण सुरसत्तम । यज्ञोपवीतं । तस्माद्यज्ञात्सर्वहुतऋचः० श्रीखंडं चंदनं दिव्यं गंधाढ्यं सुमनोहरं । विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यतां । गधं । कटिसूत्रांगुलीयं च कुंडले मुकुटं तथा । वनमालां कौस्तुभं च गृहाण सुरसत्तम । इत्यलंकाराः । नमः सर्वहितार्थाय जगदाधारहेतवे । सर्वसंस्थितिरूपाय अनंताय नमोनमः । अक्षतान् । अक्षयं बंधुपुत्रादि देहस्यैवाक्षयं मया । अक्षयान्सर्वकामांश्च अर्चितः कुरु मे प्रभो । नानापरिमलद्रव्यं । तस्मादश्वाअजायंत० । माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यतां । पुष्पाणि । केचिदंगपूजां एतैर्मंत्रैरिच्छंति । तद्यथा । अनंतायनमः पादौ पूजयामि । संकर्षणाय० गुल्फौ० । कालात्मने० जानुनी० । विश्वरूपाय० । जंघे० विश्वनेत्राय० कटिं० । मधुसूदनाय० मेढ्रं० । पद्मनाभाय० नाभिं० । परमात्मने० हृदयं । श्रीकंठाय० कंठं० । सर्वास्त्रधारिणे० बाहू० । हरये० मुखं० । वाचस्पतये० जिह्वां० । दामोदराय० दंतान्० । केशवाय० ललाटं० । कमलासनाय० शिरः० । सर्वात्मने० सर्वांगं पूजयामि । चतुर्दशनामभिः ग्रंथिपूजा । विष्णुरग्निस्तथा सूर्यः सहस्राक्षः पितामहः । इंदुः पिनाकी विघ्नेशः स्कंदः सोमस्तथैव च । वरुणः पवनः पृथ्वी वसवो ग्रंथिदेवताः । विष्णवेनमः । प्रथमग्रंथिपू० । अग्नयेन० द्विती० सूर्याय० तृती० सहस्रार्चिषे० चतु० पितामहाय०

पंच०चंद्राय०षष्ठ०पिनाकिने०सप्त० विघ्नेशाय०अष्ट०स्कन्दाय० नव०सोमाय० दश०वरुणाय० एका०पवनाय० द्वाद०पृथिव्यै० त्रयो० वसुभ्यो० चतुर्द० ॥ सहस्रनामभिः तुलसीदलसमर्पणं । यत्पुरुषं० । वनस्पतिरसो दिव्यो गंधाढ्यो गंध उत्तमः। आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां । धूपं । ब्राह्मणोस्य० । घृतवर्ति-समायुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्य-तिमिरापह । दीपं । चंद्रमामनसो० । नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं च वरं देहि परत्र च परां गतिं । नैवेद्यं । आचमनीयं । गंधकर्पूरसंयुक्तं कस्तूर्यादिसमन्वितं । करोद्वर्तनकं देव गृहाण पुरुषोत्तम । करोद्वर्तनं । इदंफलं० फलं० । पूगी-फलसमायुक्तं सकर्पूरं मनोहरं । भक्त्या दत्तं मया देव तांबूलं प्रति-गृह्यतां । तांबूलं । हिरण्यगर्भ०। दक्षिणां । चंद्रादित्यौ च धरणि-र्विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यतां । श्रियेजात इति नीराजनं । नाभ्याआसी० । अनंत कामान्मे देहि सर्वकामफलप्रद । अनंताय नमस्तुभ्यं पुत्रपौत्रप्रवर्धन । अनं-ताय नमस्तुभ्यं सहस्रशिरसे नमः । नमोस्तु पद्मनाभाय नागा-धिपतये नमः। नमस्कारः । सप्तास्या०। यानिकानि च पापानि० । प्रदक्षिणा । यज्ञेनेति० । हस्ते पुष्पाणि संगृह्य मंत्रमेतमुदीरयेत् ॥ नमस्तेदेवदेवेश नमस्ते गरुडध्वज । नमस्ते पुंडरीकाक्ष नमस्ते ह्यमरप्रिय । नमस्ते कमलाकांत वासुदेव नमोस्तुते । इति पुष्पां-जलिः । अनंतः सर्वकामानामधिपः सर्वकामदः । व्रतेनानेन सुप्रीतो भवत्विह सदा मम । इति प्रार्थना । अनंतगुणरत्नाय विश्वरूपधराय च । सूत्रग्रंथिषु संस्थाय अनंताय नमो नमः । इति जीर्णदोरकं कलशे निधाय । नवदोरके वक्ष्यमाणा विष्णवा-दिग्रंथिदेवताः संपूज्य । नमस्ते इति नत्वा । संसारेत्यादाय—अनंत-संसार इति पुमान्दक्षिणहस्ते बध्नीयात् स्त्रीतु वामे इति क्रमः । नमस्ते देवदेवेश नमस्ते धरणीधर । सूत्रग्रंथिषु संस्थाय अनंताय नमोनमः । संसारगह्वरगुहासु सुखं विहर्तुं वांछंति ये कुरु-कुलोद्भव शुद्धसत्त्वाः । संपूज्य च त्रिभुवनेशमनंतदेवं बध्नंति दक्षिणकरे वरदोरकं ते । नूतनदोरकग्रहणं । अनंतसंसार-महासमुद्रे मग्नं समभ्युद्धर वासुदेव । अनंतरूपे विनियोजयस्व अनंतसूत्राय नमोनमस्ते । विष्णुरग्निस्तथा सूर्यः सहस्राक्षः

पितामहः । इंद्रः पिनाकी विघ्नेशः स्कन्दः सोमस्तथैव च । वरुणः पवनः पृथ्वी वसवो ग्रंथिदेवताः । एतद्ग्रंथिपूजनं । ब्राह्मणपूजां कृत्वा वायनं दद्यात् । पक्वान्नं फलसंयुक्तं सघृतं दक्षिणान्वितं । द्विजवर्याय दास्यामि व्रतसंपूर्तिहेतवे । अनंतः प्रतिगृह्णाति अनंतो वै ददाति च । अनंतस्तारकोभाभ्यामनंताय नमोनमः।इति वायनदानं । जीर्णदोरकपूजांते—न्यूनातिरिक्तानि परिस्फुटानि यानीह कर्माणि मया कृतानि । क्षम्याणि चैतानि मम क्षमस्व प्रयाहि तुष्टः पुनरागमाय । इति क्षमापनं । संवत्सरकृतां पूजां संप्रगृह्य मया प्रभो । व्रजेदानीमनंत त्वं विष्णुलोकं यदृच्छया । गच्छगच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ जनार्दन । इति तद्विसर्जनं।

अथ कथा । सूत उवाच । पुरा तु जाह्नवीतीरे धर्मो धर्मपरायणः । जरासंधवधार्थाय राजसूयमुपाक्रमत् । कृष्णेन सह धर्मोसौ भीमार्जुनसमन्वितः । यज्ञशालामकुरुत नानारत्नोपशोभिताम् । मुक्ताफलसमाकीर्णामिंद्रालयसमप्रभां । यज्ञार्थं भूपतीन्सर्वान्समानिन्ये प्रयत्नतः । गांधारीतनयो राजा तत्रैव कुरुनंदनः । दुर्योधन इति ख्यातः समागच्छन्मखालयं । दृष्ट्वा दुर्योधनस्तत्र प्रांगणं जलसंनिभं । ऊर्ध्वकंचुकमावृत्य तत्रागच्छच्छनैः शनैः । स्मितवक्त्राः स्त्रियः सर्वा द्रौपद्यादिवरांगनाः । ततो गच्छन्स्थलधिया जलमध्ये पपात सः । पुनः सर्वे नृपाश्चैव ऋषयश्च तपोधनाः । उपहासं प्रचक्रुस्ता द्रौपद्यादिसुलोचनाः । महाराजाधिराजोऽसौ महाक्रोधसमन्वितः । विनिर्गत्य स्वकं राज्यं मातुलेन वृतो नृपः । तस्मिन्काले तु शकुनिः प्रोवाच मधुरं वचः । राजन्प्रतिक्रियामस्य सुयुक्तां कथयामि ते । मुंच मुंच ततः कोपमग्रे कार्यं हि वर्तते । द्यूतोपक्रमणेनैव सर्वराज्यमवाप्स्यसि । तस्मादुत्तिष्ठ गच्छवः सत्रस्य सदनं प्रति । तथेत्युक्त्वा महाराजा समागत्य मखालयं । विनिर्वर्त्य मखं सर्वे नृपा जग्मुः स्वकं पुरं । ततो दुर्योधनो राजा समागत्य गजाह्वयं । आनीय पांडुपुत्रांश्च धर्मभीमार्जुनान्परान् । द्यूतारंभं प्राकुरुत जितं राज्यं च तत्क्षणात् । द्यूतेनैव जिताः सर्वे पांडवा वीतकल्मषाः । ततोऽरण्यांतरे गत्वा वर्तंते वनचारिणः । ततो वृत्तांतमाकर्ण्य भ्रातृभिः सह पांडवं ।

युधिष्ठिरं द्रष्टुकामः श्रीकृष्णः स्वयमागतः। सूत उवाच। अरण्ये वर्तमानास्ते पांडवा दुःखकर्शिताः। कृष्णं दृष्ट्वा महात्मानं प्रणिपत्येदमब्रुवन्। युधिष्ठिर उवाच। अहं दुःखीह संजातो भ्रातृभिः परिवारितः। कथं मुक्तिर्वदास्माकमनंता-दुःखसागरात्। श्रीकृष्ण उवाच। अनंतव्रतमस्त्येकं सर्वपाप-हरं शुभं। सर्वकामप्रदं नृणां स्त्रीणां चापि युधिष्ठिर। शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे भवेत्। तस्यानुष्ठानमात्रेण सर्वपापैः प्रमुच्यते। युधिष्ठिर उवाच। कृष्ण कोयं त्वयाख्यातो योऽनंत इति कीर्तितः। किं शेषनाग आहोस्विदनंतस्तक्षकः स्मृतः। परमात्माथवानंत उताहो ब्रह्म उच्यते। क एषोऽनंतसंज्ञो वै तथ्यं मे ब्रूहि केशव। श्रीकृष्ण उवाच। अनंत इत्यहं पार्थ मम रूपं निबोध तत्। आदित्यादिग्रहाचाराद्यः काल उपपद्यते। कलाकाष्ठामुहूर्तादिदिनरात्रिशरीरवान्। पक्षमासर्तुवर्षादियुग-कल्पव्यवस्थया। योयं कालो मया ख्यातः सोऽनंत इति कीर्तितः। सोहं कालोऽवतीर्णोत्र भुवो भारापनुत्तये। दानवानां विनाशाय वसुदेवकुलोद्भवं। पार्थ मां विद्ध्यनंतं त्वं कृष्णं विष्णुं हरिं शिवं। ब्रह्माणं भास्करं शेषं सर्वव्यापकमीश्वरं। अनादि-मध्यनिधनं त्रिगुणातीतमव्ययं। विश्वरूपं महाकायं सृष्टि-संहारकारकं। विश्वरूपमनंतं च यस्मिन्निंद्राश्चतुर्दश। वसवो द्वादशादित्या रुद्रा एकादशापि च। सप्तर्षयः समुद्राश्च पर्वताः सरितो द्रुमाः। नक्षत्राणि दिशो भूमिः पातालं भूर्भुवादि च। मा कुरुष्वात्र संदेहं सोऽहं पार्थ न संशयः। प्रत्ययार्थं मया रूपं भ्रातुस्तव च दर्शितं। युधिष्ठिर उवाच। अनंतव्रतमाहात्म्यं विधिं ब्रूहि विदांवर। किं पुण्यं किं फलं चास्य किं दानं कस्य पूजनं। केन चादौ पुरा चीर्णं मर्त्यै केन प्रकाशितं। एतत्सवि-स्तरं कृष्ण ब्रूह्यनंतव्रतं प्रभो। श्रीकृष्ण उवाच। आसीत्पुरा कृतयुगे सुमंतुर्नाम वै द्विजः। वसिष्ठगोत्रे चोत्पन्नः सुरूपां स भृगोः सुतां। दीक्षानाम्नीं चोपयेमे गृह्योक्तविधिना ततः। तस्याः कालेन संजाता दुहितानंतलक्षणा। शीला नाम सुशीला सा ववृधे पितृवेश्मनि। माता च तस्याः कालेन ज्वर-दाहेन पीडिता। विननाश नदीतोये सती स्वर्गपुरं ययौ। सुमंतुस्तु ततोऽन्यां वै धर्मपुंसः सुतां पुनः। उपयेमे विधानेन

कर्कशां नाम नामतः । दुःशीलां कर्कशां चंडीं नित्यं कलहकारिणीं । सापि शीला पितुर्गेहे गृहार्चनरताऽभवत् । कुड्यस्तंभांगनद्वारदेहलीतोरणादिषु । चतुरंगकवर्णैस्तु नीलपीतसितासितैः । स्वस्तिकैः शंखपद्मैश्च अर्चयंती पुनः पुनः । पित्रा दृष्टा सुमंतेन स्त्रीचिह्ना यौवने स्थिता । कस्मै देया मया कन्या विचार्यैवं सुदुःखितः । एतस्मिन्नंतरे काले मुनिर्वेदविदां वरः । कन्यार्थी चागतः श्रीमान् कौंडिन्यो ब्राह्मणोत्तमः । रूपयौवनसंपन्नः सुमंतुं प्रत्यभाषत । सर्वलक्षणसंपन्नां त्वदीयां कन्यकां वृणे । पिता ददौ मुनींद्राय कौंडिन्याय शुभे दिने । गृह्योक्तविधिना पार्थ विवाहमकरोत्तदा । निर्वर्त्यौद्वाहिकं कर्म प्रोक्तवान्कर्कशां द्विजः । किंचिद्दायादिकं देयं जामातुः पारितोषिकं । तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोत्सार्य गृहमंडनं । पेटायां सुस्थिरं बध्वा प्राह भो गृह्यतामिति । भुक्तावशिष्टचूर्णेन पाथेयं च चकार सा । कौंडिन्योऽपि विवाह्यैनां पथि गच्छन्शनैः शनैः । शीलां सुशीलामादाय नवोढां गोरथेन हि । मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे । ददर्श शीला सा स्त्रीणां कदंबं रक्तवाससां । चतुर्दश्यामर्चयंतं भक्त्या देवं पृथक् पृथक् । उपगम्य शनैस्तत्र पप्रच्छ स्त्रीकदंबकं । आर्याः किमेतन्मे ब्रूत किंनाम व्रतमीदृशं । ता ऊचुर्योषितस्तांतु शीलां शीलविभूषणां । स्त्रिय ऊचुः । अनंतव्रतमेतद्धि व्रतेनंतस्तु पूज्यते । साब्रवीदहमप्येतत्करिष्ये व्रतमुत्तमं । विधानं कीदृशं चात्र किं दानं कस्य पूजनं । स्त्रिय ऊचुः । कुर्यात्पूजां सरित्तीरे सदानंतस्य तूत्तमां । गोचर्ममात्रं संलिप्य मंडलं कारयेच्छुभं । तन्मध्ये स्थापयेत्कुंभमव्रणं धातुमृन्मयं । तत्र पात्रं न्यसेद्धैमं राजतं ताम्रवंशजं । पूजयेत्तत्र देवेशं सदानंतफलप्रदं । सूत्रैरात्ममितैः श्लक्ष्णैश्चतुर्दशभिरावृतं । चतुर्दशग्रंथिभिस्तु सव्यवृत्तैः सुनिर्मितैः । कुंकुमादिभिरक्तं च गंधाद्यैरर्चयेच्छुभैः । ततः प्रस्थस्य पक्वान्नं पुंनाम सघृतं च तत् । अर्धं विप्राय दातव्यमर्धमात्मनि भोजनं । ततस्तं दक्षिणे पुंसां स्त्रीणां वामे करे न्यसेत् । अनंतसंसारमहासमुद्रे मग्नं समभ्युद्धर वासुदेव । अनंतरूपे विनियोजयस्व अनंतसूत्राय नमोनमस्ते । अनेन दोरकं बद्ध्वा कथां श्रुत्वा हरेरिमां । भुक्त्वा चांते व्रजेद्वेश्म शीले प्रोक्तं

व्रतं तव। श्रीकृष्ण उवाच। एतच्छ्रुत्वा व्रतं शीला करे बद्ध्वा सुदोरकं। पाथेयशेषं विप्राय दत्वा भुक्त्वा तथैव च। दृष्टा स्त्रीभिरनुज्ञाता ताः प्रणम्य पतिं ययौ। ततो जगाम सा हृष्टा गोरथेन स्वमाश्रमं। भर्त्रा सहैव शनकैः प्रत्ययस्तत्क्षणादभूत्। तेनानंतप्रभावेण बहुगोधनसंकुलं। इतस्ततः श्रिया युक्तं धनधान्यसमाकुलं। आकुलं व्याकुलं चैव सर्वत्रातिथिपूजनैः। पेटामुद्घाट्य तं दृष्ट्वा महत्कौतूहलं गता। मम मात्रा क्रूरया च नित्यं वै क्रोधशीलया। भर्तुर्नियोगात्क्रोधेन प्रोत्खाय गृहचित्रकं। स्वस्तिकं पद्मशंखादि पेटायां निहितं रुषा। ततः सर्वं यथावर्णं रत्नानि कनकादि च। अनंतकृपया तस्याः प्रत्यक्षं तत्क्षणादभूत्। सापि माणिक्यकांचीभिर्मुक्तामणिविभूषिता। दिव्यवस्त्रसमायुक्ता सावित्रीप्रतिमाभवत्। कदाचिदुपविष्टेन दृष्ट्वा बद्धं तु दोरकं। शीलाया हस्तमूलात्तु आक्षेपात्रोटितो रुषा। कोनंत इति जल्पेन ब्रुवता तेन पांडव। तया निवारितेनापि साहसं दुष्कृतं कृतं। क्षिप्तो ज्वालाकुले वह्नौ हाहाकृत्वा प्रधाविता। शीला गृहीत्वा तत्सूत्रं क्षीरमध्ये समाक्षिपत्। तेन कर्मविपाकेन तस्य श्रीः संक्षयं गता। गोधनं तस्करैर्नीतं गृहं दग्धं गतं वसु। यद्यथैवागतं गेहे तत्तथैव गतं गृहात्। स्वजनैः कलहो नित्यं मित्रैः सह विरोधनं। न कश्चिद्वदते लोके तेन साकं युधिष्ठिर। शरीरेणाभिसंतप्तो मनसाप्यतिदुःखितः। निर्वेदं परमं प्राप्तः कौंडिन्यः प्राह तां स्त्रियं। कौंडिन्य उवाच। शीले जानासि किं पापं यस्मादेतद्गतं मम। धनधान्यादिकं सर्वं यदि जानासि तद्वद। शीलोवाच। प्रायोऽनंतकृतो दोषो जातो भर्तर्न संशयः। अनंताक्षेपदोषेण दारिद्र्यं पतितं गृहे। ततो जगाम कौंडिन्यो निर्वेदाद्गहनं वनं। ध्यायंस्तु मनसानंतं क्व द्रक्ष्यामीति केशवं। व्रतं निरशनं कृत्वा ब्रह्मचारी हरिं जपन्। विलोकयन्ययौ पार्थ सोऽरण्यं जनवर्जितं। तत्रापश्यन्महाचूतं पुष्पितं फलितं द्रुमं। वर्जितं पक्षिसंघातैः कृमिकोटिसमाकुलं। तमपृच्छद्द्विजोऽनंतः क्व दृष्टस्ते महाद्रुम। तमूचे चूतवृक्षोऽथ नानंतो वीक्षितो द्विज। एवं निराकृतस्तेन गां ददर्श सवत्सकां। तृणमध्ये प्रधावन्तीमितश्चेतश्च पांडव। सोऽब्रवीद्धेनुके ब्रूहि यद्यनंतस्त्वयेक्षितः। गौरु-

वाचाथ कौंडिन्यं नानंतं वेद्म्यहं द्विज । ततो व्रजन्ददर्शाग्रे वृषभं शाद्वले स्थितं । तमपृच्छच्च गोस्वामिन्दृष्टोऽनंतः क्वचित्त्वया । वृषभस्तमुवाचेदं नानंतो वीक्षितो द्विज । ततो व्रजन्ददर्शाग्रे रम्यं पुष्करिणीद्वयं । अन्योन्यजलकल्लोलैर्वीचीपर्यंतसंकुलं । छन्नं कुसुमकह्लारैः कुमुदोत्पलमंडितं । सेवितं भ्रमरैर्हंसैश्चक्रवाकैर्बकैस्तथा । ऊचे ब्रूतं द्विजोऽनंतो भवतीभ्यां यदीक्षितः । ते ऊचतुः पुष्करिण्यौ नानंतो वीक्षितो द्विज । ततो व्रजन्ददर्शाग्रे गर्दभं कुंजरं तथा । तावपृच्छद्द्विजोऽनंतो भवद्भ्यां नोपलक्षितः । तावूचतुर्नेक्षितोऽसावनंतो द्विजसत्तम । तस्मिन्क्षणेऽथ विप्रोसौ निर्विण्णः समजायत । तस्मिन्नथ सुनिर्विण्णे कौंडिन्ये ब्राह्मणोत्तमे । कृपयानंतदेवोऽपि प्रत्यक्षः समजायत । वृद्धब्राह्मणरूपेण इत एहीत्युवाच तं । प्रवेशयामास गुहां गृहीत्वा दक्षिणे करे । स्वां पुरीं दर्शयामास दिव्यनारीनरैर्युतां । तस्यां निविष्टमात्मानं वरसिंहासने शुभे । पार्श्वस्थशंखशक्राब्जगदागरुडशोभितं । दर्शयामास विप्राय पूर्वोक्तं विश्वरूपिणं । कौस्तुभेन विराजंतं वनमालाविभूषितं । तं दृष्ट्वा देवदेवेशमुवाच परया मुदा । कौंडिन्य उवाच । पापोहं पापकर्माहं पापात्मा पापसंभवः । त्राहि मां पुंडरीकाक्ष शरणं मे भवाच्युत । नमो नमस्ते देवेश नमस्ते पुरुषोत्तम । त्वन्नामस्मरणात्पापं यच्छेषं नः प्रणश्यतु । अद्य मे सफलं जन्म जीवितं च सुजीवितं । यत्त्वदंघ्रियुगांभोजे मन्मूर्धा भ्रमरायते । तच्छ्रुत्वानंतदेवोऽपि ददौ तस्मै वरत्रयं । दारिद्र्यनाशनं धर्मं विष्णुलोकं सनातनं । प्रतिगृह्य वरान्विप्रः प्रहृष्टः प्रत्युवाच तं । कौंडिन्य उवाच । कश्चूतः को वृषः का गौः किं तत्पुष्करिणीद्वयं । कः खरः कुंजरः कोसौ वृद्धब्राह्मण एव च । अनंत उवाच । स चूतवृक्षो विप्रोऽभूद्विद्वान्वै वेदपारगः । विद्या न दत्ता शिष्येभ्यस्तेनैव तरुतां गतः । सा गौर्वसुंधरा दृष्टा पूर्वं या बीजहारिणी । स दंभो वृषभो दृष्टो लुब्धो योऽसौ पुराऽभवत् । यत्स्वसृभ्यां पुरा दत्तं अश्रद्धं च परस्परं । धर्माधर्मव्यवस्थानं तच्च पुष्करिणीद्वयं । खरः क्रोधस्त्वया दृष्टो येन तद्दुष्कृतं कृतं । धर्मदूषकता यस्य पूर्वमासीत्स कुंजरः । ब्राह्मणोऽसावनंतोऽहं गुहा संसारगह्वरं ।

इत्युक्तं ते मया सर्वं विप्र गच्छ पुनर्गृहं । चरानंतव्रतं तत्र नववर्षाणि पंच च। ततस्तुष्टः प्रदास्यामि नाक्षत्रं स्थानमुत्तमं। भार्यया सह धर्मात्मा भुक्त्वा भोगान्मनोरमान् । पुत्रपौत्रसमायुक्तस्ततो मोक्षमवाप्स्यसि । श्रीकृष्ण उवाच । इति दत्वा वरं देवस्तत्रैवांतरधीयत । कौंडिन्योऽप्यागतो गेहं बभार व्रतमुत्तमं। व्रतस्यास्य प्रभावेन तस्य श्रीः सर्वतोमुखी । शीलया सकलान्भोगान्पुत्रपौत्रसमन्वितः । भुक्त्वा जगाम स स्वर्गं नक्षत्रं च पुनर्वसुः । कल्पस्थायी च संभूतो दृश्यते प्रज्वलन्निव। अनंतव्रतधर्मेण सम्यक् चीर्णेन पांडव। एतत्ते सर्वमाख्यातं व्रतानामुत्तमं व्रतं। यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः। एतच्छ्रुत्वापि मनुजैर्लभ्यते वांछितं फलं। ये तु शृण्वंति सततं वाच्यमानमिदं व्रतं। सर्वपापविनिर्मुक्ता यास्यंति परमां गतिं। तस्मात्कुरुष्व राजेंद्र व्रतमेतच्छुभावहं। संसारगह्वरगुहासु सुखं विहर्तुं वांच्छंति ये कुरुकुलोद्भव शुद्धसत्त्वाः। संपूज्य च त्रिभुवनेशमनंतदेवं बध्नंति दक्षिणकरे वरदोरकं ते । इति श्रीभविष्योत्तरपुराणे अनंतव्रतकथा समाप्ता।

अथ हेमाद्रिमदनरत्नाद्युदाहृतभविष्योत्तरोक्तोद्यापनप्रयोगः। व्रते परिपूर्णे अपूर्णे वा अस्यामेव चतुर्दश्यां कृतस्नानादिनित्यक्रियः प्रातरेकभक्तव्रतं संकल्प्य नद्यां तीर्थांतरे वा सर्वौषधैः सर्वगंधैस्तिलकल्कैरामलकैः स्नात्वा स्नानांगतर्पणं कृत्वा गृहमागत्य गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानि कृत्वा आचार्यादीन्वस्त्रकुंडलादिभिः पूजयेत्। तत आचार्यः यदत्र संस्थितमिति मंत्रेण सर्षपान्विकीर्य शुचीव इति यज्ञभूमिं प्रोक्ष्य तस्यां शुद्धमृदा मंडपमध्ये चतुरस्रां वेदीं कृत्वा तत्र पंचवर्णैः सर्वतोभद्रमालिख्य तत्र सर्वतोभद्रदेवता आवाह्य पूजयेत्। तदित्थं हेमाद्रौ स्कांदे—प्रागुदीच्यायता रेखाः कुर्यादेकोनविंशतिः । खंडेंदुस्त्रिपदः कोणे शृंखलाः पंचभिः पदैः । एकादशपदा वल्ली भद्रं तु नवभिः पदैः । चतुर्विंशत्पदा वापी परिधिर्विंशतिः पदैः । मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतं । श्वेतेंदुः शृंखला कृष्णा वल्ली नीलेन पूरयेत्। भद्रारुणा सिता वापी परिधिः

पीतवर्णकः । बाह्यांतरदलश्वेता कर्णिका पीतवर्णिका । परिध्यावेष्टितं पद्मं बाह्ये सत्वं रजस्तमः । तन्मध्ये स्थापयेद्देवान्ब्रह्माद्यांश्च सुरोत्तमान् । इति । प्रतिकोणं त्रिभिस्त्रिभिः पदैः श्वेतवर्णपूरितैः खंडेंदवः कार्याः । तदंतर्वर्तिपदप्रभृतिभिः पंचभिः पदैः परिधिकोणपर्यंतं क्रमेण कृष्णवर्णैः शृंखलाः कार्याः । शृंखलायाः पक्षद्वये खंडेंदुसंलग्नपदद्वयं तदधस्तात्पंचपंच द्विपदानि परिधिपर्यंतं नीलवर्णेन पूरयेत्ते वल्ल्यौ । वल्ल्या मूलपदपंक्तिगतानि पंचपदानि तदधस्तनपंक्तिगतानि त्रीणि तदधस्तनपंक्तिगतमेकं वल्लीसंलग्नं चैतानि नव रक्तेन पूरयेत्तद्भद्रं । एवं कोणचतुष्टयेपि भद्रद्वयांतर्वर्तिवल्लीद्वयांतर्वर्तिपरिधिप्राच्यादिदिक्चतुष्टयेपि चतुर्विंशतिश्चतुर्विंशतिः पदान्यवशिष्टानि भवंति ता वाप्यः श्वेतेन पूरणीयाः । शृंखला वल्लीवाप्यंतसंलग्नविंशतिपदानि पीतवर्णेन पूरणीयानि स परिधिः । परिधिमध्ये षोडशपदभुवि बाह्यांतरभागद्वययुताष्टदलवेष्टितकर्णिकां पीतेनापूर्य दलानां बाह्यांतरभागौ विभिन्नश्वेतवर्णाभ्यां पूरणीयौ । मंडलाद्बहिः समंतात्परिधित्रयं कार्यं । तत्क्रमेण श्वेतरक्तकृष्णैः पूरयेत् । एवं चतुर्विंशत्यधिकशतत्रयपदानि पूरितानि भवंति ।—भद्रं नवपदं तस्य निश्चलं पीतपूरितं । तेषां मध्ये तु कोष्ठानां विंशतिः कृष्णपूरिताः । परिधिः स तु विज्ञेय इति । रेखात्रयं तु पुरतः कर्तव्यं यत्नतो बुधैः । तमो रजः सत्वमिति ज्ञेयं वर्णत्रयं त्विह । इति च ग्रंथांतरे । अन्यच्च—पद्मं श्वेतं च रक्तं च क्रमो ह्येष सुदुर्लभः । इति विशेषः । तत्रापि अंतर्भागेषु रक्तं बहिर्भागेषु श्वेतमिति व्यवस्था । ग्रंथांतरे तु संपूर्णे पद्मे श्वेतरक्तयोर्विकल्पः । शुक्लं वा यदि वा रक्तं पद्मं कार्यं सुशोभनं । इत्युक्तेः । परे तु सपरिधिपद्मसंबंधिषड्विंशत्पदेषु कोणचतुष्टये त्रिपदान्खंडेंदून् कृत्वा शिष्टचतुर्विंशत्पदात्मिका वाप्येव कार्या । वापीयं च पीतेनैव पूरणीया ।—चतुर्विंशत्पदा वापी षड्विंशच्छेषमुच्यते । खंडेंदुस्तत्र कर्तव्यो मध्ये वापीं प्रकल्पयेत् । सर्वतोभद्रनामैतन्मंडलं शंभुनोदितं । वैष्णवेषु व्रतेष्वेतत्कर्तव्यं तु प्रयत्नतः । इति शास्त्रात् । वापी पीता प्रकर्तव्या पंचवर्णमिदं स्मृतं । इति वचनाच्चेत्याहुः । अतश्च वैष्णवव्रतोद्यापने पंचवापीकमेव

सर्वतोभद्रं कार्यं। वापीचतुष्टयवेष्टिताष्टदलात्मकं तत्प्रकृत्य पठितस्य सर्वव्रते समुद्दिष्टं सर्वतोभद्रमंडलमिति वचसः वैष्णवभिन्नस्थले सावकाशत्वात् ।—कारयेत्सप्तधान्यैर्वा वर्णकैरुपशोभितं । इति तद्वर्णधान्यानां पिष्टकानां च विकल्प इत्याहुः । इति सर्वतोभद्रं ।

ब्रह्मादिमंडलदेवतावाहनं । मध्ये ब्रह्माणं । ब्रह्मजज्ञानंवामदेवो ब्रह्मात्रिष्टुप् ॐ ब्रह्मजज्ञानं० । मध्ये ब्रह्मणे सायुधाय सशक्तिकाय आवा० ॥ उत्तरे सोमं।आप्यायस्व गोतमः सोमो गायत्री । आप्यायस्व० सोमाय गदाहस्ताय सशक्तये० ॥ ईशान्यां ईशानं । अभित्वाशुनःशेप ईशानो गायत्री । अभित्वा० । ईशानाय शूलहस्ताय सशक्तये०॥ प्राच्यामिंद्रं । इंद्रंवो मधुछंदा इद्रो गायत्री । इंद्रंवोवि० । इंद्रायवज्रहस्ताय स० ॥ आग्नेय्यामग्निं । अग्निंदूतं काण्वोमेधातिथिरग्निर्गायत्री । अग्निंदूतं० । अग्नये शक्तिहस्ताय० ॥ याम्यांयमं । यमायसोमं वैवस्वतो यमो यमोऽनुष्टुप् । यमाय सोमं० । यमायदंडहस्ताय० ॥ नैर्ऋत्यां निर्ऋतिं । मोषुणोघौरः कण्वो निर्ऋतिर्गायत्री । मोषुणः परा० । निर्ऋतये खड्गहस्ताय॥ प्रतीच्यां वरुणं । तत्त्वायामिशुनःशेपो वरुणस्त्रिष्टुप् । तत्त्वायामि० । वरुणाय पाशहस्ताय ॥ वायव्यां वायुं । वायो शतं वामदेवो वायुरनुष्टुप् । वायोशतं० । वायवे ध्वजहस्ताय ॥ वायुसोममध्ये अष्टौ वसून् । ज्मयाअत्रेत्यस्य वसिष्ठो वसवस्त्रिष्टुप् । ज्मयाअत्र० । अष्टवसुभ्यः सायुधेभ्यः सशक्तिकेभ्यः। ध्रुवं० अध्वरं०सोमं०अपः० अनिलं० अनलं० प्रत्यूषं० प्रभासं० ८ ॥ सोमेशानयोर्मध्ये एकादश रुद्रान् । आरुद्रासः श्यावाश्व एकादशरुद्रा जगती । आरुद्रासः० । एकादशरुद्रेभ्यः शक्तित्रिशूलपिनाकहस्तेभ्यः । वीरभद्रं० शंभुं० गिरीशं० महायशसं० अजं० पिनाकिनं० अहिर्बुध्न्यं० कपालिनं० दिशांपतिं० भर्गं० भुवनाधीशं ११ ॥ ईशानेंद्रयोर्मध्ये द्वादशादित्यान् । त्यान्नुमत्स्यो द्वादशादित्या गायत्री। त्यान्नुक्षत्रियान्० द्वाद० सायुधेभ्यःसशक्तिकेभ्यः। अरुणं० सूर्यं० वेदांगं० भानुं० इंद्रं० रविं० गभस्तिं० यमं० स्वर्णरेतसं० दिवाकरं० मित्रं० विष्णुं० १२ ॥ इंद्राग्न्योर्मध्ये अश्विनौ । अश्विनावर्तीराहूगणो गोतमोश्विनावुष्णिक् । अश्विना-

वर्ति० । अश्विभ्यांनमः अश्विनौ आवा० ॥ अग्नियमयोर्मध्येवि-श्वान्देवान् । ओमासो मधुच्छंदाविश्वेदेवा गायत्री । ओमास-श्चर्षणीधृतः० । विश्वेभ्योदेवेभ्यः सायुधेभ्यः ॥ यमनि-र्ऋत्योर्मध्ये सप्तयक्षान् । अभित्यं वामदेवः सप्तयक्षाअष्टी । अभित्यंदेवं० । सप्तयक्षेभ्यः सायुधेभ्यः ॥ निर्ऋतिवरुणयो-र्मध्ये सर्पान् । आयंगौः सार्पराज्ञी सर्पा गायत्री । आ-यंगौ० । सर्पेभ्यः सायुधेभ्यः ॥ वरुणवाय्वोर्मध्ये अप्सरसः । अप्सरसामैतसऋष्यश्रृंगोगंधर्वाप्सरसोनुष्टुप् । अप्सरसां० । गंधर्वाप्सरोभ्यः सायुधाभ्यः ॥ वायूत्तरयोर्मध्ये रुद्रान् । क-द्रुद्रायेतिकाण्वोरुद्रोगायत्री कद्रुद्राय० । रुद्रेभ्यः सायुधेभ्यः । वायुसोमयोर्मध्ये रुद्रादिगणान् सोमेंद्रयोः स्कंदं । कुमारं माता कुमारस्त्रिष्टुप् । कुमारंमाता० कुमारायसायुधाय ॥ ब्रह्मसो-मयोर्मध्ये नंदीश्वरं । ऋषभं वैराजो ऋषभोनुष्टुप् । ऋषभं-मास० । नंदीश्वराय शूलहस्ताय ॥ ब्रह्मेशानयोर्मध्ये दक्षादि सप्तगणान् अदितिर्लौक्यो बृहस्पतिर्दक्षोनुष्टुप् । अदितिर्ह्यजनिष्ट दक्ष० दक्षादिभ्यः ॥ ब्रह्मेंद्रयोर्मध्ये दुर्गां । तामग्निवर्णां सौभरि-र्दुर्गात्रिष्टुप् । तामग्निवर्णां० । दुर्गायै अभयवरदपाशांकुशह-स्तायै ॥ तत्रैव विष्णुं । इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री । इदं विष्णुर्वि० । विष्णवे शंखचक्रगदाधराय ॥ ब्रह्माग्निमध्येस्वधां । उदीरतां शंखः स्वधा त्रिष्टुप् । उदीरतां० पितृभ्यः स्वधास-हितेभ्यः ॥ ब्रह्मयमयोर्मध्ये मृत्युं । परं मृत्योः संकुसुको मृत्युस्त्रिष्टुप् । परंमृत्यो० मृत्यवे सायुधाय० ॥ ब्रह्मनिर्ऋ-तिमध्ये गणपतिं । गणानां त्वा गृत्समदो गणपतिर्ज-गती । गणानां त्वा० । गणाधिपतये पाशांकुशाभयवरदहस्ताय ॥ ब्रह्मवरुणयोर्मध्ये अपः । शन्नोदेवीरांबरीषः सिंधुद्वीप आपो गायत्री । शंनोदेवी० । अद्भ्यः सायुधेभ्यः ॥ ब्रह्मवायुमध्ये मरुतः । मरुतोयस्यराहूगणो मरुतो गायत्री । मरुतो यस्य० । मरुद्भ्यः सप्तगणसहितेभ्यः ॥ ब्रह्मणः पादमूले भूमिं । स्योना-मेधातिथिर्भूमिर्गायत्री । स्योनापृथिवि० । भूम्यै सायुधायै । तत्रैव गंगाद्याः सरितः । इमंमे गंगे सिंधुक्षित्प्रैयमेधा नद्यो जगती । इमंमेगंगे० । गंगाभ्यः सायुधाभ्यः ॥ ब्रह्मणः पादमूले

१ तमीशानं गौतम ईशाना जगती पाठ. २ कुशिको.

सप्तसमुद्रान् । अजयोगा हिरण्यस्तूपः सप्तसमुद्रास्त्रिष्टुप् । अजयोगा अजयः० । लवणादिसप्तसमुद्रेभ्यः । तदुपरि मेरवे नमः इति मेरुं । ततो मंडलाद्बहिः सोमादिसमीपे क्रमेणायुधानि । गदायै० त्रिशूलाय० वज्राय० शक्त्यै० दंडाय० खड्गाय० पाशाय० अंकुशाय० । तद्बहिः तेनैव क्रमेण । गौतमाय० भरद्वाजाय० विश्वामित्राय० कश्यपाय० जमदग्नये० वसिष्ठाय० अत्रये० अरुंधत्यै० । तद्बाह्ये पूर्वादिक्रमेण । ऐंद्र्यै० कौमार्यै० ब्राह्म्यै० वाराह्यै० चांमुडायै० वैष्णव्यै० माहेश्वर्यै० वैनायक्यै० इत्यष्टौ शक्तीः प्रतिष्ठाप्य कांडानुसमयेन पदार्थानुसमयेन वा षोडशोपचारैः पूजयेत् । इति सर्वतोभद्रदेवतावाहनं ।

सर्वतोभद्राशक्तौ कर्णिकायुक्तमष्टदलं कुर्यात् । तन्मध्ये कलशस्थापनविधिना सुदृढं नवमव्रणं कलशं स्थापयेत् । तत्र पंचरत्नपंचपल्लवादि निक्षिप्य ताम्रमयेन पूर्णपात्रेण पिधाय तस्मिन्पात्रे माषपरिमितस्वर्णनिर्मितं चतुर्दशग्रंथियुतमनंतं अग्न्युत्तारणपूर्वकं न्यसेत् । तदुत्तरतः सुविस्तरां शय्यां कृत्वा तस्यां सलक्ष्मीकमुसलहलयुतवासुदेवप्रतिमामग्न्युत्तारणपूर्वकमेव न्यसेत् । ततो दोरके प्रतिमायां च श्रीमदनंताय नम इति मंत्रेण आवाहनप्रभृति पंचामृतशुद्धोदकांतं कुर्यात् । ततः । वस्त्रयुग्मं शुचि यस्माद्वासुदेवस्य वल्लभं । अनंतः प्रीयतां तेन वस्त्रयुग्मेन सर्वदा । इति वस्त्रयुग्मं समर्प्य पीतयज्ञोपवीतं उक्तनाममंत्रेण समर्पयेत् । ततः कर्पूरागरुमिश्रितेन चंदनेन लेपयेत् ।—लेपयेहं तवांगानि प्रीयतां मधुसूदन । इति । ततः पुष्पाणि संगृह्य प्रतिमायां पृथङ्नामभिः अंगेषु पूजयेत् । अनंतायनमः पादयोः । संकर्षणाय० गुल्फयोः । कालात्मने० जान्वोः । विश्वरूपिणे० जंघयोः । विश्वरूपाय० कट्यां । विश्वव्यापिने० मेढ्रे । पद्मनाभाय० नाभौ । परमात्मने० हृदये । श्रीकंठाय० कंठे० । सर्वास्त्रधारिणे० बाह्वोः । वाचस्पतये० मुखे० । केशवाय० ललाटे० । सर्वात्मने शिरसि । ततः लोकात्मा सर्वभूतानां निमेषत्रुटिसंचयः । जन्ममृत्युजराव्याधिसंसारभयनाशनः । इति मंत्रेण श्रीमदनंतं पुष्पैः पूजयित्वा । धूपं दद्यात् तन्मंत्रः । वनस्पतिरसो दिव्यो गंधाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां । इति ।

ततः। त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमं। आत्मज्योतिः परं धाम दीपोयं प्रतिगृह्यतां। इति दीपं। ततो नैवेद्यं। अन्नं चतुर्विधं स्वादु भूतानां जीवनं परं। नैवेद्यं ते मया दत्तं देव प्रीत्या प्रगृह्यतां। इति। ततः करोद्वर्तनं दत्त्वा फलं च समर्पयेत्। ततस्तांबूलं। पूगीफलं सपत्रं च सकर्पूरं मनोहरं। पवित्रीकृतमत्यंतं तांबूलं प्रतिगृह्यतां। इति। ततो दक्षिणानीराजनादि निर्वर्त्य। पूजामंडपात्पश्चिमभागे अनंतव्रतोद्यापनांगभूतं होमं करिष्य इति संकल्प्य। कुंडे स्थंडिले वा स्वगृह्योक्तविधिनाग्निं स्थापयित्वा मंडपोत्तरदिशि वेदिकायां आदित्यादिलोकपालांता ग्रहपीठदेवतास्तत्तन्मंत्रैरावाह्य पूजयित्वान्वाधानं कुर्यात्। चक्षुषी आज्येनेत्यंते श्रीमदनन्तं अष्टोत्तरशतसंख्याभिरश्वत्थसमिद्भिः प्रत्येकं तावत्संख्याकाभिस्तिलाहुतिभिर्व्रीह्याहुतिभिर्यवाहुतिभिर्घृताहुतिभिश्च। अनंतं कालकालात्मानं संवत्सरं परिवत्सरं इदुवत्सरं वर्षवत्सरं उषसं अहोरात्रं अर्धमासं मासं ऋतून् सच्चिदानंदं अग्निं वायुं सूर्यं प्रजापतिं च एताः देवताः उक्तद्रव्याणां प्रतिद्रव्यं एकैकयाहुत्या। आदित्यादिग्रहान् अर्कादिजातीयाभिः समिद्भिः अष्टोत्तरशताष्टाविंशत्यन्यतमसंख्याकाभिस्तद्द्रव्याहुतिभिः तावत्संख्याभिश्चर्वाहुतिभिश्च इतरपीठदेवताश्च तत्तदुचितन्यूनसंख्याकाभिस्तद्द्रव्याहुतिभिः प्रजापतिमाज्येन चर्वाज्यतिलैः स्विष्टकृतं आज्यतिलैः प्रजापतिं च इध्मसंनहनेनेत्यादि प्रकृतिवत्। आज्यभागांते समिदाद्युक्तपंचद्रव्याणां पंचाष्टोत्तरशतानि पुरुषसूक्तेन जहुयात्। अतो देवेति वा इदं विष्णुरिति वा। ततः पंचभिरेभिर्द्रव्यैः अनंतायस्वाहेत्युक्तनामभिः स्वाहांतचतुर्थ्यंतैराहुतीर्हुत्वा व्यस्तसमस्तव्याहृतिभिस्तान्येव द्रव्याणि सकृत्सकृद्धुत्वा ग्रहपीठदेवतोद्देश्यकहोमं च यथान्वाधानं कृत्वा चर्वाज्यतिलैरेव स्विष्टकृतं हुत्वा प्रजापतये स्वाहेत्याज्यतिलाहुतीर्जुहुयात्। ततः प्रायश्चित्तहोमान्ते लोकपालान्ग्रहांश्च संपूज्य बलिदानं च कृत्वा गीतवादित्रनिस्वनैः पूर्णाहुतिं जुहुयात्। ततः प्रणीताविमोकांते संस्थाजपेनोपस्थानं ग्रहकलशेनाभिषेकः। ततो ग्रहपीठमाचार्याय निवेद्य अग्निविसर्जनांतं कुर्यात्। पुराणश्रवणादिना रात्रौ जागरणं। ततः प्रातः कृतस्नानादिनित्य-

क्रियः पूर्वोक्तविधिना दोरकप्रतिमयोरनंतं संपूज्य सपत्नी-क्रमाचार्यं वस्त्रालंकारचंदनादिभिः संपूज्य गां पूजयेत् । तत्र मंत्रः । गावो ममाग्रतः संत्विति । सुरभिर्वैष्णवी माता नित्यं विष्णुपदे स्थिता । ग्रासं गृह्ण मया दत्तं गोमातस्त्रातुमर्हसि । इति गोग्रासं दत्त्वा गोदानविधिनाचार्याय गां दद्यात् । गोदा-नांगदक्षिणात्वेन सुवर्णं च दद्यात् । अनंताय निवेदितं फ-लादि आचार्यायैव दद्यात् । ततः पूर्ववृतांश्चतुर्दश विप्रान्व-स्त्रोपवीतैः संपूज्य साचार्यांस्तान्भोजयित्वा चतुर्दशभ्यो यथा-शक्ति दक्षिणां दद्यात् । आचार्यं क्षमापयित्वा ।—भक्तिहीनं क्रियाहीनं द्रव्यहीनं तथैव च । मंत्रहीनं कृतं यच्च परिपूर्णं तदस्तु मे । इति पठेत् । परिपूर्णं तदस्त्विति ते प्रतिब्रूयुः ।

**अथ नष्टदोरकप्रायश्चित्तं** । युधिष्ठिर उवाच । अनं-तव्रतमाहात्म्यं कृत्स्नं कृष्ण त्वयोदितं । भगवन्दोररूपेण भा-ग्यदोसि महात्मनां । दोरं प्रमादतो नष्टं यदा स्याद्विदितं जनैः । तदा किं करणीयं स्याद्व्रतं त्रैलोक्यपावनं । कृष्ण उवाच । साधु पृष्टं त्वया राजन्वक्ष्यामि व्रतनिष्कृतिं । फलं लोकस्य सर्वस्य रक्षार्थं शृणु तत्क्रमात् । दोरे नष्टे महान्दोषः प्रभवे-द्व्रतिनामिह । तस्मात्तद्दोषनाशार्थं प्रायश्चित्तं विधीयते । गुरुं प्रदक्षिणीकृत्य नमस्कृत्य समाहितः । विज्ञाप्य दोरनाशं च कृत्वा दोरं व्रती ततः । हव्यवाहं प्रतिष्ठाप्य तस्मिन्ध्यात्वा हरिं परं । आज्यमन्वावधिश्रित्य चक्षुष्यंते हुते ततः । अष्टोत्तरशतं हुत्वा मूलमंत्रेण वैष्णवः । नाममंत्रेण तद्धुत्वा द्वादशाक्षरसं-युजा । केशवादिसकृद्धुत्वा प्रायश्चित्तं तु शक्तितः । पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत् । व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि । वचनाद्भूमिदेवानां सर्वं संपूर्णतां व्रजेत् । मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन । यत्पूजितं मया देव परिपूर्णं तदस्तु मे । आचार्यपूजनं कार्यं दक्षिणाद्यैर्नृपोत्तम । एवं शा-न्तिविधिं कृत्वा पूर्ववद्व्रतमादिशेत् । कृत्वादोरं व्रती पश्चात्पू-जितैः सह बंधुभिः । तस्मात्सर्वप्रयत्नेन प्रायश्चित्तं चरेत्सुधीः । प्रायश्चित्तमकृत्वा तु पुण्यं न स्याच्छुभं क्वचित् । व्याधिग्रस्तो विपद्ग्रस्तः श्रिया संत्यज्यते गृहं । दोरस्यातिक्रमे चैव वदेत्सर्व-मिदं बुधः । य इदं कुरुते पार्थ ह्यायुःपुत्राश्च संपदः । इति

श्रीनष्टानंतदोरकप्रायश्चित्तं । अग्निप्रतिष्ठा स्थालीपाकवत् । इध्मकरणे विकल्पः ।

अथ **पौर्णमासीकृत्यं** हेमाद्रौ ब्राह्मे श्राद्धं प्रकृत्य—नांदीमुखानां प्रत्यब्दं कन्याराशिगते रवौ । पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा । इति । भाद्रपदमासांतर्गते क्वचिद्दिने कन्यासंक्रमणे तन्मासमध्यवर्तिन्यां पौर्णमास्यां नांदीमुखानां श्राद्धं कर्तव्यं । तच्चावश्यकं प्रत्यब्दमिति शब्दात् । नांदीमुखशब्दश्चात्र प्रपितामहात्परेषु प्रशंसार्थः । पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः । तेभ्यः पूर्वे त्रयो ये तु ते तु नांदीमुखाः स्मृताः । इति तत्रैव पुराणवचनात् । अस्याप्यन्यत्यश्राद्धविध्येकवाक्यत्वान्न प्रसिद्धनांदीश्राद्धे एतेषां देवतात्वमिति **हेमाद्रिः** । अस्माच्च ग्रंथान्नांदीमुखत्वविशिष्टानां नोद्देश्यत्वं किंतु वस्वादिरूपविशिष्टानामेव । अतो देवतासादृश्यप्रयुक्तातिदेशेन नांदीश्राद्धधर्मातिदेशः । नामातिदेशत्वशंकापरिहारौ त्वभुक्तवांतवदुपेक्ष्यौ । कर्मणि तादृशनाम्नः क्वचिदप्यप्रयोगात् । अत्र मातामहपार्वणमपि—पितरो यत्र पूज्यंते तत्र मातामहा अपि । इति धौम्यवचनात् । नचात्र पितृशब्दोऽजहल्लक्षणया जनकादिपरः । तस्यान्याय्यत्वात् । किंतु वस्वादिभावापत्तिरूपसंस्कारनिमित्तः । तत्ररूढत्वात् । नचैवं सपिंडीकरणोत्तरश्राद्धमात्रे मातामहानामापत्तिः । असति बाधके इष्टापत्तेः । पक्षश्राद्धं सकृन्महालयं वा कुर्वंत एवेदं नित्यमिति **प्रयोगपारिजातः** । पार्वणधर्मातिदेशादेव सपिंडमेतत् । यत्तु—पौर्णमासीषु सर्वासु निषिद्धं पिंडपातनं । वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा । इति **गार्ग्य**वचस्तन्न पौर्णमास्यधिकरणकश्राद्धविषयं । आब्दिकेप्यापत्तेः किंतु सर्वपदोपादानात् सर्वतदधिकरणकश्राद्धविशेषविषयावेव पिंडदाननिषेधतत्पर्युदासौ । अस्तिच सर्वपूर्णिमासु श्राद्धं—भद्रावैधृतिकृष्णपक्षतनयोत्पत्त्यादिके पूर्णिमास्वाश्विन्यादिककार्तिकीपरिमिते कालेऽन्वहं च स्मृतं इति दीपिकोक्तेः । पूर्णिमासु द्वादशस्विति विवरणाच्चेत्यलं ।

अथ **महालयः** । हेमाद्रौ **ब्रह्मपुराणे**—आश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने । त्रिभागहीनं पक्षं वा त्रिभागं

त्वर्धमेव वा । दिनेदिन इति वीप्सया तिथ्याधिक्येपि तत्र श्राद्धमावश्यकमिति सूचितं । अतएव वचनांतरं—कन्यागते सवितरि यान्यहानि तु षोडश । ऋतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् । इति । यत्त्वत्र हेमाद्रिणा परं व्याख्याद्वयमकारि भाद्रपदपौर्णमास्या षोडशपूरणं आश्विनशुक्लप्रतिपदावेति तदसत् । एकपक्षांतर्गतत्वोपाधिना षोडशसंख्यासामंजस्यात् ।—मध्ये वा यदि वाप्यंते यत्र कन्यां व्रजेद्रविः । स पक्षः सकलः श्रेष्ठः श्राद्धषोडशकं प्रति । इति **वृद्धमनु**वाक्येन षोडशश्राद्धानां एकपक्षे कर्तव्यतायाः स्फुटमभिधानाच्च । यत्तु **पराशरमाधवीये कार्ष्णाजिनि**वचः—नभस्यस्यापरे पक्षे श्राद्धं कार्यं दिने दिने । नैव नंदादिवर्जं स्यान्नैव निंद्या चतुर्दशी । इति । तत्र दिने दिन इति वीप्सया सहिताच्छ्राद्धमित्येकवचनात्तत्पक्षगतदिनसमसंख्याभ्यासविशिष्ट एकः प्रयोगो विधीयते । अस्मिन्पक्षे च ब्राह्मणैक्यनियमः । अमायां च दक्षिणादानं । षोडशश्राद्धपक्षे तु प्रत्यहं तत् । नच ब्राह्मणैक्यमिति बोध्यं । त्रिभागहीनमिति षष्ठ्यादिः पक्षः । त्रिभागमिति एकादश्यादिः । पंचम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वं ततोऽप्यति । इति **विष्णुधर्मोक्तेः** । अर्धमिति च एकादश्यादि पक्षस्यार्धं त्रयोदश्यादि । अन्ये तु—पक्षाद्यादि च दर्शांतं पंचम्यादि दिगादि च । अष्टम्यादि यथाशक्ति कुर्यादापरपक्षिकं । इति **कालादर्श**वचनात् । त्रिभागहीनमिति दशम्यादिः । अर्धमिति चाष्टम्यादिः पक्ष एवोच्यत इत्याहुः । एषामपि च पक्षाणामसंभवे—कन्यास्थे दिवाकरे सति एकस्मिन्नपि दिने श्राद्धं कार्यम् । आषाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे । यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे । तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवं । इति **नागरखंड**वचनात्—पिंडमिच्छंति पितरः कन्याराशिगते रवौ । इति तद्राशिगतस्यापि सूर्यस्य स्वातंत्र्येण निमित्तत्वप्रतीतेः । अतएवापरपक्षे श्राद्धानुष्ठानाभावे यावत्कन्यातूलयोः सूर्यस्तिष्ठति तावत्पर्यंतं श्राद्धस्य काल उक्तः । **हेमाद्रौ ब्राह्मे**—यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः । तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा । कन्यागते सवितरि पितरो यांति वै सुतान् ।

शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनं। ततो वृश्चिकसंप्राप्तौ निराशाः पितरो गताः। ततः स्वभवनं यांति शापं दत्वा सुदारुणं। इति। अत्र यद्यप्यविशेषेण गौणः कालः प्रतीयते तथापि—हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन्। पंचम्योरंतरे दद्यादुभयोरपि पक्षयोः। इति **हेमाद्रौ** यमवचनात् आश्विनशुक्लपंचमीपर्यंतं कालः प्रशस्तः। वृश्चिकसंक्रमणोत्तरमपि कालविशेषमाह **सुमंतुः**—येयं दीपान्विता राजन्ख्याता पंचदशी भुवि। तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये। इति। एकस्यां च तिथौ श्राद्धं कुर्वतो वर्ज्यानाह **पृथिवीचंद्रोदये वसिष्ठः**।—नंदायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु। एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्। इति। त्रिजन्मानि स्वीयजन्मनक्षत्रं ततो दशममेकोनविंशं च। नतु जन्मभं तत्पूर्वोत्तरे चेति। निर्मूललक्षितलक्षणाप्रसंगात्। **वृद्धगार्ग्यो**ऽपि—प्राजापत्ये च पौष्णे च पित्रर्क्षे भार्गवे तथा। यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति। इति। इदं च पितृमृताहव्यतिरिक्तविषयं। आषाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे। मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः। तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवं। इति **नागरखंडे** विशेषविधानेन सामान्यप्रवृत्तनिषेधापवादात्।—या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते। सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः। अशक्तः पितृपक्षे तु करोत्येकदिने यतः। निषिद्धेऽपि दिने कुर्यात्पिंडदानं यथाविधि। इति **कातीयवचनाच्च**। मृताहे श्राद्धासंभवे तिथ्यादिनिषेधोऽन्यत्र विचार्यः। तादृशा अन्येऽपि **कालहेमाद्रावुक्ताः**—अमापाते भरण्यां च द्वादश्यां मध्यपक्षगे। श्राद्धे तिथिं च नक्षत्रं वारं च न विचारयेत्। इति। संन्यासिदैवत्यं तु महालयं द्वादश्यां कुर्यात्।—यतीनां च वनस्थानां वैष्णवानां विशेषतः। द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विधीयते। इति **संग्रहोक्तेः**। यः कृष्णपक्षे श्राद्धं करोति तेन चतुर्दशी न वर्ज्या। पक्षांतरेषु तु वर्ज्यैव। नभस्यस्यासिते पक्षे श्राद्धं कुर्याद्दिने दिने। नैव नंदादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी। इति **कार्ष्णाजिनिवचनात्**।—कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीं। श्राद्धे प्रशस्ता-

स्तिथयो यथैता न तथेतराः । इति मनुवचनात् । अत्र दशम्यादावित्यादिपदेन पंचम्यादिपक्षाणामुपसंग्रहस्य व्याख्यातृभिः कथनात् । चतुर्दश्यां मृतस्यापि शस्त्राद्यहतस्य महालये तिथ्यंतर एव श्राद्धं ।—श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये । इति कालादर्शवचनात् । अतश्चतुर्दशीमृतस्य पौर्णमासीमृतस्य वा श्राद्धदिनममाद्यन्यतमद्ग्राह्यं । तदसंभवे तिथ्यादिनिषेधविचारपूर्वकं दिनांतरं । महालये विशेषमाह देवलः—दैवाद्यं नैव कुर्वीत दैवांतं नैव कुत्रचित् । दैवाद्यंतं हि कुर्वीत श्राद्धं मरणहेतुना । इति । आदौ देवा विश्वेदेवा अंते देवा महाविष्णुरिति व्याख्यातं निर्णयामृते । विश्वेदेवाश्च धुरिलोचनसंज्ञकाः—अपि कन्यागते सूर्ये काम्ये च धुरिलोचनौ । इति स्मृतेः । अतश्च विष्णुप्रीत्यर्थं ब्राह्मणपूजनाद्यत्रावश्यकमिति प्रतीयते । अत्रच मातृश्राद्धं पृथक् शस्तं मातामहानां सपत्नीकत्वमेवेति स्मृत्यर्थसारः । मातामहीपार्वणमपि वा पृथक्कार्यं । गयामहालयादिषु पृथक्सह वा भर्तृभिरित्यपरार्कोक्तेः ।—कुर्याद्द्वादशदैवत्यं पितृपक्षे च सर्वदा । तथा तीर्थे गयायां च एष धर्मः सनातनः । इति कातीयोक्तेश्च । तथाचार्यादीनामप्येकोद्दिष्टं प्रतिदैवतमेकैकब्राह्मणे कार्यं । अशक्तस्तु एकस्मिन्नपि ब्राह्मणे सर्वैकोद्दिष्टानि कुर्यात् । यथोक्तं निर्णयामृते चतुर्विंशतिमते—आचार्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च । तत्पत्नीभ्यश्च सर्वाभ्यस्तथैव च जलांजलीन् । पिंडांस्तेभ्यः सदा दद्यात्कन्याभाद्रपदे नरः । तीर्थेषु चैव सर्वेषु माघमासे मघासु च । एकस्मिन्ब्राह्मणे सर्वानाचार्यादीन्प्रपूजयेत् । इति ।

चतुर्दश्यां पितुरपि शस्त्रहतस्यैकोद्दिष्टमेव कार्यं ।—समत्वमागतस्यापि पितुः शस्त्रहतस्य वै । एकोद्दिष्टं तु कर्तव्यं चतुर्दश्यां महालये । इति मरीचिवचनात् । अत्रैकोद्दिष्टे देवपूजनमावश्यकं ।—विश्वान्देवांश्च तत्रापि पूजयित्वा ततोऽमलान् । ये वै शस्त्रहतास्तेषां श्राद्धं कुर्यादतंद्रितः । इति संवत्सरप्रदीपे हारीतोक्तेः । पितृपितामहयोर्द्वयोः शस्त्रहतत्वे एकोद्दिष्टद्वयं कार्यं । यस्य तु त्रयः पित्रादयः शस्त्रहताः स पार्वणं कुर्यात् ।—पित्रादयस्त्रयो यस्य शस्त्रघाता-

स्त्वनुक्रमात् । स भूते पार्वणं कुर्यात् इति निर्णयामृते पराशरवचनात् । शस्त्रघातग्रहणं विषादिहतानामुपलक्षणं ।—प्रायोऽनशनशस्त्राग्निविषोद्बंधनिनां तथा । चतुर्दश्यां तु कर्तव्यमिति ब्रह्मांडवचनात् ।

अत्र पक्षे भरण्यां श्राद्धं प्रशस्तं ।—भरणी प्रेतपक्षे तु महती परिकीर्तिता । अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् । इति मात्स्योक्तेः ।

अत्राष्टम्यां माघ्यावर्षसंज्ञं श्राद्धं कार्यं । एतेन माघ्यावर्षं प्रोष्ठपद्या अपरपक्षे इत्याश्वलायनोक्तेः । इदं चाष्टकावत्सप्तम्यादिदिनत्रयेऽनुष्ठेयं । एतेनेत्यष्टकाधर्मातिदेशात् । अत आश्वलायनशाखिभिर्नाष्टकाशब्देनेह संकल्पः कार्यः । माघ्यावर्षं करिष्य इति संकल्प्य सर्वोऽप्यष्टकाविधिः कार्यः । हरदत्तमते तु नैवं । माघ्यावर्षमिति पाठं स्वीकृत्य मघावर्षायोगेन विहितत्वात्त्रयोदशीश्राद्धपरत्वेन व्याख्याय तत्रानंतरोक्तान्वष्टक्यधर्मातिदेशपरतया तेन व्याख्यानात् । जयंतमतेपि नाष्टकाधर्मातिदेशः । मासिमासि चैवमिति सूत्रेण प्रतिमासमपरपक्षे आन्वष्टक्यधर्मकश्राद्धस्य पार्वणेन सह वैकल्पिकविधिमंगीकृत्य तत्सूत्रस्य प्रोष्ठपदापरपक्षे पार्वणनिवृत्त्यर्थत्वेन व्याख्यानात् प्रथमाष्टकापक्षाष्टम्यामिति कातीयसूत्रेऽष्टकाया इह कर्तव्यत्वोक्तेः । कातीयैरष्टकां करिष्य इति संकल्पः कार्यः ।—नवम्यामष्टकाश्राद्धं नवदैवत्यं कार्यं । अन्वष्टकासु नवभिः पिंडैः श्राद्धमुदाहृतं । पित्रादि मातृमध्यं च ततो मातामहांतकं । इति कातीयोक्तेः ।

दीपिकायां तु क्रमांतरमुक्तं । मातृयजनं त्वष्टकास्वादित इति । अत्र तत्तद्गृह्यानुसारेण व्यवस्था । बह्वल्पं वा स्वगृह्योक्तं यस्य यत्कर्म चोदितं । इत्यादिशास्त्रांतरात् । इदं जीवत्पितृकेणापि मृतमातृकेणावश्यं कार्यं ।—अन्वष्टक्यां गयाप्राप्तौ सत्यां यच्च मृतेऽहनि । मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति । इति मैत्रायणीयपरिशिष्टात् ।—प्रौष्ठपद्यष्टका भूयः पितृलोके सुखावहाः । सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ । नवम्यां हि प्रदातव्यं प्राप्तब्रह्मवराय ते । इति हेमाद्र्युदाहृतविशेषवचनाच्च । यद्यपि नास्य नवमीश्राद्धस्यान्वष्टक्यत्वं

मन्यंते किंतु—कन्यागते सवितरि पितरो यांति वै सुतान् । शून्या प्रेतपुरी राजन्यावद्वृश्चिकदर्शनम् । इत्यर्थवादोन्नीतं येषां श्राद्धे संततिभूता ये अधिकारिणस्तैः कन्यागतोपलक्षितापरपक्षे तेषां श्राद्धं कार्यमिति विध्युन्नयनं स्वीकृत्य दौहित्रप्रतिपच्छ्राद्धं तन्मूलकमेव मन्यमानाः **स्मृतिरत्नावल्यां** तस्यामेव प्रतिपदि जीवत्पितृकंप्रति विहितमातृश्राद्धवत् आचारप्राप्तं नवमीश्राद्धमपि तद्विधिमूलकमेव मन्यंते । मृतपितृकाणां च पितृश्राद्धप्रयोगे एव पृथंग्पृथग्वा मातृतृप्तेरपि संपादितत्वान्न पृथगेतच्छ्राद्धानुष्ठानमुचितमित्येवं मृते भर्तरि लुप्यत इति देशविशेषप्रसिद्धवचनार्थं च समूलत्वेनोपपादयंति तन्मतेपि नवमीश्राद्धस्य जीवत्पितृकं प्रत्यवश्यकर्तव्यताप्रतीतेश्च ।

अत्र सुवासिनीभोजनमुक्तं **मार्कंडेयपुराणे**—मातुः श्राद्धे तु संप्राप्ते ब्राह्मणैः सह भोजनं । सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत् । भर्तुरग्रे मृता नारी सहदाहेन वा मृता । तस्याः स्थाने नियुंजीत विप्रैः सह सुवासिनीं । इति । तत्रैव—स्त्रीश्राद्धेषु प्रदेयाः स्युरलंकाराश्च योषितां । इत्यादि । अनेकमृतमातृकेण सर्वोद्देश्यकं श्राद्धं सहैव कार्यं ।—अनेका मातरो यस्य श्राद्धे चापरपक्षके । अर्घ्यदानं पृथक्कुर्यात्पिंडमेकं तु निर्वपेत् । इति **स्मृतिदर्पणे गालवोक्तेरिति** केचित् । अन्ये तु **हेमाद्रौ विष्णुधर्मोत्तरे**—अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च । पिंडनिर्वपणं कार्यं तस्यामपि तु सत्तम । इति वचसि श्राद्धत्वादेव प्राप्तपिंडदानस्य पुनर्विधानं । यथा जीवत्पितृकत्वगर्भिणीपतित्वादिनिमित्तकपिंडदाननिषेधे प्राप्ते तदपवादार्थं तथा पृथक् पिंडदानप्राप्त्यर्थं चेति वदंतः प्रत्येकं ब्राह्मणभोजनपिंडदानेप्याहुः । अत्र चानुपनीतस्याप्यधिकारः । अमावास्यान्वष्टक्यादिश्राद्धं प्रकृत्य—एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु । श्राद्धं साधारणं नाम सर्वकर्मफलप्रदं । भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि नित्यशः । शूद्रोऽप्यमंत्रवत्कुर्यादनेन विधिना बुधः । इति **शूलपाणौ मात्स्योक्तेः** । जीवन्मातृकोऽपि सपत्नमातुः पार्वणं कुर्यात् ।—सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ । नवम्यां हि प्रदातव्यं ब्रह्मलब्धवराय ते । इति । अत्र सर्वासामित्युक्तिबलेन जीवत्पितृकनि-

र्णये मातामहैस्तथा निर्णीतत्वात् ।—अन्वष्टक्यं च यन्मातुर्गयाश्राद्धं महालये । पितृपत्नीषु यच्छ्राद्धं सर्वं पार्वणवद्भवेत् । इति श्राद्धदीपकलिकायां मनूक्तेः । अत्रैव महालयग्रहणादजीवत्पितृकस्यापि जीवन्मातृकस्य पार्वणविधिनैव सपत्नमातुः श्राद्धं भवतीति प्रतीयते ।

मातृभिन्नानामपि कासांचिन्नवम्यां श्राद्धं कर्तव्यमित्युक्तं । तत्रैव ब्राह्मे—पितृमातृकुलोत्पन्ना याः काश्चित्तु मृताः स्त्रियः। श्राद्धार्हा मातरो ज्ञेयाः श्राद्धं तत्र प्रदीयते । इति । अत्र याः काश्चिन्मृताः स्त्रियः श्राद्धार्हा मातरो ज्ञेयाः । तदुद्देशेन श्राद्धं तत्र प्रदेयं इति वाक्यार्थपर्यवसानात् । पितृमातृकुलोत्पन्ना इत्युपलक्षणं । ततश्चापुत्राया मातामह्या इव पत्न्या अपि संग्रहात् शिष्टाचारोऽप्यनुसृतो भवति । नवमीश्राद्धासंभवेऽनुकल्पविधिर्ऋग्विधाने—एभिर्द्युभिर्जपेन्मंत्रं शतवारं तु तद्दिने । आन्वष्टक्यं यदा शून्यं संपूर्णं याति सर्वथा । इति । इति नवमीश्राद्धनिर्णयः ।

अथ त्रयोदशीश्राद्धं । तन्नित्यत्वं हेमाद्रौ विष्णुधर्मे-श्राद्धकालममावास्या नित्यं पार्थिवसत्तम । पौर्णमासी तथा माघी श्रावणी च नृपोत्तम । प्रोष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी । एतानि श्राद्धकालानि नित्यान्याह प्रजापतिः । श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते । इति ।तत्काम्यत्वं प्रयोगपारिजाते शंखः—प्रोष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीं । प्राप्य श्राद्धं तु कर्तव्यं मधुना पायसेन वा । प्रजामिष्टां यशः स्वर्गमारोग्यवर्धनं तथा । नृणां श्राद्धे सदा प्रीताः प्रयच्छंति पितामहाः । इति ।

मघायोगेन गजच्छायासंज्ञकायामस्यां स्वसंततिकर्तृकं श्राद्धं पितृभिराशास्यमित्युक्तमपरार्के—हंसे हंसस्थिता या तु मघायुक्ता त्रयोदशी । तिथिर्वैवस्वती नाम सा छाया कुंजरस्य तु । अपि नः स्वकुले भूयाद्यो नो दद्यात्त्रयोदशीं । पायसं मधुसर्पिर्भ्यां प्राक्छाये कुंजरस्य च । इति । अत्र च प्राक्छाये इति कुंजरीयप्राक्छायाविशिष्टो देशः फलातिशयार्थं इति ज्ञाप्यते । गजच्छायासंज्ञको मघायोगोऽपि फलातिशयार्थः ।—तथा वर्षात्त्रयोदश्यां मघासु च विशेषतः।

इति याज्ञवल्क्यीयवचसि विशेषपदोपादानात् । तद्योगाभावेपि त्रयोदश्यां श्राद्धं कार्यमेव । उक्तनित्यत्ववदेकवचसि केवलत्रयोदश्या एव ग्रहणात् । तथा द्वादश्यादिकाले विद्यमानमघा अपि श्राद्धकालः ।—आजमांसैश्च शाकैश्च पयसा पायसेन च । एष वो दास्यति श्राद्धं वर्षासु च मघासु च । इति वसिष्ठेन त्रयोदशीमनपेक्ष्य मघानामपि श्राद्धकालत्वोक्तेः । इदंच मघाश्राद्धं त्रयोदशीश्राद्धेन पृथग्पृथग्वोपस्थितं अविभक्ता अपि भ्रातरः पृथगेव कुर्युः ।—विभक्ता अविभक्ता वा श्राद्धं कुर्युः पृथक्सुताः । मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना । इति **प्रयोगपारिजाते** वचनात् । मघाश्राद्धादन्यत्र पृथक्त्वं विना नाधिकार इति चतुर्थपादार्थः ।

मघायुक्तत्रयोदश्यां मलमासेपि श्राद्धं कार्यमित्यपि तत्रैव—तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः । जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च । मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश । चंद्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकं । कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा । इति ।

अथात्र निषेधाः प्रदर्श्यंते । तत्र **वामनपुराणे**—गृही त्रयोदशीश्राद्धं न कुर्यात्पुत्रवानपि । उपवासं च संक्रांतौ ग्रहणे चंद्रसूर्ययोः । इति । **स्कांदे नागरखंडे**—यो वांछति नरो मुक्तिं पितृभिः सह चात्मनः । असंतानश्च यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी । संतानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत् । इति । तत्रैव महालयत्रयोदशीं प्रकृत्य प्रदेशांतरे ।—अथ श्राद्धं विना देयं तद्दिने मधुपायसं । खड्गमांसं कालशाकं मांसं वार्ध्रीणसस्य च । तस्याभावेऽपि दातव्यं क्षीरोदनमनुत्तमं । तस्मिन्नहनि विप्रेभ्यः पितॄणां तुष्टये नृप । तस्याभावेपि दातव्यं जलं तिलविमिश्रितं । इति । अत्र केषुचिद्वचनेषु त्रयोदशीसामान्यग्रहणात् महालयभिन्नत्रयोदशीविषया निषेधा इति केचित् । तन्न । अनंतरोदाहृतनागरखंडस्थनिषेधस्य प्रकरणान्महालयत्रयोदशीविषयत्वप्रतीतेः काम्यश्राद्धविषयत्वमित्यन्ये । तदप्यसत् । विहितत्वेन नित्यकाम्ययोर्निषेधानर्हत्वस्य तुल्यत्वात् । पुत्रवत्पर्युदासस्योभयत्र संभवात् । परेतु—अयनद्वितये श्राद्धं विषुवद्वितये तथा । युगादिषु च सर्वासु

पिंडनिर्वपणादृते । इति पुलस्त्येन युगादिषु पिंडदाननिषेधात् । अस्यास्त्रयोदश्याश्च युगादित्वात्सपिंडश्राद्धविषयाणि निषेधवाक्यानीत्याहुः । तदपि न । युगाद्यंतरवदिहापि सामान्यनिषेधेनैवापिंडत्वे सिद्धे निषेधवैयर्थ्यापत्तेः । अपुत्रस्यापि युगादित्वप्रयुक्तपिंडनिषेधावश्यंभावेन पुत्रवंतं प्रति विशेषतस्तन्निषेधस्य वैयर्थ्याच्च । तस्मात्संक्रांत्युपवासादिवदिहापि पर्युदासान्नैव पुत्रवता श्राद्धमनुष्ठेयं । तद्विधिमंतरेण पितृनुद्दिश्य ब्राह्मणेभ्यः पायसाद्यन्नदानं कार्यं । अपुत्रस्तु पिंडदानरहितं श्राद्धविधिना श्राद्धं कुर्यात् । यस्य श्राद्धप्राप्तिस्तं प्रत्येव पिंडदानपर्युदाससाफल्यात् । यश्च—श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् । न तृप्तास्तत्र ये यस्य प्रजां हिंसंति तस्य ते । इति **कार्ष्णाजिनि**निषेधः सोप्यपुत्रकर्तृकश्राद्धे मातामहपार्वणस्यावश्यकत्वकथनार्थः । नच—पितरो यत्र पूज्यंते तत्र मातामहा अपि । इति अमावास्याश्राद्धवदिहापि मातामहपार्वणस्य प्राप्तत्वेन पुनरिहापि तद्वचनं व्यर्थमिति शंक्यं । केषुचिदाश्वलायनीयगृह्यादिषु पितृपार्वणस्यैव विधिमालोच्य बह्वल्पं वा स्वगृह्योक्तमिति शास्त्रावलंबनेनामावास्याश्राद्धे विशेषवचनरहितासु तद्विकृतिषु च केवलपितृपार्वणमेव यश्चिकीर्षति तं प्रति निषेधोपपत्तेः । तथान्यच्च **हेमाद्रौ** निषेधवाक्यं—नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान्यः सुतायुषी । एकस्यैव न कुर्यात्स पार्वणं तु समाचरेत् । इति । तदपि पुत्रवंतं सुतायुःकामंप्रति पित्राद्युद्देश्यकपार्वणेतिकर्तव्यताकश्राद्धघटितत्रयोदशीश्राद्धप्रतिप्रसवार्थं । तथाहि सति तावत्सपिंडीकरणोर्ध्वमपि पितृव्यादीनां सर्वश्राद्धसाधारणा एकोद्दिष्टनियमविधयः । **कात्यायनः**—सपिंडीकरणादूर्ध्वं पित्रोरेव हि पार्वणं । पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव तु । इति । अत्र मातृशब्दः सपत्नमातृपर इति **हेमाद्रिः** । **प्रचेताः**—सपिंडीकरणादूर्ध्वमेकोद्दिष्टं विधीयते । अपुत्राणां तु सर्वेषामपत्नीनां तथैव च । इति । अपत्नीनामकृतविवाहानामित्यपि सः । **अत्रिः**—भ्रात्रे भगिन्यै पुत्राय श्वशुरे मातुलाय च । पितृव्ये गुरवे श्राद्धमेकोद्दिष्टं न पार्वणं । इति । एवं च त्रयोदशीश्राद्धविधिनाति-

१ तद्दिनांतरेण.

देशसहितेन प्राप्तस्य पार्वणद्वयात्मकश्राद्धस्य पितृव्याद्युद्देश्यकपार्वणैः सहाचरणात्मकोऽपूर्वप्रयोगोऽनेन शास्त्रेणांशे प्रतिप्रसवात्मकेन क्रियते। समाचरेदिति संशब्दस्य साहित्यवचनत्वात्। एवंच पितृव्यभ्रातृनप्तृणामपुत्राणां तथैव। मातामहस्यापुत्रस्य श्राद्धं तत्पितृवद्भवेत्। इति जातूकर्ण्यवचनस्य पितृवदितिपदमहिम्ना पार्वणप्रापकस्य त्रयोदशीश्राद्धविषयत्वं हेमाद्रिणोक्तं संगच्छते। अतो निष्कामेन पुत्रिणा नित्यविधिपालनार्थं श्राद्धविधिरहितं पित्रादिषडुद्देश्यकं त्वन्नप्रदानमात्रमनुष्ठेयं। अथ श्राद्धं विना देयमित्युदाहृतवचनादिति सिद्धं। इति त्रयोदशीनिर्णयः।

अथ चतुर्दशी। तत्र शस्त्रादिमृतस्य पित्रादेरेकस्य द्वयोर्वैकोद्दिष्टं त्रयाणांतु पार्वणमित्युक्तं। शस्त्रादिमरणं द्विविधं। प्रायश्चित्ताद्यर्थं विहितं प्रमादक्रोधादिसंजातं पापमृत्युरूपं च। तत्र विहितबुद्ध्या जलादिप्रवेशेन प्रायश्चित्तेन यो मृतः यो वा वृद्धः शौचक्रियालुप्तस्तथामृतस्तस्य चतुर्दश्यां श्राद्धं न कार्यमित्याशयं शाकटायनवच उदाजहार हेमाद्रिः— जलाग्निभ्यां विपन्नानां संन्यासे वा गृहे पथि। श्राद्धं कुर्वीत तेषां वै वर्जयित्वा चतुर्दशीं। इति। जलादीति शस्त्रादेरुपलक्षणमित्यपि सः। संग्रामप्रायोपवेशयोर्विहितत्वेपि ताभ्यां मृतानां चतुर्दश्यां श्राद्धं विधेयं। ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः। प्रीयंते पितरश्चास्य ये च शस्त्रहता रणे। इति मनूक्तेः। प्रायोऽनशनशस्त्राग्निविषोद्बंधनिनां तथा। चतुर्दश्यां भवेच्छ्राद्धं तृप्त्यर्थमिति निश्चयः। इति ब्रह्मपुराणाच्च। पापमृत्युमृतानामपि तदुचितप्रायश्चित्तनारायणबल्यादिपूर्वकक्रियारहितानां नात्र श्राद्धं विधेयमित्याशयेन छागलेयः—शस्त्रविप्रहतानां च शृंगिदंष्ट्रिसरीसृपैः। आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत्। इति। तादृशक्रियावतां तु चतुर्दश्यां तिथ्यंतरे च श्राद्धं विधेयं। पितामहादितृप्तेरप्यावश्यकत्वात्। यद्यस्यामेव चतुर्दश्यां शस्त्रादिहतः कश्चित्तस्य सांवत्सरिकेण पार्वणेनैकोद्दिष्टेन वा तदेकोद्दिष्टसिद्धिरिति। दैवाच्छस्त्रादिहतस्य चतुर्दश्यां श्राद्धाकरणे चात्रैव पक्षे दिनांतरे तत्पार्वणविधिनैव विधेयमिति च हेमाद्रिः। अतश्चैत-

त्प्रतीयते। प्राप्ते पार्वणे देवताभूतपित्रादिगतदुर्मरणनिमित्तकश्चतुर्दश्यामेकोद्दिष्टेतिकर्तव्यताकः प्रयोगो विधीयते। नत्विदं कर्मांतरं। तेनोत्पत्तिपार्वणत्वादपराह्णव्यापिन्येव तिथिर्ग्राह्येति। इति चतुर्दशीनिर्णयः।

**हेमाद्रौ**—हंसे हंसस्थिते यातु अमावास्या करान्विता। सा ज्ञेया कुंजरच्छाया इति बौधायनोऽब्रवीत्। हंसः सूर्यः। तद्देवतत्वाद्धस्तोऽपि हंसः। करश्चंद्रयुक्तो हस्तः। इत्यमायां गजच्छाया।

अथ प्रतिपत्कृत्यं **हेमाद्रौ**—जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले। कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते। इति। इदं च नवमीश्राद्धोक्तन्यायेन जीवत्पितृकेणैव कार्यं। केचित्तु—मुंडनं पिंडदानं च प्रेतकर्म च सर्वशः। न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च। इति **दक्षोक्ते**रपिंडकमेतदित्याहुः। तन्न। श्राद्धविधिना सपिंडस्यैव विधानात्। अन्वष्टक्यादिषु जीवत्पितृकाधिकारिकेषु पिंडप्रतिप्रसववाक्यस्योपलक्षणत्वांगीकारेण तदधिकारिकश्राद्धांतरसाधारणत्वात्। अन्यथानेकश्रुतिकल्पनागौरवापत्तेः। निषेधस्य च श्राद्धाभावेपि यन्नाम्ना पातयेत्पिंडं तन्नयेद्ब्रह्म शाश्वतं। इत्यादिशास्त्रेण प्रसक्तस्य विषयीकरणेनोपपत्तेः। नचेदं संगवव्यापिन्यां कार्यं। तत्प्रापकवचसो निर्मूलत्वात्। अतः पार्वणत्वादपराह्णव्यापिन्यां कार्यं। अत्र च सपत्नीकानां मातामहानां देवतात्वं द्रष्टव्यं। अमावास्याश्राद्धाद्यंतर्गतमातामहपार्वण इव इहापि सत्यपि पितृपार्वणविकृतित्वे सपत्नीकत्वगुणलंभकस्य प्रमाणस्य—स्वभर्तृपिंडमात्राभ्यस्तृप्तिरासां यतः स्मृता। इत्यनारभ्य वचसः प्रतिबंधासंभवात्।

अथात्रैव पक्षे **कपिलाषष्ठी मदनरत्ने स्कान्दे**—प्रौष्ठपदासितेपक्षे षष्ठी भौमेन संयुता। व्यतीपातेन रोहिण्या सा षष्ठी कपिला स्मृता। इति। यद्यपि फाल्गुनचैत्रवैशाखेष्वपि तत्संभवस्तत्रैवोक्तस्तथापि भाद्रपदापरपक्षगाया एव प्रसिद्धत्वात्तत्रैव कार्यं प्रदर्श्यते। **तत्रैव**—तस्यां चैव हुतं जप्तं यत्किंचित्प्रतिपादितं। तस्य सर्वस्य पुण्यस्य संख्या वक्तुं न शक्यते। इति। प्रतिपादितं दत्तं। अन्यत्रापि—अस्मिन्योगे समस्ते स्या-

न्नाडिकापि यदा तिथिः । यदि हस्ते सहस्रांशुस्तदा कार्यं व्रतं बुधैः । यद्येवं प्राप्यते योगः षष्ठ्यां कालविपर्यये । कपिला नाम सा प्रोक्ता षष्ठी ग्रहशताधिका । तस्यां हुतं च दत्तं च सर्वं कोटिगुणं भवेत् । इति ।

अथात्र व्रतविधिः—पंचम्यामेकभक्तं च कुर्यात्तत्र विचक्षणः । षष्ठ्यां प्रातः समुत्थाय कृत्वादौ दंतधावनं । जलपूर्णांजलिं कृत्वा इमं मंत्रमुदीरयेत् । निराहारोऽद्य देवेश त्वद्भक्तस्त्वत्परायणः । पूजयिष्यास्म्यहं भक्त्या शरणं भव भास्कर। दत्वार्घ्यं चेति संकल्पं कृत्वा चैवं शुचिस्ततः । स्नानं कृत्वा प्रयत्नेन नद्यां तीर्थेऽथवा ह्रदे । तडागे दीर्घिकायां वा गृहे वा नियतात्मवान् । देवदारुं तथोशीरं कुंकुमैलामनःशिलां । पत्रकं पद्मकं षष्टीं मधुगव्येन पेषयेत् । षष्ठी षाष्ठिकतंडुलाः । क्षीरेणालोड्य कल्केन स्नानं कुर्यात्समंत्रकं । आपस्त्वमसि देवेश ज्योतिषां पतिरेव च। पापं नाशय मे देव वाङ्मनःकायकर्मजं । पंचगव्यकृतस्नानः पंचभंगैस्तु मार्जयेत् । पंचभंगैः पंचपल्लवैः । आनयेन्मृत्तिकां शुद्धां स्नानार्थं च प्रयत्नतः । मृत्तिके ब्रह्मपूतासि काश्यपेनाभिमंत्रिता । पवित्रं कुरु मां नित्यं सर्वपापात्समुद्धर । इति मृत्तिकास्नानं । ततः—मंत्रेणानेन वरुणं पूजयेद्बुद्धिमान्नरः । पाशाग्र्यहस्त वरुण सर्ववारीश्वर प्रभो । अद्याहं प्रार्थयामि त्वां पूतं कुरु सुरेश्वर । आदित्यो भास्करो भानू रविः सूर्यो दिवाकरः । प्रभाकरोऽमितो वीरो देवः सर्वेश्वरो हरिः । इति जपित्वा । गोमयेनोपलिप्तायां भूम्यां वै कुंकुमेन तु । मंडलं सर्वतोभद्रमालिखेद्बुद्धिमान्नरः । तत्र मध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकं । पूर्वपत्रे न्यसेत्सूर्यमाग्नेये तपनं न्यसेत् । सुवर्णरेतसं याम्ये नैर्ऋते विन्यसेद्रविं । आदित्यं वारुणे चैव वायव्ये च दिवाकरं । सौम्ये प्रभाकरं तत्र सूर्यमीशानपत्रके । तीव्ररश्मिधरं देवं ब्रह्मणा चैव विन्यसेत् । आधाररूपिणं देवं मध्ये वै वरुणं न्यसेत् । सहस्ररश्मिं सूर्यं च सूक्ष्मं स्थूलं गुणान्वितं । सर्वगं सर्वरूपं च मध्ये भास्करमेव च । अत्र मध्ये पूज्यं भास्करमनूद्य तत्र ध्येया गुणा विधीयंते । सप्ताश्वरथमारूढं पद्महस्तं दिवाकरं । अक्षसूत्रधनुःपाणिं कुंडलैर्मुकुटेन च । रत्नैर्नानाविधैर्युक्तं सौवर्णं तत्र कार-

येत् । शक्तितस्तु पलादूर्ध्वं तदर्धं कर्षतोपि वा । सौवर्णमरुणं कुर्याद्रौक्मं चैव तथा रथं । सप्ताश्वैर्भूषितं कृत्वा रथं तस्याग्रतः स्थितं । अरुणं विनतापुत्रं गृहीताश्वीयरज्जुकं । एवंरूपं रथं कृत्वा पद्मस्योपरि विन्यसेत् । तस्योपरि न्यसेद्देवं रक्तवस्त्रविभूषितं । रक्तचंदनमाल्यादिमंडितं चातिशोभनं । अग्रतः सारथिं कृत्वा पूजयेदरुणं शुचिः । रक्तपुष्पैः सुगंधैश्च तथान्यैरपि शक्तितः । ॐ विनतातनयो देवः कर्मसाक्षी तमोनुदः। सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु । मंत्रेणानेन संपूज्य सारथिं तदनंतरं । देवस्य त्वासनं कल्प्यं प्रभूतादिकपंचके। प्रभूतं विमलं सारं आराध्यं परमं शुभं । दीप्तादिशक्तिभिश्चैव ततो भानुं प्रपूजयेत् । दीप्ता सूक्ष्मा तथा भद्रा द्विविधा विमलानघा । अमोघा विद्युता चेति नवमी सर्वतोमुखी । अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा । यः स्मरेद्भास्करं देवं सबाह्याभ्यंतरं शुचिः । शिखायां भास्करं न्यस्य ललाटे सूर्यमेव च । चक्षुर्मध्ये न्यसेद्भानुं मुखे तत्र रविं न्यसेत् । कंठे न्यसेद्भानुमंतं पद्मगोपं च हस्तयोः । तिमिरक्षयकृद्देवं स्तनयोरेव विन्यसेत् । जातवेदोभिधं नाभ्यां कट्यां भानुं तथा न्यसेत् । उग्ररूपं गुह्यदेशे दिव्यरूपं हि जंघयोः । पादयोः सर्वरूपं तु सूक्ष्मस्थूलगुणान्वितं । एवं यथोक्तं विन्यस्य पात्रं गृह्य ततोऽर्चयेत् । करवीरार्ककुसुमै रक्तचंदनचंपकैः । पुष्पैः सुगंधैर्धूपैश्च कुंकुमैरुपशोभितं । पात्रमित्यर्चनांतर्गतार्घ्यसमय एव वक्ष्यमाणार्घ्यसाधारणपात्रपरिग्रहो विधीयते । शोभितमिति भावे निष्ठांतं । अर्चयेदिति क्रियाविशेषणं । अर्चनांते देवांगेषु पूजामाह— मार्तंडं भानुमादित्यं भास्करं तपनं रविं । हंसं दिवाकरं चेति पादतो मुकुटावधि । पादौ जंघे तथा जानुद्वयमूरुं कटिं तथा । नाभिं वक्षस्थलं शीर्षमेतेष्वंगेषु पूजयेत् । आनयेदर्घ्यपात्रं चेद्रौप्यं वा ताम्रमेव वा । चेदित्यनेन वक्ष्यमाणार्घ्येषु पूजांतर्गतार्घ्यपात्रात्पात्रभेदपक्षो ज्ञायते । अर्घ्यार्थं दैवतं पात्रमुदकेन प्रपूरयेत् । पूजयेत्तत्र प्रागादि देवतास्ताः समाहिताः । दिग्देवतास्ततः पूज्य गंधपुष्पानुलेपनैः । पात्रे तोयं समादाय सपुष्पफलचंदनं । जानुभ्यामवनिं गत्वा सूर्यायार्घ्यं निवेदयेत् । अर्घ्या वक्ष्यमाणास्तदर्थं दैवकर्मार्हं ताम्रादिजातीयं नत्वाय-

सादि। प्रपूरयेदिति वक्ष्यमाणार्घ्यपर्याप्तं पूरणं कार्यमित्याशयेन पूरितपात्रेऽष्टदिक्षु प्रथमं दिशां पूजनं ततो दिक्पालानामिंद्रादीनां ततः पूर्वार्घ्यपात्रे पात्रांतरे वा। तत्तोयं समादायेति क्रियायां वीप्सा वोध्या। वेदगर्भ नमस्तुभ्यं वेदगर्भ नमोस्तुते। अव्यक्तमूर्तये तुभ्यमर्घ्यं गृह्ण नमोस्तुते। ब्रह्ममूर्तिधरायेश चतुर्वक्र सनातन। सृष्टिस्थितौ संस्थिताय गृहाणार्घ्यं नमोस्तुते। विष्णुरूपधरो देवः पीतवस्त्रश्चतुर्भुजः। प्रभवः सर्वलोकानामर्घ्यं गृह्ण नमोस्तु ते। तं रुद्ररूपिणं वंदे भगवंतं त्रिशूलिनं। यो दहेच्च त्रिलोकं वै अर्घ्यं गृह्ण नमोस्तु ते। उदयस्थं महद्भूतं तेजोराशिसमुद्भवं। तिमिरक्षयकृद्देवमर्घ्यं०। मन्त्रपूतं तडागेशं नृगतिं व्याधिनाशनं। सप्तभिश्चैव जिह्वाभिरर्घ्यं०। त्वं ब्रह्मा त्वं हि विष्णुश्च रुद्रस्त्वं च प्रजापतिः। त्वमेव सर्वभूतात्मा अर्घ्यं०। कालात्मा सर्वभूतात्मा वेदात्मा सर्वतोमुखः। जन्ममृत्युजराशोकसंसारभयनाशनः। दारिद्र्यव्यसनध्वंसी श्रीमान्देवो दिवाकरः। सुवर्णस्फटिको भानुः स्वर्णरेता दिवाकरः। हरिदश्वोंशुमाली च अर्घ्यं०। चतुर्भिर्मूर्तिभिः संस्था स्वष्टभिः परिगीयते। सामध्वनिस्तु यो यज्ञे अर्घ्यं०। अत्र हरिदश्व इत्यर्धस्य कालात्मेत्याद्यर्धचतुष्टयांतेषु प्रत्येकमनुषंगेण मंत्रचतुष्टयं वोध्यं। अत एव दारिद्र्येत्यर्धद्वये दिवाकरपदपाठनिमित्तपौनरुक्त्याभावः। ततश्च द्वादशमंत्रैर्द्वादशार्घ्या देयाः। ततः पंचोपचारैः पुनः पूजामाह। अथ गंधं च पुष्पं च तथा धूपं च दीपकम्। नैवेद्यं च यथाशक्त्या प्रार्थयेत्सूर्यदेवतां। अग्निमीळे नमस्तुभ्यं नमस्ते जातवेदसे। इषे चैव नमस्तुभ्यमग्ने चैव नमोनमः। शंनोदेवीर्नमस्तुभ्यं जगज्जन्म नमोनमः। आत्मरूपिन्नमस्तुभ्यं विश्वमूर्ते नमोनमः। त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं धाता त्वं हुताशनः। मुक्तिकाममभीप्सामि प्रार्थयामि सुरेश्वर। विश्वतश्चक्षुराख्यातो विश्वतश्चरणाननः। विश्वात्मा सर्वतो देवः प्रार्थ०। इति मंत्रं समुच्चार्य नमस्कुर्वीत भास्करं। संवर्चसेति पाणिभ्यां तोयेन विमृजेन्मुखं। हंसः शुचिषदित्यृचा सूर्यस्यैवावलोकनं। उदुत्यं चित्रमित्येतत्सूक्ते देवाग्रतो जपेत्। प्रागीशानेस्थे चैव कोणे फलकं चैव कारयेत्। फलैः पुष्पैरक्षताभिर्भक्ष्यैर्नानाविधैरपि। शय्यां

तत्रैव देवस्य शुभे देशे प्रकल्पयेत् । षड्धान्यं षड्रसं देयं रौप्यं चैव महाफलं । पुरुषं खड्गहस्तं च कारयेच्चैव बुद्धिमान् । वस्त्रयुग्मेन संछन्नं लवणोपरि विन्यसेत् । अनेनैव तु मंत्रेण स्नानमर्घ्यार्चनं ततः । नमस्ते क्रोधरूपाय खड्गहस्त जिघांसवे । जिघांसकामं त्वां दृष्ट्वा दुद्रुवुः सर्वदेवताः । त्वया व्याप्तं मेरुपृष्ठं चंद्रभास्करसुप्रभं । अतस्त्वां पूजयिष्यामि अर्घ्यं गृह्य नमोस्तु ते। अत्रास्तप्रारंभसमये काष्ठफलकोपरि ऐशानदिशि शय्यां निधाय तत्समीपे फलपुष्पाक्षतषड्रसषड्धान्यानि निधाय शय्याया अधो लवणं निधाय राजतं खड्गहस्तं पुरुषं शय्योपरि निधाय तत्र नमस्त इति षोडशोपचारैः पूजनं । तदंतर्गतार्घ्यदानं च त्वया व्याप्तमिति मंत्रेणेति बोध्यं । क्षपयित्वा तु तां रात्रिं गीतवादित्रनिःस्वनैः । ततस्त्वभ्युदिते सूर्ये होमं कुर्यात्स्वशक्तितः । पूजयेत्तत्र शक्त्या च देवांश्च विधिवद्गुरुं । तत्र होमारंभे देवानावाहितान् शक्त्या पंचोपचारैरपि । होमोऽर्कस्य समिद्भिश्च घृतमिश्रैस्तिलैस्तथा । समिद्भिर्न्नं चरुं चैव घृतं च जुहुयाद्द्विजः । आकृष्णेनेति मंत्रेण शतमष्टोत्तरं क्रमात् । होमो व्याहृतिभिर्वाथ स्विष्टकृत्तदनंतरं । कपिलां पूजयेद्देवीं सर्वपापविनाशिनीं । वस्त्रयुग्मां सघंटां च स्वर्णशृंगविभूषितां । सुवर्णास्यां रौप्यखुरां कांस्यदोहनकान्वितां । मंत्रेणानेन तां दद्याद्ब्राह्मणाय च शक्तितः । पूजयेदित्यत्र मंत्रेणेति तृतीयांतयोरन्वयः । दानमंत्रस्तु वक्ष्यते । तत्र च कपिले इत्यादिभिः षण्मंत्रैः क्रमेण गंधपुष्पधूपदीपनैवेद्यतांबूलानि देयानि । गावो म इत्यनेन तु स्पर्शननमस्कारप्रदक्षिणा आवृत्त्या कार्याः । कपिले सर्वदेवानां पूजनीयासि रोहिणी । सर्वतीर्थमयी यस्मादतः शांतिं प्रयच्छ मे । या लक्ष्मीः सर्वदेवानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । विष्णोर्वक्षसि या लक्ष्मीः स्वाहा चैव विभावसोः । चंद्रार्कानलशक्तिर्या धेनुरूपास्तु मे श्रिये । चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च । या लक्ष्मीर्लोकपालानां सा धेनुर्वरदास्तु मे । स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजामपि । वषड्या प्रोच्यते लोके सा धेनुर्वरदास्तु मे । गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः । गावो मे हृदये संतु गवां मध्ये वसाम्यहं । गवां स्पृष्ट्वा नम-

स्कृत्य यो वै कुर्यात्प्रदक्षिणां । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा । ततो यथाविभवं ब्राह्मणपूजनं । ततः पात्रहस्ते सघृततिलं ताम्रपात्रं निधाय तत्र गोपुच्छं निधायोदङ्मुखाय प्राङ्मुखो दद्यात् । तत्र मंत्रः । नमस्ते कपिले देवि सर्वपापप्रणाशिनि । संसारार्णवमग्नं मां गोमातस्त्रातुमर्हसि । इति पूर्वोक्तवस्त्रयुग्मसघंटादिविशेषणकीर्तनपूर्वकमिमां गां तुभ्यमहं संप्रददे नममेति वदेत् । ततः सुवर्णमितं हेम रक्तवस्त्रयुग्मं च दक्षिणां दद्यात् । सुवर्णदाने मंत्रो हिरण्यगर्भेति प्रसिद्धः । वस्त्रस्य । रक्तवस्त्रयुगं यस्मादादित्यस्य च वल्लभं । प्रदानात्तस्य मे सूर्यो ह्यतः शांतिं प्रयच्छतु । इति । ततस्तस्मै सूर्यप्रतिमां सदक्षिणां दद्यात् । भास्करः प्रतिगृह्णाति भास्करो वै ददाति च । भास्करस्तारकोभाभ्यां भार्स्कराय नमो नमः । इति दातुर्ग्रहीतुश्चैष मंत्रः । ततः सगुडपायसेन ब्राह्मणान्भोजयेद्यथाशक्ति तेभ्यो दक्षिणां दत्वा आचार्याय गोभूहिरण्यवासोव्रीहिलवणतिलान्सदक्षिणान्दत्वा कपिलां प्रार्थयेत् । कपिले पुण्यकर्मासि निष्पापे पुण्यकर्मणि । मां समुद्धर दीनं च ददतो ह्यभयं कुरु । दिवि वादित्रघोषैश्च सेव्यसे कथिता सदा । तथा विद्याधराः सिद्धा भूतनाथाश्च सग्रहाः । कपिलारोमसंख्याताःस्तत्र देवाः प्रतिष्ठिताः । पुष्पवृष्टिं प्रकुर्वंति नित्यमाकाशसंस्थिताः । ब्रह्मणोत्पादिते देवि अग्निकुंडात्समुत्थिते । नमस्ते कपिले पुण्ये सर्वदेवनमस्कृते । जय नित्यं महासत्वे सर्वतीर्थादिमंगले । दातारं स्वजनोपेतं ब्रह्मलोकं नयाशु वै । ततस्तां प्रदक्षिणीकृत्य गोदानप्रकरणोक्तगोमतीजपांते ब्राह्मणान्नत्वाशिषो ग्राह्याः ।

**गोदानादेः फलमुक्तं** तत्रैव—महीदेवमये पात्रे सद्वृत्ते त्वाक्षयं भवेत् । व्रतं सर्वव्रतश्रेष्ठमिदमग्र्यं महाफलं । तारयिष्यति दातारं नूनमक्षयमव्ययं । एवं भूतगणाः सर्वे भूतसंघातहर्षिताः । आकाशेऽस्य प्रनृत्यंति पुण्येऽस्मिन्दिवसागमे । पात्रभूताय ऋषये श्रोत्रियाय कुटुंबिने । एवं यः कपिलां दद्याद्विधिदृष्टेन कर्मणा । स याति परमं स्थानं न चैवावर्तते पुनः । इति । **अत्र कपिलास्वरूपं** तदीयशृंगादिगतसुवर्णादिमान-

१ तेन वै भास्करे नमः ।

विशेषांतरसहितं कपिलादानप्रकरणोक्तं ग्राह्यं । तद्यथा मदनरत्ने वाराहे—सुवर्णकपिला पूर्वा द्वितीया गौरपिंगला । तृतीया चैव रक्ताक्षी चतुर्थी गुडपिंगला । पंचमी बहुवर्णा स्यात्षष्ठी च श्वेतपिंगला । सप्तमी श्वेतपिंगाक्षी अष्टमी कृष्णपिंगला । नवमी पाटला ज्ञेया दशमी पुच्छपाटला । इति । व्यासः—स्वर्णशृंगीं रौप्यखुरां मुक्तालांगूलभूषितां । कांस्योपदोहनां धेनुं वस्त्रच्छन्नामलंकृतां । दत्वा द्विजेंद्राय नरः स्वर्गलोके महीयते । इति । कौर्मे—दशसौवर्णिके शृंगे खुराः पंचपलान्विताः । पंचाशत्पलिकं ताम्रं कांस्यं चैतावदेव तु । वस्त्रं तु त्रिगुणं धेन्वा दक्षिणा च चतुर्गुणा । एतैश्चालंकृता धेनुर्घंटागलविभूषिता । कपिला विप्रमुख्याय दत्ता स्वर्मोक्षदा मता । इति । वस्त्रादेस्त्रैगुण्यादिगोदानसामान्योक्तवस्त्राद्यपेक्षमिति दानं मदनरत्ने व्रतप्रकरणेऽधिकाम्नातसुवर्णस्य परिमाणं तु यथाविभवं कल्प्यं । स्कान्दे प्रभासखंडे तु संक्षेपेणोक्तो व्रतविशेषः—उपलिप्ते शुचौ देशे पुष्पैस्तत्र विभूषिते । स्थापयेदव्रणं कुंभं चंदनोदकपूरितं । पंचरत्नैः समायुक्तं दूर्वापुष्पाक्षतान्वितं । रक्तवस्त्रयुगच्छन्नं ताम्रपात्रेण संयुतं । रथो रुक्मपलस्यैव एकचक्रः सुचित्रितः । सौवर्णपलसंयुक्तां मूर्तिं श्लक्ष्णां च कारयेत् । कुंभस्योपरि संस्थाप्य गंधपुष्पैस्तथार्चयेत् । आदित्यं पूजयेद्देवं नामभिः स्वैर्यथोदितैः । आदित्यो भास्करः सूर्यः प्रभाकरदिवाकरौ । अत्र गंधादिपंचोपचारेषु पंचनाममंत्राः एकः श्लोको नमस्कारे द्वितीयः प्रार्थनायामिति बोध्यं । इतरेष्युपचारा यदि क्रियंते आदित्यनाम्नैव देयाः । प्रभाकर नमस्तुभ्यं संसारान्मां समुद्धर । भुक्तिमुक्तिप्रदो यस्मात्तस्माच्छांतिं प्रयच्छ मे । प्रार्थनामंत्रः। नमोनमस्ते वरद ऋक्सामयजुषां पते । नमोस्तु विश्वरूपाय विश्वधात्रे नमोस्तु ते । एवं संपूज्य विधिवद्देवदेवं दिवाकरं । पूजयेत्कपिलां धेनुं वस्त्रमाल्यानुलेपनैः । दानमंत्रः—दिव्यमूर्तिर्जगत्कर्ता द्वादशात्मा दिवाकरः । कपिलासहितो देवो मम मुक्तिं प्रयच्छतु । यस्मात्त्वं कपिले पुण्या सर्वलोकस्य पावनी । प्रदत्ता सह सूर्येण मम मुक्तिप्रदा भव । इति । इति कपिलाषष्ठीव्रतं । इति कौस्तुभे महालयनिर्णयः ।

१ प्रभाकरो दिवाकरः ।

येनार्जितानि युधि भूमिपतीन्विजित्य दुर्गाणि दुर्ग्रहतराणि निजैः कटाक्षैः । श्रीबाजबाहदुरसंज्ञनृपस्य तस्य वाचा हरेरिव गिरावनिदेवतुष्ट्यै ॥ योनंतदेवकृतमंथनसंनिबंधक्षीराब्धिजोऽथ कमलापतिना धृतो यः । नित्यं निजे हृदि सतां प्रमुदेस्तु तस्य भाद्रस्य दीधितिरियं स्मृतिकौस्तुभस्य ॥ इति भाद्रपदकृत्यं ॥

**अथाश्विनकृत्यं ।** **यमः**—घृतमाश्वयुजे मासि नित्यं दद्याद्द्विजातये । प्रीणयित्वाश्विनौ देवौ रूपभागभिजायते । इति । तथा **वामनपुराणे**—तिलांस्तुरंगं वृषभं दधि ताम्रं वशादिकं । प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः । इति । वशा धेनुः ।

**अथ नवरात्रनिर्णयः**—तत्र नवरात्रपदं कर्मनामधेयं तत्प्रख्यन्यायात् । तथाहि नवरात्रविधयस्तावच्छ्रूयंते **रुद्रयामले**—आश्विने मासि संप्राप्ते शुक्लपक्षे विधेस्तिथि । प्रारभ्य नवरात्रं स्याद्दुर्गा पूज्या तु तत्र वै । इति । **प्रतापरुद्रे धौम्यः**—आश्विने शुक्लपक्षे तु कर्तव्यं नवरात्रकं । प्रतिपदादि क्रमेणैव यावद्धि नवमी भवेत् । इति । **देवीपुराणेपि**—मासि चाश्वयुजे शुक्ले नवरात्रं विशेषतः । संपूज्य नवदुर्गां च नक्तं कुर्यात्समाहितः । इति । अत्र नवरात्रशब्दस्य गुणविधित्ववादिनापि तदंतर्गतो रात्रिशब्दः अहर्गणनामधेयद्विरात्रनवरात्रांतर्गतरात्रिशब्दवत् न सावनाहोरात्रपरः स्वीकार्यः । व्रतस्य प्रतिपदादिनवम्यंतत्वबोधकानेकशास्त्रवशेन तिथिह्रासवृद्ध्योः नित्यवत् । तावदहोरात्रसाध्यत्वासंभवात् । अहर्गणे तु तादृशतिथिसाध्यत्वाभावात् । अतो लक्षणया रात्रिशब्दस्तिथिपरः स्वीकार्यः । तत्रापि न यत्किंचिन्नवतिथ्यात्मकगुणविधिसंभवः । नियततावत्संख्यतिथिप्रापकेनानेन शास्त्रेण शास्त्रांतरेण वा विरोधापत्तेः । येनैव अवश्यापेक्षणीयतिथिविशेषप्राप्तिस्तेनैव तावत्संख्यतिथिविशेषप्राप्तिसंभवे पुनस्तत्प्रापणस्याप्रवृत्तिविशेषकरत्वाच्च । अतः शास्त्रांतरसिद्धां तच्छास्त्रसिद्धां वा तिथिगतां तत्साध्यप्रधानकर्मगतां वा संख्यां निमित्तीकृत्याहर्गणनामधेयनवरात्रशब्दवन्नामधेयत्वमेव स्वीकार्यं । अन्यथा अस्मिन्काले नवरात्रं कुर्यादिति उक्तानेकवचोगतनिर्देशानुपपत्तेश्च । नच रात्रिपदे तिथ्यादिलक्षणाभ्युपगमो दोषः । मीमांसकैस्तत्प्रख्यन्यायेन स्वीकृतनामत्वेषु दर्शसमि-

दादिपदेषु लक्षणास्वीकारदर्शनात् । गुणविधित्ववादिनापि तिथिलक्षणास्वीकाराच्च । अस्तिच नामत्वग्राहकं सामानाधिकरण्यं नवरात्रव्रतमिति । यत्रापि नवरात्रे इदं कुर्यादिति सप्तमीनिर्देशस्तत्रापि पूर्वेद्युरमावास्यायां वेदिं करोतीतिवत्कर्मनामैवेत्यलं । यद्यप्युक्तदेवीपुराणवाक्ये संपूज्य नक्तं कुर्यादिति नक्तस्य विशेष्यत्वं प्रतीयते तथापि पूजनमेव प्रधानकर्म । एकभक्तनक्तादिकं तु ज्योतिष्टोमे पयोव्रतादिवत्कर्तृसंस्कारद्वारा पूजनांगमिति बोध्यं । पूजाया एव नित्यकाम्याधिकारविधिभ्यां प्राधान्यबोधनात् । नित्यविधिस्तावत्—वर्षे वर्षे विधातव्यं स्थापनं च विसर्जनं । इत्यत्र स्थापनप्रभृतिविसर्जनांतपूजाया नित्यत्वं बोध्यते । वसंते वसंते ज्योतिषा यजेतेतिवत् । तथा कालिकापुराणे—यो मोहादथवालस्याद्देवीं दुर्गां महोत्सवे । न पूजयति दुष्टात्मा द्वेषाद्वाप्यथ भैरव । क्रुद्धा भगवती तस्य कामानिष्टान्निहंति च । इति । काम्यत्वमपि तत्रैव—एवमन्यैरपि सदा देव्याः काले [कार्यं] प्रपूजनं । विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायकम् । इति । तथा शास्त्रांतरेपि—पूजयित्वाश्विने मासि विशोको जायते नरः । इति । नक्तादेः कर्तृसंस्कारद्वारा पूजनांगत्वं चोक्तं देवीपुराणे—कन्यासंस्थे रवौ शुक्लामाश्विने प्राप्य नंदिकां । अयाची ह्यथवैकाशी नक्ताशी ह्यथवान्नदः[1] । इति प्रक्रम्य—त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः । इति । अत्र यद्यपि त्रिकालपूजनमुक्तं तथापि रात्रिपूजनमेव प्रधानं ।—आश्विने मासि मेघांते महिषासुरमर्दिनीं । निशासु पूजयेद्भक्त्या सोपवासादिकः क्रमात् । तथा—रात्रिव्रतमिदं देवि सर्वपापप्रणाशनं । सर्वकामप्रदं नृणां सर्वशत्रुनिवर्हणं । इत्यादिभ्यो विशिष्य रात्रिपूजाया एवोपवासादिविशेषत्वेन फलसंबंधित्वेन च बोधकेभ्यो देवीपुराणवचोभ्यः महानिबंधकर्तृभिर्हेमाद्रिमाधवादिभिरपि नवरात्रव्रतस्यामुनैवाशयेन नक्तव्रतत्वं वदद्भिरुक्तवचनानां प्रामाण्यस्वीकारसूचनाच्च । नच नक्तभोजनाभिप्रायात्तेषां नक्तव्रतत्वोक्तिः । उपवासादिकल्पांतरविधिबलेन तस्य पाक्षिकत्वादुक्तदिशा तस्य अंगत्वाच्च । दृश्यते चाष्टमीपूजामहानिबं-

१ ह्यथवायते ।

धेषु रात्रिकर्तव्यताविधिः।—कन्यासंस्थे रवावीषे या शुक्ला तिथिरष्टमी। तस्यां रात्रौ पूजितव्या महाविभवविस्तरैः। इति। अतोऽत्र रात्रिपूजा प्रधानं। तदंगं च नक्तैकभक्तादि तादृशनवरात्रिसाध्यपूजासमुदायस्य च नवरात्रपदं नामधेयमिति सिद्धं। अतएव तिथिह्रासे द्वयोः पूजयोस्तंत्रेणानुष्ठानं। तिथिवृद्धौ एकस्या एवाभ्यासेन तत्। महालये षोडशश्राद्धवादिमते षोडशश्राद्धानुष्ठानवत्।

**अत्राधिकारिनिर्णयः।** अत्रच न चतुर्णामेव वर्णानामधिकारः किंतु म्लेच्छादीनामपीत्युक्तं **भविष्योत्तरे**—एवं च विंध्यवासिन्यां नवरात्रोपवासतः। एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन वा। पूजनीया जनैर्देवी स्थानेस्थाने पुरेपुरे। गृहेगृहे भक्तिपरैर्ग्रामेग्रामे वनेवने। स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः। वैश्यैः शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्च मानवैः। स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु। इति। ननु नात्र स्त्रीशूद्राणामधिकारः संगच्छते। नतरां म्लेच्छानां। **लैंगे**—शारदी या महापूजा चतुःकर्ममयी शुभा। इति स्नपनपूजनबलिदानहोमरूपचतुःकर्मात्मकत्वेन पूजाया निर्देशात्। तेषां च कर्मणां तत्तत्पौराणमंत्रसाध्यत्वात्।—श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः। इति शूद्रस्य श्रवणमात्रविधानेन पौराणमंत्रोच्चारणे अधिकाराभावात्। अतएव सहस्रनामभाष्ये शूद्रः सुखमवाप्नुयादित्येतद्व्याख्यानावसरे शंकराचार्यैरुक्तं शूद्रस्य श्रवणादेव फलनिर्देशो नतु पाठादिति। सत्यं। अतएव **स्कान्दे भविष्ये** च त्रिविधा पूजाभिहिता। शारदी चंडिकापूजा त्रिविधा परिगीयते। सात्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः। माहात्म्यं भगवत्याश्च पुराणादिषु कीर्तितं। पाठस्तस्य जपः प्रोक्तो पठेद्देवीमनास्तथा। राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा। सुरामांसाद्युपाहारैर्जपयज्ञैर्विना तु या। विना मंत्रैस्तामसी स्यात्किरातानां च संमता। ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः। एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिः। इति। अत्र सात्विकपूजाविधानं ब्राह्मणविषयं। निरामिषैरित्यत्रामिषग्रहणं रुधिरपशुहिंसोपलक्षणार्थं। अत एव राजस्यां बलिदानग्रहणं तामस्यां सुरादिग्रहणं च संग-

च्छते। उक्तंच स्पष्टमेव कालिकापुराणे। स्वगात्ररुधिरं दत्वा ब्रह्महत्यामवाप्नुयात्। मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते। इति। अतएव मद्यमपेयमदेयमनिर्ग्राह्यमित्युशनोवचनमपि ब्राह्मणविषयत्वेनैव संगच्छते। राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा। इति श्लोकार्धविहितराजस्यां तु क्षत्रियशूद्रादीनामधिकारः। अत्रापि जपयज्ञाद्यैरित्यनुषंगः। आमिषग्रहणं च रुधिराद्युपलक्षणार्थं। क्षत्रियवैश्ययोः ब्राह्मणवज्जपयज्ञादि संभवात्।—संदर्शनार्थमंबाया देवीसूक्तं परं जपन्। इति मार्कंडेयपुराणे वैश्यकर्तृकजपयज्ञानुवाददर्शनाच्च।—ददतुस्तौ बलिं चैव निजगात्रासृगुक्षितं। इति राजवैश्यकर्तृकस्य स्वगात्ररुधिरदानस्य तत्रैव कथनाच्च। एवंच त्रयाणां वर्णानां जपयज्ञाधिकारे सति शक्ताः स्वयं कुर्युरशक्ता ब्राह्मणद्वारा वा कारयेयुः। शूद्रस्तु जपादि ब्राह्मणद्वारैव कारयेत्।—अमंत्रस्य तु शूद्रस्य विप्रो मंत्रेण गृह्यते। इति शूलपाण्याद्युदाहृतवचनेन समंत्रके कर्मणि ब्राह्मणद्वारैव शूद्रस्याधिकारनियमनात्। यदि तु क्वचित्पुराणे शूद्रोऽनेन मंत्रेण पूजां कुर्याद्बलिं दद्यादिति वचो दृश्यते तदा निषादस्थपतिन्यायेन तावन्मंत्रोच्चारणं तस्यापि भवत्येव। तामसीविधावपि मांसादीत्यादिना बलिदानस्यापि संग्रहः। जपयज्ञैरिति द्वंद्वे यज्ञग्रहणं होमाभिप्रायं। किरातग्रहणं च म्लेच्छमात्रोपलक्षणार्थं। किरातहूणांध्रखसा इति पुराणे तेषां साहचर्यदर्शनात्। उक्तवाक्येपि अंत्यस्थाननिर्दिष्टायां तामस्यामधिकारिकथनार्थं सर्वांते—एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिः। इति कथनाच्च। अतो म्लेच्छादीनां न शूद्रवद्ब्राह्मणद्वारापि जपे होमे समंत्रकपूजायां वाधिकारः किंतु तैस्तत्तदुपचाराणां सुराद्युपहारसहितानां पश्वादिबलेश्च मनसोत्सर्गमात्रं देवीमुद्दिश्य विधेयमिति सिद्धं।

अथ नवरात्रव्रताशक्ताधिकारिका अनुकल्पा उच्यंते। भविष्ये—आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकं। प्रतिपदादि क्रमेणैव यावच्च नवमी भवेत्। त्रिरात्रं वापि कर्तव्यं सप्तम्यादि यथाक्रमं। इति। तथा त्रिरात्रपक्षोपि। अष्टम्यां च नवम्यां च जन्ममोक्षप्रदां शिवां। पूजयित्वाश्विने मासि विशोको जायते नरः। इति। पक्षांतराण्यप्याह धौम्यः—अथवा

नवरात्रं च सप्त पंच त्रिकादि वा। एकभक्तेन नक्तेनायाचितोपोषितैः क्रमात्। इति। अत्र सप्तरात्रपक्षे तृतीयायामारंभः। पंचरात्रपक्षे पंचम्यां। तत्र प्रकारविशेषः **शास्त्रांतरे**—एकभक्तस्तु पंचम्यां षष्ठ्यां नक्तं प्रवर्तयेत्। अयाचितस्तु सप्तम्यामष्टम्यां समुपोषितः। नवम्यां पारणं कुर्यात्पंचरात्रमितीरितं। इति। त्रिकादीत्यादिशब्दोक्त एकरात्रपक्षो द्विविधः। केवलाष्टम्यां केवलनवम्यां वेति। आद्य उक्तो **ब्राह्मे**—तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी। प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह। अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः। उपोषितैर्धूपदीपैर्वस्त्रमाल्यानुलेपनैः। अत्रोपवासे पुत्रवत्पर्युदास उक्तः **कालिकापुराणे**—उपवासं महाष्टम्यां पुत्रवान्न समाचरेत्। यथा तथैव पूतात्मा व्रते देवीं विसर्जयेत्। इति। व्रते समाप्ते इति शेषः। केवलनवमीपक्षो **भविष्यपुराणे**—लब्धाभिषेका वरदा शुक्ले चाश्वयुजस्य च। तस्मात्सा तत्र संपूज्या नवम्यां चंडिका बुधैः। इति **पुराणांतरे** तामेव नवमीं प्रकृत्य—तस्मादियं महापुण्या नवमी पापनाशिनी। उपोष्या तु प्रयत्नेन सततं सर्वपार्थिवैः। इति। पार्थिवग्रहणं नवरात्राशक्तमात्रोपलक्षणार्थं। नवम्यां तु नवम्यां तु देवदानवराक्षसैः। गंधर्वैरुरगैर्यक्षैः पूज्यते किंनरैरपि। इति भविष्योत्तरवचस्युपवासशेषिभूतायाः पूजायाः केवलनवम्यां सर्वाधिकारत्वेन विधानात्। केचिदुक्तपक्षवत्षष्ठ्यादिकल्पोऽप्यनुकल्पः—बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु च। सप्तम्यां बिल्वशाखां तामाहृत्य प्रपूजयेत्। पुनः पूजां तथाष्टम्यां विशेषेण समाचरेत्। जागरं च स्वयं कुर्याद्बलिदानं महानिशि। प्रभूतबलिदानं च नवम्यां विधिवच्चरेत्। ध्यायेद्दशभुजां देवीं दुर्गां तंत्रेण पूजयेत्। विसर्जनं दशम्यां तु कुर्याद्वै शारदोत्सवैः। धूलिकर्दमनिक्षेपैः क्रीडाकौतुकमंगलैः। भगलिंगाभिधानैश्च भगलिंगप्रगीतकैः। इति **कालिकापुराणादित्याहुः**। तदसत्। अत्रानुकल्पद्योतकवाशब्दाद्यभावेऽनारब्धनवरात्रव्रतं प्रत्येव कुमार्यामिव पत्रिकायामपि पूजाविधिप्रतीतेः। स्वस्याशक्तौ अन्यद्वारापि पूजा कारणीया।—स्वयं वाप्यन्यतो वापि पूजयेत्पूजयीत वा। इति देवीपुराणात्। अत्र विस्तृतपूजायामशक्तं

प्रति **संक्षिप्तपूजाविधिः कालिकापुराणे**—सम्यक्कल्पोदितां पूजां यदि कर्तुं न शक्नुयात्। उपचारांस्तथा दातुं पंचैतान्वितरेत्तदा। गंधं पुष्पं च धूपं च दीपं नैवेद्यमेव च। अभावे तोयपुष्पाभ्यां तदभावे तु भक्तितः। संक्षेपपूजा कथिता तथा वस्त्रादिकं पुनः। इति। इत्यनुकल्पविधिः।

अथ **प्रतिपन्निर्णयः**। सा यदा पूर्वाहोरात्रं व्याप्यापरत्र त्रिमूहूर्ता तिष्ठति तदा पूर्वैव ग्राह्या।—आदित्योदयवेलायामारभ्य षष्टिनाडिकाः। तिथिस्तु सा हि शुद्धा स्यात् इति **नारदोक्तेः**। ईदृशस्थलीयोत्तरदिनतिथेस्तिथिमलत्वेन निंदितत्वाच्च। यदा तु पूर्वदिने अमाविद्धा प्रतिपत्परदिने द्वितीयाविद्धा तत्र यद्यपि परस्परविरुद्धानि वचनानि दृश्यंते तथाप्युक्तरीत्या रात्रिपूजाया एव प्राधान्यात्। अस्याश्च नक्तव्रतत्वेन **महानिबंधोक्तेः**—प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः। इति वचनस्य प्रसिद्धनक्तव्रत इवात्रापि प्रवृत्तिसंभवात् प्रदोषस्य कर्मकालत्वमंगीकृत्य निर्णयः क्रियते। तत्र षट् पक्षाः। पूर्वेद्युरेव प्रदोषव्याप्तिः १ परेद्युरेव वा २ दिनद्वयेपि तद्व्याप्तिः ३ दिनद्वयेपि तदेकदेशे स्पर्शः ४ सामान्येन वैषम्येण वा ५ दिनद्वये प्रदोषास्पर्शो ६ वेति। तत्राद्यपक्षद्वयव्यतिरिक्तपक्षेषु परैव ग्राह्या—प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकं। इति विहितसंकल्पकालसंबंधलाभात्। त्रिकालविहितपूजाकालसंबंधित्वात्। अहोरात्रसंबंधित्वेन उपवासेपि प्राशस्त्यलाभात्। ईदृशविषय एवाधुनिकनिबंधोदाहृतानि द्वितीयाविद्धप्रतिपद्विधायकानि वचनानि योजनीयानि।—या चाश्वयुजमासे स्यात्प्रतिपद्भद्रया युता। शुद्धा ममार्चनं तस्यां शतयज्ञफलप्रदं। आश्विने मासि मे भक्तैः कर्तव्या शुक्लपक्षगा। प्रतिपत्त्रिमुहूर्तापि पुत्रपौत्रप्रवर्धिनी। धनवृद्धिकरी पुंसां सर्वसौख्यकरी तथा। इत्येवमादीनि। अत्र त्रिमुहूर्तापीत्यपिशब्दः कैमुतिकन्यायेन प्रदोषव्यापिन्याः प्रशंसार्थः। तथा अमाविद्धानिषेधा अपि इहैव योज्याः।—देशभंगो भवेत्तत्र दुर्भिक्षं चापि जायते। नंदायां दर्शयुक्तायां यत्र स्यान्मम पूजनं। पूर्वविद्धा तु या शुक्ला भवेत्प्रतिपदाश्विनी। नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता। इत्यादयः। आद्येपि पक्षद्वयं संभवति कार्त्स्न्येन

व्याप्तिरेकदेशेन वेति । उभयोरपि पक्षयोः पूर्वविद्धैव ग्राह्या । कर्मकालव्याप्तिलाभात् ।—नक्तव्रतेषु सर्वेषु रात्रियोगः प्रशस्यते । इति रात्रियोगप्रयुक्तप्राशस्त्यात् प्रतिपद्यप्यमावास्येत्यादिसामान्यशास्त्रानुसरणलाभाच्च । यदि च सूर्यास्तात्पूर्वमपि प्रतिपल्लभ्यते तदा—यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः । सा तिथिः सकला ज्ञेयेत्याद्यापाद्यसाकल्यवशेन संकल्पत्रिविधपूजाकालप्राप्तिलाभाच्च । ईदृशविषय एवामाविद्धाविधायकानि द्वितीयाविद्धानिषेधकान्याधुनिकग्रंथोदाहृतानि वचनानि योज्यानि । तानि यथा **नृसिंहप्रसादे**—अमायुक्तैव कर्तव्या प्रतिपच्चंडिकार्चने । न ग्राह्या परसंयुक्ता शुद्धसंतानकांक्षिभिः । इति । **धवलनिबंधे**—अमायुक्तैव सा ग्राह्या प्रतिपच्चंडिकार्चने । अन्यथाकरणे तावद्राज्यभंगः प्रजायते । इत्येवमादीनि—द्वितीयाशेषसंयुक्ता प्रतिपच्चंडिकार्चने । मोहादथोपदेशाद्वा कृतं पुत्रविनाशकं । प्रतिपच्छेषसंयुक्तद्वितीयायां ममार्चनं । कृतं धर्मं नाशयति संततिं पुत्रपौत्रकीं । द्वितीयादिकलोपेता प्रतिपच्चंडिकार्चने । वर्जनीया प्रयत्नेन विषलेशो यथांभसि । यदि मोहात्प्रकुर्वीत ज्येष्ठः पुत्रो विनश्यति । इत्यादीनि च । ननु प्रदोषस्य कर्मकालत्वमादायैष निर्णयो भवता कृतः । संति तु पूर्वाह्णस्य कर्मकालत्वबोधकानि सामान्यतो विशेषतश्च प्रवृत्तानि गौडनिबंधोदाहृतानि कानिचिद्वचनानि । सामान्यतस्तावत्पूर्वाह्णे दैविकं कर्मेत्यादि प्रसिद्धं । तथा **नंदिपुराणे**—शरत्काले महापूजा क्रियते या च वार्षिकी । सा कार्योदयगामिन्यां न तत्र तिथियुग्भवेत् । इति । तथा **भविष्योत्तरे**—प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् । प्रातः प्रातस्तु संपूज्य प्रातरेव विसर्जयेत्[1] । इति । तथा **देवीपुराणे**—भगवत्याः प्रवेशादिविसर्गांताश्च याः क्रियाः । तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः । इति । तथान्यत्र—आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमं । सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवां । इति । तेभ्यः पूर्वाह्णस्य प्रधानकालत्वावगमे सति कथं परदिनव्यापिनीं प्रतिपदं परित्यज्य पूर्वदिने प्रदोषव्यापिन्या ग्राह्यत्वं निर्णीयते । नच पूर्वाह्णकर्मकालत्वबोधका-

---

१ विसर्जनम् ।

न्युक्तवचनानि माधवादिमहानिबंधालिखितत्वान्निर्मूलानीति वाच्यं। रात्रेः कर्मकालत्वबोधकवचनानामपि त्वदुक्तानां माधवाद्यनुदाहृतत्वेन निर्मूलत्वशंकाया अनिवार्यत्वात्। किंच पूर्वेद्युः प्रदोषमात्रव्यापिन्यामपराह्णप्रभृति तद्व्यापिन्यां वा न कलशस्थापनप्रभृति पूजोपक्रमः संभवति।—आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः। कलशस्थापनं तत्र अरिष्टं जायते ध्रुवं। इति निषेधादितिचेन्न। महानिबंधकर्तृभिर्हेमाद्रिमाधवादिभिर्नवरात्रव्रतस्य नक्तव्रतत्वोक्त्या रात्रिप्रदोषयोः कर्मकालत्वबोधकशास्त्रेषु अमाविद्धप्रतिपद्येव नवरात्रोपक्रमरूपसकलप्राचीनशिष्टाचारस्य च संवादलाभात् प्रामाण्यनिश्चये सति तदनुसारेणैव पूर्वाह्णकर्मकालत्वबोधकवचनानां नेतुमुचितत्वात्। तथाहि पूर्वाह्णे दैविकं कर्मेति वचनं तावत्—यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः। इति वचनांतरसंवादादिष्ट्यादौ सावकाशं। यच्च—शरत्काले महापूजेति प्रातरावाहयेद्देवीमिति च त्वयोदाहृतं तत्र प्रतिपदश्रवणात्सप्तम्यादिदशम्यंततिथ्यनुष्ठेयपत्रिकापूजनादिविषयत्वं बोध्यं। अतएव सप्तमीविषयवचो देवीपुराणे पठ्यते—युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता। इति। पत्रिकापूजायां पूर्वाह्णप्राशस्त्यं ज्योतिःशास्त्रे—पूर्वाह्णे नवपत्रिका शुभकरी सर्वार्थसिद्धिप्रदा आरोग्यं च धनं करोति विजयं चंडीप्रवेशे शुभा। मध्याह्ने जनपीडनक्षयकरी संग्रामघोरावहा सायाह्ने वधबंधनादि कलहं सर्वक्षतं सर्वदा। सप्तम्यामस्तगायां यदि विशति गृहं पत्रिका श्रीफलाढ्या राज्ञः सप्तांगराज्यं जनसुखमखिलं हंति मूलानुरोधात्। तस्मात्सूर्योदयस्थां नरपतिशुभदां सप्तमीं प्राप्य देवीं भूपालो वेशयेत्तां सकलजनहितां राक्षसर्क्षं विहाय। इति। यच्च आश्विनस्येत्यादि वचनं तत्र पूर्वाह्णे पूजयेदित्यन्वयेपि नवतिथ्यधिकरणकप्रातःपूजाविषयं। प्रतिपत्स्विति बहुवचनांतस्य लिंगसमवायेन प्रतिपत्तदितरतिथिपरत्वात्। नच प्रातःपूजायाः प्राधान्यं। त्रिकालपूजाविधानेऽपि रात्रिपूजाया एव प्राधान्यस्य प्रागुपपादितत्वात्। अष्टम्यादौ तत्प्राधान्यस्यावश्यकत्वाच्च। यद्वा पूर्वाह्णस्यानेनान्वयमंगीकृत्य तदंगत्वमेव स्वीकार्यं।—आश्विनस्य सिते पक्षे प्रतिपत्सु यथा-

क्रमं । सुस्नातस्तिलतैलेन पूर्वाह्णे च नृपोत्तम । पुण्याहवाचनं कृत्वा द्विजांश्चैव प्रपूजयेत्। इति डामरकल्पवाक्यसंवादात्।यत्तु षोडशनाडिकात्यागवचनं तदपि कलशस्थापनविषयं—आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः । कलशस्थापनं तत्र अरिष्टं जायते ध्रुवं । इति वचनांतरसंवादात् । यद्वोदयमारभ्य संपूर्णप्रतिपद्विषयं ।—शुद्धे तिथौ प्रकर्तव्या प्रतिपच्चोर्ध्वगामिनी। आद्यास्तु नाडिकास्त्याज्याः षोडश द्वादशापि वा । इति देवीपुराणवचःसंवादात्।शुद्धा वेधरहिता । ऊर्ध्वगामिनी अपराह्णगामिनीत्यर्थः । एवमुक्तप्रदोषव्यापिप्रतिपदि चित्रावैधृति योगेपि न दोषः । आरभ्य नवरात्रं स्याद्धित्वा चित्रां च वैधृतिं । इति वचसो निबंधालिखितत्वेन निर्मूलत्वादिति केचित् ।—त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चंडिकार्चने । तयोरंते विधातव्यं कलशारोपणं गृह । इति वचनांतरसंवादात् । नवरात्रसंज्ञकपूजारंभभूतकलशस्थापनविषयमेतदित्यन्ये । अपरेतु वाजिनीराजनांगभूतकलशस्थापनविषयोयं निषेधः ।—आरभ्य नवरात्रं स्यात्प्रतिपच्चाश्विने सिते । वाजिनीराजनं पश्चाद्धित्वा चित्रां च वैधृतं । इत्यश्वशास्त्रीयवचनसंवादात् ।—आश्वयुक् शुक्लपक्षे तु स्वातीयोगे शुभे दिने । पूर्वमुच्चैःश्रवानाम प्रथमं सूर्यवाहनं । तस्मात्साश्ववरैस्तत्र पूज्यो वै श्रद्धया तदा । पूजनीयाश्च तुरगा नवमी यावदेव हि । इति ब्राह्मवचने स्वातीयोग एव तद्विधानाच्च । ततो नीराजनं कर्म प्रतिपद्याश्विने सिते । प्रारभ्य नवरात्रं स्याद्धित्वा चित्रां च वैधृतिं । इति निर्णयशिरोमणीयवचनेन स्फुटमेव तन्निषेधस्य विषयांतरख्यापनाच्च । चंडिकार्चने यद्यपि त्वाष्ट्रादियुक्ता प्रतिपत् ग्राह्या तथापि वाजिनीराजनांगकलशारोपणं तयोरंते विधातव्यमिति । यद्यपीत्यर्थकचेत्पदयुक्तवचोव्याख्यानसंभवाच्चेत्याहुः । अस्तु वा देवीपूजांगकलशस्थापनविषयो निषेधः । नचांगांगिनिषेधानुरोधेन प्रधानकालबाधः कर्तुं शक्यत इति कथं तेन पूर्वप्रदोषमात्रव्यापिनी चंडिकार्चने प्रतिपन्निवारयितुं शक्यते । प्रधानपूर्वककर्तव्येपि कलशस्थापने चित्रादियुक्ततद्रहितानेककाललाभसंभवे तद्रहितकालनियमार्थमिदं वचः प्रवर्तिष्यते । नतु कृत्स्नाहर्व्यापिचित्रादियोगनिषेधार्थं निगदेष्विवोपांशुयजु-

षेति । अतएवेद्दशविषये निषेधसंकोचोऽपि स्मर्यते ।—चित्रावैधृतिसंक्रान्तौ प्रतिपच्च क्षयंगता । तदा पूर्वयुता ग्राह्या त्यक्त्वा षोडश नाडिकाः । इति । इदमप्युक्तरीत्या कालद्वयलाभे नियमार्थमेवेति क्रामिकचित्रावैधृतितादृशघटिकासंबंधरहितकालालाभे पूर्वोक्तरीत्या नैव निषेधप्रवृत्तिर्नंतरां तदनुरोधेन पूर्वप्रदोषव्यापिप्रतिपत्त्याग इति सिद्धं । यदा पूर्वदिने प्रदोषादूर्ध्वं प्रवृत्ता परदिने सूर्यास्तात्पूर्वं समाप्तेत्येवं दिनद्वयेपि कर्मकालास्पर्शिनी प्रतिपत्तदोत्तरैव ग्राह्या । संकल्पस्य पूर्वाह्णमध्याह्नपूजयोश्च काले सत्वात् । यां तिथिं समनुप्राप्येति आपाद्य साकल्यमादाय तृतीयपूजाकालेपि सत्त्वाच्च ।—प्रदोषव्यापिनी यत्र त्रिमुहूर्ता दिवा तथा । तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत् । इति नक्तव्रतसामान्ये प्रवृत्तेन वचनेन प्रदोषसायाह्नयोः क्रमेण मुख्यत्वगौणत्वे ज्ञापयता नक्तव्रतत्वेन माधवाद्युक्ते देवीव्रतेपि सायाह्नस्य गौणत्वे विहिते सति गौणकालव्याप्तेरपि लाभाच्च प्रसिद्धनक्तसमाननिर्णयसंभवे तत्त्यागायोगाच्च । एवं सायाह्ने उपक्रम्य रात्रौ पूजासमापने । यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदंगं नोज्झितोपक्रमेण तु । इति शास्त्रानुसरणसंभवाच्च । येषां तु कुलपारंपर्येणामाविद्धाद्वितीयाविद्धयोरन्यतरस्या अंगीकारः क्लृप्तः स्वकर्तृकचिरकालीनानुष्ठानेन वा तैर्व्यवस्थया तस्यामेव नवरात्रारंभः कार्यः । आब्दिकश्राद्धे पार्वणैकोद्दिष्टविध्योः शास्त्रांतरानुसारिव्यवस्थासंभवेपि **विज्ञानेश्वरेण** यथाकुलाचारमपि कथितव्यवस्थावदग्निहोत्रे उदितानुदितकालव्यवस्थावच्च तादृशव्यवस्थाया असंभवे तूक्तनिर्णयानुसरणं कार्यमित्यलं ।

अथ एवं निर्णीते प्रतिपद्दिने भगवतीपूजां कर्तुमुपकल्पयते । नूतनवस्त्ररंभास्तंभादिमंडितवेश्मनि समचतुरस्रा चतुर्हस्ता वेदिका कार्या । तदुपरि सर्वतोभद्रादिमंडलं । मृन्मयीप्रतिमा चेत्तत्रैव मंडले दार्वादिमयासने स्थाप्या । सौवर्ण्यादिप्रतिमा चेत्तस्याः पूजामंडलकुंभस्थेति **देवीपुराणे** कुंभोपर्येव पूजाविधानान्न तत्पूजार्थं पृथगासनसंपादनं । **प्रतिमाविधिश्च देवीपुराणे**—हेमराजतमृद्धातुचैलचित्रार्पितापि वा । खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा । तथा—मृन्मयीं प्रति-

मां कृत्वा विल्वे वा यस्तु पूजयेत् । आत्मवित्तानुसारेण स लभेन्मौक्तिकं फलं । इति । प्रतिमालक्षणं च पूजारंभे वक्ष्यमाणं जटाजूटेत्यादिध्यानानुसारि बोध्यं । पंचशुद्धोदककलशान्संपादयेत् । पंचपल्लवपंचरत्नसप्तमृत्तिकासर्वौषधीदूर्वाहेमफलवस्त्रपूर्णपात्राणि महापूजोपयोगीनि फलतांवूलादीनि च संपादयेत् ।

अथ यजमानः कृतनित्यक्रियः पूजांगत्वेन संकल्पपूर्वं तिलतैलेन सुस्नातः परिहितधौतवस्त्रः कुंकुमचंदनादिकृतपुंड्रो बद्धशिखो धृतपवित्रः[1] पत्न्यासह प्राङ्मुखः शुभासने उपविश्याचम्य प्राणानायम्य देशकालौ निर्दिश्य अमुकफलकामोहं अद्यप्रभृति नवमीपर्यंतममुकनियमोपेतो दुर्गापूजनं प्रतिमायां कुमार्यां च करिष्ये । प्रतिमापूजनांगत्वेन कलशस्थापनं करिष्ये । तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं च करिष्य इति संकल्प्य पुण्याहवाचनांते उक्तसर्वतोभद्रे कलशस्थापनं कुर्यात् । मृन्मयप्रतिमापूजनपक्षे तत्पुरोदेशे कुर्यात् । वेदिकोणेष्वपरांश्चतुरः कलशान्स्थापयेदित्युक्तं विष्णुधर्मोत्तरे—चतुरः कलशान्यस्तु दद्याद्देवगृहे नरः । चतुःसमुद्रवलयां स तु भुंक्ते वसुंधरां । इति । तच्च मध्यमकलशप्रभृति कांडानुसमयेनेत्थं कार्यं । महीद्यौरिति स्पृष्टभुवि अंकुरारोपणार्थं शुद्धमृदं प्रक्षिप्य ओषधयः समिति तस्यां यवान्प्रक्षिप्य आकलशेष्विति कुंभं निधाय । इमंमेगंगे इति शुद्धोदकेनापूर्य । गंधद्वारां० । याओषधीः पूर्वा० । ओषधयः संवदंते० । कांडात्कांडात्० । अश्वत्थेवो० । स्योनापृथिवि० । याः फलिनीर्या० । सहिरत्नानि० । हिरण्यरूपः० इत्येतैर्मंत्रैर्यथाक्रमं गंधसर्वौषधीयवदूर्वापंचपल्लवसप्तमृत्तिकाफलपंचरत्नहिरण्यानि क्षिप्त्वा युवासुवासा इति वस्त्रेणावेष्ट्य पूर्णपात्रं निधाय तत्र तत्त्वायामि० इति मंत्रेण वरुणं पूजयेत् । ब्रह्मपूजनमप्युक्तं ज्ञानार्णवे—पंचाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखैः स्थितः । संस्नाप्य स्थापितः कुंभे चतुर्बाहुश्चतुर्मुखः । ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत् । इति । एवमैशानकलशस्थापनांते कृते मध्यमकलशोपरि स्थापितायां पूर्वकृताग्न्युत्तारणायां नूतनप्रतिमायां जीर्णायां वा मृन्मय्यां वा देवं

१ पवित्रपाणिः ।

ध्यायेत् । तद्यथा मात्स्ये—जटाजूटसमायुक्तामर्धेंदुकृतल- क्षणां । लोचनत्रयसंयुक्तां पद्मेंदुसदृशाननां । अतसीपुष्पवर्णा- भां सुप्रतिष्ठां सुलोचनां । नवयौवनसंपन्नां सर्वाभरणभूषितां । सुचारुवदनां तद्वत्पीनोन्नतपयोधरां । त्रिभंगस्थानसंस्थानां म- हिषासुरमर्दिनीं । त्रिशूलं दक्षिणे दद्यात्खड्गं चक्रं क्रमादधः । तीक्ष्णं बाणं तथा शक्तिं वामतोपि निबोधत । खेटकं पूर्णचापं च पाशमंकुशमूर्ध्वजं । घंटां वा परशुं वापि वामतः सन्निवेशये- त् । अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् । शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनं । हृदि शूलेन निर्भिन्नं निर्यदंत्रविभूषि- तं । रक्तरक्तीकृतांगं च रक्तविस्फारितेक्षणं । वेष्टितं नागपाशे- न भ्रुकुटीभीषणाननं । सपाशवामहस्तेन धृतकेशं च दुर्गया । वमद्रुधिरसिक्तं च देव्याः सिंहं प्रदर्शयेत् । देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितं । किंचिदूर्ध्वं तथा वाममंगुष्ठं महिषो- परि । स्तूयमानं च तद्रूपममरैः संनिवेशयेत् । इति । अथावाहनं । एहि दुर्गे महाभागे रक्षार्थं मम सर्वदा । आवाहयाम्यहं देवि सर्वकामार्थसिद्धये । अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु । रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोस्तुते । भगवति श्रीदुर्गे इहागच्छ इह तिष्ठ इह सन्निधेहि इह स्थिरा भव सुप्रसन्ना भव इति । पूजाच देवीपुराणे—कुर्याद्देव्या- स्तु मंत्रेण पूजां क्षीरघृतादिभिः । इत्युपक्रम्योक्तेन—जयंती मंगला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते । इति मंत्रेण कार्या । तल्लिंगकेन वैदिके- नागमोक्तेन वा कार्या । —तल्लिंगैः पूजयेन्मंत्रैः सर्वदेवान्स- माहितः । इत्यग्निपुराणवचनात् । नाम्ना सर्वं समापये- दिति वचनात्प्रणवादिचतुर्थ्यंतेन नमोंतेन नाम्ना वा कुर्या- त् । स्कंदपुराणे तु—दुर्गमे दुस्तरे कार्ये भवदुःखविनाशि- नी । प्रणमामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीं । इत्यनेन पू- जोक्ता । पूजांते छत्रचामरादिराजोपचारान्समर्प्य प्रणम्य प्रार्थ- येत् । महिषघ्नि महामाये चामुंडे मुंडमालिनि । द्रव्यमारोग्यं विजयं देहि देवि नमः सदा । भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महे- श्वरि । देवेभ्यो मनुजेभ्यश्च भयेभ्यो रक्ष मां सदा । सर्वमं- गलमांगल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यंबके गौरि नारा-

यणि नमोस्तु ते । रूपं देहि यशो देहि भगं भगवति देहि मे । पुत्रान्देहि धनं देहि सर्वान्कामान्प्रदेहि मे । इति ।

यद्यपि—बलिप्रदाने पूजायामग्निकार्ये महोत्सवे । सर्वं ममैतच्चरितमुच्चार्यं श्राव्यमेव च । इति मार्कंडेयपुराणस्थदेवीवचसि सामान्यतः उच्चारश्रवणे बलिप्रदानाद्यंगत्वेन विकल्पेन विहिते तथापि उक्तशारदपूजाकाले श्रवणमेव कार्यं । शरत्काले महापूजा क्रियते या च वार्षिकी । तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः । सर्वबाधाविनिर्मुक्तो धनधान्यसमन्वितः । मनुष्यो मत्प्रसादेन भविष्यति न संशयः । इति तत्रैव विशेषवचनात् । एतन्नियमबलेनैव पूर्ववाक्यस्थचकारस्य वाशब्दार्थे व्याख्यातुमुचितत्वात् । नचैतौ सामान्यविशेषविधिपूजोत्तरजपादिविषयाविति शंक्यम् । बलिप्रदान इति सप्तमीभिः तस्यामिति सप्तम्या च स्तोत्रपाठादेः पूजाविधेयत्वप्रतीत्या तत्कालीनत्वलाभात् वपया प्रातःसवने चरंतीतिवत् । श्रवणं च ब्राह्मणेनैव कारणीयं । ब्राह्मणं वाचकं विंद्यान्नान्यवर्णजमादरात् । इति भविष्योक्तेः । सोपि—नारायणायनमः । नरायनरोत्तमायनमः । देव्यै सरस्वत्यैनमः । व्यासायनमः । इति नमस्कृत्य प्रणवमुच्चार्य स्तोत्रादिवाचनारंभं कुर्यात् । नारायणं नमस्कृत्य नरं चैव नरोत्तमं । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् । इति वचनात् । अष्टादशपुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत । कार्ष्णं च पंचमो वेदो यन्महाभारतं स्मृतं । शैवाश्च धर्मा राजेंद्र मानवोक्ता महीपते । जयेति नाम चैतेषां प्रवदंति मनीषिणः । इति भविष्यत्पुराणे जयशब्दव्याख्यानात् । प्रणवं चादितो जप्त्वा स्तोत्रं वा संहितां जपेत् । अंते च प्रणवं दद्यादन्यथा विफलं भवेत् । इति मात्स्यवचनात् । अन्ये नियमास्तत्रैवोक्ताः—शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः । न कार्यासक्तमनसा कार्यं स्तोत्रस्य वाचनं । आधारे स्थापयित्वा तु पुस्तकं प्रजपेत्सुधीः । हस्तसंस्थापनादेव यस्मादल्पफलं भवेत् । स्वयं च लिखितं यच्च कृतिना लिखितं च यत् । अब्राह्मणेन लिखितं तच्चापि विफलं भवेत् । ऋषिच्छंदादिकं न्यस्य पठे-

१ पूजनं ।

त्स्तोत्रं विचक्षणः । संकल्पिते स्तोत्रपाठे संख्यां कृत्वा पठेत्सुधीः । अध्यायं प्राप्य विरमेन्नतु मध्ये कदाचन । कृते विरामे मध्ये तु अध्यायादि पठेत्पुनः । इति । तथा अन्यत्रापि वाचकस्तुतिव्याजेन त एवोक्ताः । विस्पष्टमद्रुतं शीघ्रं स्पष्टाक्षरपदं तथा । कलस्वरसमायुक्तं रसभावसमन्वितं । बुध्यमानः सदा ह्यर्थं ग्रंथार्थं कृत्स्नशो नृप । ब्राह्मणादिषु सर्वेषु ग्रंथार्थं चार्पयेन्नृप । य एवं वाचयेद्राजन्स विप्रो व्यास उच्यते । इति । पूजांते दुर्गामंत्रं वैदिकमागमिकं वा जपेत् । –दुर्गाग्रतो जपेन्मंत्रमेकचित्तः समाहितः । इति देवीपुराणोक्तेः । ततो देवीमाहात्म्यस्यापि पुनः संख्यासंकल्पपूर्वकं पुरुषार्थं पाठं श्रवणं वा कुर्यात् । –माहात्म्यं भगवत्यास्तु पुराणादिषु कीर्तितं । पठेच्च शृणुयाद्वापि सर्वकामसमृद्धये । इति शास्त्रांतरात् । –संकलिपते स्तोत्रपाठे संख्यां कृत्वा पठेत्सुधीः । इति वाराहीतंत्रे संकल्पितेति विशेषणेन पूजांगस्तोत्रपाठं व्यावृत्य[1] संख्यांकृत्वेत्यनेन संख्यासंकल्पविधानाच्च । अंगेषु प्रधानसंकल्पात्पृथक्संकल्पाभावात् । अतएव दीक्षणीयादिषु आरंभाभावान्नारंभणीयेति दशमे जैमिनिनोक्तं । संति च मार्कंडेयपुराणे देवीस्तोत्रपाठादेः पूजांगत्वबोधकशास्त्रादन्यान्यपि पुरुषार्थत्वबोधकानि फलविशेषकामं प्रति सदानुष्ठेयत्वकादाचित्कानुष्ठेयत्वनैमित्तिकानुष्ठेयत्वविधिरूपाणि शास्त्राणि । तत्राद्यं—एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः । तस्याहं सकलां बाधां नाशयिष्याम्यशेषतः । इत्युपक्रम्योपसंहृतं । तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः । श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत् । इति । द्वितीयं च—अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः । श्रोष्यंति चैव ये भक्त्या मम माहात्म्यमुत्तमं । न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः । भविष्यति न दारिद्र्यं न चैवेष्टवियोजनं । शत्रुतो न भयं तस्य दस्युतो वा न राजतः । न शस्त्रानलतोयौघात्कदाचित्संभविष्यति । इति । तृतीयमपि—शांतिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने । ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम । उपसर्गाः शमं यांतीत्यादि । तथा—अरण्ये प्रांतरे वापि दा-

१ व्यहत्य ।

वाग्निपरिवारितः । दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः । सिंहव्याघ्रानुयातो वा वने वा वनहस्तिभिः । राज्ञा क्रुद्धेन वाज्ञप्तो वध्यो बंधगतोपि वा । आघूर्णितो वा वातेन स्थितः पोते महार्णवे । पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे । सर्वबाधासु चोग्रासु वेदनाभ्यर्दितोपि वा । स्मरन्ममैतच्चरितं नरो मुच्येत संकटात् । इति । संख्याविशेषेण फलविशेष उक्तो वाराहीतंत्रे—चंडीपाठफलं देवि शृणुष्व गदतो मम । एकावृत्त्यादि पाठानां यथावत्कथयामि ते । संकल्पपूर्वं संपूज्य न्यस्यांगेषु मनून्सकृत् । पाठाद्बलिप्रदानाच्च सिद्धिमाप्नोति मानवः । उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः । ग्रहोपशान्तौ कर्तव्यं पंचावृत्तं वरानने । महाभये समुत्पन्ने सप्तावृत्तं समुन्नयेत् । नवावृत्त्या भवेच्छांतिर्वाजपेयफलं लभेत् । राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत् । अर्कावृत्तेः काम्यसिद्धिर्वैरहानिश्च जायते । मन्वावृत्तात्पुमान्वश्यस्तथा स्त्री वश्यतामियात् । सौख्यं पंचदशावृत्ताच्छ्रियमाप्नोति मानवः । कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः । राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च । कुर्यात्सप्तदशावृत्तं तथाष्टादशकं प्रिये । महारण्यविमोक्षाय विंशावृत्तं पठेत्सुधीः । पंचविंशावर्तनात्तु भवेद्बंधविमोक्षणं । संकटे समनुप्राप्ते दुश्चिकित्स्यामये तथा । जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते । वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये । तथैव त्रिविधोत्पाते तथा चैवातिपातके । कुर्याद्यत्नाच्छतावृत्तं ततः संपद्यते शुभं । श्रेयोवृद्धिः शतावृत्त्या राज्यवृद्धिस्तथा परा । मनसा चिंतितं देवि सिद्ध्येदष्टोत्तराच्छतात् । शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते । सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा । भुक्त्वा मनोगतान्कामान्नरो मोक्षमवाप्नुयात् । यथाश्वमेधः क्रतूनां देवानां च यथा हरिः । स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः । अथवा बहुनोक्तेन किमेतेन वरानने । चंड्याः शतावृत्तिपाठात्सर्वाः सिध्यंति सिद्धयः ।

**वेदपारायणमपि** शिष्टाचारात्कार्यं तद्विधिर्बौधायनीयधर्मप्रश्ने—अथातोऽनक्षत्पारायणविधिं व्याख्यास्यामः । शुचिवासाः स्याच्चीरवासा वा हविष्यमन्नमिच्छेदपः फलानि वा ग्रामा-

त्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य गोमयेन गोचर्ममात्रं स्थंडिलमुपलिप्य प्रोक्ष्य स्थंडिलमुल्लिख्याद्भिरभ्युक्ष्याग्निमुपसमाधाय संपरिस्तीर्य एताभ्यो देवताभ्यो जुहुयात्। अग्नयेस्वाहा प्रजापतये विश्वेभ्योदेवेभ्यः स्वयंभुवे ऋग्भ्यो यजुर्भ्यः सामभ्यः अथर्वभ्यः श्रद्धायै मेधायै प्रज्ञायै श्रियै ह्रियै सवित्रे सावित्र्यै सदसस्पतये अनुमतये । वेदादिमारभेत्। संततमधीयीत नांतरा व्याहरेत् नांतरा विरमेदथांतराविरमेत्रीन्प्राणायामानारभ्य वृत्तांतावेद(?) आरभेत । प्रतिच्छाया यावता कालेन तावंतं कालं तदधीयीत । प्रतिच्छाया छायावैपरीत्यं । अपराह्णप्रवृत्तिरितियावत् । ततश्च पूर्वाह्ण एवाधीयीतेत्याशयः । स यदा जानीयात् ऋक्तो यजुष्टः सामत इति तद्ब्राह्मणं तच्छंदसं तद्दैवतमधीयीत । वेदत्रयगतसंहितामात्रपारायणचिकीर्षायां विनियोगच्छंदोदैवतज्ञानमावश्यकमित्यर्थः । ऋष्युपलक्षणमेतद्द्वादशवेदसंहिताया यदधीते । यदनध्यायेऽधीयीत यद्गुरवः । गोपितान्यकार्याणि[1] भवंति ताभिः पुनीते । ताभिः संहिताभिः। शुद्धमस्य पूतं ब्रह्म भवति।ब्रह्म वेदः।अतऊर्ध्वं संचयोपरतो द्वादशवेदसंहिता अधीत्य ताभिरुशनसो लोकमवाप्नोति । संचयोपरतो धनार्जनरहितः । अपरा द्वादश वेदसंहिता अधीयीत ताभिर्बृहस्पतेर्लोकमवाप्नोति । अपरा द्वादश वेदसंहिता अधीयीत ताभिः प्रजापतेर्लोकमाप्नोति । अनश्नन्संहितासहस्रमधीयीत ब्रह्मभूतो ब्रह्मविराजो ब्रह्मभवतीत्यादि । रजोगुणोपहितस्य हिरण्यगर्भस्य विराजश्च सायुज्यं प्राप्य परब्रह्मभावं गच्छतीत्यर्थः ।

**अथ कुमारीपूजनं देवीपुराणे**—पितरो वसवो रुद्रा आदित्या गणलोकपाः । सर्वे ते पूजितास्तेन कुमार्यो येन पूजिताः । इति । तत्स्वरूपं **स्कांदे**—अरोगिणीं सुपुष्टांगीं सुरूपां व्रणवर्जितां । समानवंशसंभूतां कन्यां सम्यक्प्रपूजयेत् । इति । अत्र वंशस्य समानत्वं पूजकजातीयवंशापेक्षया । तेन ब्राह्मणेन ब्राह्मणी पूज्येत्यर्थः । तथा । एकवर्षा तु या कन्या पूजार्थे तां विवर्जयेत् । गंधपुष्पफलादीनां प्रीतिस्त्यां न विद्यते । द्विवर्षकन्यामारभ्य दशवर्षावधि क्रमात् । पूजयेदित्यनुषंगः । **देवीपुराणे**—कुमारी स्याद्द्विवर्षा तु

१ कोपितानि ।

त्रिवर्षा स्यात्त्रिमूर्तिनी । चतुर्वर्षा तु कल्याणी पंचवर्षा तु रोहिणी । षड्वर्षा तु भवेत्काली सप्तवर्षा च चंडिका । अष्टवर्षा शांभवी स्याद्दुर्गाब्दैर्नवभिः स्मृता । दशवर्षा भवेद्भद्रा । इति । तथा—आयुष्यबलवृद्ध्यर्थं कुमारीं परिपूजयेत् । सौख्यधान्यधनारोग्यपुत्रपौत्राभिवृद्धये । त्रिमूर्तिं पूजयेत्कन्यां त्रिवर्गस्य फलाप्तये । अपमृत्युव्याधिपीडादुःखनाशोपपत्तये । कल्याणीं पूजयेद्धीमान्नित्यं कल्याणवृद्धये । यशःकामो नरो नित्यं रोहिणीं पूजयेत्सदा । शत्रूणां विजयार्थी च कालिकां पूजयेन्नरः । संग्रामे जयकामश्च चंडिकां पूजयेत्सदा । महापापप्रणाशाय शांभवीं परिपूजयेत् । दुर्गां दुर्गार्तिनाशाय[1] पूजयेत्प्रयतो नरः । सुभद्रां पूजयेद्धीमान्दासीदाससमृद्धये । इति । तथा—एकां कन्यां भोजयित्वा ऐश्वर्यं लभते नरः । कन्याद्वयं भुक्तिमुक्ती त्रिवर्गफलदं त्रयं । चतुष्टयं राज्यदं च सर्वकामफलप्रदं । विद्याप्रदं पंचकं च षट्कं षट्कर्मसिद्धिदं । सप्तभिर्लभते राज्यमष्टाभिर्गुणसंपदः । नवभिः पृथिवीशः स्यात्कुमारीणां च पूजनात् । अलाभेतु—विवाहानंतरं कन्या कन्यात्वमुपजायते । तावत्संपूज्यते कन्या यावत्पुष्पं न दृश्यते । इति । धौम्यस्तु—एकवर्षा भवेत्संध्या द्विवर्षा च सरस्वती । त्रिवर्षा तु त्रिमूर्तिः स्याच्चतुर्वर्षा तु कालिका । सुभगा पंचवर्षा स्यात्षड्वर्षा तु उमा भवेत् । सप्तभिर्मालिनी सा स्यादष्टवर्षा तु कुब्जिका । नवभिः कालसंवर्षा दशभिश्चापराजिता । एकादशेब्दे त्विंद्राणी द्वादशेब्दे तु भैरवी । त्रयोदशे महालक्ष्मीर्द्विसप्ता चेह नायिका[2] । क्षेत्रजा पंचदशभिः षोडशे चर्चिका मता । एवं क्रमेण पूज्या सा यावत्पुष्पं न दृश्यते । इति । कामनाविशेषेण स्कांदे—ब्राह्मणीं सर्वकार्येषु जयार्थे नृपवंशजां । लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजां । दारुणे त्वंत्यजातीयां पूजयेद्विधिवन्नरः । भोजयेच्छ्वेतवस्त्रैश्च गंधपुष्पाक्षतादिभिः । इति ।

अत्र पूज्यकन्यास्वरूपमुक्तं तत्रैव—हीनाधिकांगीं कुष्ठाढ्यां विनाशिकुलसंभवां । ग्रंथिस्फुटितशीर्णांगीं रक्तपूयव्रणांकिनीं । जात्यंधां केकरां काणीं कुरूपां तनुरोमशां । संत्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवां । इति । तनुश्चासौ रोमशा

१ दुर्गतिनाशाय । २ माथिका ।

चेति कर्मधारयः। पूजाप्रकारो देवीपुराणे—प्रक्षाल्य पादौ सर्वासां कुमारीणां च वासव। सुलिप्ते भूतले रम्ये तत्र ता आसने स्थिताः। पूजयेद्गंधपुष्पैश्च स्रग्भिश्चापि मनोहरैः[1]। पूजयित्वा विधानेन भोजनं तासु दापयेत्। खंडलड्डुगुडं सर्पिर्दधि क्षीरं समाक्षिकं। तासां देयं कुमारीणां शनैर्भुंजीययेत्तु ताः। पानीयं याचितं देयमन्नं चायाचितं शुभं। प्रणिपातस्तु कर्तव्यो वृत्रहन्भक्तिपूर्वकं। अनेन विधिना शक्र देवी शीघ्रं प्रसीदति। इति। आवाहनपूजामंत्रौ स्कान्दे—मंत्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीं। नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहं। जगत्पूज्ये जगद्वंद्ये सर्वशक्तिस्वरूपिणि। पूजां गृहाण कौमारि जगन्मातर्नमोस्तु ते। इति कुमारीपूजा। —त्रिपुरां त्रिगुणाधारां त्रिवर्गज्ञानरूपिणीं। त्रैलोक्यवंदितां देवीं त्रिमूर्तिं पूजयाम्यहं। इति त्रिमूर्तिपूजा।—कालात्मिकां कलातीतां कारुण्यहृदयां शिवां। कल्याणजननीं नित्यं कल्याणीं पूजयाम्यहं। इति कल्याणीपूजा।—अणिमादिगुणाधारामकाराद्यक्षरात्मिकां। अनंतशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहं। इति रोहिणीपूजा।—कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीं। कामदां करुणोदारां[2] कालीं संपूजयाम्यहं। इति कालीपूजा।—चंडवीरां चंडमायां चंडमुंडप्रभंजनीं। पूजयामि सदा देवीं चंडिकां चंडविक्रमां। इति चंडिकापूजा।—सदानंदकरीं शान्तां सर्वदेवनमस्कृतां। सर्वभूतात्मिकां लक्ष्मीं शांभवीं पूजयाम्यहं। इति शांभवीपूजा।—दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीं। पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीं। इति दुर्गापूजा।—सुंदरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीं। सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहं। इति सुभद्रापूजा। —एवमभ्यर्चनं कुर्यात्कुमारीणां प्रयत्नतः। कंचुकैश्चैव वस्त्रैश्च गंधपुष्पाक्षतादिभिः। नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः। इति। प्रत्यहं ब्राह्मणभोजनं योगिनीभोजनं चोक्तं नारदीये—प्रत्यहं भोजयेद्विप्रान्कुमारीर्योगिनीरपि। इति।

अत्र च दुर्गापूजापाठकुमारीपूजनादीनि दिनवृद्ध्या का-

१ मनोरमैः। २ गुणोदारां।

र्याणि—यदाद्ये दिवसे कुर्याच्चंडिकापूजनादिकं। द्विगुणं तु द्वितीयेऽह्नि त्रिगुणं तत्परेहनि। नवमीतिथिपर्यंतं वृद्ध्या पूजाजपादिकं। इति **हेमाद्रौ देवीपुराणात्**—एकोत्तरविवृद्ध्या तु नवमीं यावदेव तु। चंडीपाठं जपेच्चैव जापयेद्वा विधानतः। इति देवीपुराणाच्च एकैकोत्तरया वृद्ध्या रूपाणि परिकीर्तयेत्। तथैव कन्यकाविप्रद्वयानां वृद्धिरुत्तमा। इति डामरकल्पवचनाच्च। **कामनाविशेषेण स्कान्दे**—एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च। द्विगुणं वापि प्रत्येकं नवकं नवकं तु वा। इति। नवभिर्लभते भूमिमैश्वर्यं द्विगुणेन तु। एकवृद्ध्या लभेत्क्षेममेकैकेन श्रियं लभेत्। इति।

**भवानीसहस्रनामपाठो**ऽप्युक्तो **रुद्रयामले**—तदेवोपक्रस्य—नवरात्रेऽकृताहारो दृढभक्तिर्जितेंद्रियः। चंडिकायतने विद्वान् शुचिः सन्मूर्तिसंनिधौ। एकाकी तु शतावृत्तं पठेद्धीरश्च निर्भयः। साक्षाद्भगवती तस्मै प्रयच्छेदीप्सितं फलं। इति। प्रत्यहं **वेदपारायणादि** विहितं। **नारदीये**—वेदपारायणादीनि स्वशक्त्या कारयेद्व्रती। इति।

**दीपप्रज्वालनमुक्तं तत्रैव**—अखंडं दीपकं देव्याः प्रीतये नवरात्रकं। उज्ज्वालयेदहोरात्रमेकचित्तो धृतव्रतः। इति। गीताद्युक्तं मात्स्ये—गीतवादित्रनिर्घोषं देवस्याग्रे प्रकाशयेत्। घंटा भवेदशक्तस्य सर्ववाद्यमयी यतः। इति।

**यात्राविधिः शिवरहस्ये**—तत्रैव विमला दुर्गा तिष्ठत्यमललोचना। सर्वदुर्गहरा नित्यं स्वभक्ताभयदायिनी। तत्राश्विने शुक्लपक्षप्रतिपद्यवधि प्रिये। नवमीदिनपर्यंतं पूजा कार्या प्रयत्नतः। सा सर्वार्तिहरा देवी नित्यं काशीनिवासिनी। पूजिता भक्तवरदा भवत्यवे न संशयः।

अथ प्रतिपदादिक्रमेण विशेषो **भविष्ये**—केशसंस्कारद्रव्याणि प्रदद्यात्प्रतिपद्दिने। पट्टदोरं द्वितीयायां केशसंचयहेतवे। दर्पणं च तृतीयायां सिंदूरालक्तकं तथा। मधुपर्कं चतुर्थ्यां तु तिलकं नेत्रमंडनं। पंचम्यामंगरागं च शक्त्यालंकरणानि च। षष्ठ्यां बिल्वतरौ बोधं सायं संध्यासु कारयेत्। सप्तम्यां प्रातरानीय गृहमध्ये प्रपूजयेत्। उपोषणमथाष्टम्यामात्मशक्त्या च पूजनं। नवम्यामुग्रचंडायाः पूजां कु-

र्योद्वलिं तथा । कुमारी पूजनीया च भूषणीया च भूषणैः। संपूज्य प्रेषणं कुर्याद्दशम्यां शबरोत्सवैः । अनेन विधिना यस्तु देवीं पूजयते नरः । स्कंदवत्पालयेत्तं तु देवी सर्वापदि स्थितं । इति ।

प्रत्यहं साधारणं **दानांतरमप्युक्तं देवीपुराणे**—नारीकेलफलादीनि नवकं नवकं प्रिये । ताम्रमृन्मयपात्राणि सपयांसि तथैव च । वंशपात्राणि वस्त्राणि भक्ष्यभोज्यान्वितानि च । यदि वा तिलपात्राणि मृत्पात्राण्यथवा पुनः । अथवा चान्यपात्राणि पंचामृतभृतानि च । सौभाग्यपात्राण्यथवा कुंकुमादिभृतानि च । दुर्गादेवी प्रीयतां म इत्युक्त्वा विधिवद्देत् । दुर्गादेवी प्रसन्ना स्यादिति । अन्यदपि प्रत्यहमनुष्ठेयं तत्रैव—प्रातःस्नायी जितद्वंद्वस्त्रिकालं शिवपूजकः । जपहोमसमायुक्तः कन्यका भोजयेत्सदा । इति । शिवपूजक इति शिवा च शिवश्च शिवौ तयोरित्यर्थः । सदेति समभिव्याहारेण द्वंद्वोपात्तयोः जपहोमयोस्तुल्यवत्कर्तव्यताप्रतीतेः ।

तिलाज्येनाष्टाविंशतिसंख्यया अष्टोत्तरशतसंख्यया वा देवीमंत्रेण होमोपि प्रत्यहमनुष्ठेयः । नचैवमष्टमीनवम्योर्होमविधिविरोधः । तस्य देवीमाहात्म्यगतश्लोकैः प्रतिश्लोकमनुष्ठेयमहाहोमविषयत्वात् । द्वितीयादितिथयोपि प्रतिपद्वत्प्रदोषव्यापिन्यो ग्राह्याः ।

अथ सप्तम्यादिदिनत्रयविहितं **पत्रिकापूजनं**—तत्र सप्तम्यादितिथय उदयगामिन्य एव ग्राह्याः । भगवत्याः प्रवेशादि विसर्गांताश्च याः क्रियाः । तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः । इति **नंदिपुराणात्**—प्रातरावाहयेद्देवीमित्यादि पूर्वोक्तवचोभ्यश्च । तत्रैव मूलादिनक्षत्रयोगेन प्राशस्त्यं नतु तदनुरोधेन पूर्वविद्धायां तदनुष्ठानं । —ऋक्षयोगानुरोधेन रात्रौ पत्रीप्रवेशनं । विसर्गं वाचरेद्यस्तु सराष्ट्रः स विनश्यति । इति निषेधात् । तदंगं च बिल्वशाखायां देवीबोधमाश्विनकृष्णनवम्यामार्द्रर्क्षयुतायां केवलायां वा कार्यं ।—कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा । नवम्यां बोधयेद्देवीं महाविभवविस्तरैः । इति **लैंगात्**—अत्र दिनेत्युक्तेः पूर्वाह्णव्यापिनी नवमी ग्राह्या । उभयत्र तत्संबंधसाम्ये तु नक्षत्रयोग-

एव ग्राह्यत्वनियामकः । नवम्यां बोधाकरणे तु यस्यां सप्तम्यां पत्रिकाप्रवेशनं चिकीर्षितं तदव्यवहितपूर्वदिने सायाह्नव्यापिन्यां ज्येष्ठर्क्षसहितायां षष्ठ्यां सायाह्ने तत्कार्यं । षष्ठ्यभावे तु पूर्वेद्युस्तस्मिन्नेव काले तत्कार्यं । ज्येष्ठानक्षत्रयुक्तायां कुर्याद्बिल्वाभिमंत्रणम् । इति देवीपुराणवचनात् ।—पत्रीप्रवेशात्पूर्वेद्युः सायाह्ने बिल्ववासिनीं । चंडीमामंत्रयेद्विद्वान्नात्र षष्ठीपुरस्क्रिया । इति ब्रह्मांडपुराणाच्च । ज्येष्ठा वाप्यथवा षष्ठी सायंकाले न चेद्भवेत् । सायमेव तथापि स्याद्बिल्वशाखानिमंत्रणं । पूर्वां षष्ठीं सनक्षत्रां सायं प्राप्तामपि त्यजेत् । यदा तु पत्रिकापूजा न परेद्युर्भविष्यति । इति मत्स्यसूक्ताच्च—यदा च वृद्धिवशात्प्रवेशदिने पूर्णा सप्तमी नवमी च स्वप्रयुक्तपूजार्हा पौर्वाह्णिकी सप्तम्याश्चतुर्थदिने भवति तदा त्र्यहसाध्यमपि पत्रिकापूजनं चतुरहव्यापि कार्यं । यदा वा प्रवेशदिनोत्तरदिने भवेत् तदा द्व्यहव्यापि कार्यं—व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये । द्वाभ्यां चतुरहोभिर्वा ह्रासवृद्धिवशात्तिथेः । इति भविष्योक्तेः—पत्रिकापूजनं च प्राक्स्थापितदेवीप्रतिमासमीपे एव कार्यं । प्रतिमापूजनस्यापि सप्तम्यामेवेत्युक्तपक्षे प्रतिमायाश्चापि पत्रिकयैव सह प्रवेशादिविसर्जनांतं कार्यमित्युक्तं दुर्गाभक्तितरंगिण्यां ।

अथप्रयोगः—उक्तविधायां नवम्यां प्रातः षष्ठ्यां वा सायं शोभनबिल्वसमीपं गत्वा । ॐ बिल्ववृक्षाय नमः इति अर्घ्यं पंचोपचारान्पुष्पांजलिं च समर्प्य तत्र दुर्गायै नम इति मंत्रेण दुर्गामावाह्य षोडशोपचारैः संपूज्य गीतवाद्यघोषेण तत्र दुर्गां विबोधयेत् । बिल्वालाभे पत्रिकांतरे वा—रंभा कंची हरिद्रा च जयंती बिल्वदाडिमौ । अशोको मानवृक्षश्च[1] धात्र्यादिनवपत्रिका । इति दुर्गाभक्तितरंगिण्यां देवीपुराणे बिल्वसमत्वेन पत्रिकांतराणामप्यभिधानात् । बोधने मंत्रः—रावणस्य वधार्थाय रामस्यानुग्रहाय च । अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा । इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः । श्रीवृक्षे बोधयामि त्वां यावत्पूजां करोम्यहं । इति । षष्ठ्यां बोधने तु—अहमप्याश्विने मासि सायाह्ने बोधया-

१ दानवृक्ष इतिपाठः ।

म्यतः । इत्येतावद्वितीयस्थाने पठनीयं । ततो बिल्वं प्रार्थयेत् । मेरुमंदारकैलासहिमवच्छिखरे गिरौ । जातः श्रीफलवृक्ष त्वमंबिकायाः सदा प्रिय । श्रीशैलशिखरे जात श्रीफल श्रीनिकेतन । नेतव्योसि मया वृक्ष पूज्यो दुर्गास्वरूपतः । इति । तत उक्तसप्तम्यां प्रातः पूर्वाभिमंत्रितं बिल्वं गत्वा तं पुनः संपूज्य कृतांजलिः प्रार्थयेत् ।—बिल्ववृक्ष महाभाग सर्वदा शंकरप्रिय । गृहीत्वा नवशाखां तु दुर्गापूजां करोम्यहं । शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया प्रभो । इति । तत ऐशानीप्राच्युदीच्यन्यतरदिग्गतां द्विफलां शोभनां शाखां वानस्पत्येन मंत्रेण छेदयेत् । वानस्पत्येन मंत्रेण छिंधि फट् ओं हुं फट् इति मंत्रेणेति केचित् । वनस्पतेशतवल्शोविरोहेत्यनेनेत्यन्ये । शाखां गृहमानीयांगणे शुद्धपीठे निधाय शुद्धाद्भिरभिषिच्य बिल्वशाखायै नमः इत्यर्घ्यादिभिः शाखायां प्रतिमायां च देवीमावाहनपूर्वकं संपूज्य माषभक्तादिबलिं समर्प्य शाखां प्रतिमां च दोलाद्यारूढां पूजागृहद्वारदेशमानीय तत्र निधाय तद्गृहगतानि भूतानि भूतेभ्योनमः इति गंधादिभिः पूजयेत् । ततस्तेभ्यः सपुष्पजलोत्सर्गेण माषभक्तबलिं दद्यात् । मंत्रः—भूताः प्रेताः पिशाचाश्च ये वसंत्यत्र भूतले । ते गृह्णंतु मया दत्तो बलिरेष प्रसाधितः । पूजिता गंधपुष्पाद्यैर्बलिभिस्तर्पितास्तथा । देशादस्माद्विनिःसृत्य पूजां पश्यंतु मत्कृतां । भूतेभ्यः एष माषभक्तबलिर्नमम । इति । ततो लाजचंदनसर्षपफलपुष्पकुशाक्षताः फडिति मंत्रेणाभिमंत्र्य भूतापसारणाय तान्विकिरेत् । मंत्रः—अपसर्पंतु ते भूता ये भूता भूमिमाश्रिताः । भूतानामविरोधेन पूजाकर्म करोम्यहं । फट् इति । विकिरान्विकिरेत्तत्र सप्त जप्तान्शराणुना । लाजचंदनसिद्धार्थफलपुष्पसिताक्षताः । विकिरा इति संप्रोक्ताः सर्वविघ्नविनाशनाः । इति शारदातिलकोक्तेः । शराणुः फडितिमंत्रो विकिरणे अभिमंत्रणे चाभिप्रेतः । एतदकरणे दोषः कालिकापुराणे—स्थितेषु सर्वभूतेषु नैवेद्यं मंडलं तथा । विलुंपंति महालुब्धा नच गृह्णंति देवताः । तस्माद्यत्नेन कर्तव्यं भूतानामपसारणं । इति । ततः शाखायां प्रतिमायां च पुनर्देवीं संपूज्य श्रीशैलेत्याद्युक्तमंत्रेण शाखां देवीरूपां ध्यात्वा गीतवाद्यशब्दैः प्रतिमां

शाखां च पूजागृहमध्ये आनीय ।—आरोपितासि दुर्गे त्वं मृन्मये श्रीफलेपि च । स्थिरा नितांतं भूत्वा मे गृहे त्वं कामदा भव । इति शुद्धपीठे स्थिरीकुर्यात् ।

तत्र दिग्विशेषाभिमुखत्वनियमो दुर्गाभक्तितरंगिण्यां देवीपुराणे—याम्या स्याच्छुभदा दुर्गा पूर्वा स्याज्जयवर्धिनी । पश्चिमाभिमुखी नित्यं न स्थाप्या सौम्यदिङ्मुखी । इति । प्राणप्रतिष्ठां कृत्वा प्रतिष्ठामंत्रेण स्वशाखोक्तेन द्विजः प्रतिष्ठापयेत् । शूद्रः सुप्रतिष्ठिता भवेत्येतेन । ततः सपुष्पाक्षतैरावाहयेत् ।—आवाहयाम्यहं देवीं मृन्मये श्रीफले तथा । कैलासशिखराद्देवि विंध्याद्रेर्हिमपर्वतात् । आगत्य बिल्वशाखायां चंडिके कुरु संनिधिं । भगवति दुर्गे इहागच्छेति । ततः—स्थापितासि मया देवि श्रीफले मृन्मयेपि वा । आयुरारोग्यमैश्वर्यं देहि देवि नमोस्तु ते । भगवति दुर्गे इह तिष्ठेत्युक्त्वा—दुर्गे दुर्गस्वरूपासि सुरतेजोमहाबले । सदानंदकरे देवि प्रसीद मम सिद्धये । एह्येहि भगवत्यंब शत्रुक्षयजयप्रदे । भक्तितः पूजयामि त्वां दुर्गे देवि सुरार्चिते । पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः । पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे । दुर्गे देवि इहागच्छ सांनिध्यमिह कल्पय । यज्ञभागान्गृहाण त्वं योगिनीकोटिभिः सह । इति वदेत् । ततो जयंतीमंत्रांते इदं पाद्यं दुर्गायै नम इत्येवं पाद्याद्युपचारान्दद्यात् । तत्र पाद्यं गंधपुष्पादियुक्तं सौवर्णादिपात्रे अर्घ्यं गंधपुष्पाक्षतकुंकुमदधिदूर्वांकुशतिलफलबिल्वपत्रसहितं । आचमनीयानंतरं पंचामृतस्नानशुद्धोदकस्नाने । ततः पुनराचमनीयं । वस्त्रं० । पुनराचमनीयं । चंदनं च दत्त्वा ॐदुर्गायैनम इति मंत्रावृत्त्या पुष्पांजलित्रयं दद्यात् । ततः—अमृतोद्भवः श्रीवृक्षः शंकरस्य सदा प्रियः । बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि । ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियं । तत्ते दुर्गे प्रयच्छामि सर्वकामप्रसिद्धये । इति मंत्राभ्यां बिल्वपत्रं द्रोणपुष्पं च समर्प्य पुनर्जयंतीत्यादिमंत्रेण सुगंधिपुष्पाणि इमानि पुष्पाणि दुर्गायै नम इति समर्प्य तेनैव धूपादिदक्षिणांतानुपचारान्दत्त्वा स्तुत्वा नमस्कृत्य महिषघ्नीति मंत्रेण स्तुत्वा—कुंकुमेन समालब्धे चंदनेन विलेपिते । बिल्वपत्रकृतापीडे दुर्गेहं शरणागतः । इति ।

सर्वमंगलमांगल्ये रूपंदेहीति च द्वाभ्यां प्रार्थयेत् । ततो माषभक्तबलिं दद्यात् । एवमेवाष्टमीनवमीदशमीदिनेष्वपि पूजा बोध्या ।

अथैतासां निर्णयः । तत्र यद्यपि अष्टमीनवम्योः पूजाया उक्तविधया नक्तव्रतत्वात्प्रतिपद्वद्रात्रिव्यापिन्योरेव ग्राह्यत्वात्ते द्वे अपि तिथी सर्वस्मिन्नपि कार्ये पूर्वविद्धे एव ग्राह्ये इति प्राप्तं । तथापि गौरीव्रते कर्मकालव्याप्तिमनादृत्य द्वितीयाशेषसंयुक्तां तां परित्यज्य चतुर्थीदिने सूर्योदयानंतरं स्वल्पापि विद्यमाना ग्राह्येत्युक्तं । तथेयं महाषष्ठी सप्तमीशेषसंयुक्तापि त्याज्या । उदयानंतरं नवमीदिने स्वल्पापि विद्यमाना उपवासपूजाबलिदानेषु दिवारात्रौ कर्तव्येषु सर्वत्र ग्राह्या ।— नवमीसंयुता कार्या सदा दुर्गाष्टमी बुधैः । सप्तमीसंयुता हंति पूर्वपुण्यकृतं फलं । इति देवीपुराणात् । सदा रात्रावसत्वेपीत्यर्थः ।—नवम्या सह संयुक्तामष्टमीं कारयेद्बुधः । दुर्गादेवी तथा पूज्या पूर्वविद्धां न कारयेत् । इति स्कान्दे निषेधाच्च । नचानेन परिभाषोक्तरीत्या त्रिमुहूर्तयोग एव निषेधो नतु सप्तम्याः स्वल्पयोगे इति वाच्यं ।—सप्तमीस्वल्पसंविद्धा वर्जनीया सदाष्टमी । स्तोकापि सा तिथिः पुण्या यस्यां सूर्योदये भवेत् । इति मूलेनापि हि संयुक्ता सदा त्याज्याष्टमी बुधैः । लेशमात्रेण सप्तम्या अपि स्याद्यदि दूषिता । अष्टम्यामुदिते सूर्ये दिनांते नवमी भवेत् । कुजवारो भवेत्तत्र पूजनीया प्रयत्नतः । इति वचनेभ्यः । शुक्लपक्षेष्टमी चैवेत्यादिसामान्यप्रवृत्तनिगमोक्तेश्च । यदा तु प्रथमदिनेऽष्टमीविद्धा नवमी क्षयवशात्परसूर्योदयोत्तरं नानुवर्तते तदा सप्तमीविद्धैवाष्टमी तत्कार्ये स्वीकार्या । यथोक्तं स्मृतिसंग्रहे—यदा सूर्योदये न स्यान्नवमी चापरेऽहनि । तदाष्टमीं प्रकुर्वीत सप्तमीसहितां नृप । इति । ईदृशविषयत्वेनैव—अहं भद्रा च भद्रा च नावयोरंतरं क्वचित् । तस्माद्वै सततं विद्धा कार्या दुर्गाष्टमी तिथिः । इत्यादीनि कैश्चित्पठितानि वचनानि व्याख्येयानि । एवं पूर्वदिने संपूर्णाष्टमी परदिने च नवमीविद्धा तदापि पूर्वाष्टम्येव ग्राह्या । उत्तराग्राह्यत्ववचनानां सप्तमीयुतानिषेधसाहचर्यवशेन पूर्वदिने सप्तमीयोगे सत्येव प्रवृत्तेः । स्वतोपि नियमविधिप्रयुक्तलाघ-

वलिप्सया दिनद्वयगततिथेः खंडत्वदशायामेव प्रवृत्तेश्च। नवमी तु तत्प्रयुक्तवलिदानव्यतिरिक्तविषयेऽष्टमीविद्धा ग्राह्या।—आश्वयुक्शुक्लपक्षे तु नवमी पूर्वसंयुता। सा महानवमी प्रोक्ता इति शास्त्रात्। श्रीवणी दुर्गनवमीति वचनांतराच्च। वलिदाने तु नवमी दशमीविद्धैव ग्राह्या।—सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि। वलिदानं प्रकर्तव्यं तत्र देव्याः शुभावहं। बलिदाने कृतेऽष्टम्यां राष्ट्रभंगो भवेन्नृप। इति **देवीपुराण**वचनस्य नवमीप्रयुक्तवलिदानविषयत्वात्। अष्टमीप्रयुक्तस्य तु वलिदानस्य तस्यामेव कर्तुमुचितत्वात्। उक्तंच द्विविधवलिदानं **कालिकापुराणे**—सप्तम्यां विल्वशाखां तामाहृत्य प्रतिपूजयेत्। पुनः पूजां तथाष्टम्यां विशेषेण समापयेत्। जागरं च स्वयं कुर्याद्वलिदानं महानिशि। प्रभूतवलिदानं तु नवम्यां विधिवच्चरेत्। विसर्जनं दशम्यां तु कुर्याद्वै शारदोत्सवैः। इत्यष्टमीनवमीनिर्णयः।

अष्टम्यां **पूजासंभारविधिर्ब्रह्मांडे**—उपोषितैर्वस्त्रधूपमाल्यगंधानुलेपनैः। दीपरत्नैस्तथा भक्ष्यैः फलैर्मूलैश्च धान्यकैः। आमिषैर्विविधैः शाकैर्होमैर्नीराजनैरपि। इति। अत्रोपवासविधिः पुत्रवद्भिन्नविषयः।—उपवासं महाष्टम्यां पुत्रवान्न समाचरेत्। यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत्। इति **कालिकापुराणे** पुत्रवत्पर्युदासात्। कल्पोक्तपूजायामशक्तः पंचोपचारैरेव कुर्यात्।—सम्यक्कल्पोदितां पूजां यदि कर्तुं न शक्नुयात्। उपचारांस्तथा दातुं पंचैतान्विचरेत्तदा। गंधं पुष्पं च धूपं च दीपं नैवेद्यमेव च। इति **कालिकापुराणात्**। केवलाष्टम्यां करिष्यमाणपूजायाः अष्टमीपूजां करिष्य इति संकल्पः। अष्टमीनवमीपूजयोः पूर्वोत्तरदिनगतयोः प्रातःकालस्थयोः पृथक्संभवे संधिकालस्य च ततः पृथग्लाभे संधिपूजापि दिवा रात्रौ वा पृथगेव कार्या।—अष्टमीनवमीसन्धौ तृतीया खलु कथ्यते। तत्र पूज्या त्वहं पुत्र योगिनीगणसंयुता। इति **कालिकापुराणे** देवीवाक्ये तृतीयसंधिपूजाविधानात्। अस्याश्च कालविशेषेण फलतारतम्यं **मत्स्यसूक्ते**—अष्टमीनवमीयोगो रात्रियोगे विशिष्यते। अर्धरात्रे दशगुणं संध्यायां त्रिगुणं भवेत्। इति। संधिश्च तिथ्योरंत्याद्यदंडा-

त्मकः ।—अष्टम्याः शेषदंडश्च नवम्याः पूर्व एव च । तत्र या क्रियते पूजा विज्ञेया सा महाफला । इति **कामरूपीयनिबंधोक्तेः** । यदा पूर्वदिनस्थितषष्टिदंडाष्टम्याः नवमीदिने शेषो भवति तदा अष्टमीपूजा पूर्वेद्युरेव संधिपूजा नवमीपूजया सह परत्र कार्या । नच ।—षष्टिदंडात्मिकायास्तु तिथेर्निष्क्रमणे परे । अकर्मण्यं तिथिमलं विद्यादेकादशीं विना । इति तिथिमलभूतस्याष्टमीशेषस्य कर्मानर्हत्वमिति शंक्यं । विधिना निषेधबाधात् । नवमीदंडांश एव संधिपूजाविधेयेत्यपि कश्चित् । अष्टमीनवम्योश्चानयोः सप्रवृत्तिनिमित्तसंज्ञाविधिर्देवीपुराणे—यावद्भूर्वायुराकाशं जलं वह्निः शशी ग्रहाः । तावच्च चंडिकापूजा भविष्यति सदा भुवि । प्रावृट्काले विशेषेण आश्विने चाष्टमीषु च । महाशब्दो नवम्यां च लोके ख्यातिं गमिष्यति । इति । अतश्च पूजात्रयेपि संकल्पे तादृशसंज्ञाप्रयोगः कार्य इति केचित् ।

तत्रैव **बलिदानविधिर्देवीपुराणे**—तदर्धयामिनीशेषे विजयार्थं नृपोत्तम । पंचाशल्लक्षणोपेतं गंधधूपस्रगर्चितं । विधिवत्कालिकालीति जप्त्वा खड्गेन घातयेत् । इति । **कालिकापुराणे**—देवीं तु पूजयित्वा ये अर्धरात्रेऽष्टमीषु च । घातयंति पशून्भक्त्या ते भवंति महाबलाः । इत्यादि । बलिद्रव्याणि **तत्रैव**—पक्षिणः कच्छपा ग्राहा मत्स्या नवविधा मृगाः । महिषो गोधिकाऽगारे छागो बभ्रुश्च सूकरः । खड्गश्च कृष्णसारश्च गोधिका शरभो हरिः । शार्दूलश्च नरश्चैव स्वगात्ररुधिरं तथा । इति । ब्राह्मणं प्रति विशेषस्**तत्रैव**—न दद्याद्ब्राह्मणो मद्यं तथा देव्यै कदाचन । सिंहव्याघ्रनरान्दत्वा ब्राह्मणो नरकं व्रजेत् । इहापि स्यात्स हीनायुः सुखसौभाग्यवर्जितः । स्वगात्ररुधिरं दत्वा ब्रह्महत्यामवाप्नुयात् । मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते । इति । अगारे गोधिकेति ग्राम्यत्वं ज्ञाप्यते । अतएव द्वितीयगोधाग्रहणमारण्याभिप्रायं । अत्र केषांचिदेव निषेधात् अन्यप्राणिवधो ब्राह्मणस्य भवतीति केचित् । पूर्वोक्तमतानुसारिणस्तु वाक्यभेदभयात्सिंहादिग्रहणं प्राणिमात्रोपलक्षणार्थं । अतो ब्राह्मणेन माषकुल्माषबलिदानमेव कार्यमित्याहुः । एवं—कृत्वा घृतमयं व्याघ्रं नरं सिंहं तथैव च । अथवा पूपविकृतं

यवक्षोदमयं च वा । घातयेच्चंद्रहासेन तेन मंत्रेण संस्कृतः । इति । सिंहाद्यनुकल्पविधिमपि मतद्वयानुसारिणो द्वेधा व्याचक्षते । यथाश्रुतमेव ग्राह्यं उपलक्षणं चेति । येच सिंहादिभिन्नप्राणिबलिविधिं ब्राह्मणविषयं मन्यंते तेपि यथाकुलाचारं प्राणिबलिदानं माषकुलमाषादिबलिदानं वेति व्यवस्थामाहुः । क्षत्रियादिकं प्रति कृष्णसारनिषेधस्तत्रैव—न कृष्णसारं वितरेद्बलिं तु क्षत्रियादिकः । प्रददत्कृष्णसारं तु ब्रह्मवध्यमवाप्नुयात् । इति ।

नवम्यां पूर्ववत्पूजां विधाय **होमं कुर्यात्** ।—नवम्यां बलिदानं च कर्तव्यं वै यथाविधि । जपं होमं च विधिवत्कुर्यात्तत्र विभूतये । इति **कालिकापुराणोक्तेः** । केचित्तु **राजमार्तंडे**—अष्टम्यां रात्रियोगे कृतनियमविधिर्यज्ञकर्मप्रतिष्ठां इति वचनात् ।—शुंभासुरवधार्थाय रक्तबीजो मयासुरः । अष्टम्यां निहतो देव्या रात्रौ चैवारुणोदये । ततःप्रभृति विंध्याद्रौ स्थिता पूजा प्रवर्तिता । शस्त्रार्थमंत्रैर्होतव्यं पायसं घृतसंयुतं । मांसानि तत्र होमार्थं मेपाद्यानि च सर्वशः । अजस्त्वेकस्तु होतव्यो रक्तवर्णो विशेषतः । कृष्णवर्णश्च होतव्यो गौरस्तित्तिर एव वा । रोहितं मत्स्यमांसं च होतव्यं जयमीप्सता । इति **धौम्यवचनाच्च** । होमस्याष्टमीकृत्यत्वेनैव प्रतीतेस्तत्रैव होमः कार्यः । तदसंभवे नवम्यामित्याहुः । अन्ये तु अरुणोदये विद्यमानाष्टम्यां होममुपक्रम्य नवम्यां तत्समाप्तिः कार्या । तदसत्वे तु नवम्यामेव तदुपक्रमसमाप्ती कार्ये इत्याहुः । अत्र यथाकुलाचारं व्यवस्था । होमश्च जयंतीत्यादिमंत्रेण तिलैः कार्यः । पूजयेत्तिलहोमैश्च दधिक्षीरघृतादिभिः । इति **देवीपुराणोक्तेः** । तत्रैव जयंतीमंत्रं प्रकृत्य—अनेनैव तु मंत्रेण जपहोमादि कारयेत् ।

**डामरकल्पे** तु पक्षान्तराण्युक्तानि—चंडीसप्तशतीजाप्ये होममंत्रो नवाक्षरः । कथितः पूजनाध्याये तेन होमो भवेदिह । नमोदेव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म तां । अथवायं भवेद्धोमः श्लोकैः स्तोत्रनिरूपितैः । इति । **सप्तशतीस्थस्तवरहस्ये**—प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा । इति । अत्रापि यथाकुलाचारं व्यवस्था । पूर्वोक्तकाम्यविधिबलात् । अधिकसंख्ये जपे कृते तु दशांशेन

होमः कार्यः ।—पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितं । होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तम । इति डामरतंत्रात् । होमद्रव्यांतराण्यपि रुद्रयामले—प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा । किंशुकैः सर्षपैः पूरैर्लाजदूर्वांकुरैरपि । यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा । रक्तचंदनखंडैश्च गुग्गुलैश्च मनोहरैः । प्रतिश्लोकं च जुहुयात्सर्वद्रव्याणि च क्रमात् । इति । तत्र उपसंहारे सर्वपदश्रवणाद्वाशब्दश्चार्थे । कृतपुरश्चरणस्य होमद्रव्यविधिः ।

**अथ प्रयोगः** । कृतनित्यक्रियः देवीपूजां विधाय पवित्रपाणिः सभार्यः प्राङ्मुख उपविश्य देशकालौ संकीर्त्य दुर्गाप्रीत्यर्थं होमं करिष्ये इति संकल्पयेत् । ग्रहमखचिकीर्षायां सग्रहमखमित्यपि । कुलधर्मप्राप्तभैरवनृसिंहादिदैवत्यहोमचिकीर्षायां उक्तसंकल्पवाक्ये नृसिंहप्रीत्यर्थं होमं च तंत्रेण करिष्ये । इति संकल्पयेत् । ततस्तदंगत्वेन यथाचारं गणेशपूजनपुण्याहवाचनादि यथाकुलधर्मं कृत्वा । अस्मिन् कर्मणि आचार्यं त्वां वृणे । आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत । इत्याचार्यवरणं कुर्यात् । ब्रह्मवरणं कृताकृतं इति । ततः—अस्य यागस्य निष्पत्तौ भवंतोऽभ्यर्थिता मया । सुप्रसन्नैः प्रकर्तव्यं शांतिकं विधिपूर्वकं । इति चतुरोऽष्टौ वा ऋत्विजो वृणुयात् । ततस्तान्यथासंभवं गंधादिभिः पूजयेत् । ततः प्रतिमासु ग्रहपूजापक्षे तदग्न्युत्तारणमाचार्यर्त्विगन्यतरः कुर्यात् । तत आचार्यः शुचिः पवित्रपाणिः—यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु । अपक्रामं तु भूतानि पिशाचाः सर्वतोदिशं । सर्वेषामविरोधेन ब्रह्मकर्म समारभे । इति होमदेशे प्राच्यादिदिक्षु प्रादक्षिण्येन सर्षपान्विकीर्य । शुचीव इति ऋचा पंचगव्येन कुशैः प्रोक्ष्य । एतोन्विंद्रमिति तृचेन कुशोदकेन संप्रोक्ष्य कृताञ्जलिः प्रार्थयेत् । स्वस्त्ययनं तार्क्ष्यमिति द्वाभ्यामृग्भ्यां । ततः स्थंडिलाद्यग्निप्रतिष्ठापनांतं यजमानगृह्योक्तविधिना कुर्यात् । अग्निध्यानं च । ततस्तदैशानदिक्स्थितवेदिकायां पीठे वा वक्ष्यमाणलक्षणमंडलेषु सवित्राद्यावाहनं कुर्यात् । तद्यथा । प्रणवस्य परब्रह्मऋषिः परमा-

त्मा देवता गायत्रीछंदः व्याहृतीनां क्रमेण जमदग्निभरद्वाजभृगव ऋषयः । अग्निवायुसूर्या देवताः दैवीगायत्रीदैवीउष्णिक्दैवीबृहत्यश्छंदांसि । सूर्याद्यावाहने विनियोगः । ततः आकृष्णेन हिरण्यस्तूपः सवितात्रिष्टुप् । सूर्यावाहने विनियोगः । आकृष्णेन० ॐ भूर्भुवःस्वः कलिंगदेशोद्भव काश्यपसगोत्र सूर्येहागच्छेति ग्रहपीठमध्ये द्वादशांगुलवर्तुलमंडले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैरावाह्य इहतिष्ठेति स्थापयेत् । ततः आग्नेये चतुरस्रे विंशत्यंगुले मंडले प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतैः । आप्यायस्वगौतमः सोमो गायत्री सोमावाहने वि० । आप्यायस्व० । ॐ भूर्भुवःस्वः यमुनातीरोद्भव आत्रेयसगोत्र सोम इहागच्छेत्यादि । ततो दक्षिणे त्रिकोणत्र्यंगुले दक्षिणाभिमुखं भौमं रक्तपुष्पाक्षतैः । अग्निर्मूर्धाविरूपोंगारको गायत्री अंगारकावाहने वि० । अग्निर्मूर्धा० । ॐ भूर्भु० अवंतिदेशोद्भव भारद्वाजसगोत्र भौम इहागच्छेत्यादि । ईशान्ये वाणाकारे चतुरंगले उदङ्मुखं बुधं पीतपुष्पाक्षतैः उद्बुध्यध्वं सौम्यो बुधस्त्रिष्टुप् बुधावाहने० । ॐ उद्बुध्यध्वं० । ॐ भूर्भु० मगधदेशोद्भव आत्रेयसगोत्रबुध इहागच्छेत्यादि । उत्तरे दीर्घचतुरस्रे उदङ्मुखं बृहस्पतिं पीतपुष्पाक्षतैः बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् । बृहस्पत्यावाहने० । ॐ बृहस्पते० चित्रं । ॐ भू० सिंधुदेशोद्भव आंगिरससगोत्र बृहस्पते इहागच्छेत्यादि । ततः पूर्वे चतुरंगुले पंचकोणे शुक्लपुष्पाक्षतैः प्राङ्मुखं शुक्रं । शुक्रः पराशरः शुक्रो द्विपदा विराट् शुक्रावाहने वि० । ॐ शुक्रः शुशुक्वां० । ॐ भोजकटदेशोद्भव भार्गवसगोत्र शुक्र इहागच्छेत्यादि । पश्चिमे धनुषाकारे द्व्यंगुले प्रत्यङ्मुखं शनिं कृष्णपुष्पाक्षतैः शमग्निरिरिंविठिः शनिरुष्णिक् शन्यावाहने० । ॐ शमग्निरग्नि० । ॐ भू० सौराष्ट्रदेशोद्भव काश्यपसगोत्र शनैश्चर इहागच्छेत्यादि । एवमेव नैर्ऋत्ये शूर्पाकारे द्वादशांगुले दक्षिणाभिमुखं राहुं कृष्णपुष्पाक्षतैः कयानो वामदेवो राहुर्गायत्री राह्वावाहने० । ॐ कयान० । ॐ भू० राठिनापुरोद्भव पैठीनसगोत्र राहो इहागच्छेत्यादि । वायव्ये ध्वजाकारे षडंगुले दक्षिणाभिमुखं केतुं धूम्रपुष्पाक्षतैः । केतुं कृण्वन्मधुरुच्छंदाः केतुर्गायत्री केत्वावाहनेवि० । ॐ केतुं कृण्वन्न० । ॐ भू० अंतर्वेदिसमुद्भव

जैमिनिसगोत्र केतोइहागच्छेत्यादि । अथाधिदेवताः । त्र्यंबकंव-सिष्ठो रुद्रोनुष्टुप् । ईश्वरावाहने० । ॐ त्र्यंबकंयजामहे । ॐ भू० ईश्वरेहागच्छे० सूर्यदक्षिणपार्श्वे ईश्वरं । गौरीर्मिमायदीर्घ-तमोमाजगती उमावाह०।ॐ गौरीर्मिमाय०ॐ भू० उमेहागच्छे-ति० सोमदक्षिणपार्श्वे उमां। यदक्रंदोदीर्घतमा स्कंदस्त्रिष्टुप् स्कं-दावा०।ॐ यदक्रंद० ॐ भू० स्कंद० पूर्ववद्भौमदक्षिणपार्श्वे स्क-न्दं । विष्णोर्नुकं दीर्घतमाविष्णुस्त्रिष्टुप् । विष्ण्वा० ॐ विष्णोर्नु० वुधदक्षिणपार्श्वे विष्णुं। ब्रह्मजज्ञानं वामदेवो ब्रह्मा०। ॐ ब्रह्मज-ज्ञानं० ॐ भू० बृहस्पतिदक्षिणपार्श्वे ब्रह्माणं। इंद्रंवोमधुछंदा इंद्रो गायत्री इंद्रावाहने० शुक्रदक्षिणपार्श्वे इंद्रं । यमाय सोमं यमो-यमोनुष्टुप् । यमावाहने० ॐ यमायसोमं । ॐ भू० शनैश्चरद-क्षिणपार्श्वे यमं।मोषुणोघौरः कण्वः कालो गायत्री ॐ मोषुणःपरा० ॐ भू०राहुदक्षिणपार्श्वे कालं। उषोवाजं प्रस्कण्वश्चित्रगुप्तोवृहती चित्रगुप्तावा० ॐ उषोवाजं० ॐ भू० केतुदक्षिणपार्श्वे चित्रगुप्तं। अथ प्रत्यधिदेवताः । अग्निं दूतं काण्वोमेधातिथिरग्निर्गायत्री । अग्न्यावा० ॐ अग्निंदूतं० ॐ भू० सूर्यवामपार्श्वे अग्निं । अप्सुमे मेधातिथिरापोनुष्टुप् । अवावाहने० ॐ अप्सुमे० ॐ भू० आप इहागच्छतेहतिष्ठत इति सोमवामपार्श्वे अपः। स्योनापृथिवीमेधा-तिथिर्भूमिर्गायत्री भूम्यावा० ॐ स्योना० ॐ भू० भौमवामपार्श्वे भूमिं । इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री । विष्ण्वावा० ॐ इदं-विष्णु० ॐ भू० वुधवामपार्श्वे विष्णुं । इंद्रश्रेष्ठानि गृत्समद इं-द्रस्त्रिष्टुप् । इंद्रावा० ॐ इंद्रश्रेष्ठानि० ॐ भू० गुरुवामपार्श्वेइंद्रं । इंद्राणीं वृषाकपिरिंद्राणीपंक्तिः । इंद्राण्यावा० ॐ इंद्राणीमा० ॐ भू० शुक्रवामपार्श्वे इंद्राणीं । प्रजापते हिरण्यगर्भः प्रजापति-स्त्रिष्टुप् । प्रजा० ॐ प्रजापते० ॐ भू० शनिवामपार्श्वे प्रजापतिं। आयंगौः सार्पराज्ञी सर्पा गायत्री । सर्पावा० ॐ आयंगोः ॐ भू० सर्पाः इहागच्छत इहतिष्ठतेति राहुवामपार्श्वेसर्पान् । ब्र-ह्मजज्ञानंवामदेवो ब्रह्मात्रिष्टुप् । ब्रह्मावा० ॐ ब्रह्मजज्ञानं ॐ भू० केतुवामपार्श्वेब्रह्माणं । अथक्रतुसाद्गुण्यदेवताः। गणानांत्वा शौनकोगृत्समदोगणाधिपतिर्जगती । गणपत्या० ॐ गणानांत्वा० ॐ भू० राहोरुत्तरतो गणपतिं । जातवेदसे मारीचः कश्यपो दुर्गात्रिष्टुप् । दुर्गावाहने० ॐ जातवेदसे० ॐ भू० शनेरुत्त-

रतो दुर्गां । तववायोव्यश्वांगिरसो वायुर्गायत्री । वाय्वावा० ॐ तव वाय० ॐ भू० रवेरुत्तरतो वायुं । आदिद्वत्स आकाशो गायत्री । ॐ आदित्प्रत्न० ॐ भू० राहोर्दक्षिणे आकाशं । एषोउषाप्रस्कण्वोश्विनौ गायत्री । अश्व्यावा० ॐ एषोउषा० ॐ भू० अश्विनौ इहागच्छतं इहतिष्ठतं इति केतुदक्षिणेश्विनौ । यद्वा विनायकादीन्पंच पीठोत्तरतः स्थापयेत् । उत्तरे क्षेत्राधिपतिं । वास्तोष्पतेवसिष्ठो वास्तोष्पतिस्त्रिष्टुप् । वास्तोष्पत्यावा० ॐ वास्तोष्पते० ॐ भू० उत्तरे वास्तोष्पतिं । तत्रैव क्षेत्रस्यवामदेवः क्षेत्राधिपतिरनुष्टुप् । क्षेत्रपालावा० ॐ क्षेत्रस्यपति० ॐ भू० । ततः इंद्रादिलोकपालान्सूर्याभिमुखान्स्थापयेत् । इंद्रं विश्वामधुछंदा इंद्रोनुष्टुप् । ॐ इंद्रंविश्वा० ॐ भू० इंद्रइहागच्छेत्यादि । अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री । ॐ अग्निंदूतं० ॐ भू० । यमायसोमं यमोयमोनुष्टुप् । यमावाह० ॐ यमायसोमं० ॐ भू० । मोषुणो घौरःकण्वोनिर्ऋतिर्गायत्री । निर्ऋत्यावा० ॐ मोषुणः परा० ॐ भू० । तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् वरुणा० ॐ तत्वायामि० ॐ भू० । तववायोव्यश्वांगिरसोवायुर्गायत्री । वाय्वावा० ॐ तववाय० ॐ भू० । सोमोधेनुं गौतमः सोमः त्रिष्टुप् । सोमावा० ॐ सोमोधेनुं० ॐ भू० । तमीशानं गौतमईशानोजगती ईशानावा० ॐ तमीशानं० ॐ । तदस्तुमित्रावरुणा० गृहा वै प्रतिष्ठेति प्रतिष्ठाप्य ध्यायेत् ।

**मात्स्ये**—पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथसंयुक्तो द्विभुजः स्यात्सदा रविः । १ । श्वेतांबरधरः श्वेतः श्वेताश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी । २ । रक्तमाल्यांबरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगतो वरदः स्याद्धरासुतः ।१। पीतमाल्यांबरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः । ४ । देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दंडिनौ वरदौ कार्यौ साक्षसूत्रकमंडलू । ५ । ६ । इंद्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा । ७ । करालवदनः खड्गचर्मशूली वरप्रदः । नीलसिंहासनस्थश्च राहुरत्र प्रशस्यते । ८ । धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः । गृध्रासनगता

नित्यं केतवः स्युर्वरप्रदाः । ९ । सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः । अंगुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा । इति । नाममंत्रेण षोडशोपचारैः पूजयेत् । ततः चित्रवितानोपरि मंडितग्रहवेदीशानभागे सुलक्षणं कलशं स्थापयेत् । महीद्यौरिति भूमिं स्पृष्ट्वा । ओषधयः समिति यवान्क्षिप्त्वा । आकलशेष्विति कलशं स्थाप्य । इमंम इति जलेनापूर्य । गंधद्वारामिति गंधं क्षिप्त्वा । याओषधीरित्यौषधीः । ओषधयः समिति यवान् । कांडात्कांडादिति दूर्वाः । अश्वत्थेव इति पंचपल्लवान् । स्योनापृथिवीति सप्तमृदः । याः फलिनीरिति फलं । सहिरत्नानीति पंचरत्नानि । हिरण्यरूप इति हिरण्यं क्षिप्त्वा । युवासुवासा इति वाससावेष्ट्य । पूर्णादर्वीति पूर्णपात्रं न्यसेत् । ततस्तत्र तत्त्वायामीति वरुणं संपूज्य । ततः सर्वे समुद्रा इति तीर्थान्यावाह्य कलशाभिमंत्रणं कुर्यात् । कलशस्य मुखे विष्णुरिति । कलशप्रार्थना—देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोसि तदा कुंभ विधृतो विष्णुना स्वयं । त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः । शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठंति सर्वेपि यतः कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव । सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा । इति । तत आचार्योऽग्निसमीपमागत्य यजमानं अग्नेर्दक्षिणत उपवेश्य समिद्द्वयमादाय देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा सवितारं सोमं भौमं वुधं वृहस्पतिं शुक्रं शनैश्चरं राहुं केतुं च अमुकसंख्याकाभिः अर्कपलाशखदिरापामार्गपिप्पलोदुंबरशमीदूर्वाकुशजातीयसमिदाहुतिभिः तत्संख्याकाभिश्चर्वाहुतिभिराज्याहुतिभिश्च । जपदशांशहोमचिकीर्षायां तु एता एव देवताः प्राक्कारितजपदशांशसंख्याकाभिस्तिलाहुतिभिरिति वदेत् । ईश्वरं उमां स्कन्दं विष्णुं ब्रह्माणं इंद्रं यमं कालं चित्रगुप्तं अग्निं अपः भूमिं विष्णुं इंद्रं इंद्राणीं प्रजापतिं सर्पान् ब्रह्माणं । विनायकं दुर्गां वायुं आकाशं अश्विनौ वास्तोष्पतिं क्षेत्रपालं । इंद्रं अग्निं यमं निर्ऋतिं वरुणं वायुं सोमं ईशानं च एता देवताः प्रत्येकं अमुकसंख्या-

काभिः समिदाहुतिभिः चर्वाहुतिभिराज्याहुतिभिश्च । अमुकेति स्थाने प्रधाने या संख्योक्ता तन्न्यूनसंख्यामिह अमुकेति स्थाने वदेत् । कवचार्गलाकीलकांतर्गतमंत्रलिंगोक्ताः शैलपुत्र्यादिदेवताः तत्तन्मंत्रसमसंख्याभिः यथाचारं सर्पिस्तिलादिमिश्रपायसाहुतिभिः । महाकालीं प्रथमचरितांतर्गतमंत्रसमसंख्याकाभिः यथाचारं सर्पिस्तिलाज्यमिश्रपायसाहुतिभिः । महालक्ष्मीं द्वितीयचरितांतर्गतमंत्रसंख्याकाभिस्तादृशाहुतिभिः । महासरस्वतीं तृतीयचरितांतर्गतमंत्रसमसंख्याकाभिस्तादृशाहुतिभिः । महाकालीं महालक्ष्मीं महासरस्वतीं यथाक्रमं तत्तद्रहस्यांतर्गतमंत्रसमसंख्याकाभिस्तादृशाहुतिभिः । श्रीनृसिंहादिदैवत्यहोमचिकीर्षायां नृसिंहं तदीयसहस्रनामस्तोत्रमंत्रसमसंख्याकाभिस्तादृशाहुतिभिः इत्यादि यथासंभवं द्रष्टव्यं । शेषेण स्विष्टकृतमित्यादि प्रकृतिवत् । पात्रासादने यावंत्यः स्थाल्यः चरुपायसाद्यर्था अपेक्ष्यंते यावंतः स्रुचः आज्यस्थाल्यश्चाज्यहोमार्थमपेक्ष्यंते तावतामासादनं प्रोक्षणं च कार्यं । काले स्रुवाणां संमार्गश्च । पर्यग्निकरणकाले आज्येन सह चरुपायसप्रभृतिसकलहोमद्रव्याणां पर्यग्निकरणं कार्यं । आज्यभागांते यजमानः साक्षतजलेन त्यागं कुर्यात् । प्रतिग्रहं प्रतिद्रव्यं अष्टाविंशतिसंख्याकाहुतिपर्याप्तसमिद्द्रव्यं चरुद्रव्यं आज्यं च आदित्याय सोमाय भौमाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतुभ्यश्च नमम । संख्यांतरचिकीर्षायां अष्टाविंशतीत्यस्य स्थाने तां वदेत् । अमुकसंख्याहुतिपर्याप्तं तदेव द्रव्यत्रयं ईश्वराय उमायै स्कंदाय विष्णवे ब्रह्मणे इंद्राय यमाय कालाय चित्रगुप्ताय अग्नये अद्भ्यः भूम्यै विष्णवे इंद्राय इंद्राण्यै प्रजापतये सर्पेभ्यः ब्रह्मणे विनायकाय दुर्गायै वायवे आकाशाय अश्विभ्यां वास्तोष्पतये क्षेत्रपालाय इंद्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशानाय नमम । कवचार्गलाकीलकांतर्गतमंत्रसमसंख्याकाहुतिपर्याप्तं यथाचारं सर्पिस्तिलाज्यमिश्रपायसं तत्तन्मंत्रलिंगोक्ताभ्यः शैलपुत्र्यादिभ्यो नमम । प्रथमचरितांतर्गतमंत्रसमसंख्याहुतिपर्याप्तं यथाचारं सर्पिस्तिलाज्यादिमिश्रं पायसं महाकाल्यै नमम । एवं द्वितीयचरितांतर्गतमंत्र० महालक्ष्म्यै नमम । एवं तृतीय० महासरस्वत्यै नमम । यथाक्रमं तद्रहस्यांतर्गतमंत्रसमसंख्याहुतिपरिमितं द्रव्यं

यथाक्रमं महाकाल्यै महालक्ष्म्यै महासरस्वत्यै नमम । एवं नृसिंहादिहोमेपि बोध्यं ।

ततो होमं समाप्याग्निं संपूज्य स्विष्टकृदादि प्रायश्चित्ताहुत्यंतं हुत्वा बलिदानं कुर्यात् । तत्रादावग्न्यायतनस्य समंततः प्रागादिक्रमेण दिक्पालेभ्यो बलीन्दद्यात् । त्रातारमिंद्रं गर्गइंद्रस्त्रिष्टुप् । इंद्रप्रीत्यर्थं बलिदाने विनियोगः ॐ त्रातारमिंद्रं० । इंद्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तबलिर्नमम । भो इंद्र अमुं बलिं गृहाण दिशं रक्ष सकुटुंबस्य यजमानस्य आयुःकर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता भव इति सपुष्पाक्षतं जलं त्यजेत् । अग्रेप्येवं सर्वत्र । अग्निंदूतं काण्वोमेधातिथिरग्निर्गायत्री० अग्निंदूतं० । अग्नये सांगायेत्यादिपूर्ववत् । यमायसोमं वैवस्वतो यमोयमोनुष्टुप् । मोषुणो घौरः कण्वो निर्ऋतिर्गायत्री । तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् । तववायो व्यश्वो वायुर्गायत्री । सोमोधेनुं गौतमः सोमस्त्रिष्टुप् । तमीशानं गौतम ईशानोजगती० । अथ ग्रहबलयः । तत्र पूर्वे आकृष्णेन-हिरण्यस्तूपः सविता त्रिष्टुप् सवितृप्रीत्यर्थे० । आकृष्णेन० आदित्याय सांगायसपरिवाराय ईश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । भोसवितरिमं बलिं गृहाण मम सकुटुंबस्यायुःकर्त्ता० भवेति । ततो वेद्याग्नेये—आप्यायस्वगौतमः सोमो गायत्री सोमाय० उमाब्रूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि० । ततो दक्षिणे—अग्निर्मूर्धा विरूपोंगारको गायत्री भौमाय०स्कन्दभूमिरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततः ईशान्ये—उद्बुध्यध्वं सौम्योबुधस्त्रिष्टुप् बुधाय० नारायणविष्णुरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततः उत्तरे—बृहस्पतेगृत्समदोबृहस्पतिस्त्रिष्टुप् बृहस्पतये सांगाय ब्रह्मेंद्ररूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततः पूर्वे—शुक्रःपराशरःशुक्रोद्विपदा विराट् शुक्राय०इंद्रेंद्राणीरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततः पश्चिमे—शमग्निरिरिंबिठिः शनिरुष्णिक् शनये सांगाय यमप्रजापतिरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततो नैर्ऋत्यां कयानो वामदेवो राहुर्गायत्री राहवे सांगाय कालसर्परूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततो वायव्ये—केतुं कृण्वन्मधुच्छंदाः केतवो गायत्री केतुभ्यश्चित्रब्रह्मरूपाधिदेवता-

प्रत्यधिदेवतासहितेभ्यः० । भो केतवः इमं सदीपं माषभक्तवलिं गृह्णीध्वं मम सकुटुंबस्य आयुःकर्तारः क्षेमकर्तारः पुष्टिकर्तारस्तु० शोभवत । अथ वेद्युत्तरतो गणपत्यादिपंचकस्य । गणानांत्वा गृत्समदो गणपतिर्जगती गणपतये सांगाय सपरिवाराय ऋद्धिबुद्धिसहितायेमं वलिं०। जातवेदसे कश्यपो दुर्गात्रिष्टुप् दुर्गायै सांगायै सपरिवारायै सायुधायै सशक्तिकायै इमं माषभक्तवलिं० भो दुर्गे अमुं माषभक्तवलिं गृहाण मम सकुटुंबस्यायुःकर्त्री क्षेमकर्त्री शांतिकर्त्रीपुष्टिकर्त्री भव । वायोशतं गौतमोवामदेवो वायुरनुष्टुप् वायवे० । आदिद्वत्सआकाशो गायत्री आकाशाय० । एषोउषा प्रस्कण्वोश्विनौगायत्री । आश्विभ्यां सांगाभ्यां सपरिवाराभ्यां सायुधाभ्यां सशक्तिकाभ्यां इमं भाषभक्तवलिं० । भो अश्विनौ इमं वलिं गृह्णीतं मम आयुःकर्तारौ क्षेमकर्तारौ शांतिकर्तारौ पुष्टिकर्तारौ तुष्टिकर्तारौ भवतं । वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् वास्तोष्पतय इत्यादि० । ततः क्षेत्रपालाय कुंकुमादिरक्तं रक्तपुष्पादियुक्तं सदीपं सदक्षिणं माषभक्तवलिं दद्यात्—क्षेत्रस्य वामदेवः क्षेत्रपालोऽनुष्टुप् । क्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुतायेमं माषभक्तवलिं कुंकुमपुष्पयुतं सदीपं सतांबूलं सदक्षिणं समर्पयामि। भो क्षेत्रपाल० ततः शूद्रेण दुर्ब्राह्मणेन वा वहिर्देशं नयनं कारयेत् । नयनदेशं यथाचारमद्भिः प्रोक्षेत् । शांतापृथिवीति० । ततो हस्तौपादौ प्रक्षाल्याचामेत् । तत आचार्यः स्रुचि द्वादशगृहीतमाज्यं गृहीत्वा यथाचारं वस्त्रचंदनादिभूषितं नारिकेलादिफलं तदुपरि निधाय यजमानेन सपत्न्यन्वारब्धस्तिष्ठन्पूर्णाहुतिं जुहुयात् । समुद्रादूर्मिरिति तृचस्य गौतमो वामदेवोऽग्निस्त्रिष्टुप् । पूर्णाहुतिहोमे० । समुद्रादू० । वयं नाम० । चत्वारिशृंगा० । मूर्धानं वार्हस्पत्यो भारद्वाजोग्निस्त्रिष्टुप् । मूर्धानंदि० । पुनस्त्वादित्यारुद्रावसवोग्निस्त्रिष्टुप् । पूर्णा० । पूर्णादर्विविश्वेदेवाः शतक्रतुरनुष्टुप् । पूर्णा० । सप्तते अग्ने सप्तवानग्निर्जगती पूर्णा० । धामंते वामदेवआपोजगती पूर्णाहुतौ वि० । ऊर्मिस्वाहेति । यजमानः अग्नये वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेग्नयेऽद्भ्यश्चेति त्यजेत् । ततः पूर्णपात्रविमोकः । सक्रत्विक्साचार्यो यजमानः संस्थाजपेनोपतिष्ठेत । आचार्यः परिस्त-

रणान्यपसार्याग्न्यर्चनांतं कुर्यात् । ततो ग्रहकलशोदकेन सर्त्विक् दूर्वापल्लवहस्तस्तिष्ठन्नाचार्यः प्राङ्मुखं यजमानं वामभागासने पत्नीसहितं पुत्रादिसहितमभिषिंचेत् । समुद्रज्येष्ठाइति चतसृणां वसिष्ठ आपस्त्रिष्टुप् । त्रायंतामिति तिसृणां सप्तर्षय आपोनुष्टुप् । अभिषेकेवि० । सुरास्त्वामभिषिंचंत्वित्यादि पौराणमंत्रैश्चाभिषेकं कुर्यात् । अभिषेकांते सुस्नातौ दंपती श्वेतानि वासोगंधमाल्यानि धृत्वाऽग्नेः पश्चादुपविशतः पत्नी दक्षिणतो यजमानो मानस्तोकइति विभूतिं धृत्वा आचार्यादीन्गंधपुष्पादिभिः संपूज्य । आचार्याय धेनुं ऋत्विग्भ्यो हिरण्यं अन्येभ्यश्च ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्त्वा स्थापिताग्न्यादिदेवताः पंचोपचारैः संपूज्य । उत्तिष्ठब्रह्मण० । यांतुदेवगणा इति विसृज्य । प्रतिमाः सोपस्करा आचार्याय समर्प्य । गच्छ गच्छ सुरश्रेष्ठेत्यग्निं विसृज्य । दशावरब्राह्मणभोजनं कृत्वा विष्णुं स्मृत्वेश्वरार्पणं कुर्यात् । इति होमः ॥ ॥ प्रात्यहिकं कुमारीपूजनादि कृत्वा पूजोपदेष्ट्रे वस्त्रयुग्मं यथाशक्ति दक्षिणां च दद्यात् ।—नवम्यां पूर्ववत्पूजा कर्तव्या भूतिमिच्छता । दक्षिणां वस्त्रयुग्मं च आचार्याय निवेदयेत् । इति **मात्स्यसूक्तात्** ।

**अथ विसर्जनकालः** । तच्च दशम्यां कार्यं ।—निहते रावणे वीरे नवम्यां सकलैः सुरैः । विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः । ततः संप्रोषिता देवी दशम्यां शारदोत्सवैः । इति **कालिकापुराणात्** उदाहृतभविष्यवचनाच्च । **रुद्रयामले**—दशम्यामभिषेकं च कृत्वा मूर्तिं विसर्जयेत् । इत्युक्तेः। अत्र विशेषो **धवलनिबंधे**—अंत्यपादो दिवा भागे श्रवणस्य यदा भवेत् । संप्रेषणं तदा देव्या दशम्यां तु पुनर्दिवा । इति । दिनद्वये दशमीसत्वे पूर्वदशम्यां श्रवणांत्यभागयोगे तत्रैव विसर्जनं कार्यं । तत्र तद्योगाभावे तु परदशम्यामेव तत् । परदिने दशम्यभावे तु पूर्वदशम्यां नक्षत्रयोगे सति असति वा कार्यं। पूर्वदिने नक्षत्रयोगानुरोधेन क्रियमाणविसर्जनेन पूर्वाह्णादपर इत्याशयेनोक्तं **राजमार्तंडे**—निर्माल्यं तु श्रवणदशमी वासरांते तु जह्वा इति श्रवणदशमीभ्यां युक्ते दिनांते निर्माल्यत्यागेन देवीविसर्जनमुपलक्ष्यते । दिनद्वयेपि नक्षत्रयोगसत्वा-

सत्वयोस्तु नक्षत्रयोगप्राशस्त्यं प्रातःकालप्राशस्त्यं चाभिप्रेत्योक्तं रूपनारायणीये । दशम्यां प्रातःसंप्रेषयेदिति ।

अथ विसर्जनं । देवीं पूर्ववत्संपूज्य प्रणम्य कृतांजलिः देवीमीक्षमाणस्तदग्रतस्तिष्ठन्स्तुवीत ।—दुर्गां शिवां शांतिकरीं ब्रह्माणीं ब्रह्मणः प्रियां । सर्वलोकप्रणेत्रीं च प्रणमामि सदाशिवां । मंगलां शोभनां शुद्धां निष्कलां परमां कलां । विश्वेश्वरीं विश्वमातां चंडिकां प्रणमाम्यहं । सर्वारोग्यमयीं देवीं सर्वरोगभयापहां । ब्रह्मेशविष्णुसहितां प्रणमामि सदा उमां । विंध्यस्थां विंध्यनिलयां दिव्यस्थाननिवासिनीं । योगिनीं योगमातां च चंडिकां प्रणमाम्यहं । ईशानमातरं देवीमीश्वरीमीश्वरप्रियां । प्रणतोस्मि सदा दुर्गां संसारार्णवतारिणीं । इत्यादिस्तोत्रैः स्तुत्वा महिषघ्नीत्याद्युक्तश्लोकचतुष्टयेन प्रार्थ्य—विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितं । पूर्णं भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि । मातः क्षमस्वेत्युक्त्वा । ॐ दुर्गायैनमः इत्यैशान्यामेकपुष्पनिक्षेपेण विसर्जयेत् । ततो मृदादिप्रतिमासत्वे स्रोतसि तत्प्रवाहणं । कलशमुत्थापयेत् । तत्रमंत्रः—उत्तिष्ठ देवि चंडेशि शुभां पूजां प्रगृह्यच । कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह । गच्छ गच्छ परं स्थानं स्वस्थाने देवि चंडिके । व्रज स्रोतोजले वृद्ध्यै तिष्ठ गेहे च भूतये । इति । अथ गीतवाद्यमंत्रघोषैः स्रोतोजलं नीत्वा स्रोतसि प्रवाहयेत् । तत्रमंत्रः—दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिते । संवत्सरे व्यतीते तु पुनरागमनाय वै । इमां पूजां मया देवि यथाशक्ति निवेदिताम् । रक्षणार्थं समादाय व्रज स्थानमनुत्तमं । इति । ततो गृहमागत्य हस्तौ पादौ प्रक्षाल्य आचम्य पूजास्थाने सपरिवारो यजमानः समुपविशेत् । तं ब्राह्मणाः स्थापितकलशोदकेन पूर्वोक्तमंत्रैरभिषिंचेयुः । दुर्गापूजाप्रतिष्ठासिद्ध्यर्थं यथाशक्ति दक्षिणां दत्त्वा ब्राह्मणान्भोजयित्वा बंधुभिः सह भुंजीत । यद्दिने विसर्जनं तत्रैव नियमत्यागस्योचितत्वात् विसर्जनोत्तरं तद्दिन एव पारणं कार्यं । प्रतिपदादिपूर्णांतं वृद्धिभेदेन पूजयेत् । इति धौम्यवचसि पूर्णापदवाच्यायां दशम्यां पूजारूपव्रतांते श्रवणात् व्रतांते पारणौचित्यादिति । अन्येतु सत्यपि दशम्यां विसर्जनविधौ नवम्यामेव पारणं कार्यं—आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः ।

नवम्यां पारणं कुर्याद्दशमीसहिता न चेत् । इति ब्रह्मांडपुराणात् । रुद्रयामलेपि—नवम्यां पारिता देवी कुलवृद्धिं प्रयच्छति । दशम्यां पारिता देवी कुलनाशं करोति हि । इति ।—तस्मात्तु पारणं कार्यं नवम्यां विबुधाधिप । इति नवमीप्रशंसादशमीनिंदापूर्वकं नवम्यां पारणाविधिश्रवणाच्च । तत्रैव—त्रिकालं पूजनं कुर्यात्प्रत्यहं भक्तितत्परः । अष्टम्यां जागरं चैव महापूजनपूर्वकं । होमं कुर्यान्महारात्रे बलिदानं च माधव । प्रातर्वै पारयेद्देवीं ब्राह्मणान्भोजयेत्तथा । कुमारीणां पंचकं च संभोज्य विविधान्नकैः । स्वयं च पारणं कुर्याद्रात्रौ जागरणं तथा । दशम्यामभिषेकं च कृत्वा मूर्तिं विसर्जयेत् । इति । अष्टमीदशमीमध्यमदिने पारणाप्रतीतेश्च । नचैवं—शुक्लप्रतिपदारभ्य यावत्स्यान्नवमीतिथिः । इति वचःसु व्रतस्य नवमीपर्यंतत्वप्रतीतिर्विरुध्येतेति वाच्यं । पारणारूपांगस्य व्रतप्रयोगाबहिर्भावेन चरमांगत्वेन च व्रते नवमीपर्यंतताया: सुनिर्वाहात् । वस्तुतस्तु पूजाया एव व्रतत्वेन तस्याश्च प्रधानभूताया नवम्यामपि सत्वेन फलिसंस्कारोपवासाभावेपि नवमीपर्यंतत्वाक्षतिरित्याहुः । अत्रैवं व्यवस्थापि । प्रथमदिने स्वल्पाष्टमीयुक्ता नवमी द्वितीयदिने पारणापर्याप्तनवमीयुक्ता दशमी तद्द्वितीयदिने च पूर्वोक्तविसर्जनार्हतापादकनक्षत्रयोगवती दशमी तदोक्तनिर्णयानुसारेण अष्टमीनवम्युपवासयोः पूर्वदिने सिद्धत्वादवशिष्टनवम्यां पारणं निर्विवादं । संगच्छंते च तदभिप्रायेण नवमीविधयो दशमीनिषेधा अष्टमीदशमीमध्यदिनपारणाकर्तव्यतावेदकवचांसि च । संगच्छते च दशमीमिश्रितनवमीनिषेधोप्यत्रैव नवम्यां भोजनसमास्त्यभिप्रायेण । यदातु अवशिष्टनवमीदिनएव दशमीनक्षत्रयोगादिना विसर्जनार्हता तदापि विसर्जनोत्तरं पारणमिति निर्विवादं । यदा तु पूर्वदिने सप्तमीवेधरहिता षष्टिदंडात्मिका अष्टमी परदिने अष्टमीशेषसंयुक्ता नवमी तद्द्वितीयदिने नवमीशेषसंयुक्ता शुद्धा वा दशमी तदा परदिने दशम्याः सत्वेपि नवमीयुक्तदशम्यामेव विसर्जनपारणे विधेये । नवमीपूजायाः संधिपूजायाश्च पूर्वदिन एव परसिद्धत्वात् । यदातु प्रथमदिने अष्टमी द्वितीयसूर्योदयात्पूर्वं मुहूर्तद्वयादिपरिमाणा स्वल्पा वा परदिने च नवमी षष्टिदंडात्मिका त-

द्वितीयदिने नवमीशेषसंयुक्ता दशमी तत्रापि तत्परदिने दशमीसत्त्वेपि नवमीयुक्तदशम्यामेव विसर्जनपारणे । उक्तहेतोः तिथिमूलस्य कृत्यानर्हत्वाच्च । यदा तु तिस्रोपि तिथयस्तत्तद्दिने तत्तत्कृत्यार्हाः तत्र पूर्वोदाहृतवचनद्वैधाद्दाक्षिणात्यानां नवम्यामेव पारणाचारदर्शनात्प्राच्यानां तु दशम्यामेव तद्दर्शनात् सांवत्सरिके पार्वणैकोद्दिष्टविधिविरोधे विज्ञानेश्वरोक्तव्यवस्थावदिहापि यथाचारमेव व्यवस्थोचिता । इति पारणानिर्णयः ।

अथ सूतके स्त्रीकर्तृकपारणायां च विशेषः । पारणाहे द्विविधसूतकप्राप्तौ तु ब्राह्मणद्वारा नवम्यामेव होमं कारयित्वा पारणं कार्यं । सूतकांते ब्राह्मणभोजनंच कार्यं । सूतके पारणं कुर्यान्नवम्यां होमपूर्वकं । तदंते भोजयेद्विप्रान्दानं दद्याच्च शक्तितः । इति **रुद्रयामलोक्तेः** ।—काम्योपवासे प्रक्रांते त्वंतरा मृतसूतके । तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितं । इति **माधवो**दाहृतकौर्मवचनाच्च । अर्चनं स्वयं न कार्यमित्याशयकमेतत् । नित्यपूजनस्य ब्राह्मणद्वारा अवश्यकर्तव्यत्वात् । एवं रजस्वलयापि काले पारणं कृत्वा शुद्ध्युत्तरं दानादि कार्यं ।—प्रारब्धदीर्घतपसि नारीणां यद्रजो भवेत् । न तत्रापि व्रतस्य स्यादुपरोधः कदाचन । इति **माधवीये सत्यव्रतोक्तेः** । यत्तु—नियमस्था यदा नारी प्रपश्येदंतरा रजः । उपोष्यैव तु ता रात्रीः स्नात्वा शेषं चरेद्व्रतं । इति । तत्रोपोष्यैवेति षड्विंशतिरित्येव ब्रूयादितिवदेवकारोपनिबंधेनानुवादप्राप्त्यपेक्षः सन्विधवाविषयः । अतः स्नात्वेत्यादिविधिरपि तद्विषय एव । न च पूर्ववाक्ये दीर्घतपोग्रहणाददीर्घतपोरूपैकाहोपवासविषयमेतदित्युक्तं । नक्ताद्यपेक्षयैकाहोपवासस्यापि दीर्घत्वात् । इति **पारणानिर्णयः** ।

अथ नवरात्रे **शतचंड्यादि**विधानेन देव्या आराधनं चिकीर्षुं प्रति तद्विधानं प्रदर्शयामः । **रुद्रयामले**—शतचंडीविधानं तु प्रोच्यमानं शृणुष्व तत् । सर्वोपद्रवनाशार्थं शतचंडीं समारभेत् । षोडशस्तंभसंयुक्तं मंडपं पल्लवोज्ज्वलं । चतुःकोणयुतां वेदीं मध्ये कुर्याद्विधानतः । पक्वेष्टकाचितां रम्यामुच्छ्राये हस्तसंमितां । पंचवर्णरजोभिश्च कुर्यान्मंडलकं शुभं । पंचवर्णवितानंच किंकिणीजालमंडितं । आचार्येण समं विप्रान्वरयेद्दश सुव्रतान् । ईशान्यां स्थापयेत्कुंभं पूर्वोक्तविधिना हरे । वारुण्यां च

प्रकर्तव्यं कुंडं लक्षणलक्षितं। मूर्तिं देव्याः प्रकुर्वीत सुवर्णस्य पलेन वै। तदर्धेन तदर्धेन तदर्धेन महामते। अष्टादशभुजां देवीं कुर्याद्वाष्टकरामपि। पट्टकूलयुगच्छन्नां वेदिमध्ये निधापयेत्। देवीं संपूज्य विधिवज्जपं कुर्युर्दश द्विजाः। दशावरा इत्यर्थः। दशमादौ शतं चांते जपेन्मंत्रं नवार्णकं। चंडीसप्तशतीमध्ये संपुटोयमुदाहृतः। एकं द्वे त्रीणि चत्वारि जपेद्दिनचतुष्टयं। रूपाणि क्रमशस्तद्वत्पूजनादिकमाचरेत्। पंचमे दिवसे प्रातर्होमं कुर्याद्विधानतः। शुद्धं च पायसं दूर्वायवान्शुक्लतिलानपि। चंडीपाठस्य होमं तु प्रतिश्लोकं दशांशतः। होमं कुर्याद्ग्रहादिभ्यः समिदाज्यचरून्क्रमात्। हुत्वा पूर्णाहुतिं दद्याद्विप्रेभ्यो दक्षिणां क्रमात्। कपिलां गां नीलमणिं श्वेताश्वं छत्रचामरे। अभिषेकं ततः कुर्युर्यजमानस्य ऋत्विजः। एवं कृतेमरेशान सर्वसिद्धिः प्रजायते। इति रुद्रयामलोक्तं शतचंडीविधानं।

डामरकल्पे—शतचंडीविधानं हि यथावत्कथयाम्यहं। सुघोरायामनावृष्ट्यां भूकंपे च सुदारुणे। परचक्रभये तीव्रे क्षयरोग उपस्थिते। राजवादादिकार्येषु आपत्सु सुतजन्मनि। महोपघातनाशाय पंचविंशतियोजने। देशे सर्वत्र शांत्यर्थं शतचंडीमिमां जपेत्। शिवाभ्याशे शुभे देशे चतुर्द्वारं सुतोरणं। पताकालंकृतं कुर्यान्मंडपं वेदिभूषितं। तत्र कुंडं प्रकर्तव्यमुक्तलक्षणसंयुतं। सदाचाराः कुलीना ये ह्रीमंतः सत्यवादिनः। चंडिकापाठसंपूर्णा दयावंतो जितेंद्रियाः। ईदृग्लक्षणसंयुक्ता दंभमोहविवर्जिताः। दश विप्रान्समभ्यर्च्य महालक्ष्मीस्वरूपिणः। मधुपर्कविधानेन यथावत्तद्वदाम्यहं। श्रीपर्णीवृक्षपीठानि हस्तमात्राणि मानतः। अष्टांगुलसमुच्छ्रायसहितानि समानि च। स्रुवः स्रुचा समायुक्तः खादिरो लक्षणान्वितः। सप्तविंशतिदर्भाणां विष्टरो ग्रंथिभूषितः। विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्तितं। सुखोष्णोदकसंयुक्ताः पाद्यार्थे ताम्रभांडिकाः। शंखाश्चार्घ्यप्रदानाय गंधपुष्पफलान्विताः। दूर्वोदकसमायुक्ताः स्थापनीयाः पृथक्पृथक्। ताम्रपात्राणि च तथा जलपूर्णानि सर्वशः। आचमनीयार्थानीमानि। मधुपर्काय कांस्यादि दधिमध्वाज्यपूरितं। महार्हाणि च वस्त्राणि मुद्रिका भूषणानि च। मयूरपत्र-

छत्राणि सोष्णीषाणि समाहरेत् । पादुका आहरेत्तत्र ताम्रभूषणभूषिताः । अन्यत्स्मार्तं तदप्युक्तं मधुपर्कस्य पूजने । शतचंडीमखे कृत्वा प्रयत्नेन समाहरेत् । स्मार्तेन विधिना सर्वं मधुपर्केण पूजनं । कृत्वा फलमवाप्नोति महायज्ञार्हणोपमं । अन्येभ्यो मधुपर्कस्य विप्रेभ्यो यत्प्रपूजनं । तस्माद्द्विगुणितं दद्यादाचार्याय तु पूजनं । अर्चितास्ते द्विजश्रेष्ठाः संतुष्टाः पूर्णमानसाः । यजमानं सपत्नीकं सुतबंधुसमन्वितं । उपवेश्यासने पुण्यैः कुशाग्रैरुपभूषिते । वेदमंत्राक्षरैः पूर्णं कुर्युस्ते स्वस्तिवाचनं । कृतस्वस्त्ययनो विप्रैर्वेदवादित्रनिःस्वनैः । चंडिकामंडपं यायात्परिवारविभूषितः । पश्चिमद्वारमार्गेण प्रविश्य क्रतुमंडपं । ददाति पूजनेऽनुज्ञां देशिकस्य कृतांजलिः । देशिक आचार्यः । देशिकः सर्वमंत्रज्ञो नवभिर्ब्राह्मणैः सह । नवग्रहांश्च दिग्देवीर्लोकपालसमन्वितान् । दिशापालांश्च संपूज्य कलशं स्थाप्य पूज्य च । मंडपस्य चतुर्दिक्षु दत्त्वा भूतबलिं वहिः । मंडपे कलशौ द्वौ द्वौ द्वारि द्वारि निवेशयेत् । गंगादितोयसंपूर्णौ चाम्रपल्लवशोभितौ । उपस्पृश्योदकं ध्यात्वा चंडिकां देववंदितां । उपविश्यासने वेद्यां वद्ध्वा पद्मासनं दृढं । प्राणायामविशुद्धात्मा देशिकः शुभलक्षणः । चंडिकापूजनं कुर्याद्विशेषेण समन्वितं । कस्तूरीकुंकुमोपेतं सकर्पूरं सचंदनं । पलद्वययुतं सर्वमनुलेपनमाहरेत् । दिव्यवस्त्रमलंकारं हेमगद्याणकत्रयं । लक्षपुष्पचतुर्थांशं गुग्गुलं च पलद्वयं । दीपानां विंशतिश्चाष्टौ मंडपे जपसाधनं । कुडवौ द्वौ हविष्यान्नं नैवेद्यं सरसं शुचि । तांवूलानां सकर्पूरं शतद्वयमनुत्तमं । नवचंडीविधानोक्तं महालक्ष्मीप्रपूजनं । नवभिर्ब्राह्मणैः सार्धं कृत्वाचार्यो द्विजोत्तमः । ददाति नवविप्रेभ्य आचार्यश्चंडिकामयः । कार्यं जप्य प्रसिध्यर्थमनुज्ञां मानपूर्वकं । ततोऽनुज्ञामनुप्राप्य वेद्यामाचार्यसन्निधौ । मृद्वासनेषु संतुष्टा उपविष्टाः सुनिश्चलाः । न्यासध्यानसमायुक्ता नासाग्रस्यावलोकिनः । सुगंधिपुष्पमालाढ्याश्चंडिकाचरितत्रयं । सरहस्यमृषिच्छंदोदेवताशक्तिसंयुतं । वीजतत्त्वसमोपेतमुपांशुगणसंयुतं । जपेयू रूपमेकैकं मौनिनस्त्यक्तमत्सराः । समुत्थाय ततः कुर्युरेकैकं ते प्रदक्षिणं । चंडिकां तु नमस्कारैः परितोष्य पुनः पुनः । उपविश्यासनेषूक्तैः श्लोकैः सर्वार्थसाधनैः ।

प्रार्थयेयुः प्रार्थ्यफलं महालक्ष्मीं दृढव्रताः । कुमार्यो दशसंख्याता भोज्या विप्रा दशोत्तमाः । महाकालीमहालक्ष्मीसरस्वत्या जपं जपन् । भोजयेत्परया भक्त्या देशिकादि दश द्विजान् । ततो बंधुसमायुक्तो भुंजीयाद्यज्ञकृत्पुमान् । सत्कथाभिः सुगीतैश्च सर्ववादित्रनिःस्वनैः । पूजनैः प्रेक्षणैश्चैव[1] वेदपाठैर्निशां नयेत् । द्वितीये दिवसे स्नात्वा विधिवत्ते द्विजा दश । चंडिकातर्पणं कुर्युः संपूर्णं ध्यानपूर्वकं । सर्वं पृथक्पृथक्कृत्वा दिग्देवीपूजनादिकं । बहिर्भूतबलिं दत्त्वा कृत्वा देव्याः प्रदक्षिणं । पुष्पागारे महारम्ये स्वस्वमासनमास्थिताः । जयंती जय चंडीति यावद्दुर्गाप्रपूजनं । पूर्वस्मात्पूजनात्कुर्याद्द्विगुणं पूजनं क्रमात् । आचार्यः सुस्थितः शांतश्चंडिकायाश्च तोषणं । कृते तु पूजने विप्रा जपेयुर्द्विगुणं जपं । द्विगुणं तु प्रकर्तव्यं कुमारीद्विजपूजनं[2] । कार्यश्च जागरो रात्रौ युक्तैः सर्वैर्महोत्सवैः । चंडिकापूजनं जाप्यं कुमारीद्विजभोजनं । तृतीयेऽहनि कर्तव्यं त्रिगुणं च सजागरं । चतुर्थे दिवसे सर्वं सम्यक्कार्यं चतुर्गुणं । महाजागरणोपेतं होमः स्यात्पंचमेऽहनि । पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितं । जुहुयादुक्तविधिना दशांशेन नृपोत्तम । रुद्राध्याये तथा होमो मंत्रेणैकेन साध्यते । चंडीसप्तशतीजाप्ये होममंत्रो नवाक्षरः । कथितः पूजनाध्याये तेन होमो भवेदिह नमोदेव्यै० स्मृतां । अथवायं भवेद्धोमः श्लोकैः स्तोत्रनिरूपितैः । अथवेत्यस्य मध्यमणिन्यायेनान्वयः । जपहोमे सुसं॰ दिग्देवीनां शतं शतं । होतव्यं नाममंत्रैश्च हविषुक्ता सादरं । शतं शतं क्रमाद्देयमाज्यं चरुसमित्तिलाः ।स्वरूवैदिकैर्मंत्रैः फलं पुष्पं शतं शतं । लोकपालान्दिक्षुपीठानि सर्पिःसमित्तिलान् । आचार्यादिद्विजाः सर्वे जुह्वाने समानि होमे संपूर्णतां प्राप्ते नमस्कृत्वेष्टदेवतां । चंडिक । सप्तविंशषीणां वंदितां परां । स्तंभद्वये स्रुवं कृत्वा यजमाल्लक्षणं परिघृतकुंभदशांशेन दद्यात्पूर्णाहुतिं स्वयं । मूर्धानंमा: । शंखाक्षरमयेन च । प्राशनं मार्जनं चाद्यं नवदुर्गाविरक्ताः स्थापहुतं समावेद्य चंडिकायै मनोरथान् । ब्रह्मणो ंर्वशः । दद्याद्गोमिथुनद्वयं । यस्याः प्रभावमतुलं श्लोकमुक्त्वा कृज्यपूएपत्र-

१ प्रोक्षणैश्चैव. २ भोजन.

दद्याद्गोमिथुनान्यष्टावाचार्याय च भक्तिमान्। चतुर्विंशतिसंख्याकैर्हेमगद्याणकैः सह। एकैकमत्र विप्रेभ्यो दद्याद्गोमिथुनं समं। निष्कत्रयसमायुक्तं वस्त्रालंकारभूषितं। सुस्थितं स्वासने शान्तं यजमानं महोत्सवं। कुंकुमाक्ताक्षता दूर्वाः सुगंधं चंदनं दधि। आदायादाय ते विप्रा आचार्यश्च सुपूजितः। स्तोत्राणां च चतुर्णां तु महालक्ष्मीपरायणाः। एकैकं श्लोकमुच्चार्य दद्युराशिषमुत्तमं। सभार्यः ससुतः पूर्णो लब्ध्वाशीर्वादमंगलं। रत्नपुष्पांजलिं दद्याच्चंडिकायै विसर्जनं। भूरिदानं ततो दद्यात्पुण्यवादित्रनिःस्वनैः। प्रविशेच्छांतिपाठैश्च तोरणाढ्यं स्वमालयं। शतचंडीविधानस्य कृतेन सुकृतेन हि। महालक्ष्मीस्तदा तस्मै त्रैलोक्यसुखमुत्तमं। प्रयच्छतीत्यग्रिमश्लोकगतक्रियाया अत्रानुषंगः। यद्यत्कार्यं समुद्दिश्य क्रियते शतचंडिका। तच्च तस्य महालक्ष्मीः सत्यमाशु प्रयच्छति। इति डामरोक्तशतचंडीविधिः।

**सहस्रचंडीविधिः रुद्रयामले**—सहस्रचंडीं विधिवच्छृणु विष्णो महामते। राज्यभ्रंशादिप्रकृत्य। इत्यादिविविधे दुःखे क्षयरोगादिजे भये। सहस्रचंडी कार्या तु कुर्याद्वा कारयेत्तथा। जापकास्तु शतं प्रोक्ता विंशद्धस्तश्च मंडपः। भोज्याः सहस्रं विप्रेंद्राः शतं गावश्च दक्षिणा। गुरवे द्विगुणं देयं शय्यादानं तथैव च। सप्तधान्यं च भूदानं श्वेताश्वं च मनोहरं। पंचनिष्कमिता मूर्तिः कर्तव्या परिमाणतः। अष्टादशभुजा देवी सर्वायुधविभूषिता। अवारितान्नं दातव्यं सहस्रं प्रत्यहं विभो। शतं वा नियताहारः पयःपानेन वर्तयेत्। एवं यश्चंडिकापाठं सहस्रं तु समाचरेत्। तस्य स्यात्कार्यसिद्धिस्तु नात्र कार्या विचारणा। इति।

अत्रैव नवरात्रे नृपंप्रति विहितं **लोहाभिसारिकं कर्म निर्णयामृते भविष्योत्तरे**—जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात्। लोहाभिसारिकं कर्म कारयेद्यावदष्टमी। प्रागुदक्प्रवणे देशे पताकाभिरलंकृतं। मंडपं कारयेद्दिव्यं नवसप्तकरं वरं। षोडशहस्तप्रमाणमित्यर्थः। आग्नेय्यां कारयेत्कुंडमिषुमात्रं सुशोभनं। मेखलात्रयसंयुक्तं योन्याश्वत्थदलाभया। राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च। आनीय मंडपे

तानि मंत्रैरेवाधिवासयेत्। ततस्तु ब्राह्मणः शान्तः शुक्लांबरधरः शुचिः। ॐकारपूर्वकैर्मंत्रैस्तल्लिंगैर्जुहुयाद्धृतं। लोहनामाभवत्पूर्वं दानवः सुमहाबलः। स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः। तदंगसंभवं सर्वं लोहं यद्दृश्यते क्षितौ। तस्याभिसारणाद्राज्ञो विजयः समुदाहृतः। शस्त्रास्त्रमंत्रैर्होतव्यं पायसं घृतसंयुतं। हुतशेषं तुरंगाणां राजान्नमुपहारयेत्। लोहाभिसारिकं कर्म तेनैतदृषिभिः स्मृतं। धृतपल्ययनानश्वान्गजांश्च समलंकृतान्। भ्रामयेन्नगरे नित्यं नंदिघोषपुरस्कृतान्[1]। प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः। पूजयेद्राजचिह्नानि फलमाल्यविलेपनैः। पूजामंत्रान्प्रवक्ष्यामि पुराणोक्तानहं तव। यैः पूजिताः प्रयच्छंति कीर्तिमायुर्यशो बलं। इति। तत्र—यथांबुदाश्छादयंति शिवायेमां वसुंधरां। तथा छादय राजानं विजयारोग्यवृद्धये। इति छत्रं पूजयेत्। शशांककरसंकाश क्षीरडिंडीरपांडुर। प्रोत्सारयाशु दुरितं चामरामरदुर्लभ। इति चामरं। गंधर्वकुलजातस्त्वं मा भूयाः कुलदूषकः। ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च। प्रभावाच्च हुताशस्य वर्धय त्वं तुरंगमान्। तेजसा चैव सूर्यस्य मुनीनां तपसा तथा। रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च। स्मर त्वं राजपुत्रोऽसि कौस्तुभं च मणिं स्मर। सुरासुरैर्मथ्यमानक्षीरोदादमृतादिभिः। जात उच्चैःश्रवाः पूर्वं तेन जातोऽसि तत्स्मर। यां गतिं ब्रह्महा गच्छेन्मातृहा पितृहा तथा। भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः। सूर्याचंद्रमसौ वायुर्यावत्पश्यंति दुष्कृतं। तां गतिं व्रजसि क्षिप्रं तच्च पापं भवेत्तव। निष्कृतिं[2] यदि गच्छेथा युद्धेऽध्वनि तुरंगम। रिपून्विजित्य समरे सहभर्त्रा सुखी भव। इति अश्वं।— शक्रकेतो महावीर्य श्यामवर्णार्चयाम्यहं। पत्त्रिराज नमस्तेस्तु तथा नारायणध्वज। गरुत्मान्मारुतगतिस्त्वयि संनिहितो यतः। धारयंत्यायुधान्यत्र रक्ष त्वं च रिपून्दह। इति ध्वजं।—यथा हिरण्यकशिपोर्युद्धे देवासुरास्तथा। कालनेमिवधे यद्वा यद्वा त्रिपुरघातने। शोभितस्तु तथैवाद्य शोभयास्मान्स्वशोभया। पूतना रेवती नाम्ना कालरात्रिस्तु या स्मृता। दहस्वाशु रिपून्सर्वान्पताके त्वं मयार्चिता। इति

१ पुरःसरान्। २ विकृतिं।

पताकां ।— कुमदौ वारणौ पद्मपुष्पदंतौ च वामनः । सुप्रतीकोंऽजनो नील एतेष्टौ देवयोनयः । तेषां पुत्राश्च पौत्राश्च वन्यावष्टौ समाश्रिताः । मदो भद्रो गजश्चैव राजसंकीर्ण एव च । वनेवने प्रसूतास्ते यूथानि सुमहांति च । पांतु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः । भर्तारं रक्ष नागेंद्र स्वामी च प्रतिपाल्यतां । अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज । इति हस्तिनं । असिर्विषमनाः खड्गः स्तीक्ष्णधारो दुरासदः । श्रीगर्भो विजयश्चैव धर्माधारस्तथैव च । इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा । हिरण्यं च शरीरं ते धाता देवो जनार्दनः । पिता माता महादेवस्तस्मात्पालय[1] सर्वदा । इति खड्गं । सर्वायुधमहामात्र सर्वदेवारिसूदन । चाप मां सर्वदा रक्ष साकं सायकसत्तमैः । धृतं कृष्णेन रक्षार्थं संहारार्थं हरेण च । त्रयीमूर्तिगतं देव धनुरस्त्रं नमाम्यहं । इति चापं ।— सर्वायुधानां प्रथमं निर्मितासि पिनाकिना । शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभं । चंडिकायै प्रदत्तासि सर्वदुष्टनिवर्हिणी । तथा विस्तारिता चासि देवानां प्रतिपादिता । सर्वसत्वांगभूतासि सर्वाशुभनिवारिणी । छुरिके रक्ष मां नित्यं शांतिं यच्छ नमोस्तु ते । इति छुरिकां ।— रक्षांगानि गजान्रक्ष रक्ष वाजिधनानि च । मम देहं सदा रक्ष कट्टारक नमोस्तुते । इति कट्टारकं ।—प्रास ज्ञापय शत्रूंस्त्वमनया लोकमायया । गृहाण जीवितं तेषां मम सैन्यं च रक्षय । इति कुंतं ।— शर्मप्रदस्त्वं समरे वर्म सैन्ये यशोद्यमे । रक्ष मां रक्षणीयोऽहं तापनेय[2] नमोस्तुते । इति वर्म ।— प्रोत्सारणाय दुष्टानां साधुसंरक्षणाय च । ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये । यशो देहि सुखं देहि जयदो भव भूपतेः । ताडयस्व रिपून्सर्वान्हेमदंड नमोस्तुते । इति कनकदंडं ।— दुंदुभे त्वं सपत्नानां घोषाद्धृदयकंपन । भव भूमिपसैन्यानां तथा विजयवर्धनः । यथा जीमूतघोषेण प्रहर्षंति च बर्हिणः । तथास्तु तव शब्देन हर्षोऽस्माकं मुदावहः । इति दुंदुभिं ।— पुण्यस्त्वं पुण्यशंखानां मंगलानां च मंगलं । विष्णुना विधृतोऽसि त्वमतः शांतिप्रदो भव । इति शंखं ।— विजयो

१ तापय । २ नित्यमतः ।

जयदो जेता रिपुघाती शुभंकरः । दुःखहा धर्मदः शांतः सर्वारिष्टविनाशनः । एतेष्टौ संनिधौ यस्मात्तव सिंहा महाबलाः । तेन सिंहासनेति त्वं मंत्रैर्वेदैश्च गीयसे । नमस्ते सर्वतोभद्र भद्रदो भव भूपतेः । त्रैलोक्यजयसर्वस्व सिंहासन नमोस्तु ते । इति **सिंहासनं** ।— तथैव कर्मचिह्नानि स्वानि पूज्यानि शिल्पिभिः । लोहाभिसारिकं कर्म कृत्वैवं मंत्रपूर्वकं । यमं कृत्वा तथाष्टम्यां पूर्वाह्णे स्नानमाचरेत् । यमं नियमं । कुंकुमपंकसदनैश्चतुरस्त्रैः शैलपिष्टैश्च । चर्चितगात्रां देवीं कुसुमैरभ्यर्चयेद्बहुभिः । कुमुदैः सपद्मकुसुमैः सधूपदीपैः सनैवेद्यैः । मांसैर्बल्युपहारैर्मांगल्यशब्दसमुच्छलितैः । चिह्नितछत्रैर्यानैः स्यंदनसितशस्त्रधारिजनलोकैः । तुष्टैरश्वास्त्रादि च निवेद्यते सर्वमेव भगवत्यै । कुंकुमपंकादीनां योग्यतया देव्यर्चने विनियोगो बोध्यः । पूजामंत्रास्तु—जयंती मंगला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते । बिल्वपत्रमंत्रस्तु—अमृतोद्भवश्रीवृक्षमहादेवप्रियं सदा । बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि । दुर्गा सा पूजनीया च तद्दिने द्रोणपुष्पकैः । इति । अधिवासने पूजायां होमे च त एव मंत्राः । होमसंख्या प्रतिदैवतं प्रतिद्रव्यमष्टोत्तरशतादिरूपा । इति लोहाभिसारिकं ।

अत्रैव **अश्वमात्रविषयो** विशेषविधिः **निर्णयामृते देवीपुराणे**—आश्वयुक्शुक्लप्रतिपत्स्वातियोगे शुभे दिने । पूर्वमुच्चैःश्रवा नाम प्रथमं श्रियमाहरत् । तस्मात्साश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया सदा । पूजनीयाश्च तुरगा नवमीं यावदेव हि । शांतिस्वस्त्ययनं कार्यं तदा तेषां दिने दिने । धान्यं भल्लातकं कुष्ठं वचां सिद्धार्थकांस्तथा । पंचवर्णेन सूत्रेण ग्रंथिं तेषां तु बंधयेत् । वायव्यैर्वारुणैः सौरैः शाक्रैर्मैत्रैश्च वैष्णवैः । वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने । तुरंगा रक्षणीयास्तु पुरुषैः शस्त्रपाणिभिः । न च ताड्याः क्वचित्कैश्चिन्न च वाह्याः कथंचन । इति । अत्र तुरगपूजाया उच्चैःश्रवःपूजातः पृथग्विधानात्प्रतिमायामुच्चैःश्रवसं रेवंतनामकं देवं च संपूज्य प्रत्यक्षाश्वपूजनं कर्तव्यमिति प्रतीयते । वायव्यैरित्यादिबहुवचनेभ्यः प्रत्येकं कपिंजलाधिकरणन्यायेन मंत्रेषु त्रित्वं लभ्यते ।

अथ नृसिंहप्रसादनिर्णयामृतोदाहृतपौराणवचांसि चानुसृत्य प्रयोगः । षोडशहस्तप्रमाणमंडपं पताकोपशोभितमैशानप्रवणदेशे विधाय तदाग्नेय्यां हस्तमात्रं त्रिमेखलमश्वत्थदलोपमयोनियुक्तं मनोहरं कुंडं विधाय मंडपैशानदेशे राजचिह्नानि शस्त्राण्यस्त्राणि स्थापयेत् । अश्वशालां गोमयलिप्तां सर्वतोवेष्टनेन नरसंचारवर्जितां नानापुष्पफलाद्यलंकृतां धूपितां च कृत्वा तस्यामुदयात्प्रागेव स्नापितानलंकृतान्निर्जल(?)पुष्पमालाभिरर्चितांस्तुरगान्सूर्यकरस्पर्शवर्जं शस्त्रपाणयः पुरुषाः सप्ताहं रक्षेयुः । तेषां कंठदेशेषु गुग्गुलामलकीधान्यभल्लातककुष्ठवचापामार्गवीजलोहश्वेतसर्षपाणां पंचवर्णसूत्रेण वस्त्रे पोटलिकां कृत्वा वध्नीयात् । प्रतिपदः स्वातियोगाभावे यस्यां तिथौ स्वातियोगः प्रातर्भवति तामारभ्य नवमीपर्यंतमश्वपूजा कार्या ।—आश्वयुक्शुक्लपक्षे तु स्वातियोगे शुभे दिने । इति प्रकृत्य ब्राह्मे वाजिनीराजनविधेरिति संप्रदायविदः । अन्ये तु सत्यामसत्यामपि स्वात्यां प्रतिपदि चित्रावैधृतियोगे द्वितीयायां पंचम्यां वाश्वपूजारंभः—वाजिनीराजनं पश्चाद्धित्वा चित्रां च वैधृतिं । इत्यश्वशास्त्रोक्तेरित्याहुः।द्वितीयाविधिश्च व्यवहारोच्चये—आश्वयुजशुक्लपक्षे तिथौ द्वितीयादिसप्तरात्रं तु । तत्र दिवाकरकिरणैरस्पृष्टा वाजिनो रक्ष्याः । गुग्गुलं हिंगुलं चैव वचापामार्गतंडुलान् । लोहं सिद्धार्थकं चैव वध्नीयाद्वाजिकंठके । ग्रहहोमस्तु कर्तव्यो ग्रहाणामर्चनं तथा । इति । तृतीयापंचम्योरपि विधिर्दृष्टो गोविंदार्णवे—स्वात्यादित्ये तृतीयादौ सप्ताहं चाश्विने सिते । रक्षां कृत्वा हयानां तु शांत्या नीराजयेत्ततः । इति । भूपालवल्लभे—कार्तिके मासि पूर्णायामष्टम्यां द्वादशीदिने । आश्विने शुक्लपंचम्यां हयनीराजनं स्मृतं । इति । अत्र पंचम्यंतोक्तकालेषु दैवात्तदनारंभे गौणकालत्वेनाष्टमीद्वादशीपूर्णमास्यो विहिता इति वोध्यं । सौगंधिकपुष्पसूर्यवल्लीदर्शनं तुरंगाणां न कारयेत् । दृष्ट्वा पुष्पद्वयं वाहा न लभंते शुभां गतिं । तस्मात्सौगंधिकं पुष्पं सूर्यवल्लीं च वर्जयेत् । इति हयशारीरवचनात् । सौगंधिकं तु कह्लारमित्यमरः । स्थलकमलमिति यावत् । सूर्यवल्ली हुरहुरेति प्रसिद्धा । तत्रैव प्रधानाश्वसमीपे स्थंडिलं कार्यम् । ततो यजमानो देशकालौ संकीर्त्य

सकलशत्रुजयसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं लोहाभिसारिकयज्ञं वाजिनीराजनसहितं करिष्ये इति संकल्प्य गणपतिपूजनादिआचार्यवरणांतं कुर्यात् । तत आचार्यः छत्रचामरादीनां पूर्वोक्तमंत्रैः पूजां कुर्यात् । षोडशोपचारैः प्रत्यक्षाश्वपूजनात्पूर्वं प्रतिमादौ उच्चैश्रवःपूजां विधाय रेवंतपूजनं कार्यं । तत्रमंत्रः **शालिहोत्रे**—नमो देवाधिदेवाय तुरंगवलचारिणे । सूर्यपुत्राय देवाय तुरंगसहिताय च । तुरंगपरिषद्यस्य नृगजोपरि धावति । साश्वमश्वाधिपं रक्ष शरणं त्वां व्रजाम्यहं । इति । सूर्यपुत्र महाबाहो छायाहृदयनंदन । शांतिं कुरु तुरंगाणां रेवंताय नमोस्तु ते । इति वा । **सारसिंधौ**—कुंकुमागरुकर्पूरचंदनाद्यनुलेपनैः । पशुपुष्पार्घधूपैश्च दधिमोदकपायसैः । ये पूजयंति रेवंतं तेषां श्रीरनपायिनी । इति । ततः प्रत्यक्षाश्वपूजनं तन्नीराजनं च कृत्वा सिंहासनांतपूजां कुर्यादुदाहृतमंत्रैः । कदाचिदेतासु पूजासु स्त्रीकर्तृकत्वप्रसक्तावपि रेवंतपूजां स्त्री न कुर्यात् । अभूद्वै पूर्वभूपस्य पत्न्या रेवंतपूजने । सूनुनाशस्ततो नारी न नियोज्या तदर्चने । इति **गोविंदार्णवे सारसिंधुवचनात्** । सर्वपूजांते कुंडे गृह्योक्तविधिनाग्निस्थापनादि । ततो ग्रहाणामावाहनादि । ततो गृह्योक्तविधिना वायव्यादिलिंगैर्मंत्रैरेकविंशतिराज्याहुतीर्जुहुयात् । ॐकारपूर्वकैर्मंत्रैस्तल्लिंगैर्जुहुयाद्घृतं । इति **भविष्योक्तेः** । वायवायाहिदर्शतेतितिसृणां मधुच्छंदा वायुर्गायत्री वाजिनीराजनप्रधानाज्यहोमे० वायवायाहि० वायउक्थेभिः०वायोतव० । वायवइदं० । नहितेक्षत्रमितितिसृणामाजीगर्तिः शुनःशेपो वरुणस्त्रिष्टुप् । वाजिनी० । नहिते क्षत्रं० । अबुध्नेराजा० । उरुंहिराजा० । वरुणायेदं० । उदुत्यमिति तिसृणां काण्वः प्रस्कण्वः सूर्यो गायत्री । उदुत्यं० अपत्ये० अदृश्रमस्य० सूर्यायेदं० । उक्थमितिद्वयोर्मधुच्छंदाः शक्रोनुष्टुप् । उक्थमिं० । तमित्सखि० । शक्रायेदं । ज्येष्ठेनसोतरित्यांगिरसोमेधातिथिः शक्रो गायत्री । ज्येष्ठेनसोत० । शक्रायेदं० । अतोदेवाइतितिसृणां मेधातिथिर्विष्णुर्गायत्री । अतोदेवा० इदंविष्णु० त्रीणिपदा० विष्णवइदं० । ओमास इति तिसृणां मधुछंदा विश्वेदेवा गायत्री । ॐओमास० विश्वेदेवासोअप्तुर० विश्वेवासोअस्रिध० । विश्वेभ्योदेवेभ्यइदं० । अग्नि-

मीळ इति तिसृणां मधुच्छंदा अग्निर्गायत्री। अग्निमीळे० अग्निः पूर्वेभिः० अग्निना० अग्नयइदं०। अथ यजुःशाखिनि यजमानेऽपेक्षिताः तत्तच्छाखीयमंत्रा लिख्यंते। पीवोअन्नां-रायेनु-आनो-नियुद्भिरिति तिसृणां वसिष्ठऋषिः वायुर्देवता त्रिष्टुप्छंदः। वाजिनीराजन०एवमग्रेपि विनियोगः। पीवोऽन्नाँ रयिवृधःसुमेधाःश्वेतःसिषक्तिनियुतामभिश्रीः। तेवायवे समनसोवितस्थुर्विश्वेन्नरःस्वपत्यानि चक्रुः स्वाहा। रायेनुयं जज्ञतू रोदसीउभे राये देवी धिषणाधातिदेवं। अधावायुं नियुतः सश्चतस्वाः उतश्वेतं वसुधितिं निरेके स्वाहा। आनोनियुद्भिःशतिनीभिरध्वरँ सहस्रिणीभिरुपयाहियज्ञं। वायो अस्मिन्हविषि मादयस्व यूयं पात स्वस्तिभिः सदा नः। स्वाहा। इदंवायवेनममइति तिसृणांत्यागः। उरुँहिराजा—इमंमे—तत्त्वायामीति तिसृणां शुनःशेप ऋषिः वरुणोदेवता आद्यांत्यायास्त्रिष्टुप् मध्यमागायत्री। उरुँहि राजावरुणश्चकारसूर्याय पंथामन्वेतवाउ। अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित् स्वाहा। इमंमेवरुणश्रुधीहवमद्याचमृडय। त्वामवस्युराचके स्वाहा। तत्त्वायामिब्रह्मणावंदमानस्तदाशास्ते यजमानोहविर्भिः। अहेडमानोवरुणेहबोध्युरुशँसमानआयुःप्रमोषीःस्वाहा। इदंवरुणाय०। उद्वयमुदुत्यमितिद्वयोः प्रस्कण्वःसूर्यःक्रमेणानुष्टुप्गायत्री। चित्रमित्यस्यकुत्सआंगिरसःसूर्यस्त्रिष्टुप्। उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं। देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमँस्वाहा। उदुत्यंजातवेदसंदेवं वहंतिकेतवः। दृशेविश्वायसूर्यँस्वाहा। चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः। आप्राद्यावापृथिवीअंतरिक्षँसूर्यआत्माजगतस्तस्थुषश्चस्वाहा। सूर्यायेदं०। त्रातारमित्यस्यगर्ग इंद्रःसुत्रामा—तस्यवयमित्यनयोः प्रजापत्यश्विसरस्वत्यऋषयः। इंद्रो देवता त्रिष्टुप्छंदः। त्रातारमिंद्रमवितारमिंद्रँहवेहवेसुहवँशूरमिंद्रं। हुवेनु शक्रं पुरुहूतमिंद्रँ स्वस्तिनोमघवाधात्विंद्रः स्वाहा। इंद्रःसुत्रामास्ववाँअवोभिः सुमृडीकोभवतुविश्ववेदाः। बाधतांद्वेषोअभयंकृणोतुसुवीर्यस्य पतयःस्याम स्वाहा। तस्यवयँ सुमतौयज्ञियस्यापि भद्रे सौमनसेस्याम। स सुत्रामा स्ववाँइंद्रो असेआराच्चिद्द्वेषः सनुतर्युयोत स्वाहा इदमिंद्राय०। इदंविष्णुरित्यस्यमेधा-

तिथिर्ऋषिर्विष्णुर्गायत्री । इरावतीत्यस्यवसिष्ठोविष्णुस्त्रिष्टुप् । उरुविष्णोइत्यस्यप्रजापतिर्विष्णुरनुष्टुप् । इदंविष्णुर्विचक्रमे त्रेधानिदधेपदं । समूढमस्यपांसुरेस्वाहा । इरावतीधेनुमती हिभूतंसूयवसिनीमनवेयशस्ये । व्यस्तभ्नाद्रोदसीविष्णुरेतेदाधारपृथिवीमभितोमयूखैःस्वाहा । उरुविष्णोविक्रमस्वोरुक्षयायनस्कृधि । घृतंघृतयोनेपिवप्रप्रयज्ञपतिंतिरस्वाहा । इदं विष्णवेनमम । ओमास इति मधुछंदा ऋषिः—विश्वेदेवास इत्यस्य गृत्समदो विश्वेदेवा देवता गायत्र्यौ । विश्वेदेवा इत्यस्याः सुहोत्रो विश्वेदेवास्त्रिष्टुप् । ओमासश्चर्षणीधृतोविश्वेदेवास आगत । दाश्वांसोदाशुषःसुतंस्वाहा । विश्वेदेवाःशृणुतेमंहवंमे ये अंतरिक्षेय उपद्यविष्ठ। ये अग्निजिह्वा उतवा यजत्रा आसद्यास्मिन्वर्हिषिमादयध्वंस्वाहा । इदं विश्वेभ्योदेवेभ्योनमम । अग्नेनयेत्यस्य-अगस्त्यःअयंत इति प्रजापतिः अग्निर्देवतात्रिष्टुभौ। यमग्न इतिमधुछंदा अग्निर्गायत्री । अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठांतेनमउक्तिंविधेम स्वाहा । अयंनोअग्निर्वरिवःकृणोत्वयं वृधः पुरएतु प्रभिंदन् । अयं शत्रूञ्जयतु जर्हृषाणोयं वाजाञ्जयतुवाजसातौ स्वाहा । यमग्नेपृत्सुमर्त्यमवावाजेषुयंजुनाः । सयंताशश्वतीरिषः स्वाहा । इदं अग्नये० । शस्त्रास्त्रमंत्रैः प्रतिमंत्रमष्टोत्तरशतं अष्टाविंशति वाष्टौ वा घृतपायसाहुतीर्हुत्वा हुतशेषं तुरंगगजेभ्यो दद्यात्तुरंगेभ्यएववा मुख्याश्वायैव वा । ततः स्थंडिले पूर्वकल्पिते गृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्य पूर्वांगानि कृत्वा वक्ष्यमाणमंत्रैः सायंप्रातराहुतीश्च जुहुयात् ।—रोहिताश्वमहाभाग हव्यवाह नमोनमः । धूमध्वजकृतूद्धार सूर्यस्य प्रथितः पथि । उत्तिष्ठ होमं गृह्णेमं शांतिरस्तु हवेषु नः स्वाहा। इति प्रथमाहुत्याग्निमुत्थाप्य । ॐप्रजापतींद्रयमवरुणविवस्वत्कुवेरसुषेणाहिशम्यादित्याश्विगरुडदुवस्थविष्णुविश्वेदेवसाध्यमरुद्भ्यः स्वाहा । ॐविद्याधरयक्षगंधर्वनक्षत्रोडुगणग्रहतारावासुकिप्रभृतिनागसर्वपौर्णमासीदेवनदीसागरवनस्पतिभ्यः स्वाहा ॥ ॐअन्येभ्यो देवेभ्यः स्वाहेति तिस्र आहुतीर्जुहुयात् । एवं सायमपि चतस्र आहुतयो होतव्याः । नित्यं प्रत्यूषवेलायामेवाश्वान्स्नापयेत्पाययेच्च । पुरोहितं द्विकालं गंधतांबूलवस्त्रा-

दितोषितैस्त्रिभिः ब्राह्मणैः पुण्याहस्वस्तिऋद्धिवाचनं शांतिसूक्तपाठं च कारयित्वा नर्तकगायकवादित्रवादिमांगल्यैः प्रत्यहं अश्वशालायां नृत्यगीतवादित्रनिनदस्तुतीः कारयित्वा सप्तमे दिने सायंहोमानंतरं होमशेषं स्वगृह्योक्तविधिना समापयेत् । ततोऽष्टमदिने जलाशयतीरे वर्तुलमंडपे वरुणायनम इति गंधादिभिर्वरुणं संपूज्य वरुणाय एष बलिर्नमम इति दधिगुडभक्तेन बलिं दत्त्वा पश्चादश्वांस्तोयेऽवगाह्य पुष्पमालाभिर्विभूष्य शालायामभिप्रवेशयेत् । ततो विजयदशम्यां नगराद्बहिरैशान्यां दिशि प्राक्प्रवणे शुचौ देशे दशहस्तोच्छ्रितं शुभदारुमयं काष्ठद्वयं मध्येऽष्टहस्तावकाशमुत्तरदक्षिणक्रमेणारोप्य तस्योपरि समानजातिकाष्ठमयं तुरंगं कृत्वा तत्तोरणध्वजमालाद्यलंकृतं कृत्वा शस्त्रपाणिभिः पुरुषैरभिरक्षणीयं । ततो राजसंग्रामयोग्यमुख्याश्वमुखानश्वान्सपुरोहितान्सम्यगलंकृतान् शस्त्रपाणिभिः पुरुषैः वक्ष्यमाणपुण्याहब्रह्मघोषगीतवादित्रवंदिजनस्तुतिभिः सह तोरणसमीपं प्रापयेयुः । तत उक्ततोरणस्तंभसमीपे पुरोहितः स्वगृह्योक्तमार्गेणाग्निं प्रतिष्ठाप्य शांतिकलशं स्थापयित्वा चरुंश्रपयित्वा पूर्वोक्ताज्याहुत्याग्निमुत्थाप्य प्रजापतींद्रादिभिस्त्रिभिर्मंत्रैस्तिस्र आज्याहुतीर्हुत्वा स्विष्टकृदादिहोमशेषं समाप्य अग्ने र्दक्षिणतः प्रजापतींद्रेत्यादिभिर्मंत्रैर्बलित्रयं दत्त्वा राज्ञे स्वस्तीति ब्रूयात् । ततश्चत्वारः पुरुषाः प्रतिस्तम्भसमीपं क्रमेण तिष्ठेयुः । तत्रैकः पुरुषः होमाग्नौ प्रथममुल्कां प्रज्वाल्य धारयति तत्रान्यो ज्वालयति तत्रान्य एवमन्योन्यमुक्त्वा प्रदीपनं कुर्युः । पूर्वधारणसमकालमुत्तरेषां ज्वालनधारणे यथाभवतस्तथान्योन्यं संकेतः पूर्वमेवोचित इत्यर्थः । तत उदकेन पुरोहितो मुख्याश्वं प्रोक्षयित्वा हविःशेषकृतपिंडं वक्ष्यमाणमंत्रेण प्राशयेत् । मंत्रश्च अश्वराज पुरोधास्तु विष्णुश्च पुरतःस्थितः । वरुणः पाशहस्ताभ्यां त्वत्पृष्ठं परिरक्षतु । वैवस्वतकुबेरौ च पार्श्वयोरभिरक्षतां । चंद्रादित्यौ पृष्ठवंशमुदरं पृथिवीधरः । रक्षंतु वक्त्रं गंधर्वा बलमिंद्रो ददातु मे । हविःशेषमिदं प्राश्य विजयार्थं महीपतेः । इदं वरुणादिभ्यः । ततो हविःप्राशनानंतरं तमश्वं पूजयित्वा तस्यैवाश्वस्य दक्षिणकर्णे मुख्यो वैद्यो वक्ष्यमाणमंत्रं जपेत् । मंत्रस्तु—कुलाभिजनजत्यश्व लक्षणैर्व्यंजनैः स्थितः ।

भर्तारमभिरक्ष त्वं शिवसंस्तरणो भव । अंकदंडमनिष्टानि क्षमस्व तुरगोत्तम । इति । इत्थं कर्णजपानंतरं ब्राह्मणाः स्वस्त्ययनमुच्चैः पठंतः पुरोहितपुरःसराः शांतिकलशोदकेन कुशैस्तमश्वमभिषिंचेयुः ।—सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः । प्रद्युम्नश्चानिरुद्धश्च भवंतु विजयाय ते । आखंडलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा । वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पांतु ते सदा । कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः। एतास्त्वामभिषिंचंतु देवपत्न्यः समागताः । आदित्यश्चंद्रमा भौमो बुधजीवसितार्कजाः । ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च तर्पिताः । देवदानवगंधर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः । अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये । सरितः सागराः शैलास्तीर्थानि जलदानदाः। एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये । इतिमंत्रैः । ततस्तोरणमध्ये पुरोहितेन जयेत्युक्ते अग्रे पुरोहितस्तत्पश्चान्मुख्याश्वस्तत्पश्चान्मंत्रिणस्तत्पश्चादशेषाश्वाः प्रतीच्यां निर्गच्छेयुः । ततो भूरिदक्षिणादानं । इति वाजिनीराजनं ।

अथ **राजयोग्यमुख्याश्वलक्षणं** । शालिहोत्रे—अर्कपत्रसवर्णस्य दंता ह्यविरलाः समाः । लाक्षारससमा जिह्वा स्तनौ चोत्तरतालु च । मणिवैडूर्यवर्णे च नेत्रे यस्य नखास्तथा । सुशुक्लवाहनो वाहो विषये यस्य तिष्ठति । कौरव्य पृथिवी तस्य चतुरंता ससागरा । आज्ञाविनिर्जिता तिष्ठेद्यस्याश्वस्तादृशो भवेत् । संग्रामे विजयी चैव सर्वकामार्थदः सदा । शुकपक्षसवर्णश्च यस्य रक्तं भवेच्छिरः । स्निग्धं सर्वसमं चाक्षिनान्यवर्णेन चावृतं । तेन राष्ट्रं च कोशश्च कोष्ठागारं च वर्धते । गौरो मणिनिभश्चैव श्वेताश्वस्ताम्रतालुकः । बलं कोशोऽथ मित्राणि प्रजा तेनैव वर्धते । श्वेताश्वस्तालुरक्तश्च मध्वक्षो लोहितैः सटैः । आवर्तशुद्धं तं वाहं राजा वेश्मनि वासयेत् । तेन राष्ट्रं च कोशश्च कोष्ठागारं च वर्धते । कृष्णमेघप्रभो वाजी मेघदुंदुभिनिस्वनः । कृष्णसर्प इवोदग्रः शुभसत्वगतिश्च यः ।

एतेनानुप्रयातस्य चक्रं न प्रतिहन्यते । शंखश्वेतो भवेद्वाजी शंखघोषसमस्वनः । सशीघ्रं हंसवद्गच्छेन्नात्यर्थं विनतोन्नतः । तेन राष्ट्रं च कोशश्च कोष्ठागारं च वर्धते। अरिष्टवर्णो विनतस्ताम्रोष्ठस्ताम्रतालुकः । पराभूताश्च तिष्ठंति शत्रवः कामदो हि सः । पुष्करं पृथिवी माला चंद्रो वै लांगलं गदा । धनुः शंखः पताका वा ललाटे यस्य दृश्यते । सर्वेशुक्लानि कौरव्य तस्य पार्थिवलक्षणं । श्वेतपादश्च तुरगः श्वेतजिह्वश्च लोहितः। आनंदं तं विजानीयात्परराष्ट्रप्रमर्दनं। चक्रं वा यदि वा वज्रमायतं वा धनुर्भवेत् । वर्णान्यत्वेन कौरव्य तस्य पार्थिवलक्षणं । एतद्धि लक्षणं राजा येषु चाश्वेषु लक्षयेत् । तेषामास्तरणं लेपं शिरस्थानानुलेपनं । अग्रमालाग्रगंधाश्च भोजनाग्रं तथैव च । देयं नित्यं सदाश्वेभ्यः कर्तव्याश्च प्रदक्षिणाः । तुरंगाः पूजिताः सम्यग्यस्य तिष्ठंति वेश्मनि । वर्धते पुत्रपौत्रैश्च मित्रैः शत्रूञ्जयत्यथ । इति ।

अथाश्वशालायां कर्तव्यं। नाकुलेऽश्वचिकित्सिते । मंदुरांते सदा धार्यो रक्तवर्णो महाकपिः । सर्वामयविनाशाय वाजिनां च विवृद्धये । वाजिशाला तु मंदुरा इति कोशः । विष्णुधर्मोत्तरे—तुरंगार्थं तथा धार्याः प्रदीपाः सार्वरात्रिकाः । कुक्कुटांश्चारणांश्चैव मर्कटांश्च विशेषतः । धारयेदश्वशालासु सवत्सां धेनुमेव च । अजाश्च धार्या यत्नेन तुरगाणां हितैषिणा । इति । श्यामरक्तमुखभेदेन वानरमर्कटभेदोऽत्र बोध्यः । अन्यच्च—गोगजाश्वाविशालासु तत्पुरीषस्य निष्क्रमं । अस्तं गते न कुर्वीत देवदेवे दिवाकरे । इति ।

अथ वरुणग्रहगृहीतस्य विमोक्षोपायः शालिहोत्रे—वरुणग्रहजुष्टस्य विज्ञानं शृणु सुव्रत । सुमनास्तूदकं गत्वा हयो भवति दुर्मनाः । वमने वा निश्वसिति रक्तनेत्रोऽभिवीक्षते । प्रस्वेदः सर्वगात्रेषु विह्वलन्निव तिष्ठति । वारिराजगृहीतस्य रूपमेतत्प्रकीर्तितं । उदकेन गृहीतस्य ग्रहेण वरुणस्य च । बलिप्रणामांजलिभिर्नविनात्येति पूजया । ग्रहविमोक्षो न भवतीत्यर्थः । तंडुलोशीरसुमनःपुष्पाण्यगुरुचंदनं । अपूपान्मत्स्यकुल्माषान्लाजानुलोमिकांस्तथा । रक्तौदनं शशे यावच्छोणितं मत्स्यकैः सह । अजस्य चाग्र्यमांसानि कृसरं भैरवीं सुरां ।

अनुलोमजातीयकृतान्नतु प्रतिलोमजातीयकृताँल्लाजानित्यर्थः । भैरवीं पैष्टीं । ब्राह्मणी च कुमारी या शुक्लवस्त्रा बलिं हरेत् । वैद्यश्चोपोषितस्तत्र कृतजप्यः कृतांजलिः । वादित्रेणोदकं गत्वा वारुणीं दिशमादिशेत् । पश्चिमदिगभिमुखो मंत्रान्वदेदित्यर्थः । वरुणायनमो राज्ञे ये चास्यानुचराः परे । बलिं मे प्रतिगृह्णंतु भूयश्चेमाश्च देवताः । दिशश्च विदिशः सर्वा नक्षत्राणि ग्रहैः सह । मरुद्गणाश्चंद्रसूर्यौ सुपर्णोरगराक्षसाः । बलिं च प्रतिगृह्णंतु ग्रहा मुंचंतु वाहनं । प्राङ्मुखश्च ततो वैद्यस्तत्श्चोदीरयेदिदं । आप एव इमाः सर्वा अद्भिः सर्वं प्रवर्तते । सोमादापस्तथैवाग्निः सोमात्सर्वमिदं जगत् । सोमं देवं नमस्यामि मुंचेमं च तुरंगमं । वरुणग्रहजुष्टस्तु न जीवति कदाचन । एवं च भिषजः कुर्युः शेषाणां शांतिरस्त्विति । इति । अवादीत्थमनंतेन नवरात्रविनिर्णयः । अमुना मुदमायातु माया भगवतो हरेः ॥

अथ उपांगललिताव्रतं । तच्च पूर्वविद्धपंचम्यामेव कार्यं । पंचमीसामान्यनिर्णये माधवोदाहृतवचनेन दैवे पित्र्ये च तद्विधानात् । यद्यपि—भुक्त्वा जागरणे नक्ते चंद्रार्घ्यव्रते तथा । ताराव्रतेषु सर्वेषु रात्रियोगो विशिष्यते । इति हेमाद्र्युदाहृतवचनेन जागरणोपेतव्रतेऽस्मिन्न पूर्वविद्धा नियंतुं शक्यते । तत्कथायां निशि वा स्याद्विसर्जनं इति जागरणस्य पाक्षिकत्वप्रतीतेः । तथापि तत्कथायामेव—विनिर्वर्त्याह्निकं कर्म शुची रागविवर्जितः । चत्वारिंशत्तथा चाष्टौ च इत्यादिना दंतधावनान्युक्त्वा मंडपिकानिर्माणाद्युक्त्याऽपराह्णस्यैव कर्मकालप्रतीतेश्च । पूर्वविद्धायां संध्यागर्जिते परा ग्राह्या । गर्जितं संध्ययोस्त्याज्यमिति तत्रैवाभिधानात् । ईदृशविषये पंचमीक्षये वा नारंभस्तत्रैवेदृशाभिप्रायकनिषेधात् । अथोपांगललिताव्रतं । स्कंद उवाच—विधानं तस्य वक्ष्येऽहं तच्छृणुष्व तपोधन । शुक्लपक्षस्य पंचम्यामिषे मासि चरेद्व्रतं । गर्जितं संध्ययोस्त्याज्यं दिनवृद्धिक्षयौ तथा । निर्वर्त्यावश्यकं कर्म शुचिः संगविवर्जितः । ततो गत्वा वनं विप्राः प्रार्थयेच्च वनस्पतीन् । आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते । इति वनस्पतिप्रार्थना । अपामार्गसमु-

द्भूतैर्दंतकाष्ठैः करोम्यहं। दंतानां धावनं मातः प्रसन्ना भव सर्वदा। दंतकाष्ठग्रहणं। चत्वारिंशत्तथा चाष्टौ कल्पितानि विधानतः। दंतकाष्ठान्युपादाय तडागं वा नदीं व्रजेत्। मुखदुर्गंधिनाशाय दंतानां च विशुद्धये। ष्ठीवनाय च गात्राणां कुर्वेऽहं दंतधावनं। इति दंतधावनं। दंतधावनपूर्वाणि मज्जनानि समाचरेत्। ततो यथाविधि स्नात्वा शुक्लवासा गृहं व्रजेत्। उपचारैः षोडशभिरेभिर्मंत्रैः समाहितः।

अथ पूजा। तिथ्यादिसंकीर्त्य श्रीललितादेवीप्रीत्यर्थं उपांगललितापूजनमहं करिष्ये। आसनादिकलशपूजांतं कुर्यात्। ध्यानम्। नीलकौशेयवसनां हेमाभां कमलासनां। भक्तानां वरदां नित्यं ललितां चिंतयाम्यहं। ध्यानं। आगच्छ ललिते देवि सर्वसंपत्प्रदायिनि। यावद्व्रतं समाप्येत तावत्त्वं संनिधौ भव। सहस्रशीर्षेत्यावाहनं। कार्तस्वरमयं दिव्यं नानामणिगणान्वितं। अनेकशक्तिसंयुक्तमासनं[1] प्रतिगृह्यतां। पुरुषएवेत्यासनं। गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतं। तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां। एतावानस्येति पाद्यं। निधीनां सर्वरत्नानां त्वमनर्घ्यगुणा ह्यसि। तथापि भक्त्याराध्ये त्वां गृहाणार्घ्यं नमोस्तु ते। त्रिपादूर्ध्वैत्यर्घ्यं। पाटलोशीरकर्पूरसुरभि स्वादु शीतलं। तोयमाचमनीयार्थं शिशिरं प्रतिगृह्यतां। तस्माद्विराळित्याचमनीयं। अत्राप्यायस्वेत्यादिपंचामृतस्नानं। मंदाकिन्याः समानीतं हेमांभोरुहवासितं। स्नानाय ते मया भक्त्या नीरं स्वीक्रियतामिदं। यत्पुरुषेणेति स्नानं। महाभिषेकः सर्वभूषाधिके सौम्ये लोकलज्जानिवारके। मयोपपादिते तुभ्यं वाससी प्रतिगृह्यतां। तंयज्ञमिति वस्त्रं। तस्माद्यज्ञादिति यज्ञोपवीतं। मलयाचलसंभूतं घनसारं मनोहरं। हृदयानंदनं चारु चंदनं प्रतिगृह्यतां। तस्माद्यज्ञादिति गंधं। अक्षता विमलाः शुद्धा मुक्तामणिसमप्रभाः। भूषार्थं च मया देवि देहि मे निर्मलां धियं। हिरण्यरूप इत्यलंकारार्थे अक्षताः। हरिद्रादिसौभाग्यद्रव्यं। नागकेतकपुन्नागचंपकेभ्यः समाहृताः। शुभाः सुमनसो देवि पूजार्थं प्रतिगृह्यतां। तस्मादश्वेति पुष्पं। ततः पुष्पैः प्रत्यंगपूजा। उपांगललितायै नमः पादौ पूजयामि। भगवत्यै०

---

१ भक्तिसंयुक्तं।

गुल्फौ० । सिद्धेश्वर्यै० जंघे० । भद्रकाल्यै० जानू० । श्रियै० ऊरू० । विश्वरूपिण्यै० कटिं० । देव्यै० नाभिं० । वरदायै० कुक्षिं० । शिवायै० हृदयं० । वागीश्वर्यै० स्कंधौ० । महादेव्यै० बाहू० । प्रकृतिभद्रायै० करौ० । पद्मिन्यै० मणिबंधं० । सरस्वत्यै० मुखं० । पद्मकेसरवासिन्यै० नासिकां० । महिषासुरमर्दिन्यै० नेत्रे० । लक्ष्म्यै० कर्णौ० । भवान्यै० ललाटं० । विंध्यवासिन्यै० शिरः । सिंहवाहनायै० सर्वांगंपू० ॥ देवद्रुमरसोद्भूतः कालागरुसमन्वितः । आघ्रेयतामयं धूपो भवानि घ्राणतर्पणः । यत्पुरुषमिति धूपं । चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणं । आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि । ब्राह्मणोस्येति दीपं । मोदकापूपलड्डूकवटकोदुंबरादिभिः । सघृतं पायसेनान्नं नैवेद्यं प्रतिगृह्यतां । चंद्रमामनस इति नैवेद्यं । मध्येपानीयं । उत्तरापोशनं । कर्पूरवासितं तोयं मंदाकिन्याः समाहृतं । आचम्यतां हि ललिते तेन त्वं परमेश्वरि । पुनराचमनं । हस्तप्रक्षालनं । मुखप्रक्षालनं । मलयाचलसंभूतं कर्पूरेण समन्वितं । करोद्वर्तनकं देवि गृह्यतां ललिते शुभं । चंदनेन करोद्वर्तनं । इदं फलं मया देवि स्थापितं पुरतस्तव । तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि । फलं । कर्पूरैलालवंगादितांबूलीदलसंयुतं । क्रमुकस्य फलं चैव तांबूलं प्रतिगृह्यतां । नाभ्याआसीति तांबूलं । वज्रमाणिक्यवैडूर्यमुक्ताविद्रुमभावितं । पुष्परागेण खचितं हेमपुष्पं प्रगृह्यतां । सप्तास्यासन्० । सुवर्णपुष्पं । हिरण्यगर्भ इति हिरण्यं । श्रियेजात इति नीराजनं । यज्ञेनयज्ञं जातवेदसे इति पुष्पांजलिः । पुत्रान्देहि यशो देहि देहि सौभाग्यसंपदौ । अवैधव्यं च मे देहि सर्वान्कामांश्च देहि मे । यानिकानिचेति प्रदक्षिणा । नमस्तुभ्यं जगद्धात्रि भक्तानां हितकारिणि । जगद्भीतिविनाशिन्यै सर्वमंगलमूर्तये । यज्ञेनयज्ञं इति नमस्कारः । श्रीदेव्यैनमः कुमार्यै० भवान्यै० कात्यायन्यै० सरस्वत्यै० नागेश्वर्यै० वरदायै० पद्मिन्यै० पद्मकेसरनिवासिन्यै० महिषासुरमर्दिन्यै० इति नामभिः । दूर्वे पीयूषसंभूते शतमूले शतांकुरे । शतं नाशय पापानां धनायुर्वर्धनं कुरु । इति दूर्वा अभिमंत्र्य । त्वं दूर्वे अमृतोत्पन्ने वंदितासि सुरासुरैः । सौभाग्यं सर्वसंपत्तिं देहि सर्वफलप्रदे ।

दूर्वाछेदनमंत्रः । अथ दूर्वांकुरान्साग्रांश्चत्वारिंशत्तथाष्टभिः । अधिकान्हस्त आदाय मंत्रमेतं जपेद्बुधः । बहुप्ररोहा सततमभृता हरिता लता । यथेयं ललिते मातस्तथा मे स्युर्मनोरथाः। इत्युक्त्वा पूजयेद्देवीमेवमेवंविधं सुधीः । चत्वारिंशतिकृत्वस्तु अष्टकृत्वः समाचरेत् । ततो वाणकमादाय विंशत्या वटकादिभिः। पठ्यमानेन मंत्रेण आचार्याय निवेदयेत् । उपांगललितादेव्या व्रतसंपूर्णहेतवे । वाणकं द्विजवर्याय सहिरण्यं ददाम्यहं। ललिताप्रतिगृह्णाति०। इतिवाणकमंत्रः। अर्द्धं विप्राय दातव्यमर्धमात्मनि भोजयेत् । ततः कथां समाकर्ण्य वाणकान्नस्य संख्यया । स्वयमद्यात्तदेवान्नं वाग्यतः सहबांधवैः । रात्रौ जागरणं कुर्यान्नृत्यगीतादिमंगलैः । प्रभाते पूजयेद्देवीं निशि वा स्याद्विसर्जनं । सवाहना शक्तियुता ललिता पूजिता मया। मातर्मामनुगृह्याथ गम्यतां निजमंदिरं । इति। इति विसर्जनं । अत्रचाथदूर्वांकुरानितिश्लोकेष्टचत्वारिंशत्संख्यदूर्वाग्रहणं प्रकृत्य देवीमित्यंतेन समंत्रां ताभिः पूजां विधाय, एवमित्यनेन पादत्रयेण तादृशपूजाया अष्टचत्वारिंशद्वारमभ्यासो विधीयते। लभ्यते चात्राचारसंवादः ।

अथ कथा। सूतउवाच। पुरा कैलासशिखरे सुखासीनं षडाननम्। कथयंतं कथां दिव्यामिदमूचुर्महर्षयः। ऋषय ऊचुः। महासेन महादेवनंदनानंतविक्रम । आख्यातानि सुपुण्यानि श्रुतानि त्वत्प्रसादतः। कथास्त्वद्वदनांभोजप्रसूता भूरिभूतयः। न तृप्तिमधिगच्छामः पायंपायं सुधामिव। शुश्रूषवो वयं देव्या व्रतं तत्कथयस्व नः । मनोभिलषितार्थानां सिद्धिर्यस्मिन्कृते भवेत्। स्कंद उवाच। साधु पृष्टं महादेव्या माहात्म्यं मुनिपुंगवाः। वच्मि सर्वविधानेन तच्छृणुध्वं जगद्धितं। भृगुक्षेत्रे किल पुरा विप्रोऽभूद्गौतमाभिधः । श्रुतिस्मृतिपुराणज्ञो धनी च बहुबांधवः । अनपत्यस्य तस्याथ जज्ञाते जरतः सुतौ। श्रीपतिर्गोपतिश्चेति विदधे नामनी तयोः । अचिरेणैव कालेन स पंचत्वमगाद्विजः। तौ तु बालौ धनं बंधून्हित्वा तद्धर्मचारिणी। सती विवेश दहनं स्वर्यातुं पतिना सह । अथ ते बांधवाः सर्वे हा कष्टमिति चाब्रुवन्। रुदंतो दुःखिताश्चक्रुस्तत्क्रियां पारलौकिकीं । अथामुष्य सपत्नोऽभूद्भ्राता स जगृहे

धनं । अपुष्णात्तौ बटू गृहं निजमानीय दुर्मनाः । नास्ति चक्रे धनं सर्वं ताभ्यां किंचिन्न वै ददौ । ततो मौंजीधरौ बालौ बंधुभिः कथितं वसु । ययाचाते पितृद्रव्यं देहि नौ दायमित्युत । स ताबूचे गतं द्रव्यं युवां केन प्रतारितौ । निर्गच्छतं मम गृहादित्यादिपरुषं बहु । तौ तद्वचोऽभिनिर्विण्णौ बालौ श्रीपतिगोपती । बभाषेते मिथः कष्टं धिगहो पितृहीनतां । यावो देशांतरं यत्र स्वजनो नास्ति कश्चन । अनाभाष्यैव सुहृदो जग्मतुर्दिशमुत्तरां । भिक्षाचरौ बहून्देशान्वनानि सरितो गिरीन् । समतिक्रम्य ययतुर्विशालां नामतः पुरीं । कासारमीक्षांचक्राते तत्पुर्याः संनिधौ शुभं । पुंडरीकवनाकीर्णं रक्तपद्मोपशोभितं । संध्याभ्रभूषितं चारु यथा तारांकितं नभः । श्रांतौ पथिगतौ बालौ क्षणं विश्रम्य तत्तटे । आचम्य शिशिरं तोयं सस्नतुश्च यथाविधि । गताध्वखेदौ विप्रौ तौ पुरं प्रविशतां ततः । वीथीचतुष्पथयुतं चारुगोपुरमंडितं । देवतागाररुचिरं सौधराजिविराजितं। नानावीथीरतिक्रम्य विप्रवासमवापतुः । कस्यचित्त्वथ विप्रस्य क्षुत्पिपासार्दितौ गृहं । ययतुर्वैदिकायां तावुपविष्टौ श्रमातुरौ । स्वामी तस्याथ गेहस्य विवेक इति विश्रुतः । आगतौ वैश्वदेवांते स ददर्शातिथी द्विजौ । अनापृच्छ्य श्रुतं शीलं तथा च कुलनामनी । ऋषिवत्पूजयामास स्मरन्धर्मं सनातनं । अथ तौ भोजयामास स्वाद्वन्नेन द्विजोत्तमः । तौ ब्रह्मचारिणौ विप्रौ तां सपर्यां विलोक्य च । देशबंधुपरित्यागखेदमुज्झांबभूवतुः । अथापृच्छत्कृपालुस्तौ कौ युवां कुत आगतौ । किमर्थमल्पवयसौ निर्गतौ स्वगृहादिति । तद्विवेकस्य वचनमाकर्ण्य श्रीपतिस्तदा । आनुपूर्व्येण सकलं वृत्तांतं समभाषत । पितृहीनाविति ज्ञात्वा त्यक्तौ बंधुजनेन च । आश्वास्य स्थापयामास स्वगृहे बहुवासरं । प्रचक्रमे स्वशिष्यैश्च सहाध्यापयितुं श्रुतीः। बभूवतुश्च तौ बालौ गुरुशुश्रूषणे रतौ । गुरोर्गृहे निवसतोरागता निर्मला शरत् । फुल्लपद्मवनाकीर्णा पूर्णचंद्रानना शुभा । तस्यां सशिष्यमाचार्यं चरंतं व्रतमुत्तमं । पप्रच्छतुर्भोः किमिदमावाभ्यामपि कथ्यतां। ताभ्यामेवं कृते प्रश्ने विवेक इदमब्रवीत् । विवेक उवाच । उपांगललितादेव्या व्रतं देवर्षिपूजितं । सर्वकामप्रदं नृणां स्त्रीणामपि विशेषतः । त्रि-

द्याकामेन कर्तव्यं व्रतमेतदनुत्तमं। सुतार्थिना च कर्तव्यं तथैव धनकाम्यया। विद्याकामौ तु तौ बालौ व्रतमाचरतुर्द्विजौ। भक्तितो गुर्वनुज्ञातौ यथाशक्त्या यथाविधि। तौ तत्प्रसादात्सकलं शास्त्रं वेदानवापतुः। अन्यस्मिन्हायने भक्त्या विवाहार्थं च चक्रतुः। श्रीपतिर्गोपतिश्चैव व्रतमेतत्तपोधनाः। अचिरेणैव कालेन माघे मासि तयोर्गुरुः। स्वां विवाहोचितां कन्यां नाम्ना गुणवतीमिति। विनीताय श्रुतवते यूने श्रीपतये तदा। विचार्य बांधवैः सार्धं ददौ पुण्ये सुवासरे। पारिबर्हं बहु मुदा प्रादाद्दुहितृवत्सलः। विवेकोऽपि मुदं लेभे सानुरागो विलोक्य तौ। अन्येऽब्दे पुनरेतत्तु व्रतं देव्याश्च चेरतुः। भ्रातरौ तं निजं देशमिच्छंतौ च धनादिकं। अथान्येऽहनि कस्मिंश्चित्तावुपाध्यायमूचतुः। स्वामिन्युष्मत्प्रसादेन विद्या लब्धा तथा वसु। अनुजानीहि गच्छामो निजं देशमितो यतः। इत्याकर्ण्य समालोक्य शुभं वासरमादृतः। स्वयं प्रापयितुं विप्रस्तौ तां कन्यां च निर्ययौ। अथ देव्याः प्रसादेन पितृव्यस्य तयोः किल। अन्वेषणे मतिर्जाता क्व तौ श्रीपतिगोपती। निर्गतौ क्व गतौ देशं वसतः क्वेत्यचिंतयत्। लोको निंदति मां कुर्यां तयोरन्वेषणे मतिं। दिदृक्षुस्तौ ततः सोपि निर्जगाम निजात्पुरात्। किंचित्स नगरं प्राप्तो द्विजो बालौ गवेषयन्। तदेव नगरं प्राप्तो विवेको यत्र विद्यते। सशिष्यः कन्यया सार्धं क्रमन्मार्गं शनैः शनैः। तत्र तेषां समजनि संगमो मुनिसत्तमाः। तं दृष्ट्वा तादृशं विप्रो विवेको ब्राह्मणोत्तमं। श्रीपतेस्तु पितृव्याय तत्सर्वं स न्यवेदयत्। विदांचकार तौ कृच्छ्रान्मध्यमे वयसि स्थितौ। प्रणम्य विधिनाभ्यर्च्य ततः प्रोचे वचो मुदा। भ्रातुस्तव सुतावेतौ पालितौ पाठितौ मया। इति श्रुत्वा विवेकस्य वचनं मुदितोऽभवत्। आलिलिंगे च तौ बालौ मूर्ध्न्यजिघ्रत्पुनःपुनः। पादानतां गुणवतीं विवेकेन निरूपितां। आशीर्भिरभिनंद्याथ सहर्षो भूद्द्विजोत्तमः। विवेकं वचनं प्रोचे त्वत्प्रसादादिमौ सुतौ। दृष्टौ मत्तो न धन्योऽस्ति सुहृत्त्वं यस्य हि द्विज। अथ ते मुदिताः सर्वे भृगुक्षेत्रं ययुर्मुदा। ज्ञातिभिः सह संगम्य शृण्वद्भिस्तद्विचेष्टितं। स्वपितृव्यगृहे स्थित्वा दिवसानष्ट सप्त च। लब्ध्वा पितृधनं गेहं

निजं श्रीपतिगोपती । ईयतुस्तदनुज्ञातो विवेकः स्वपुरं ययौ । विवेकाख्यो द्विजवरस्ततः स्वपुरमागमत् । श्रीपतिर्गोपतेस्तत्र विवाहमकरोत्तदा । तावेकचेतसौ सत्रं चक्रतुर्विप्रतर्पणं । श्रीपतिः श्रद्धया युक्तो कनीयान्व्ययशंकितः । विचार्य भार्यया सार्धं विभक्तस्तत्क्षणादभूत् । स भोगान्विविधान्भुंजन्प्रमत्तो धनसंपदा । न देव्याराधनं चक्रे न धर्मं सुखलंपटः । केनचित्त्वथ कालेन नष्टं तस्य गतं धनं । अकिंचनो गतश्रीतां भार्ययाश्वासितस्तदा । भवद्भ्रातृगृहे विप्रा भुंजते बहवः सदा । गच्छामोऽनुदिनं कांत तत्र भोक्तुं यथासुखं । एवं भोजनवेलायामागत्यागत्य तद्गृहं । भुक्त्वा भुक्त्वा निजगृहमीयतुर्बहुवासरं । कदाचिदागतो यावद्गोपतिर्भार्यया सह । उपविष्टेषु विप्रेषु भोक्तुं नाविंदतासनं । अन्नराशेः सकाशे तु भोजनाय क्षुधातुरः । उपविष्टः श्रीपतेस्तु भार्यया स निवारितः । अस्मादुत्तिष्ठ वै तूर्णं त्वमुच्छिष्टं करिष्यसि । तिष्ठ तिष्ठ क्षणं चैकं पश्चाद्भुंक्ष्वेति साब्रवीत् । गोपतिर्भार्यया दुःखं गतो विमनसावुभौ । अभुक्त्वैव विनिर्गस्य ययतुर्निजमंदिरं । ततः स्वजायां प्रोवाच निजमार्गं विचिंतयन् । गोपतिरुवाच । भ्रात्रा मया समं चैव संविभक्तं धनं प्रिये । दुर्गतोहं धनी ज्यायाञ्छ्रूयतामत्र कारणं । पुरावाभ्यां गुरुगृहे व्रतमाचरितं शुभं । उपांगललितादेव्या विद्यादि सकलं यतः । प्राप्तं मया प्रसादेन परित्यक्तं प्रमादिना । ज्येष्ठ आचरते नित्यं तस्माच्छ्रीस्तं तु सेवते । तस्मादहं तदा भोक्ष्ये यदा द्रक्ष्यामि तां शिवां । इत्युक्त्वा निर्गतस्तस्माद्गृहादकृतभोजनः । तद्भार्या चिंतयाविष्टा सापि तस्थावनश्नती । भुक्तेषु सर्वविप्रेषु श्रीपतिः पर्यपृच्छत । क्व गतो गोपतिरिति तच्छ्रुत्वा सोऽपि दुःखितः । गोपतिस्तु सरिद्दुर्गान्वनानि बहुशो भ्रमन् । अपृच्छत्पथिकान्मार्गं न देव्याः पदमभ्यगात् । पंचमे वासरे प्राप्ते क्षुत्पिपासार्दितो वने । अलब्धदर्शनो देव्या दुःखितो निपपात ह । तं कृच्छ्रगतमालोक्य भवानी भक्तवत्सला । कृतापराधमपि तं प्रीत्या जग्राह चंडिका । गतमूर्च्छः समुत्थाय दिगंतानवलोकयत् । ददर्श दूरतो गोपं चारयंतं गवां गणं । तं दृष्ट्वा किंचिदाश्वस्य ययौ तस्यांतिकं शनैः । अपृच्छत्को भवान्याति कुत्रत्यः कुत आगतः । कोयं देशः क्व वासोऽस्ति पुरं किंनाम तद्वद ।

निशम्य वचनं तस्य वक्तुं गोपः प्रचक्रमे। गोप उवाच। उपांगं नाम नगरं उपांगो नाम भूपतिः। उपांगललितादेव्या विद्यते तत्र मंदिरं। तत्रत्योऽहं समायातः पुनस्तत्र व्रजाम्यहं। इत्याकर्ण्य वचस्तस्य विप्रः स मुदितोऽभवत्। स गोपसहितः सायं विवरं प्रविवेश ह। दूराद्दर्श भवनं पुरमध्ये तपोधनाः। उपांगललितादेव्याः स्फाटिकं गगनंलिहं। सौवर्णेन विचित्रेण कलशेनोपशोभितं। यथोदयाचलः शैलो दधानो भानुमंडलं। त्वरितो गोपमामंत्र्य प्रासादं प्रययौ मुदा। प्रणम्य दंडवद्भूमौ कृतांजलिपुटस्तदा। उपांगललितां देवीमथ स्तोतुं प्रचक्रमे। गोपतिरुवाच। नमस्तुभ्यं जगद्धात्रि भक्तानां हितकारिणि। जगद्भीतिविनाशिन्यै सर्वमंगलमूर्तये। हत्वा निशुंभमहिषप्रभृतीन्सुरारीनिंद्रादयो निजपदेषु यथाभिषिक्ताः। लोकत्रयावनगृहीतमहावतारे मातः प्रसीद वरदे कुरु मेऽनुकंपां। त्वां मुक्तये मुनिजनाः कुटिलीकृतांगीं गौरीं निजे वपुषि कुंडलिनीं भजंति। भक्त्यैव देवमनुजाः कनकारविंदे बद्धासनामविरतं कमलां स्तुवंति। देवीं चतुर्भुजां चैव हस्ते चैव गदाधरां। शार्ङ्गखड्गधरां चैव सौम्याभरणभूषितां। सरस्वती पद्मिनी च पद्मकेसरवासिनी। नमोस्तु ते महादेवि तथा महिषमर्दिनि। चराचरकुले चैव वरोद्भवसमागते। नीलकंठप्रिये देवि क्षमस्व जगदंबिके। अपराधाः कृताः सर्वे मया जन्मनि जन्मनि। तत्सर्वं क्षम्यतां देवि मातर्मे श्रुतिशारदे। सापराधोऽपि शरणं प्राप्तस्त्वां जगदंबिके। इदानीमनुकंप्योहं यद्वांछसि कुरुष्व तत्। इति स्तुत्वा स शर्वाणीं प्रणम्य च पुनः पुनः। कृतसंध्याविधिस्तत्र शेतेस्माकृतभोजनः। स्वप्ने मूर्तिमयी देवी विप्रमेवं समादिशत्। गोपते वत्स तुष्टाहं याह्युपांगं महीपतिं। मत्पूजनकरंडस्य याचस्व च पिधानकं। तत्पूजयन्निजगृहे परामृद्धिमवाप्स्यसि। स्वप्न इत्याप्तसंदेशात्प्रबुद्धो गोपतिस्तदा। राजदर्शनवेलायां नृपद्वारं समभ्यगात्। प्रविष्टोऽसौ नृपसभां प्रतीहारैर्निवेदितः। राज्ञा संभावितस्तत्र निषसादासने शुभे। पृष्टागमनहेतुश्च ययाचे नृपपुंगवं। देवार्चनकरंडस्य पिधानं देहि मे नृप। याचितः स तु विप्रेण जातादेशो नृपोप्यदात्। पिधानकं नमस्कृत्य तस्मै वासोधु-

नानि च । आशीर्भिरभिनंद्याथ तमामंत्र्य च भूपतिं । उपांगललितादेव्याः प्रासादं पुनरागमत् । प्रणिपत्यांबिकां विप्रस्त्वरितो निर्ययौ बिलात् । समीपे स्वपुरं दृष्ट्वा हृष्टो गृहमुपाविशत् । सुहृद्भिः सह संगम्य तत्सर्वं कथयन्मुदा । पूजयित्वा पिधानं तद्विदधे पारणां ततः । एवमाराधयंस्तत्तु सुसमृद्धोऽभवत्पुनः । सोऽपि सत्रं समारेभे द्विजाग्र्यो बहुवासरं । अथ तस्याभवत्कन्या ललिता नाम सुंदरी । सा तत्पिधानमादाय विहर्तुं याति सर्वदा । प्रमत्तत्वात्प्रियत्वाच्च पितृभ्यामनिवारिता । कदाचित्सा वयस्याभिः साकं गंगाजले शुचौ । क्रीडंती ददृशे तोये नीयमानं कलेवरं । पिधानहस्ता सासिंचदन्याः प्रांजलिभिस्तदा । स सर्पदष्ट उत्तस्थौ ततो देव्याः प्रसादतः । सातिकांतं द्विजं दृष्ट्वा मनसा चकमे पतिं । जुहावाभ्यवहाराय जनकस्य निकेतनं । मार्गे च परिपप्रच्छ कुलशीलादिकं च सा । स च तत्सर्वमाचख्यौ गुणराशीति नाम च । ललितामंत्रयामास गुणराशिं द्विजोत्तमं । परिविष्टेषु विप्रेषु पितुर्मे वेश्मनि द्विज । गृहीतापोशनो भूत्वा भार्यार्थं च त्वमर्थय । मयानुमोदितस्तस्य स मां तुभ्यं प्रदास्यति । तयोक्तो गुणराशिस्तु यथार्थं च चकार सः । गोपतिर्भार्यया साकं विचार्य च सबांधवः । परीक्षिताय विप्रत्वे विद्यादि कुलशीलकं । प्रददौ स तदा कन्यां ललितां गुणराशये । शुभे मुहूर्ते विधिवद्विवाहमकरोत्तदा । वराय ब्राह्मणेभ्यश्च ददौ बहु धनं मुदा । प्रददौ च तयोर्गेहमदूराच्च स्ववेश्मतः । तत्रोषतुः सानुरागौ मिथस्तौ दंपती चिरं । पिधानकं तु तन्नीतं निजं ललितया गृहं । शनैर्धनं तु तत्सर्वं गोपतेरगमद्गृहात् । गुणराशिर्धनी जातो महामायाप्रसादतः । करंडस्य पिधानं तज्जनन्या बहुवासरं । याचितापि न वै दद्याल्ललिताऽपूजयद्गृहे । अथ सा गोपतेर्जाया तस्यैवानर्चनाद्धतं । वित्तं विचिंत्यातिपापाज्जामातरमघातयत् । समिदर्थं वनं यांतं स्वयं तद्गृहमागता । शोचंती किल तां कन्यां स तु देव्याः प्रसादतः । उत्थाय विपिनादेत्य भुक्त्वा शेते सुखं गृहे । पादसंवाहनं तस्य कुरुते ललिता शुभा । तं दृष्ट्वा दुःखिता भूमौ प्रणिपत्य पुनः पुनः । गुणराशिस्तदा तस्यै प्रायश्चित्तमदाद्बहु । सात्मानं बहुकालेन

पुनः कृच्छ्रादिभिः शनैः। श्रीपतेस्त्वचलां लक्ष्मीं समालोक्य तपोधनाः। गोपतिस्तमथापृच्छद्भ्रातस्त्वं वर्तसे कथं। किमाचरसि कल्याणं येन श्रीरनपायिनी। इति तस्य वचः श्रुत्वा श्रीपतिर्विस्मितस्तदा। सस्माराथ व्रतं देव्या यत्कृतं गुरुमंदिरे। सोऽपि भक्त्या व्रतं चक्रे पुनर्भ्रातृपदेशतः। अलभत्परमामृद्धिं पुनश्च मुदितोऽभवत्। उपांगललितादेव्याः कुर्यादाराधनं शुभं। एवमेतत्पुरा वृत्तं माहात्म्यं कथितं मया। कृतमन्यैश्च बहुभिस्तेऽपि लब्धमनोरथाः। व्रतमेतत्तु यः कुर्यादपुत्रः पुत्रवान्भवेत्। इत्येतद्व्रतमाख्यातं पुरावृत्तं द्विजोत्तमाः। इदं तु ललितादेव्याः कृत्वा व्रतमनुत्तमं। पूज्यो भवति लोकस्य सत्यं सत्यं न चान्यथा। इति श्रीस्कंदपुराणे उपांगललिताव्रतकथा संपूर्णा॥

अत्रैव पक्षे मूलनक्षत्रे पुस्तकेषु सरस्वतीमावाहयेत्। ततोऽध्यापनादि न कुर्यात्।—आश्विनस्य सिते पक्षे मेधाकामः सरस्वतीं। मूलेनावाहयेद्देवीं पूर्वाषाढासु पूजयेत्। उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेत्। इति **संग्रहोक्तेः**।—नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन। पुस्तके स्थापिते दैवे विद्याकामो द्विजोत्तमः। इति **रुद्रयामलाच्च**। कार्यद्वयेपि नक्षत्रद्वयं पूर्वविद्धं। सामान्यनिर्णयानुसरणादाचाराच्च।

अत्रैव पक्षे दशम्यामपराजितापूजनं। तच्चापराह्णव्यापिन्यां—दशम्यां तु जनैः सम्यक्पूजनीयाऽपराजिता। ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः। इति **स्कान्दात्**। परदिन एवापराह्णव्याप्तौ परैव। तदभावेपि परस्यामेव श्रवणयोगेपि परैव।—उदये दशमी किंचित्संपूर्णैकादशी यदि। श्रवणर्क्षे यदा कार्या सा तिथिर्विजयाभिधा। श्रवणर्क्षे तु पूर्णायां काकुत्स्थो निर्गतो यतः। उल्लंघयेयुः सीमानं तद्दिनर्क्षे ततो नराः। इति **कश्यपवचनात्**पक्षांतरेषु सर्वेषु पूर्वैव—या पूर्णा नवमीयुक्ता तस्यां पूज्यापराजिता। क्षेमार्थं विजयार्थं च पूर्वोक्तविधिना नरैः। नवमीशेषयुक्तायां दशम्यामपराजिता। ददाति विजयं देवी पूजिता जयवर्धिनी। एकादश्यां न कुर्वीत पूजनं चापराजितम्। इति **स्कान्दात्**। यथौदयिकस्वल्पदशम्या एव श्रवणयोगे यां तिथिमित्यादिना साकल्यमादायापराह्णेऽपराजितापूजनं भवति। नैवं पक्षांतरेषूचितमिति ज्ञापनार्थं-

मुक्तं एकादश्यां नेति । अस्यामेव दशम्यां विजयमुहूर्तव्यापिन्यां देशांतरयात्रार्थिभिर्यात्रा विधेया ।—आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु । सायंकाले शुभा यात्रा दिवा वा विजयक्षणे । इति भृगुवचनात् । सर्वेति चंद्रानुकूल्यं नापेक्ष्यमित्याशयः । ईषत्संध्यामतिक्रान्तः किंचिदुद्भिन्नतारकः । विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः । इति ज्योतिःशास्त्रोक्तविजयमुहूर्ताभिप्रायं सायमिति । एकादशो मुहूर्तोपि विजयः परिकीर्तितः । तस्मिन्सर्वैर्विधातव्या यात्रा विजयकांक्षिभिः । इति भृगूक्तविजयमुहूर्तस्यानुकूल्यत्वाशयं दिवा वेति । एकादशीयुक्ते उक्तमुहूर्तेपि प्रस्थानं न विधेयं । दशमीं यः समुल्लंघ्य प्रस्थानं कुरुते नरः । तस्य संवत्सरं राज्ये न कोपि विजयो भवेत् । इति स्कांदनिषेधात् ।

अत्र राजानं प्रति विशेषो गोपथब्राह्मणे—राजा निर्गत्य भवनात्पुरोहितपुरोगमः । प्रास्थानिकविधिं कृत्वा प्रतिष्ठेत्पूर्वतो दिशि । गत्वा नगरसीमांतं वास्तुपूजां समारभेत् । संपूज्य चाथ दिक्पालान्पूजयेत्पथि देवताः । मार्गे शमीमूले दिक्पालपूजनपूर्वकं वास्तुदेवतापूजनं कुर्यादित्यर्थः ।—मंत्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुं । अमंगलानां शमनीं शमनीं दुष्कृतस्य च । दुःस्वप्ननाशिनीं धन्यां प्रपद्येहं शमीं शुभां ।—ततः कृताशीः पूर्वस्यां दिशि विष्णुक्रमान्क्रमेत् । रिपोः प्रतिकृतिं कृत्वा ध्यात्वा च मनसाथ तं । शरेण स्वर्णपुंखेन विध्येद्धृदयमर्मणि । दिशां विजयमंत्राश्च पठितव्याः पुरोधसा । पूर्वमेव विधिं कुर्याद्दक्षिणादिदिशास्वपि । पूज्यान्द्विजांश्च संपूज्य सांवत्सरपुरोहितौ । गजवाजिपदातीनां प्रेक्षाकौतुकमाचरेत् । जयमंगलशब्देन ततः स्वभवनं विशेत् । नीराज्यमानः पुण्याभिर्गणिकाभिः समंगलं । एवं यः कुरुते राजा वर्षे वर्षे सुमंगलं । आयुरारोग्यमैश्वर्यं विजयं च स गच्छति । नाधयो व्याधयस्तस्य भवंति न पराजयः । श्रियं पुण्यमवाप्नोति विजयं च सदा भुवि । इति । अत्रैवापराह्णे सीमोल्लंघनमपराजितापूजनं चान्यैरपि कार्यं । उल्लंघयेयुः सीमानं तद्दिनर्क्षे ततो नराः । इति कश्यपवचनात्—दशम्यां च नरैः सम्यक्पूजनीयाऽपराजिता । ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः । इति पुराणसमुच्चयवचनात् ।

पूजाप्रकारश्च । अपराह्णे ग्रामादैशान्यां दिशि गत्वा शुचिदेशे भुवमुपलिप्य चंदनादिनाष्टदलमालिख्य देशकालकीर्तनांते क्षेमसिध्यै अपराजितापूजनं करिष्ये इति संकल्प्य अपराजितायै नम इति मध्येऽपराजितां दक्षिणतः क्रियाशक्त्यै नम इति जयां वामत उमायै नम इति विजयां प्रतिष्ठाप्यापराजितायै नमः जयायै नमः विजयायै नम इति षोडशोपचारैः संपूज्य प्रणम्य विसर्जयेत् । तत्र मंत्रः—इमां पूजां मया देवि यथाशक्ति निवेदितां । रक्षार्थं तु समादाय व्रज स्वस्थानमुत्तमं । इति । राज्ञः संकल्पे यात्रायां विजयसिध्यै इति विशेषः । प्रणामानंतरं च संप्रार्थयेत् ।—चारुणा मुखपद्मेन विचित्रकमलोज्ज्वला । जयादेवी शिवे भक्ता सर्वान्कामान्ददातु मे । कांचनेन विचित्रेण केयूरेण विभूषिता । जयप्रदा महामाया शिवभावितचेतसा । विजया च महाभागा ददातु विजयं मम । हारेण तु विचित्रेण भास्वत्कनकमेखला । अपराजिता भद्ररता करोतु विजयं मम । इति । ततो हारिद्रवस्त्रे सदूर्वसिद्धार्थान्वलयाकारं प्रदक्षिणमाबध्य तदभिमंत्रयेन्मंत्राभ्यां ।—सदापराजिता यस्मात्त्वं लतासूत्तमा स्मृता । सर्वकामार्थसिद्ध्यर्थं तस्मात्त्वां धारयाम्यहं । भवापराजिते देवि मम सर्वसमृद्धये । पूजितायां त्वयि श्रेयो ममास्तु दुरितं हतं । इति दक्षिणबाहौ मंत्राभ्यां धारयेत् । जयदे वरदे देवि दशम्यामपराजिते । धारयामि भुजे दक्षे जयलाभाभिवृद्धये । बलमाधेहि वलयमपि शत्रौ पराजयं । त्वद्धारणाद्भवेयुर्मे धनधान्यसमृद्धयः । इति । ततः पूर्ववद्विसर्जनं । ततो देवालयादिगतदेवीनीराजनं । चतुरंगबलं मह्यं निररिष्टं व्रजत्विह । सर्वत्र विजयो मेऽस्तु त्वत्प्रसादात्सुरेश्वरि । इति । कृत्वा नीराजनं राजा बलसिध्यै यथाक्रमं । शोभनं स्वजनं पश्येज्जलगोगोष्ठसंनिधौ ॥

अथ शमीपूजनं । तत्र मंत्रो दर्शितः अमंगलानां शमनीमिति । पूजायां विशेषो भार्गवार्चनदीपिकायां—शमीयुक्तं जगन्नाथं भक्तानामभयंकरं । अर्चयित्वा शमीवृक्षमर्चयेच्च ततः पुनः । इति । पूजांते शमीं प्रार्थयेत् । तत्र मंत्रो भविष्ये—शमी शमयते पापं शमी लोहितकंटका । धरिण्यर्जु-

नवाणानां रामस्य प्रियवादिनी । करिष्यमाणयात्रायां यथाकालं सुखं मया । तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते । इति ।—गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदं । गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति । ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह । इति ।

**अथैकादश्यादिकृत्यं निर्णयामृते ब्राह्मे**—सोपवासश्च कर्तव्य एकादश्यां प्रजागरः । द्वादश्यां वासुदेवस्य पूजनीयश्च सर्वदा । यात्रोत्सवश्च कर्तव्यस्त्रयोदश्यां तु वैष्णवैः । उपवासश्चतुर्दश्यां पौर्णमास्यां हरिं जपेत् । इति । तथा तत्रैव **विष्णुः**—आश्वयुज्यां अश्विनीगतेन चंद्रमसा घृतपूर्णपात्रं सुवर्णयुक्तं विप्राय दत्त्वा दीप्ताग्निर्भवतीति । तत्रैव **भारते**—पूर्णिमा चाश्विने मासि कौमुदी परिकीर्तिता । कौमुद्यां पूजयेल्लक्ष्मीमिंद्रमैरावतस्थितं । निशि जागरणं कृत्वा परेह्न्युत्सवमाचरेत् । इति ।

**अत्रैवाश्वयुजीकर्मोक्तमाश्वलायनेन** । पर्वद्वैधे विकृतित्वात्खंडपर्वणि कार्यं । अथ तत्प्रयोगः । पूर्वेद्युरुपलेपनवितानबंधनादिना गृहमलंकृत्य भुवं समीकृत्य । परेद्युः सर्वे गृह्याः कृताभ्यंगस्नाना धौतशुक्लांबरधरा भवेयुः । औपासने हुते प्रथमप्रयोगे स्वस्तिवाचननांदीश्राद्धे कार्ये । देशकालौ संकीर्त्य मम स्त्रीपुत्रादिसहितस्य न्यूनापेक्षितविषयसंपूर्णतापूर्णानवसादनसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं आश्वयुजीकर्म करिष्य इति संकल्प्य । चक्षुषी आज्येनेत्यंते अत्र प्रधानं । पशुपतिं शिवं शंकरं पृषातकं चरुणा पृषातकं पृषातकद्रव्येण शेषेणेत्यादि । पात्रासादने चरुस्थाल्या सह पृषातकस्थाल्यासादनं । प्रोक्षणे स्थाल्योः सह प्रोक्षणं । दर्व्या सह स्वांजलेस्ते कार्ये । पशुपतये त्वाजुष्टं निर्वपामि । पशुप० प्रोक्षामीति निर्वापप्रोक्षणे । चरुश्रपणांते सादितपात्रे पयो निषिच्य । पयस्याज्ये निषिक्ते तु तत्पयः स्यात्पृषातकमिति वृत्तिकृत् । जयंतस्तु उभयं पृषातकपदवाच्यमित्याह । चरुपृषातकाभ्यां सह आज्यं पर्यग्निकृत्योत्पवनपक्षे पृषातकं त्रिःप्रोक्ष्य आज्यभागांते पुत्रादिभिरन्वारब्धश्चरुमवदाय । ॐ पशु-

१ 'प्रियवर्धिनी ।' २ संनिवासश्च ।

पतये शिवाय शंकराय पृषातकाय स्वाहेति जुहुयात् । पृषातकायेदं० । ततो यजमानांजलावन्यः कश्चिदुपस्तीर्य स्रुवेण पृषातकं द्विरवदायाभिघारणं करोति । ततो यजमानो जुहोति । ऊनं मे पूर्यतां पूर्णं मे मोपसदत्पृषातकाय स्वाहेति । पृषातकायेदं० । ततः स्विष्टकृदर्थमुपस्तीर्य चरोर्हस्तेन पृषातकस्य स्रुवेणोत्तरार्धादवदाय द्विरभिघार्य स्विष्टकृदादिकर्मांते दश त्रीन्वाब्राह्मणान्भोजयेत् । इत्याश्वयुजीकर्म ।

तिथिदीधित्युक्ताग्रयणकालनिर्णयरीत्या स्मार्ताग्रयणकालनिर्णयो बोध्यः । तदपि यद्यस्यामेव पौर्णमास्यां क्रियते तदाश्वयुजीकर्मणैकप्रयोजनं कार्यं । उक्तसंकल्पवाक्ये कर्मेत्यंते मम रोगजरानिवृत्तिश्रीर्यशोन्नप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं आग्रयणं करिष्ये इति विशेषः । आश्वयुजीदेवतानां पूर्वत्वं । जीर्णनवान्नपृषातकार्थं स्थालीत्रयमासाद्य । सौम्यचरुपक्षे तदीयस्थाल्या सह चतुष्टयं । पूर्वपक्षे शूर्पद्वयं उत्तरस्मिंस्त्रयं । प्रथमशूर्पे पशुपतये त्वेति निरुप्य द्वितीये तूष्णीमष्टौ मुष्टीन्नवान्नान्निरुप्य तृतीये सोमायत्वेति श्यामाकांश्चतुरोमुष्टीन्निरुप्य । पुनर्मध्यमशूर्पे तूष्णीं निरुप्य । सौम्याभावपक्षे द्वितीयशूर्पे क्रमेण द्वादशमुष्टीनां तूष्णीं निर्वापः । पक्षद्वयेपि निर्वापवत्प्रोक्षणं । सौम्यसत्वे जीर्णव्रीहिश्यामाकानां क्रमेण त्रिःफलीकरणांतोऽवघातः कार्यः । तदभावे द्विः । आज्यभागांते कृते पृषातकहोमांतं पूर्ववत्कृत्वा नवव्रीहिचरोरवदायावदाय । सजूर्ऋतुभिः सजूर्विधाभिः सजूरिंद्राग्निभ्यां स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्योदेवेभ्यः स्वाहा । इति आहुती जुहुयात् । इंद्राग्निभ्यामिदं० । विश्वेभ्यो देवेभ्यइदं० । इति त्यागौ । ततः श्यामाकचरोरवदाय ॐ सोमाय स्वाहेति जुहुयात् । सोमायेदं० । पुनर्व्रीहिचरोरवदाय सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहा । द्यावापृथिवीभ्यामिदं० । ततः क्रमेण हविस्त्रयस्य हविश्चतुष्टयस्य वा उत्तरार्धादवदाय स्विष्टकृतं हुत्वेध्मसंनहनं प्रहृत्य । वैश्वदेववर्जं आग्रयणहविषां तद्धविषो वैकदेशमादाय विहाराद्बहिः प्राङ्मुखः सव्येपाणौ कृत्वा दक्षिणेनाभिमृशति । प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्यायेति । ततो—भ-

द्रान्नः श्रेयः समनैष्ट देवास्त्वयावशेन समशीमहि त्वा । स नो मयोभूः पितेवाविशेह शन्नो भव द्विपदे शं चतुष्पदे । इति प्राश्याचम्य तद्देश एवासीनो नाभिमालभेत । अमोसि प्राण तदृतं ब्रवीम्यमांसि सर्वानसि प्रविष्टः । समे जरां रोगमपनुद्य शरीरादमाम एधि मम्रृथाम इंद्र । इति । पत्नीतु वैश्वदेवशेषं तूष्णीं प्राश्नीयात् । ततः कर्मशेषं समाप्य विंशतिं षड्वा ब्राह्मणान्भोजयेत् । कालांतरे त्वाग्रयणं उक्तप्रयोगगताश्वयुजीपदार्थपरिहारेणोह्यं । सौम्यविकल्पश्च वृत्तिकृतोक्तः । श्यामाकैस्तु प्रस्तरं कुर्यान्नाग्रयणं दृष्टत्वात् । अपिचात्र समानतंत्रं कुर्यात्सौम्यं चरुं तस्य च नामधेयेन होम इति । सच द्यावापृथिवीयात्प्रागुचितः श्रौतसूत्रदृष्टक्रमानुसरणात् । तथान्यदपि तदुक्तमनुसंधेयं । अनाहिताग्निना स्थालीपाक एव कार्यो नाग्निहोत्रीं वैतानादपि त्वेत्ययं पक्ष कार्य इत्याग्रयणं । अस्यामेव तिथौ आचारप्राप्तं ज्येष्ठापत्यनीराजनादि परविद्धायामेव कार्यं । येनार्जितानि युधि भूमिपतीन्विजित्य दुर्गाणि दुर्ग्रहतराणि निजैः कटाक्षैः । श्रीवाजबाहदुरसंज्ञनृपस्य तस्य वाचा हरेरिव गिरावनिदेवतुष्ट्यै । योऽनंतदेवकृतमंथन० । दीधितिरियं स्मृतिकौस्तुभस्य ॥

अथ कार्तिककृत्यं । तदाह निर्णयामृते विष्णुः—कार्तिकं सकलं मासं नित्यस्नायी जितेंद्रियः । जपन्हविष्यभुग्दांतः सर्वपापैः प्रमुच्यते । इति । वामनपुराणेपि—राजतं कांचनं दीपान्मणिमुक्ताफलादिकं । दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्तिके नरः । इति । हेमाद्रौ दीपदानविधिः—पूर्णे आश्वयुजे मासि पौर्णमास्यां समाहितः । प्रथमे च निशारंभे मनोवाक्कायसंयतः । नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे । नमो यमाय रुद्राय कांतारपतये नमः । दद्यादनेन मंत्रेण दीपं श्रद्धासमन्वितः । यः कार्तिकं समग्रं तु वर्धते तस्य संपदः । दिवाकरेऽस्ताचलमौलिभूते गृहाददूरे पुरुषप्रमाणं । यूपाकृति यज्ञियवृक्षदारुमारोप्य भूमावथ तस्य मूर्ध्नि । यवांगुलच्छिद्रयुतास्तु तत्र द्विहस्तदीर्घाश्च सुपट्टिकास्तु । कृत्वा चतस्रोऽष्टदलाकृतीस्तु याभिर्भवेदष्टदिशानुसारी । अष्टयवैर्मितमंगुलं यवांगुलं । तत्कर्णिकायां तु महाप्रकाशो दीपः

प्रदेयो दलगास्तथाष्टौ । स्वदिङ्मुखा दीपवरास्तु तैलघृतादि-
युक्ताश्च यथोपलब्धं । अनंगलग्नं त्वथ वस्त्रखंडं नवं सुरक्तं
त्वथवा सुशुक्लं । अनंगलग्नं अपरिहितं । धन्यं प्रयोज्यं च
सुखं च हृद्यं स्निग्धं सुशोभं सुसमं समस्तं । तच्छालिपिष्टो-
परि संनिधेयं यथा न नश्येन्न च कंपते वा । सर्वं प्रकुर्यात्त्रि-
गुणप्रमाणं मध्येहि तस्याप्यथ दीपराज्यः । दलेषु शोभाढ्यमतीव
कुर्यान्मनोरथानामुपलब्धये च । घंटाष्टकं लंबितपुष्पदाम सुव-
स्त्रशोभान्वितमत्र पश्चात् । संयोज्य भूमिं त्वथ गोमयेन स-
चंदनाक्तेन जलेन लिप्त्वा । अनेकवर्णैरथ मंडले तु कृत्वाष्ट-
पत्रं कमलप्रमाणं । फलानि मूलानि तथाक्षतानि लाजा दधि
क्षीरमथान्नपानं । नानाविधं भक्ष्यविशेषणं च सनृत्यगीतं मधुरं
च वाद्यं । निवेद्य धर्माय हराय भूमौ दामोदरायाप्यथ धर्म-
राज्ञे । प्रजापतिभ्यस्त्वथ सत्पितृभ्यः प्रेतेभ्य एवाथ तपःस्थि-
तेभ्यः । नैर्ऋत्यकोणादथ दक्षिणांतं धर्मादिभ्यः प्रेतपर्यंति-
केभ्यः । ततो जलं शीतलमानयित्वा सर्पिःसमध्वक्तमतीव
गृह्यं । आपूर्य चाष्टौ कलशान्जलेन नैर्ऋत्यकोणादथ सन्नि-
धाय । हेमादिपात्रं तिलहेमपूर्णं दद्यात्पिधानं च सदक्षिणं
च । गोभूहिरण्यं रजतं च वस्त्रं फलानि मूलानि यवाश्च
धान्यं । गृहं रथं शयनं वाहनं च यद्वापि किंचिद्धृदये म-
नोज्ञं । निवेदयेद्ब्राह्मणसत्तमेभ्यो नैर्ऋत्यकोणाद्यथ संस्थि-
तेभ्यः । एकैकशः प्रीणनं चाथ कुर्यात्स्वशक्तिमादौ स्वधनं
विचार्य । दीपान्समग्रानथ वर्जयित्वा सर्वं नयेयुस्त्वथ विप्र-
मुख्याः । प्रदक्षिणीकृत्य वनांगनां तु ततो भवेत्संयतनक्त-
भोजी । वनांगना वनदेवता दीपस्तंभमूर्तिः । इतीदमीहग्व्यहा-
रयुक्तं निशागमे प्रत्यहमेव कुर्यात् । मासं समग्रं परया च
भक्त्या समाप्यते कार्तिकपौर्णमास्यां । दिनत्रयं दीपमहोत्सवं
वा एकोऽथ वा दीपवरश्च देयः । तथाश्वयुज्यादि समग्रमासं
निशागते प्रत्यहमेव भक्त्या । नमोस्तु कांतारकदेवताभ्य इ-
त्येवमुक्त्वा स्वगृहस्य शांत्यै । नार्या नरेणाथ सुसंयतेन भक्त्या
युतेनाथ निशासु भोज्यं । संध्यात्रये दीपवराश्च देया रात्र्या-
गमे कार्तिकपौर्णमास्यां । नदीतटे चैव गृहांतरे वाप्यथैकलिं-
गेष्वथ चैत्यवृक्षे । सहस्रमष्टाधिकमत्र तैलपलस्य पात्रे सुशुभे शतं

वा। देयं तदर्धैरथवा तदर्धैः प्रमाप्य रिक्तास्त्वथ पूरणीयाः। प्रमाप्य तोलनादिना तैलपरिमाणं निर्णीय। हस्तान्स्वकीयांश्च चतुर्दशैव प्रमाप्य वस्त्रं त्वथ सूत्रवर्तिं। प्रज्वालयेत्तां च निरुध्य धीमांस्त्रीणामलंकारयुतैः प्रयुज्य। देवीमहावर्तिरतीव वंद्या पुण्या च या सा भुवनप्रकाशा। एतन्न कुर्यादथ यस्तु मंदस्तस्यांधकारस्य कुतः प्रशान्तिः। अयं हि दीपः किल कल्पवृक्षश्चिंतामणिर्भद्रकरोथ रेणुः। अनेन दीपेन मनोरथानां संप्राप्तिरस्तीति न संशयोऽत्र। एतानि चोक्त्वाथ कचिद्वचांसि दामोदरश्चांतरितो बभूव। इति। तथा दीपवर्तिगतविशेषविधिरपि तत्रैव सूर्याय रक्तवस्त्रेण पूर्णवर्तिं प्रबोधयेदिति **अपरार्के** भविष्योत्तरे तु—विष्णोरायतने यस्तु सहस्रं परिदीपकान्। प्रज्वालयत्यनुदिनं दिवारात्रमनिर्वृतः। तामिस्रमश्वयुक्पक्षे शुक्लपक्षं तु कार्तिके। स याति भवनं विष्णोस्तेजोमयवपुः पुमान्। **दीपदाने मंत्रः**—दामोदराय नभसि तुलायां दोलया सह। प्रदीपं ते प्रयच्छामि नमोनंताय वेधसे। इति।

**अथ स्नानविधिः।** मुहूर्तावशेषितायां रात्रौ आश्विनशुक्लदशमीमेकादशीं वा आरभ्य तदसंभवे तत्पूर्णमासीं वा आरभ्य तीर्थादौ गत्वा प्रत्यहं स्नानं कार्यं। नाडीद्वयावशिष्टायां रात्र्यां गच्छेज्जलाशयं। इत्यादि **पाद्मादिवचोभ्यः**। ततो विष्णुं स्मृत्वा देशकालौ संकीर्त्य अर्घ्यदानपूर्वं स्नानं कुर्यात्। **तत्रार्घ्यमंत्रः**—नमः कमलनाभाय नमस्ते जलशायिने। नमस्तेस्तु हृषीकेश गृहाणार्घ्यं नमोस्तुते। **अथ स्नानमंत्रौ**—कार्तिकेऽहं करिष्यामि प्रातः स्नानं जनार्दन। प्रीत्यर्थं तव देवेश दामोदर मया सह। ध्यात्वाहं त्वां च देवेश जलेऽस्मिन्स्नातुमुद्यतः। तव प्रसादात्पापं मे दामोदर विनश्यतु। इति। ततोऽर्घ्यं पुनर्द्विर्दद्यात्। नित्ये नैमित्तिके कृष्ण कार्तिके पापनाशने। गृहाणार्घ्यं मया दत्तं राधया सहितो हरे। व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम। गृहाणार्घ्यं० हरे। इति। अन्योपि स्नानगतो विशेषः **पाद्मे**—स्मृत्वा भागीरथीं विष्णुं शिवं सूर्यं जले विशेत्। नाभिमात्रे जले तिष्ठेद्व्रती स्नायाद्यथाविधि। तिलामलकचूर्णेन गृही स्नानं समाचरेत्। वनस्थानां यतीनां च तुलसीमूलमृत्तिका। स्नानसाधनमिति शेषः। स-

सप्तमीदर्शनवमीद्वितीयादशमीषु च। त्रयोदश्यां च न स्नाया-द्धात्रीफलतिलैः सह। इति कार्तिकस्नानं। **मथुरामाहात्म्ये** **तत्रैव**—दुर्लभः कार्तिको विप्र मथुरायां नृणामिति। वि-स्तरेण चैतन्मथुरासेतौ द्रष्टव्यं। **पंचनदमाहात्म्यं काशी-खंडे**—शतं समास्तपस्तप्त्वा कृते यत्प्राप्यते फलं। तत्कार्तिके पंचनदे सकृत्स्नानेन लभ्यते। कार्तिके विंदुतीर्थे यो ब्रह्मचर्य-परायणः। स्नास्यत्यनुदिते भानौ भानुजातस्य भीः कुतः। इति। भानाविति तदुदयकाल इत्यनुकल्पविधिः। मासस्नानासंभवे त्र्यहस्नानमपि तत्रैवोक्तं।—वाराणस्यां पंचनदे त्र्यहस्नातास्तु कार्तिके। अमी ते पुण्यवपुषः पुण्यभाजोऽतिनिर्मलाः। इति। **तुलसीधात्र्योः** कार्तिके माहात्म्यमुक्तं **पाद्मे**—तुलसीका-ननं राजन् गृहे यस्यावतिष्ठति। तद्गृहं तीर्थरूपं तु न यांति यमकिंकराः। रोपणात्पालनात्स्पर्शान्नृणां पापहरा तथा। तु-लसी हरते पापं वाङ्मनःकायसंभवं। तुलसीमंजरीभिर्यः कुर्याद्धरिहरार्चनं। न स गर्भगृहं याति मुक्तिभागी न सं-शयः। तुलसीविपिनच्छाया यत्र यत्र भवेन्नृप। तत्र श्राद्धं प्रकुर्वीत पितॄणां दत्तमक्षयं। तुलसीदललक्षेण कार्तिके यो-ऽर्चयेद्धरिं। पत्रेपत्रे मुनिश्रेष्ठ मौक्तिकं लभते फलं। धात्रीछा-यासु यः कुर्यात्पिंडदानं नृपोत्तम। तृप्तिं प्रयांति पितरस्तस्य ये नरके स्थिताः। मूर्ध्नि पाणौ मुखे चैव देहे च नृपसत्तम। धत्ते धात्रीफलं यस्तु स च ज्ञेयो हरिः स्वयं। देवार्चनं नरः कु-र्याद्धात्रीपत्रैः फलैरपि। सुवर्णपुष्पैर्विविधैरर्चनस्याप्नुयात्फलं। तीर्थानि मुनयो देवा यज्ञाः सर्वेऽपि कार्तिके। नित्यं धात्रीं समाश्रित्य तिष्ठंत्यर्के तुलास्थिते। इति। **स्कान्दे**—कार्तिके मासि विप्रेंद्र धात्रीवृक्षोपशोभिते। वरं दामोदरं विष्णुं चि-त्रान्नैस्तोषयेद्विभुं। मूलेन पायसेनाथ होमं कुर्याद्विचक्षणः। ब्रा-ह्मणान्भोजयेद्भक्त्या स्वयं भुंजीत बंधुभिः। इति।

**हरिजागरविधिः पाद्मे**—जागरं कार्तिके मासि यः कुर्यादरुणोदये। दामोदराग्रे सेनानीर्गोसहस्रफलं लभेत्। इति। तथा। विष्णोः शिवस्य वा कुर्यादालये हरिजागरं। शि-वविष्णुगृहाभावे सर्वदेवालयेष्वपि। दुर्गारण्यस्थितो यश्च यदि वापद्गतो भवेत्। कुर्यात्तदाश्वत्थमूले तुलसीनां वनेष्वपि।

विष्णुनामप्रबंधानि यो गायेद्विष्णुसंनिधौ । गोसहस्रप्रदानस्य फलमाप्नोति मानवः । वाद्यकृत्पुरुषश्चापि वाजपेयफलं लभेत् । सर्वतीर्थावगाहोत्थं नर्तकः फलमाप्नुयात् । सर्वमेतल्लभेत्पुण्यं तेषां तु द्रव्यतः पुमान् । अर्चनाद्दर्शनाद्वापि तत्षडंशमवाप्नुयात् । इति । तथा—अभावे तुलसीनां तु वैष्णवं पूजयेद्द्विजं । यस्मात्संनिहितो विष्णुः स्वभक्तेष्वपि सर्वदा । सर्वाभावे व्रती कुर्याद्ब्राह्मणानां गवामपि । सेवामश्वत्थवटयोर्व्रतसंपूर्णहेतवे ।

**पुष्पविशेषविधिः पाद्मे**—सरोरुहाणि तुलसी मालती मुनिपुष्पकं । कार्तिके विहितान्येवं दीपदानं तु पंचमं । केतकीपुष्पेणैकेन पूजितो गरुडध्वजः । समासहस्रं सुप्रीतो जायते गरुडध्वजः । कार्तिके नार्चितो यैस्तु कमलैः कमलेक्षणः । जन्मकोटिषु विप्रेंद्र न तेषां कमला गृहे । अपराधसहस्राणि अपराधशतानि च । पद्मेनैकेन देवेशः क्षमते हरिरर्चितः । विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवं । कार्तिके योऽर्चयेद्भक्त्या वाजिमेधफलं लभेत् । इति । कार्तिके यत्यादिर्मासोपवासं कुर्यान्नतु गृहस्थः ।—वानप्रस्थो यतिर्वापि नारी वा विधवा मुने । मासोपवासं कुर्वीत गुरोर्विप्राज्ञया यतः । आश्विनस्यामले पक्षे एकादश्यामुपोषितः । व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु । इति प्रकृत्य न गृहस्थश्चरेद्व्रतमिति पाद्मोक्तेः ।

**पक्षांतराणि काशीखंडे**—कृच्छ्रं वा चातिकृच्छ्रं च प्राजापत्यमथापि वा । संप्राप्ते कार्तिके मासि कुर्याच्छक्त्यातिपुण्यवान् । कृच्छ्रोऽत्र—एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन चैकेन पादकृच्छ्र उदाहृतः । इत्येष पादकृच्छ्रो ज्ञेयः । प्राजापत्यस्य पृथगुपादानात् । तत्रैव—एकांतरव्रतं कुर्यात्त्रिरात्रव्रतमेव वा । पंचरात्रं सप्तरात्रं संप्राप्ते कार्तिके व्रती । पक्षव्रतं वा कुर्वीत मासोपोषणमेव वा । नोर्जो वंध्यो विधातव्यो व्रतिना केनचित्क्वचित् । शाकाहारं पयाहारं फलाहारमथापि वा । चरेद्यवान्नाहारं वा संप्राप्ते कार्तिके व्रती । इति । **वर्ज्यान्युक्तानि पाद्मे**—पलांडुं लशुनं हिंगुं छत्राकं गृंजनं तथा । नालिकां मूलकं शिग्रुं वर्जयेत्कार्तिके व्रती । अलाबुं

चापि वृंताकं कूष्मांडं बृहतीफलं । कलिंगं च कपित्थं च व-र्जयेद्वैष्णवो व्रती । रजस्वलांत्यजम्लेच्छपतितावर्तकैः सह । द्विजविट्वेदबाह्यैश्च न वदेत्सर्वतो व्रती । इति । तथा । द्विःपाचितं च दग्धान्नं नैवाद्याद्वैष्णवो व्रती । क्रमात्कूष्मांडबृहती छत्राकं मूलकं तथा । श्रीफलं च कलिंगं च फलं धात्रीभवं तथा। नारिकेलं तथालावुं पटोलं वदरीफलं । चर्म वृंताकजं शाकं शाकं तुलसिजं तथा । शाकान्येतानि वर्ज्यानि क्रमात्प्रतिपदादिषु । धात्रीफलं रवौ तद्वद्वर्जयेत्सर्वदा गृही । इति । स्कान्देपि—कार्तिके वर्जयेत्स्नेहं द्विदलं बहुबीजकं । माषमुद्गमसूरांश्च चणकांश्च कुलित्थकान् । निष्पावान्राजमाषांश्च आढक्यो द्विदलं स्मृतं । नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत् । इति । काशीखंडेपि—पत्रभोजी भवेदूर्जे कांस्यं त्याज्यं प्रयत्नतः । कांस्यस्य नियमे दद्यात्कांस्यं सर्पिःप्रपूरितं । ऊर्जे न भक्षयेत्क्षौद्रमतिक्षौद्रगतिप्रदं । मधुत्यागे घृतं दद्यात्पायसं च सशर्करं । अभ्यंगेऽभ्यवहारे च तैलमूर्जे विवर्जयेत् । तैलत्यागे तिलान्दद्याद्द्रोणमात्रान्सकांचनान् । द्रोणः षोडशप्रस्थात्मकः । कुडवं प्रस्थमाढकं । द्रोणं च खारिका चेति पूर्वपूर्वाच्चतुर्गुणं । इति स्मृतेः । वहुले कांस्यभोजी यः स कृमिः पूयशोणिते । मांसाशिनश्च ये भूपास्त्यजेयुस्तेऽपि कार्तिके । नियमे मत्स्यमांसानां दद्याद्वै कार्तिके व्रती । कूष्मांडानि समाषाणि त्रिंशत्स्वर्णयुतान्यपि । त्रिंशदिति कूष्मांडविशेषणं । कार्तिके मौनभोजी यः सोऽश्नात्यमृतमेव हि । सुघंटां सतिलां मौनी सहिरण्यां प्रदापयेत् । कार्तिके लवणं त्यक्तं येन व्रतभृता सदा । त्यक्ताः सर्वे रसास्तेन तत्त्यागी गां प्रदापयेत् । भूशय्यां कार्तिके कुर्वन्न भुवं संस्पृशेद्व्रती । पर्यंकं भूशयो दद्यात्सतूलं सोपधानकं । इति । संस्पृशेत्प्रतिगृह्णीयात् । तथा—दीपं यः कार्तिके दद्यादखंडं घृतवर्तिकं । मोहांधतमसं प्राप्य न स गच्छति दुर्गतिं । इति । तत्रैव विधवाधर्मप्रकरणे—कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु । कार्तिके वर्जयेत्कांस्यं कार्तिके चापि संधितं । संधितं लवणशाकं । फलत्यागे फलं देयं रसत्यागे च तद्रसः । धान्यत्यागे च तद्धान्यमथवा शालयः स्मृताः । धेनूर्दद्यात्प्रयत्नेन सालंकाराः

सकांचनाः । एकतः सर्वदानानि दीपदानं तथैकतः । कार्तिके दीपदानस्य कलां नार्हति षोडशीं । उपसंहारे चोक्तं—भर्तृस्वरूपी भगवान्प्रीयतामिति चोच्चरेत् । इति । एतावद्व्रतासंभवे चातुर्मास्यव्रतासंभवे वा कार्तिके किंचिद्व्रतमवश्यं कार्यं ।—चतुर्ष्वपि च मासेषु न सामर्थ्यं व्रते यदि । तदोर्जे व्रतिना भाव्यमप्यब्दफलमिच्छता । इति । अव्रतः कार्तिको येषां गतो मूढधियामिव । तेषां पुण्यस्य लेशोपि न भवेत्सूकरात्मनां । इति **काशीखंडात्** । ऊर्जे व्रतं मधौ दोलां श्रावणे तंतुपूजनं । चैत्रे दमनकारोपमकुर्वाणो व्रजत्यधः । इति शास्त्रांतराच्च । **पाद्मे**—शालग्रामशिलाग्रे तु यः कुर्यात्स्वस्तिकं गृहे । कार्तिके तु विशेषेण पुनात्यासप्तमं कुलं । अणुमात्रं तु यः कुर्यान्मंडलं केशवाग्रतः । मृदा धातुविकारैश्च दिवि कल्पशतं वसेत् । मंडलं कुरुते नित्यं या नारी केशवाग्रतः । सप्तजन्मसु वैधव्यं सा नाप्नोति कदाचन । इति ।

अत्रैवेतिहासपुराणश्रवणं प्रकृत्य तदारंभसमाप्तिविधिर्हेमाद्रौ—कार्तिकादि महाबाहो कार्तिकं यावदेव तु । अग्निष्टोमं गोसवं च ज्योतिष्टोमं तथैव च । इति । भूयसो यज्ञानुक्रम्य—आदित्ययज्ञस्य तथा राजसूयाश्वमेधयोः । फलं प्राप्नोति राजेंद्र मासैर्द्वादशभिः क्रमात् । इत्थं यज्ञफलं प्राप्य लोकान्याति तथोत्तमान् । इति । **अन्योपि विशेषस्तत्रैव**—शूद्राणां परतो वैश्या वैश्यानां क्षत्रियास्तथा । क्षत्रियाणां तथा विप्राः शृण्वते तेग्रतः सदा । मध्ये स्थितोऽपि सर्वेषां विप्राणां वाचयेन्नृप । ये च संकरजा राजन्दूरात्ते शूद्रपृष्ठतः । ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरकं व्रजेत् । ब्राह्मणेन महाबाहो द्वौ देयौ क्षत्रियेण तु । वाचकस्य नृपश्रेष्ठ वैश्येनापि नृपैस्तथा । शूद्रे चाप्यथ चत्वारो दातव्याः स्वर्णमाषकाः । मासि मासि नृपश्रेष्ठ श्रद्धया वाचकस्य तु । तथा—समाप्तेषु पुराणेषु स्वशक्त्या तर्पयेन्नृप । वाचकं ब्राह्मणांश्चैव सर्वकामैः प्रपूजयेत् । हिरण्यं रजतं वस्त्रं गावः कांस्योपदोहनाः । दत्त्वा तु वाचकायेह श्रुतस्य प्राप्नुते फलं । वाचकः पूजितो येन प्रसन्नास्तस्य देवताः । श्राद्धे यस्य द्विजो भुंक्ते वाचकः श्रद्धयान्वितः । भवंति पितरस्तस्य तृप्ता वर्ष-

शतं नृप। तथा—विस्पष्टमद्भुतं शांतं स्पष्टाक्षरपदं तथा। कलास्वरसमायुक्तं रसभावसमन्वितं। ब्राह्मणादिषु सर्वेषु ग्रंथार्थं चार्पयेन्नृप। य एवं वाचयेद्राजन्स विप्रो व्यास उच्यते। इति। काशीखंडे पठितमभिलाषाष्टकं पुत्रकामेन पठनीयं। वैशाखे कार्तिके माघे विशेषनियमैर्युतः। यः पठेत्स्नानसमये लभते सकलं फलं। कार्तिकस्य तु मासस्य प्रसादादहमव्ययः। तव पुत्रत्वमेष्यामीति तत्रैव स्तोत्रांते विश्वानरं प्रति शिवोक्तेः।

अथामलकीमूले देवाराधनविधिः। सोत्सवं धात्रीमूले गत्वा पाकांते शुचिः सकलपापक्षयद्वारा दामोदरप्रीत्यर्थं धात्रीमूले दामोदरपूजनमहं करिष्ये। पुरुषसूक्तेन षोडशोपचारैः संपूजयेत्। तत्र धूपात्प्राक् पुष्पैरंगपूजा। दामोदरायनमः पादौ पूजयामि। केशवाय० कटिंपू० नारायणाय० उदरं० वामनाय० कंठं० श्रीधराय० बाहू० गोविंदाय० मुखं० सहस्राक्षाय० नेत्रे० सर्वेश्वराय० ललाटं० विष्णवे० शिरः० दामोदराय० सर्वांगं०। ततो धूपादिपुष्पांजल्यंते गंधपुष्पश्रीफलयुक्तमर्घ्यं दद्यात्। नमः सहस्रशीर्षाय सहस्राक्षाय ते नमः। नमस्ते सहस्रपदे पुराणाय नमोस्तुते। सहस्रनाम्ने देवेश प्रसीद त्वं ममाच्युत। अर्घ्यं गृहाण भगवन्सर्वकामप्रदो भव। अक्षया संततिर्मेस्तु दामोदर नमोस्तु ते। इति। अपराधसहस्राणीति प्रार्थ्य। धात्रीं कुंकुमगंधादिनाभ्यर्च्य पुष्पैः पूजयेत्। धात्र्यैनमः शांत्यैन० कांत्यै० मेधायै० प्रकृत्यै० विष्णुपत्न्यै० महालक्ष्म्यै० रमायै० कमलायै० इंदिरायै० लोकमात्रे० कल्याण्यै० कमनीयायै० सावित्र्यै० जगद्धात्र्यै० गायत्र्यै० सुधृत्यै० अव्यक्तायै० विश्वरूपायै० सुरूपायै० अब्धिसंभवायै०। ततो धात्रीमूले सव्येनैव तर्पयेत्।—पिता पितामहश्चान्ये अपुत्रा ये च गोत्रिणः। वृक्षयोनिं गता ये च ये च कीटत्वमागताः। रौरवे नरके ये च महारौरवसंज्ञके। तिर्यग्योनिगता ये च ये च ब्रह्मांडमध्यगाः। पिशाचत्वं गता ये च ये च प्रेतत्वमागताः। ते पिबंतु मया दत्तं धात्रीमूलेऽक्षयं पयः। ते सर्वे तृप्तिमायांतु धात्रीमूले निषेचनात्। आब्रह्मस्तंबपर्यंतं०इत्यादिभिरभिषिच्य सूत्रेण वेष्टयेत्। दामोदरनिवासायै धात्र्यै देव्यै नमोस्तुते। सूत्रेणानेन बध्नामि

सर्वदेवनिवासिनीं । चतुर्दिक्षु धात्र्यैनम इति बलिं दत्त्वाऽष्टदिक्षु अष्टौ दीपान्प्रज्वाल्य समर्पयेत् ।—इमे दीपा मया दत्ताः प्रदीप्ता घृतपूरिताः । धात्रि देवि नमस्तुभ्यमतः शांतिं प्रयच्छ मे । इति धात्रीमष्टकृत्वः प्रदक्षिणीकृत्य दंडवन्नमेत् ।—धात्रि देवि नमस्तुभ्यं सर्वपापक्षयंकरि । पुत्रान्देहि महाप्राज्ञे यशो देहि बलं च मे । प्रज्ञां मेधां च सौभाग्यं विष्णुभक्तिं च शाश्वतीं । नीरोगं कुरु मां नित्यं निष्पापं कुरु सर्वदा । वर्चस्वं कुरु मां देवि धनवंतं तथा कुरु । संवत्सरकृतं पापं दूरीकुरु ममाक्षये । घृतपूर्णं सहेम कांस्यपात्रं ब्राह्मणाय दद्यात् ।—कांस्यं ब्रह्ममयं प्रोक्तमाज्यं भोज्यं दिवौकसां । सुवर्णं रुद्रदैवत्यमतः शांतिं प्रयच्छ मे । इति । ततः सपत्नीकान्ब्राह्मणान् राधादामोदरप्रीत्यै यथाशक्ति संपूज्य भोजयेद्भुंजीत चेति । पाद्मे—अनेन विधिना यस्तु कार्तिक्यां पूजयेद्धरिं । सर्वपापविनिर्मुक्तो वैष्णवं प्राप्नुयात्पदं[1] । इति । कृत्स्नकार्तिकेप्यनेनैव विधिना पूजनं कार्यं । अपेक्षितविधेरन्यतो ग्रहणस्याष्टमिकन्यायसिद्धत्वात् ॥

अथ तुलसीविवाहविधिः । विष्णुयामले—आदावेवाथ तुलसीवने वा स्वगृहेपि वा । मासत्रयेण संवर्ध्या ततो यजनमारभेत् । सौम्यायने प्रकर्तव्यं गुरुशुक्रोदये तथा । अथवा कार्तिके मासि भीष्मपंचदिनेषु वा । वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः । मंडपं कारयेत्तत्र कुंडवेदी विवाहवत् । ब्राह्मणांश्च शुचीन्स्नातान्वेदवेदांगपारगान् । ब्राह्मणं देशिकं चैव चतुरश्च तथर्त्विजः । ग्रहयज्ञं पुरः कृत्वा मातॄणां यजनं तथा । कृत्वा नांदीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिं । कृत्वा च रौप्यां तुलसीं लग्नं त्वस्तमिते रवौ । संपूज्यालंकृतां तां च प्रदद्याद्विधिना हरेः । षष्ठी चतुर्थ्यर्थे । वासःशतेन मंत्रेण वस्त्रयुग्मेन वेष्टयेत् । यदाबध्नेति मंत्रेण कंकणं पाणिपल्लवे । कोदादिति च मंत्रेण करग्रहो विधीयते । कर्तव्यश्च ततो होमो विशेषाद्विधिपूर्वकं । आचार्यो वेदिकाकुंडे जुहुयाच्च तथाहुतीः । ॐ नमो भगवते केशवायनमः स्वाहा । ॐ

1 पदमाप्नुयात् ।

नारायणायनमः० माधवाय० गोविंदाय० विष्णवे०मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० उपेंद्राय० वासुदेवाय० अनिरुद्धाय० अच्युताय० अनंताय० गदिने० चक्रिणे० विष्वक्सेनाय० वैकुंठाय० जनार्दनाय० मुकुंदाय० अधोक्षजाय० ।—यजमानः सपत्नीकः सहामात्यैश्च गोत्रजैः । प्रदक्षिणाः प्रकुर्वीत चतस्रो विष्णुना सह । सविष्णुतुलस्या इत्यर्थः । पठेयुः शांतिकाध्यायांस्तथा वैष्णवसंहितां । गायंति मंगलं नार्यो भेरीतूर्यादिभिः स्वरैः । गां पदं च तथा शय्यामाचार्याय प्रदापयेत् । ऋत्विग्भ्यो दापयेद्वस्त्राण्यन्येषां चैव दक्षिणां । ब्राह्मणान्भोजयेत्पश्चात्सर्पिःक्षीरैः सशर्करैः । एवं प्रतिष्ठितां देवीं विष्णुना च समर्चयेत् । आजन्मोपार्जितं पापं दर्शनेन प्रणश्यति । इति ।

कार्तिककृष्णचतुर्थ्यां **करकचतुर्थीव्रतं** चंद्रोदयव्यापिन्यां कार्यं । तस्य कर्मकालत्वात् । दिनद्वयेऽपि तद्व्याप्त्यादौ तिथिदीधित्युक्तो निर्णयोऽनुसंधेयः । कार्तिककृष्णाष्टम्यां माथुरमंडलवासिभिः राधाकुंडे स्नानं विधेयं । तद्विधिर्मथुरासेतौ द्रष्टव्यः । सा चारुणोदयव्यापिनी ग्राह्या । तदभावे सूर्योदयव्यापिनी ।

अथ कृष्णद्वादश्यां **गोपूजनं हेमाद्रौ भविष्ये**—संप्राप्ते कार्तिके मासि कृष्णपक्षे कुरूत्तम । द्वादश्यां कृतसंकल्पः स्नात्वा पुण्यजलाशये । नरो वा यदि वा नारी नक्तं संकल्प्य चेतसि । ततो मध्याह्नसमये कृत्वा देवार्चनादिकं । प्रतीक्षेतागमं भक्त्या गवां गोध्यानतत्परः । सवत्सां तुल्यवर्णां च शीलिनीं गां पयस्विनीं । चंदनादिभिरालिप्य पुष्पमालाभिरर्चयेत् । कुंकुमालक्तकैर्गंधैर्धूपदीपैः सुगंधिभिः । अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः । चंदनैः कुसुमैर्गंधैः पुष्पैः कालोद्भवैस्तथा । पादमूले तु दद्याद्वै मंत्रेणानेन पांडव । क्षीरोदार्णवसंभूते सुरासुरनमस्कृते । सर्वदेवमये मातर्गृहाणार्घ्यं नमोनमः । ततो माषादिसंसिद्धान्वटकान्विनिवेदयेत् । सुरभि त्वं जगन्मातर्देवि विष्णुपदे स्थिता । सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस । ततः प्रार्थयेत् । सर्वदेवमये देवि सर्वदेवैरलंकृते । मातर्ममाभिलषितं सफलं कुरु नंदिनि । इति । ए-

वमभ्यर्च्य विधिवद्दत्त्वा गवि गवाह्निकां । पर्युक्ष्य वारिणा भक्त्या प्रणम्याथ पुनः पुनः । तद्दिने तैलपक्वं च स्थालीपक्वं युधिष्ठिर । गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत् । माषान्नं कामतोऽश्नीयाद्रात्रौ विगतमत्सरः । भूमौ स्वपेद्ब्रह्मचारी शृणुयात्पुण्यमाप्नुयात् । इति । अत्र गोक्षीरसमभिव्याहाराद्दधितक्रे अपि गोसंबंधिनी वर्ज्ये इति लभ्यते । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं । इति सांतपनविधौ गोमूत्रसमभिव्याहारात् क्षीरे गोसंबंधवत् । व्रतफलमपि तत्रैवोक्तं । ऊर्जे सिते द्विदशगेह्नि च गां सवत्सां याः पूजयंति वटकैः कुसुमैश्च हृद्यैः । ताः सर्वकामसुखभागविभूतिभाजो मर्त्ये वसंति सुचिरं नृप जीववत्साः । इति । अत्र पूजायाः फलसंबंधात्प्राधान्यं । सायं गवागमनकालस्तत्कालः । संकल्पनक्तयोः प्रातःप्रदोषौ स्पष्टौ । कालत्रयव्याप्तिलाभे न संदेहः । दिनद्वये एकैकांगसहितप्रधानकालव्याप्तिलाभे युग्मादिशास्त्रान्निर्णयः । इमामेव द्वादशीमारभ्य पंचसु दिनेषु नीराजनमुक्तं **नारदीये**— आश्विने कृष्णपक्षे च द्वादश्यादिषु पंचसु । तिथिषूक्तः पूर्वरात्रे नृपनीराजनाविधिः । नीराजयेयुर्देवांस्तु विप्रान्गाश्च तुरंगमान् । ज्येष्ठान्श्रेष्ठान्जघन्यांश्च मातृमुख्याश्च योषितः । इति । गौणमुख्यचांद्रमानाभ्यामेकादश्यां द्वादश्यां च कार्तिकाश्विनसंबंधो न विरुद्धः ।

अथ त्रयोदश्यां **यमदीपदानं मदनरत्ने स्कान्दे**—कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे । यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति । तत्र **मंत्रः**—मृत्युना पाशदंडाभ्यां कालेन श्यामया सह । त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां मम । इति । अत्र निशामुखस्य कर्मकालत्वात्तद्व्यापिनी तिथिर्ग्राह्या । दिनद्वये तथासत्वे तत्रैव । कृष्णत्रयोदश्यास्तिथिदीधितौ तथा निर्णीतत्वात् ।

अथ **हेमाद्रौ स्कान्दे गोत्रिरात्रव्रतं** । ईश्वर उवाच— व्रतानामुत्तमं स्कंद तव वक्ष्ये सनातनं । अनेन चीर्णमात्रेण सर्वयज्ञफलं लभेत् । यत्कृत्वा सर्वदानस्य फलमाप्नोति मानवः । गोत्रिरात्रमिति ख्यातं सर्वपापप्रणाशनं । नारी वाथ नरो वापि त्रिरात्रव्रतमाचरेत् । कृष्णपक्षे त्रयोदश्यां मासि चाश्वयुजे

तथा । दीपोत्सवसमीपे तु व्रतमेतत्समाचरेत् । तुशब्दो वा-शब्दार्थे । ततश्च कृष्णत्रयोदशीमारभ्य वा कार्यमिति लभ्यते ।—प्रातः स्नात्वा त्रयोदश्यां कृत्वा वै दंतधावनं । त्रिरात्रं नियमं कुर्याद्गोविंदभक्तिभावितः । गोविंद जगतांनाथ गोवर्धनधरानघ । गोत्रिरात्रं करिष्यामि शरणं मे भवाच्युत । नियममंत्रः—गोष्ठे वा गोपथे वाथ कृत्वा भूमिगृहं शुभं । अष्टहस्तं चतुर्हस्तं चतुरस्रं सुशोभनं । वितानपुष्पमालाभिः फलैर्नानाविधैरपि । मध्ये वेदिं ततः कृत्वा मंडलं तत्र कारयेत् । सर्वतोभद्रनामाथ नवरत्नमथापि (?) वा । तन्मध्ये विन्यसेद्देवं गोवर्धनधरं हरिं । रुक्मिणीं मित्रविंदां च शैब्यां जांबवतीं तथा । वामभागे तु देवस्य पूज्यो वै भक्तिभावितः । सत्यभामा च राधा च सुदेवी नाग्नजित्यथ । दक्षिणे चैव पूज्यास्तु नंदं च पुरतो न्यसेत् । बलभद्रं यशोदां च पृष्ठतः पूजयेच्छुभां । सुरभी च सुनंदा च सुभद्रा कामधेनवः । एताश्चतस्रो देवस्य कृष्णस्य पुरतो न्यसेत् । सुवर्णमाषकाः कार्याः षोडश प्रतिमाः शुभाः । गोवर्धनश्च कर्तव्यो राजतः पलसंमितः । छत्राकारो महावृक्षैः शोभितः पक्षिभिः शुभः । गोपीगोपसमाकीर्णो महावृक्षसमन्वितः । एवं संस्थाप्य यत्नेन ततः पूजां समाचरेत् । आगच्छ भगवन्कृष्ण गोपीगोपसमन्वितः । रुक्मिण्यादिभीराज्ञीभिर्मम पूजां गृहाण च । आवाहनमंत्रः । ॐनमः कृष्णाय पादौ च हरये जानुनी नमः । उदरं बलदेवाय मुकुंदाय नमः कटिं । चक्रिणे च भुजौ पूज्यौ कंठे श्रीकंठधारिणे । मुखं पद्ममुखायेति गोविंदाय नमः शिरः । प्रणवादिनमोंतैश्च अष्टांगं पूजयेद्धरेः । ॐ रुक्मिण्यै नमः मित्रविंदायै० शैब्यायै० जांबवत्यै० सत्यभामायै० राधायै० सुदेव्यै० नाग्नजित्यै० यशोदायै० बलभद्राय० नंदाय० सुरभ्यै० सुनंदायै० सुभद्रायै० कामधेनवे० । गोवर्धनधराधार गोकुलत्राणकारक । विष्णुबाहुकृतोद्धार पूजयामि नगोत्तम । एवं संपूज्य विधिवत्पश्चादर्घ्यं प्रदापयेत् । गवामाधार गोविंद रुक्मिणीवल्लभ प्रभो । गोपगोपीसमायुक्त अर्घ्यं गृह्ण नमोस्तु ते । एवं पूजां समाप्यैव भक्तिभावसमन्वितं । गवामर्घ्यं प्रदातव्यं सायाह्ने तु दिनत्रयं । मंत्रेणानेन विधिवद्द्विशतीनां स्वशक्तितः । रुद्राणी

चैव या माता वसूनां दुहिता च या। आदित्यानां च भगिनी सा नः शांतिं प्रयच्छतु। इत्यर्घ्यमंत्रः। नमो गोभ्यः श्रीमतीभ्यः सौरभेयिभ्य एवच। नमो धर्मसुताभ्यश्च पवित्राभ्यो नमो नमः। इति पूजामंत्रः। सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता। प्रतिगृह्णातु मे ग्रासं सुरभी मे प्रसीदतु। इति गोग्रासमंत्रः। गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः। गावो मे हृदये संतु गवां मध्ये वसाम्यहं। मा वियोगोऽस्तु मे पुत्रैर्भर्त्रा च सह बांधवैः। त्वत्प्रसादेन भक्तिः स्यान्निश्चला गौः सदा त्वयि। इति प्रार्थनामंत्रः। एवं संपूज्य गावश्च गोविंदं च विशेषतः। पुष्पैर्गंधैश्च दीपैश्च धूपैर्नानाविधैरपि। नैवेद्यैर्घृतपक्वैश्च फलैर्नानाविधैरपि। सप्तधान्यैर्विरूढैश्च वंशपात्रस्थितैः शुभैः। सुवासिन्यस्तथा पूज्या नित्यं तांबूलकुंकुमैः। कंठसूत्रैस्तथा पुष्पैस्तथा वायनकादिभिः। एवं संपूज्य विधिवद्गोविंदं तु दिनत्रयं। उपवासत्रयं चैव चतुर्थे दिवसे पुनः। प्रातः शुचिः समुत्थाय कृत्वा स्नानं प्रयत्नतः। प्रणम्याचार्यमुख्येन होमं तत्रैव कारयेत्। तिलैरष्टोत्तरशतं गायत्र्या होममाचरेत्। ततो विसृज्य देवेशं गुरवे प्रतिपाद्य च। गाश्च पुच्छे समालंब्य पुरस्कृत्य द्विजर्षभान्। हृष्टेन मनसा स्कंद गृहमागत्य यत्नतः। मिथुनानि द्वादशाष्टौ भूषणाच्छादनादिभिः। संपूज्य भोजनं दत्त्वा गोदानानि च दापयेत्। गुरोर्दंपत्यमर्चित्वा वासोभूषणसंयुतं। भक्त्या गोवर्धनं कृष्णं गोपगोपीसमन्वितं। गृहोपकरणैर्युक्तं यथाशक्त्या च भक्तितः। गुरोः संपादयेद्धीमान्दक्षिणासहितं हरिं। क्षमाप्य च गुरुं तत्र भुंजीत शुचि सत्कृतं। इष्टैः शिष्टैः समानैश्च वाग्यतो विष्णुतत्परः। दीपोत्सवे व्रतमिदं शुचिमानसेन कृत्वा नरः सकलसंततिवृद्धिकारि। भुक्त्वोपभोगनिचयं सुखसंप्रयुक्तो ह्यंते प्रयाति भवनं मनुजो मुरारेः। इति स्कंदपुराणोक्तं गोत्रिरात्रव्रतं।

**नरक चतुर्दश्यां** कर्तव्यं मदनरत्ने भविष्ये—कार्तिके कृष्णपक्षे तु चतुर्दश्यां विधूदये। तिलतैलेन कर्तव्यं स्नानं नरकभीरुभिः। इति। ब्राह्मे—तैले लक्ष्मीर्जले गंगा दीपावल्यां चतुर्दशी। प्रातःस्नानं तु यः कुर्याद्यमलोकं न पश्यति।

१ गाश्चैव।

इति । अत्र चंद्रोदयस्नानासंभवे प्रातःकालो गौणत्वेन विधीयते । स्वकालादुत्तरो गौण इति सामान्यशास्त्रात् । स्नाने विशेषस्तत्रैव—अपामार्गमथो तुंबीं प्रपुन्नाटमथापरां । भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै । इति । मंत्रः—सीतालोष्ठसमायुक्त सकंटक दलान्वित । हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः । इति मंत्रलिंगादेव सीतालोष्ठसाहित्यं भ्रामणपौनःपुन्यं चानुष्ठेयं । अपामार्गशाखाया अलाभे तत्पत्रभ्रामणं कार्यं । स्नानानंतरं यमतर्पणं कार्यमिति तत्रैव—अपामार्गस्य पत्राणि भ्रामयेच्छिरसोपरि । ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः । इति । नामानि च यमायेत्यादीनि प्राक् दर्शितानि । यमाय नमः यमंतर्पयामि इति प्रयोगः । स्कान्दे—दक्षिणाभिमुखो भूत्वा तिलैः सम्यक्समाहितः । देवतीर्थेन देवत्वात्पितृतीर्थेन वा पुनः । यज्ञोपवीतिना कार्यं प्राचीनावीतिनाथवा । देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपता । इति । जीवत्पितृकोप्येतद्देववत्कुर्यात् ।—जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः । इति जीवत्पितृकनिर्णये पाद्मोक्तेः तिलतर्पणादिनिषेधानुल्लंघनौचित्याच्च । तत्रैव—ततः प्रदोषसमये दीपान्दद्यान्मनोहरान् । ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च । प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च । कंदरासु विविक्तासु हस्तिशालासु चैवहि । इति । दीपदाने मंत्रः प्राच्यनिबंधे—अग्निर्ज्योती रविर्ज्योतिश्चंद्रोज्योतिस्तथैव च । उत्तमः सर्वज्योतीनां दीपोयं प्रतिगृह्यतां । इति । अनेनैवामायामपि दीपदानं ।

अत्रास्तसमये उल्कादानं विहितं ज्योतिर्निबंधे—तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः । उल्काहस्ता नराः कुर्युः पितृणां मार्गदर्शनं । इति । उल्काग्रहणतद्दानविसर्जनेषु मंत्राः प्राच्यनिबंधे—शस्त्राशस्त्रहतानां च भूतानां भूतदर्शयोः । उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निना । इति । अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम । उज्ज्वलज्योतिषा दग्धास्ते यांतु परमां गतिं । यमलोकं परित्यज्य आगता ये महापथे । उज्ज्वलज्योतिषा वर्त्म प्रपश्यंतो व्रजंतु ते । इति । लैंगे ।—ततः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान् । शैवान्विप्रांस्त्वथ परान्शिवलोके महीयते । दानं दत्त्वा तु तेभ्यश्च

यमलोकं न गच्छति । माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः । प्रेतचतुर्दशीकाले सर्वपापैः प्रमुच्यते । इति । विधूदयपदस्थाने दिनोदयः इति क्वचित्पाठः प्रातःकालस्य गौणत्वप्रापकः । चंद्रोदयकालो मुख्यः । पूर्वत्रैव चतुर्दश्यां तद्व्याप्तौ तत्रैवाभ्यंगादि दीपदानांतं निर्विवादं । तदंगकर्मकालेषु तिथिसत्वात् । परत्रैव तद्व्याप्तौ तत्रैवाभ्यंगादि । असत्यामपि चतुर्दश्यां काले दीपदानं कार्यं । स्नानदिनप्रदोषे तिथ्यनपेक्षे तद्विधानात् । सूर्योदये तिथ्यनुवृत्तौ यां तिथिमिति तत्रापि तिथिसत्वाच्च बाधकाभावे क्रमस्याप्यनुरोध्यत्वात् । दिनद्वये तद्व्याप्तौ पूर्वैव । बहुकर्मकालव्याप्तिलाभात् । पृथ्वीचंद्रोदये—पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे । प्रत्यूषसमये स्नानं कुर्यात्तत्र प्रयत्नतः । इति पूर्वविद्धानियमाच्च । दिनद्वये तदव्याप्तौ पक्षत्रयं संभवति । पूर्वत्रोषःकालैकदेशं व्याप्यसत्वं सूर्योदयव्याप्यसत्वं क्षयो वा चतुर्दश्या इति । तत्राद्यपक्षे अनंतरोदाहृतपृथ्वीचंद्रोदयवचनादुषःकालैकदेशे चतुर्दशीयुक्ते स्नानं कार्यं न चंद्रोदयापेक्षा । यत्तु कैश्चिदुक्तं—तिथ्यादौ च भवेद्यावान्ह्रासो वृद्धिः परेऽहनि । तावान्ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि । इति वचनात्त्रयोदश्यां चतुर्दशीक्षयप्रक्षेपे सति चंद्रोदयेपि चतुर्दशीसत्वात्तदानीमभ्यंगः कार्य इति । तन्न । विधेयान्वयिन्याः पूर्वेद्युःपदोक्तायास्तिथेरेव स्वशब्देन निर्देशात्स्वपितृभ्यो दद्यादित्यादौ तथैव व्युत्पत्तेः । अतश्चतुर्दशीकार्यं चतुर्दश्याममागतवृद्ध्यादिप्रक्षेपेण कर्मकालव्याप्त्यादिनिर्णयः कार्यं इति वचनार्थो नतु त्रयोदश्यां चतुर्दशीगतवृद्ध्यादिप्रक्षेपेणेति व्युत्पत्तिविरुद्धं वचनार्थमाश्रित्यैकभक्तादितिथेः कर्मकालव्याप्तिं वर्णयद्भ्यो नमः प्राचीनेभ्यः । अतश्चतुर्दशीप्रयुक्तोषःकालैकदेशे स्नानं कार्यं । तदसंभवे सूर्योदयात्परतो गौणकालेपि कार्यं । अपरपक्षद्वये तु परत्रैव चंद्रोदये स्नानं कार्यं । अमाया वृद्धिसत्वे उक्तवचसा चतुर्दश्यां तत्प्रक्षेपतया चंद्रोदयव्याप्तिसंभवात् । अमाया वृद्ध्यसत्वे चंद्रोदयव्यापिन्याममायां स्नानौचित्यात् ।—इषासिते चतुर्दश्यामिंदुक्षयतिथावपि । ऊर्जादौ स्वातिसंयुक्ते तदा दीपावली भवेत् । इति ज्योतिर्निबंधोदाहृतनारदवाक्येऽपिरा-

ब्देन चतुर्दशीस्थानेऽमाया अनुकल्पत्वेन विधेरीदृशविषय एव प्रवृत्त्यौचित्यात् । स्वातीयोगस्तु प्राशस्त्यार्थः । दीपावलीशब्दोऽभ्यंगस्नानपरः । अमुनैवाशयेन सर्वज्ञनारायणेन चतुर्थयामे चतुर्दशीसत्वमभ्यंगप्रयोजकत्वेनोक्तं ।—तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा । यामिन्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यते । इति अर्थसिद्धस्याप्यर्कोदयपूर्वसत्वस्य निर्देशोऽर्कोदयोत्तरकाले गौणबुद्ध्या स्नानं न कार्यमिति ज्ञापनार्थं । मुख्यकाले केनापि निमित्तेनाजातस्नानस्य पुंसः स्नाने च भवति गौणविधेः सार्थकत्वं । शक्यते च यां तिथिमित्याद्यापाद्यसाकल्यवलेनामायुक्तचंद्रोदयकालेपि चतुर्दशीसत्वं वक्तुमित्यलं ।

अथामाकृत्यं मदनरत्ने भविष्ये चतुर्दशीकृत्यं प्रकृत्य—अत्रैवामायां नक्तभोजनं कार्यं । गृहस्थेन प्रकर्तव्यं रात्रौ भोजनमंगलं । दिवा श्राद्धं प्रकर्तव्यं हेम्ना चामेन वा तथा । इति हेमाद्रौ पाद्मोक्तेः । एवं प्रभातसमये अमावास्यां नराधिप । स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च । कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः । भोज्यैर्नानाविधैर्विप्रान्भोजयित्वा क्षमापयेत् । इति ।

तद्दिने राज्ञः कर्तव्यमपि तत्रैवोक्तं—ततोऽपराह्णसमये घोषयेन्नगरे नृपः । अद्य राज्यं वलेर्लोको यथेष्टं चेष्टतामिति । लोकं प्रति महोत्सवं विधाय पुनर्नृपंप्रत्युक्तं । ततोऽर्धरात्रसमये स्वयं राजा व्रजेत्पुरं । अवलोकयितुं रम्यं पद्भ्यामेव शनैः शनैः । तदृष्ट्वा महदाश्चर्यं वृद्धिं चैवात्मनः शुभां । बलिराज्यप्रमोदं च ततः स्वगृहमाव्रजेत् ।इति । तत्रैव स्त्रियःप्रति विधिः—एवं गते निशीथे च जने निद्रार्द्रलोचने । तावन्नगरनारीभिस्तूर्यडिंडिमनिस्वनैः । निष्काश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहांगणात् । वेश्याविलासिनी साध्वी स्वस्तिमंगलकारिणी । गृहाद्गृहं व्रजंती च पादाभ्यंगप्रदायिनी । इति । आदित्यपुराणेऽपीमामेवामां प्रकृत्योक्तं—दिवा तत्र न भोक्तव्यमृते वालातुरान्जनान् । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमं । दीपवृक्षास्तथा कार्याः शक्त्या देवगृहेषु च । वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः । दीपमालापरिक्षिप्ते प्रदेशे तदनंतरं । ब्राह्मणान्भोजयित्वादौ संभोज्य च बुभुक्षितान् । अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिते । इति ।

पाद्मेपि—कार्तिके मास्यमावास्या तस्यां दीपप्रदापनं। शालायां ब्राह्मणः कुर्यात्स गच्छेत्परमं पदं। इति । श्राद्धदिनात्पूर्वेद्युरेव प्रदोषव्यापिन्याममायां तत्रैव दीपदानं । पुराणभेदेनोक्तयोः क्रमस्याशास्त्रीयत्वात् । शास्त्रीयत्वेपि क्रमात्कालस्य बलवत्त्वात्।

अथ प्रतिपत्कृत्यं। अत्राभ्यंगावश्यकत्वं प्रागेवोक्तं। लक्ष्मीं पूज्यानंतरं प्रार्थयेत् ।—नमस्ते सर्वदेवानां वरदासि हरिप्रिये। या गतिस्त्वत्प्रसन्नानां सा मे भूयात्त्वदर्चनात् । इति लक्ष्मीं पूज्य कुबेरमपि पूजयेत्। तत्र मंत्रः प्राच्यनिबंधे—धनदाय नमस्तुभ्यं निधिपद्माधिपाय च। भवंतु त्वत्प्रसादान्मे धनधान्यादिसंपदः। इति। तत्र निर्णयामृते स्कान्दे—प्रातर्गोवर्धनः पूज्यो द्यूतं चापि समाचरेत्। भूषणीयास्तथा गावः पूज्या वाहनदोहने। वर्जयेदिति शेषः । गोवर्धनपूजामंत्रस्तत्रैव—गोवर्धन धराधार गोकुलत्राणकारक । कृष्णबाहुकृतच्छाय गवां कोटिप्रदो भव। इति। गोपूजामंत्रौ च।—लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता। घृतं वहति यज्ञार्थे मम पापं व्यपोहतु । अग्रतः संतु मे गावो गावो मे संतु पृष्ठतः। गावो मे हृदये संतु गवां मध्ये वसाम्यहं। इति। इदमेव गोवर्धनपूजात्मकं कर्माऽन्नकूटोत्सवत्वेन पाद्मे उक्तं। यस्यां प्रतिपदि षण्मुहूर्तव्यापिनी द्वितीया भवति तत्र चंद्रदर्शनदोषात्पूर्वं प्रतिपद्येतत्कर्म कार्यं—गवां क्रीडादिने यत्र रात्रौ दृश्येत चंद्रमाः। सोमो राजा पशून्हंति सुरभीपूजकांस्तथा। इति पुराणसमुच्चयोक्तेः।—प्रतिपद्दर्शसंयोगे क्रीडनं तु गवां मतं। परविद्धेषु यः कुर्यात्पुत्रदारधनक्षयः । इति देवलवचनाच्च । चंद्रादर्शनपर्याप्तप्रतिपद्वृद्धौ तु परत्रैव कार्यं ।—त्रियामिका दर्शतिथिर्भवेच्चेत्सार्धं त्रियामाप्रतिपद्विवृद्धौ। दीपोत्सवे ते मुनिभिः प्रदिष्टे अतोऽन्यथा पूर्वयुते विधेये। इति निर्णयामृते वचनात्। प्रातःकालस्य कर्मकालत्वाच्च। नंदोदये तु यत्रैव पूजयेत्सुरभीः सदा। इति स्मृतेश्च। गोवर्धनपूजनं च मुख्यगोवर्धनसंनिधौ तस्यैव कार्यं। तदसंनिधौ गोमयेन गोवर्धनं कृत्वा तत्समन्वितगोपालपूजनमावाहनप्रतिष्ठापूर्वकं कार्यं।—ततो बलेर्गृहद्वारि स्थाप्यो गो-

मयमूर्तिमत् । मुने श्रीवालगोपालः स्थाप्यो गोवर्धनो महान् । इति पाद्मोक्तेः ।

अथ पूजाप्रयोगः । पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीकृष्णप्रीत्यर्थं गोवर्धनगोपालपूजात्मकं महोत्सवं करिष्य इति संकल्प्य । प्रथमप्रयोगे गणेशपूजनस्वस्तिवाचनाद्यंते ऋत्विगेको वरीतव्यः । द्वितीयादिप्रयोगे तु तद्वरणमेव । भोजनार्थमन्ये त्र्यवरा ब्राह्मणा वरीतव्याः । ततो भूतशुद्ध्यादिना संपन्नाधिकारो गोवर्धनसंयुतं गोपालमावाह्य स्थापयेत् ।—वलिराज्ञो द्वारपालो भवानद्याऽभवः प्रभो । निजवाक्यार्थनार्थाय सगोवर्धन गोपते । इति । ततः श्रीगोपालं गोवर्धनं च पाद्याद्युपचारैः पूजयेत् ।—गोपालमूर्ते विश्वेश शक्रोत्सवविभेदक । गोवर्धनकृतच्छत्र पूजां मे हर गोपते । गोवर्धन धराधार गोकुलत्राणकारक । विष्णुबाहुकृतच्छाय गवां कोटिप्रदो भव । इतिमंत्राभ्यां यथाविभवं भक्ष्यभोज्यादियुतं नैवेद्यं समर्पयेत् । एलालवंगपूगादियुतं तांबूलं दद्यात् । उक्तपूजांते गंधाद्युपचारैर्गोपूजनं प्रत्यक्षगवामसंनिधौ मृदादिनिर्मिततत्प्रतिमापूजनं कार्यं । तत्रमंत्रौ पूर्वोक्तौ । यालक्ष्मीर्यालोकेति । अग्रतः संत्विति च । ततो वृतर्त्विग्द्वारा स्वगृह्योक्तविधिना होमः कार्यो गृहसिद्धान्नेन । आगावो अग्मन्निति प्रैतेवदंत्विति मंत्राभ्यां । स्त्रीशूद्रगृहे तु पूजासंबंध्युक्तपौराणमंत्राभ्यां यालक्ष्मीर्गोवर्धनेति च । होमांते ब्राह्मणभोजनं । भुक्तवद्भ्यः प्रत्येकं धेनुदानं तदभावे तन्निष्क्रयो देयः । अन्येभ्योऽप्याश्वचांडालं यथाशक्त्यन्नं दत्त्वा गोभ्यो यवसमन्नग्रासं च दत्त्वा गिरये वलिदानं कार्यं । ततः शरत्पुष्पादिभिर्गवामलंकारं कृत्वा भुक्तवद्भिः स्वलंकृतैः स्वनुलिप्तैः सुवासोभिर्गोब्राह्मणहोमाग्निगिरीणां प्रदक्षिणां कुर्वद्भिस्तथा गोभिः सह प्रदक्षिणा कार्या । यथा गोभिरपि प्रदक्षिणा ब्राह्मणादीनां कृता भवतीति । ततः श्रीकृष्णार्पणं कार्यमित्यन्नकूटोत्सवः ।

अत्रैव दिनेऽपराह्णे पूर्वस्यां दिशि **मार्गपालीबंधनाद्युक्तं निर्णयामृते**—मार्गपालीं प्रवध्नीयात्तुंगे स्तंभेऽथ पादपे । कुशाकाशमयीं दिव्यां लंबकैर्बहुभिर्मुने । कृते होमे द्विजेंद्रैस्तु बध्नीयान्मार्गपालिकां । नमस्कारं ततः कुर्यान्मंत्रेणानेन सुव्रत ।

मार्गपालि नमस्तेस्तु सर्वलोकसुखप्रदे । विधेयैः पुत्रदाराद्यैः पुनरेहि वृतस्य मे । इति । नीराजनं च तत्रैव कार्यं राष्ट्रजनप्रदं। मार्गपालितलेनाथ यांति गावो गजा वृषाः । राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः। मार्गपालीं समुल्लंघ्य नीरुजः स्युः सुखान्विताः । इति ।

अत्र राज्ञो वष्टिकाकर्षणमुक्तमादित्यपुराणे—कुशकाशमयीं कुर्याद्वष्टिकां सुदृढां नवां । तामेकतो राजपुत्रा हीनवर्णास्तथान्यतः । गृहीत्वा कर्षयेयुर्वै यथाचारं मुहुर्मुहुः । जये च हीनजातीनां जयो राज्ञस्तु वत्सरं । जयचिह्नमिदं राजा विदधीत प्रयत्नतः । इति सर्वसाधारणं । कार्यांतरमपि तत्रैव—तस्माद्द्यूतं प्रकर्तव्यं प्रभाते तत्र मानवैः । तस्मिन्द्यूते जयो यस्य तस्य संवत्सरं शुभं । पराजये विरुद्धं तु लब्धनाशस्ततो भवेत् । श्रोतव्यं गीतवाद्यादि स्वनुलिप्तैः स्वलंकृतैः । विशेच्च भवनं स्वीयं प्रशस्तैर्बांधवैः सह । तस्यां निशायां कर्तव्यं शय्यास्थानं सुशोभनं । दयिताभिश्च सहितैर्नेया सा च भवेन्निशा । नवैर्वस्त्रैश्च संपूज्या द्विजसंबंधिबांधवाः । इति । तथा राजानंप्रति कार्यांतरमुक्तं निर्णयामृते स्कान्दे—कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः । पूजां कुर्यान्नृपः साक्षाद्भूमौ मंडलके शुभे । बलिनामाख्यदैत्येंद्रं वर्णकैः पंचरंगकैः । सर्वाभरणसंपूर्णं विंध्यावल्या सहासितं । कूष्मांडबाणजंभोरुमयदानवसंयुतं । संपूर्णहृष्टवदनं किरीटोत्कटकुंडलं । द्विभुजं दैत्यराजानं कारयित्वा नरः स्वयं । गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् । इति । अर्चनविधिः मदनरत्ने—गंधपुष्पान्ननैवेद्यैरक्षतैर्गुडपूपकैः । मधुमांससुरालेह्यदीपावल्युपहारकैः । मंत्रेणानेन राजेंद्र समंत्री सपुरोहितः । बलिराज नमस्तुभ्यं विरोचनसुत प्रभो । भविष्येंद्रसुराराते पूजेयं प्रतिगृह्यतां । एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः । कारयेत्प्रेक्षणीयादि नटनर्तकनाटकैः । इति । तथा तत्रैव—लोकस्यापि गृहस्यान्तं शय्यायां शुक्लतंडुलैः । संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् । बलिमुद्दिश्य दीयंते दानानि कुरुनंदन । यानि तान्यक्षयाण्याहुर्मयैतत्संप्रदर्शितं । यदस्यां दीयते दानं स्वल्पं वा यदि वा बहु । तदक्षयं भवेत्सर्वं विष्णोः प्रीतिकरं

परं। इति। मार्गपालीप्रभृतिबलिपूजांतं द्यूतवर्जं पूर्वविद्धायामेव कार्यं। कर्मकालव्याप्तिलाभात्।—श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनं। इति वचनाच्च। द्यूतं तु गोवर्धनपूजाविधौ पठितमपि तस्यामिव द्यूते द्वितीयावेधप्रयुक्तापवादाभावात्परदिन एव कार्यं। नारीकर्तृकनीराजनमंगलमालिकात्मकं कार्यद्वयं तु मुहूर्तमात्रायामुत्तरस्यामेव प्रतिपदि कार्यं।—लभ्यते यदि वा प्रातः प्रतिपद्घटिकाद्वयं। तस्यां नीराजनं कार्यं सायं मंगलमालिका। इति मदनरत्ने भविष्योक्तेः नीराजनं प्रातः कार्यं।—नारीनीराजनं प्रातः सायं मंगलमालिका। अथ चेत्प्रतिपत्स्वल्पा नारीनीराजनं भवेत्। द्वितीयायां तदा कुर्यात्सायं मंगलमालिकां। इति ब्राह्मवचनात्। स्वल्पामायुक्तायामपि प्रतिपदि न कार्यं चैतत्—आश्विनांते यदा दर्शे नारीनिराजनं भवेत्। नारीणां तत्र वैधव्यं देशे दुर्भिक्षमेव च। कार्तिके शुक्लपक्षादावमावास्या घटीद्वयं। देशभंगभयान्नैव कुर्यान्मंगलमालिकां। इति देवीपुराणवचनात् इति। प्रतिपत्कृत्यं।

अथ द्वितीयाकृत्यं निर्णयामृते स्कान्दे—ऊर्जशुक्लद्वितीयायामपराह्णेऽर्चयेद्यमं। स्नानं कृत्वा भानुजायां यमलोकं न पश्यति। इति। प्राच्यनिबंधे—यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत्। अर्घ्यश्चात्र प्रदातव्यो यमाय सहजोद्भवैः। भ्रातृभगिनीभिरित्यर्थः। अर्घ्यमंत्रः। एह्येहि मार्तंडज पाशहस्त यमांतकालोकधरामरेश। भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते। इति। पूजांते यमं यमुनां च प्रणमेत्। धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज। पाहि मां किंकरैः सार्धं सूर्यपुत्र नमोस्तुते। यमधर्म नमस्तेस्तु यमुने लोकपूजिते। वरदा भव मे नित्यं सूर्यपुत्रि नमोस्तु ते। इति। लैंगे—कार्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनं। या न कुर्याद्विनश्यंति भ्रातरः सप्तजन्मसु। भ्रातुरपि तद्गृहे भोजनाकरणे भविष्ये—कार्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर। यमो यमुनया पूर्वं भोजितः स्वगृहे स्वयं। अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर। अस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः। यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनं।

दानानि च प्रदेयानि भगिनीभ्यो विशेषतः । स्वर्णालंकारवस्त्रैश्च पूजासत्कारभोजनैः । सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः । इति । प्रतिपन्नका मित्रभगिन्य इति हेमाद्रिः । इदं च यमपूजादिकृत्यं पूर्वत्रैवापराह्णव्यापिन्यां द्वितीयायां तत्रैव कार्यं । पक्षांतरेषु तु परत्रैव । युग्मवाक्यात् । इति द्वितीयाकृत्यं ।

षष्ठ्यां विशेषो निर्णयामृते मात्स्ये—वृश्चिकार्के शुक्लषष्ठ्यां भौमवारेऽप्युपस्थिते । महाषष्ठीति सा प्रोक्ता सर्वपापहरा तिथिः । तस्यां स्वपिति वै वह्निः पूर्वत्रोपोष्य वै दिने । षष्ठ्यां वह्निं समभ्यर्च्य कुर्याद्वह्निमहोत्सवं । इति । महोत्सवो ब्राह्मणभोजनं । निर्णयामृते—कार्तिके याष्टमी शुक्ला ज्ञेया गोपाष्टमी बुधैः । तत्र कुर्याद्गवां पूजां गोग्रासं गोप्रदक्षिणं । गवानुगमनं कार्यं सर्वान्कामानभीप्सता । इति ।

नवम्यां मथुराप्रदक्षिणा प्रोक्ता वाराहे । तद्विधिप्रयोगौ मथुरासेतौ द्रष्टव्यौ । इयं युगादिरपि । अतोत्रापि अपिंडं श्राद्धं कार्यं । पूर्वाह्णव्यापिनी चेयं ग्राह्या । शुक्ले पौर्वाह्णिके ज्ञेये इति पूर्वोदाहृतवचनात् । अत्रैव विष्णुत्रिरात्रारंभः ।—कार्तिके शुक्लनवमीमवाप्य विजितेंद्रियः । हरिं विधाय सौवर्णं तुलस्या सहितं विभुं । पूजयेद्विधिवद्भक्त्या व्रती तत्र दिनत्रयं । एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिं । इति हेमाद्रौ पाद्मवचनात् । श्रीभागवतेपि अंबरीषाख्यायिकायां त्रिरात्रव्रतवचनाच्च ।

अथैकादशी तत्र निर्णयामृते ब्राह्मे—एकादश्यां तु शुक्लायां कार्तिके मासि केशवं । प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः । नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुःसाममंगलैः । वीणापणवशब्दैश्च पुराणश्रवणेन च । वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः । पुष्पैर्धूपैश्च नैवेद्यैर्दीपैर्वृक्षैः सुशोभनैः । हौम्यैर्भक्ष्यैरपूपैश्च फलैः शार्करपायसैः । द्वाभ्यां श्वेतरक्ताभ्यां चंदनाभ्यां च सर्वदा । कुंकुमालक्तकाभ्यां च रक्तसूत्रैः सकंकणैः । तस्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये । आदौ घृतेनैक्षवेण मधुना स्नापयेत्ततः । दध्ना क्षीरेण च ततः पंचगव्येन शास्त्रवित् । उद्वर्तनं माषचूर्णं मसूरामलकानि च । सर्षपाश्च प्रियंगुश्च मा-

तुलिंगरसस्तथा । सर्वौषध्यः सर्वगंधाः सर्ववीजानि कांचनं । गंगांभसि यथाकामं रत्नानि च कुशोदकं । एवं संशोध्य देवेशं दद्याद्गोरोचनां शुभां । ततस्तु कलशा देया यथाशक्त्या स्वलंकृताः । सुजाताः पल्लवैर्युक्ताः सफलाश्च सकांचनाः । पुण्याह्ववेदशब्देन वीणावेणुरवेण च । एवं संस्नाप्य गोविंदं स्वनुलिप्तं स्वलंकृतं । सुवाससं पूजयेच्च सुमनोभिः सकुंकुमैः । धूपैर्दीपैर्मनोज्ञैश्च पायसेन च भूरिणा । अन्नदानैस्तथा होमैः पुण्यैश्च वहुदक्षिणैः । वासोभिर्भूषणैरन्यैर्गोभिरश्वैर्मनोजवैः । ब्राह्मणाः पूजनीयाश्च विष्णोरीज्याश्च मूर्तयः । दत्तशेषामृतं पश्चाद्भोक्तव्यं ब्राह्मणैः सह । इति । कुंकुमालक्तयोः सूत्ररक्तिमानंप्रति करणता तादृशसूत्रार्पणं प्रतिमामणिवंधे विवक्षितं । आदाविति घृतादिक्रमेणैव पंचामृताभिषेक इति ज्ञापनार्थं । पंचगव्येनेति गव्यागव्येषु छत्रिन्यायेन गव्यशब्दप्रयोगः पयोदधिघृतानि गव्यान्येव न माहिषादीनीति सिद्ध्यर्थं । कांचनस्य च रत्नानां घर्षणेन शोधकत्वं । पुण्यैरिति विशेषणद्वयं होमानां पुण्यहेतुत्वेनानियतकाला विहिता ये अयुतादिहोमास्तत्र समये फलातिशयार्थमित्यर्थः । दत्तशेषं निवेदितशेषं । अमृताख्यमुक्तिहेतुत्वादमृतं । रामार्चनचंद्रिकानृसिंहपरिचर्यादिषु द्वादश्यामेव वोधनोत्सवो विहितः । गम्यते हि—यस्य यस्य च देवस्य यन्नक्षत्रं तिथिश्च या । तस्य देवस्य तस्मिंस्तु शयनावर्तनादिकं । इति भोजदेवलिखितवचनादपि द्वादश्यामेव तत्कर्तव्यता । तत्तद्देवतापवित्रारोपणतिथीनां कथनावसरे उपक्रमे द्वादशी चक्रपाणिन इति कथनात् ।—इयं च द्वादशी देव प्रवोधार्थं विनिर्मिता । इति वक्ष्यमाणमंत्राच्च । एवंच ब्राह्मवचनगतैकादशीविधिविरोधाद्विकल्प इति केचित् । देशभेदेन व्यवस्थेत्यन्ये । परेतु प्रस्वापावर्तनोत्सवा इति भविष्योक्तमिथुनार्कपव द्वादश्यां शयनोत्सवस्तदनुसारिणौ चोत्तरोत्सवादित्याहुः । वस्तुतस्तु परस्परविरुद्धार्थत्वेन विधिभ्यः संशये अभियुक्ताचारसंवादिभ्य उक्तवाक्येभ्यो मिथुनग्रहणस्योपलक्षणत्वावश्यंभावात् मंत्रान्निर्णय उचितः । अतो द्वादश्यां प्रधानकर्तव्यतानिर्णये सति एकादशीविधिस्तत्रोपक्रमाभिप्रायः

१ मनोहरैः ।

पूर्णमास्यां पूर्णमास्यां यजेतेतिवत् । यत्तु विष्णुधर्मोत्तरे—कार्तिकस्य सिते पक्षे तदेव दिनपंचकं । विबोधयंति देवेशं गत्वा सेंद्रा दिवौकसः । देवास्तथैव कुर्वंति तदापि च महोत्सवं । इत्येकादशीमारभ्य दिनपंचकं प्रबोधकालत्वेनोक्तं तत्रयोदशीप्रभृति गौणत्वाभिप्रायं । अतो द्वादश्यामकृतोत्सवेन तत्रोत्सवः कार्यः । यत्तु तत्रैव चोत्तरं—आषाढे शुक्लपक्षांते भगवान्मधुसूदनः । भोगिभोगे निजां मायां योगनिद्रां समाप्नुयात् । शेतेऽसौ चतुरो मासान्यावद्भवति कार्तिकी । इति । तत्र पक्षांत इत्युपक्रमाद्यद्यपि कार्तिकीपदेन पूर्णमास्येव प्रबोधकालत्वेन प्रतीयते । तथापि पूर्णमास्यां शयनोत्सवव्रतस्वीकारौ येन कृतौ तद्विषयं तद्बोध्यं । अत्र द्वादश्यां रात्रौ रेवत्यंत्यपादयोगः प्रशस्तस्तदभावे रात्रावेव तन्नक्षत्रयोगमात्रं ।—पौष्णावसाने च सुरारिहंता प्रबुध्यते इति नारदीयवचनात् । उक्तब्रह्मवाक्ये रात्रिविधेश्च—पादयोगो यदा न स्याद्दक्षेणापि तदा भवेत् । इति वाराहोक्तेः । यदा द्वादश्या वेधपादयोगो नक्षत्रयोगो वा न रात्रौ तदा दिवैव प्रबोधोत्सवः ।—निशि स्वापो दिवोत्थानं संध्यायां परिवर्तनं । इति मात्स्यवचस ईदृशविषयएव नियमार्थत्वात् । नक्षत्रयोगस्य द्वादश्यां सर्वथैवाभावेऽपि तत्रैव प्रबोधोत्सवः कार्यः । मंत्रादिना तिथेः प्राधान्यात् । नक्षत्रस्य तिथेः प्राशस्त्यार्थत्वात् । तिथेरपि रात्रावसत्वे दिवा कार्यः उक्तमात्स्यात् । दिवापि द्वादशीनक्षत्रयोगाभावे संध्यासमयएव द्वादश्यां कार्यः ।—द्वादश्यां संधिसमये नक्षत्राणामसंभवे । आभाकासितपक्षेषु शयनावर्तनादिकं । इति वराहोक्तेः । द्वादश्यामिति नक्षत्राणामित्यनेन संबध्यते । संधिसमय इति शयनादिना । यत्तु जीमूतवाहनोदाहृतवाक्ये—अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः । पादयोगेन कर्तव्ये नाहोरात्रं विचिंतयेत् । इति । तदपि मुख्यकाले केनापि निमित्तेनाकृतोत्सवेन पुंसा त्रयोदश्यादिगौणकाले कर्तव्योत्सवः पादयोगवशेन दिवैव कार्यो रात्रौ वा तद्रहितायामिति संदेहे नियमार्थं नतु नक्षत्ररहितद्वादशीबाधेन. त्रयोदश्यादौ पादयोगेऽप्राप्तकर्तव्यताप्रापणपूर्वं रात्र्यादिनिषेधार्थं । अपूर्वविधौ गौरवात् । अनेकार्थविधौ

वाक्यभेदाच्च । एवं निर्णीतकाले महापूजां समाप्य देवमुत्थापयेत् इदंविष्णुरिति वैदिकमंत्रेण । तथा—ब्रह्मेंद्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वंदित वंदनीय । बुध्यस्व देवेश जगन्निवास मंत्रप्रभावेण सुखेन देव। इयं च द्वादशी देव प्रबोधार्थं विनिर्मिता । त्वयैव सर्वलोकानां हितार्थं शेषशायिना । उत्तिष्ठोत्तिष्ठ गोविंद त्यज निद्रां जगत्पते । त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितं जगत् । इति पौराणमंत्रैश्च । एवमुत्थाप्य पुष्पांजलिं दद्यात् । तत्र मंत्रः चरणं पवित्रमिति वैदिकः ।—गता मेघा वियच्चैव निर्मलं निर्मला दिशः । शारदानि च पुष्पाणि गृहाण मम केशव । इति पौराणश्च । ततो यद्यद्द्रव्यवर्जनं कार्तिके कृतं तद्द्रव्यं पूर्वोदाहृतशास्त्रानुसारिद्रव्यांतरं च ब्राह्मणेभ्यो दत्त्वा व्रतसंपूर्णतां प्रार्थयेत् ।—इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो । न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन । इति । ततो भगवदर्पणं कुर्यात् नक्षत्रयोगप्रयुक्तपारणानिषेधनिर्णयस्तु शयन्यादिवद्बोध्यः इति । प्रबोधोत्सवः ।

अथातः **शुक्लद्वादशीव्रतोद्यापनं** व्याख्यास्यामः । आषाढकार्तिकयोः शुक्लैकादश्यां यदा वा श्रद्धावित्ते स्यातां तन्मासेपि विधेयं ।—दशम्यामेकभक्तं तु दंतधावनपूर्वकं । एकादश्यां शुचिर्भूत्वा वृत्वाचार्यं बहुश्रुतं । श्रुताध्ययनसंपन्नं क्रोधलोभविवर्जितं । उपोष्य नियतो रात्रावाचार्यसहितो व्रती । कुर्यादाराधनं विष्णोः शक्त्या भक्त्या जगद्गुरोः । देवालये नदीतीरे शुचौ देशेऽथवा गृहे । मंडपं कारयेत्तत्र पुष्पमालोपशोभितं । उल्लोचनसमाकीर्णं कदलीस्तंभमंडितं । तन्मध्ये सर्वतोभद्रं मंडलं परिकल्पयेत् । ब्रह्माद्या देवतास्तत्र स्थापयित्वा प्रपूजयेत् । तन्मध्ये स्थापयेत्कुंभमव्रणं तंडुलैर्भृतं । समंतादंतिके चैव नामभिः केशवादिभिः । तस्योपरि न्यसेत्पात्रं तंडुलैः परिपूरितं । वेणुमृन्मयधातूनामेकेन रचितं शुभं । वस्त्रेणाच्छादितं तस्मिन्सौवर्णं राजतं तु वा । शक्त्या संपादितं विष्णुं पूजयेद्भक्तिमान्नरः । ध्यात्वा चतुर्भुजं देवं शंखचक्रगदाधरं । पीतांबरयुगोपेतं लक्ष्म्या युक्तं विभूषितं । लसत्कौस्तुभशोभाढ्यं मेघश्यामं सुलोचनं । आवाह्य प्रतिमायां तु पंचामृतपुरःसरं । उपचारैः षोडशभिर्यथावत्प्रतिपूजयेत् ।

आगच्छ देवदेवेश जगद्योने रमापते । शुद्धे ह्यस्मिन्नधिष्ठाने सन्निधेहि कृपां कुरु । ॐ भूः पुरुषमावाहयामि । ॐ भुवः पुरुष० । ॐ स्वः पुरुष० । ॐ भूर्भुवस्वः पुरुष० । रुक्मिणीं स्त्रीचतुःसहस्रसहितां । जांबवतीं स्त्रीचतुःसहस्र० । सत्यभामां स्त्रीचतुःसह० । कालिंदीं स्त्रीचतुःसहस्र० । पूर्वदक्षिणपश्चिमोत्तरदलाभ्यंतरेषु षोडशसहस्राणि पूजयेत् । आग्नेयादिचतुष्कोणेषु शंखादीन्यायुधानि पूजयेत् । पुरतो गरुडं । लोकपालांस्तदग्रेषु पूर्वादिषु यथाक्रमं । अतोदेवा १ इदंविष्णु० २ । र्विष्णोः कर्माणि पश्यत ३ । त्रीणिपदाविचक्रमे ४ तद्विष्णोः परमंपदं ५ । तद्विप्रासोविपन्यवो० ६ । विचक्रमेपृथिवी० ७ । विष्णोर्नुकं० ८ । प्रतद्विष्णुस्त० ९ । नतेविष्णो० १० । प्रविष्णव० ११ तदस्य० १२ । इरावती० १३ । तावां० १४ । वषट्ते० १५ क्रमेणतु । प्रदद्यादासनं पाद्यमर्घ्यमाचमनीयकं । स्नानं वस्त्रं चोपवीतं गंधपुष्पाणि धूपकं । दीपं नैवेद्यं तांबूलं प्रदक्षिणनतीः क्रमात् । संपूर्णतायाः सिध्यर्थं यथाशक्त्या तु दक्षिणां । विष्णुं पुरुषसूक्तेन चैतन्मंत्रैः प्रपूजयेत् । स्त्रीशूद्रादिभिराराध्यं मंत्रैः पौराणिकैस्तथा । अथवा मूलमंत्रेण सर्वेषामुदितो विधिः । क्षमाप्य देवदेवेशं स्तुत्वा स्तोत्रैः प्रसन्नधीः । रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः । एकचित्तेन भावेन गीतनृत्यादिभिः सह । प्रभातायां तु शर्वर्यां कृत्वा चावश्यकं विधिं । अग्निं संस्थाप्य विधिवत्पयसि श्रपयेच्चरुं । पवित्रंत इमं मंत्रं जपन्प्रापणमुद्धरेत् । पायसादुद्धृतं किंचित्प्रापणं तत्प्रकीर्तितं । अन्वाधानादिकं कुर्यादाज्यभागांतमेव च । अनादेशाहुतीः पंच होतव्याः सर्पिषा ततः । पौरुषेणाथ सूक्तेन प्रत्यृचं जुहुयाद्धृतं । चतुर्दश्याज्यमिश्रास्तु जुहुयात्पायसाहुतीः । वासुदेवाय रामाय श्रियै स्वाहेति विष्णवे १४ । विष्णोर्नुकं० १ तदस्य प्रियं० २ प्रतद्विष्णु० ३ । परोमात्रया० ४ विचक्रमे० ५ त्रिर्देवः ६ व्याहृतिभिः १४ । केशवाद्यैर्द्वादशभिर्जुहुयात्पायसाहुतीः । ततः । त्वामेकमाद्यं पुरुषं पुराणं नारायणं विश्वसृजं यजामः । त्वय्येव भागो विहितो विधेयो गृहाण हव्यं जगतामधीश । इति प्रापणं निवेद्योपतिष्ठेत । ततस्त्रिचतुरोऽग्निं प्रदक्षिणं परिक्रम्य भिंधिविश्वा इति जा-

नुनी निपात्य ध्रुवसूक्तं पुरुषसूक्तं वा जप्त्वाष्टौ पदानि प्रतिदिश-मेतैर्मंत्रैर्गच्छेत् । कृष्णाय वासुदेवाय हरये परमात्मने । शरण्यायाप्रमेयाय गोविंदाय नमो नमः । नमःस्थूलाय सूक्ष्माय व्यापकाव्यापकाय च । अनंताय जगद्धात्रे ब्रह्मणेऽनंतमूर्तये । अव्यक्तायाखिलेशाय चिद्रूपाय गुणात्मने । नमो मूर्ताय सिद्धाय पराय परमात्मने । देवदेवाय वंद्याय पराय परमेष्ठिने । कर्त्रे विश्वस्य गोप्त्रे च तत्संहर्त्रे च ते नमः । अथ निवेदितप्रापणं मूर्ध्नि कृत्वा घोषयेत् । के वैष्णवा के वैष्णवा इति । वयं वैष्णवा इत्युच्चैः प्रतिवदेत् । तेभ्यः समानेभ्यो हविर्देयं । ततो द्वादशाक्षरेण मंत्रेण इदममृतमहं प्राश्नामि इति प्राश्याचम्य सिद्धयेस्वाहेति जुहुयात् । यत इंद्र भयामह इत्यात्मानमभिमंत्र्य होमशेषं समाप्य— ततो होमावसाने च गामरोगां पयस्विनीं । सवत्सां धवलां साध्वीं सवस्त्रां कांस्यदोहनां । दद्याद्व्रतस्य पूर्त्यर्थमाचार्याय सदक्षिणां । भूषणानि विचित्राणि वासांसि विविधानि च । आचार्याय प्रदेयानि दक्षिणां भूयसीं तथा । यदीच्छेदात्मनः श्रेयो व्रतस्याविफलं फलं । तेनाचार्यः प्रयत्नेन पूजनीयो न संशयः । विप्रान्द्वादशसंख्याकान्नामभिः केशवादिभिः । वस्त्रोपवीतभूषाद्यैरलंकृत्य प्रपूजयेत् । पक्वान्नपूरितान्कुंभान्पृथग्दद्यात्सदक्षिणान् । पायसान्नप्रधानेन भोजयेद्ब्राह्मणान्व्रती । वाचयित्वा सुसंपूर्णं प्रणिप्रत्य क्षमापयेत् । ततः सोपस्करं पीठमाचार्याय निवेदयेत् । भुंजीत तदनुज्ञातः स्वेष्टबंधुजनैः सह । इत्याह भगवान्बौधायनः । इति शुक्लैकादशीव्रतोद्यापनं ।

अथातः कृष्णैकादशीव्रतोद्यापनं व्याख्यास्यामः।मार्गशीर्षकृष्णैकादशीमारभ्यैतद्व्रतं चरेत् । पूर्वोक्तेन विधानेन व्रतनिष्ठो जितेंद्रियः। पूर्ववन्मंडपं कृत्वा तन्मध्ये मंडलोपरि । तिलेषु तिलपूर्णं तु कलशं विन्यसेत्सुधीः । अंकितं नामभिश्चैव क्रमात्संकर्षणादिभिः । तिलपूर्णं तथा पात्रं विन्यस्य कलशोपरि । संस्थाप्य प्रतिमां तत्र उपचारैस्तु पूर्ववत् । पूजयेच्छ्रीपतिं भक्त्या जागरादि विधाय च । आदावेव गणेशादीनाग्नेयादिषु विन्यसेत् । प्राग्वत्पुष्पांजलिं दत्वा मंत्रैरेभिरनुक्रमात् । ब्रह्मणस्पतेति ब्रह्माणं पूर्वस्यां दिशि पूजयेत् । विष्णोर्नुकं विष्णुमपि मध्ये संपूज्य चादितः । दक्षिणे बलभद्रं तु प्रद्युम्नं पश्चिमे न्यसेत् ।

उत्तरे त्र्यंबकं रुद्रं संपूज्य गरुडं पुरः । वामभागे श्रियं पूज्यानिरुद्धमपि तत्रहि । आग्नेयादिषु कोणेषु आयुधानि हरेर्यजेत् । पूर्वादिष्वष्टपत्रेषु विमलाद्याश्च शक्तयः । अनुग्रहं पृष्ठभागे मध्यएव हरेः सुधीः । इंद्राग्नी लोकपालांश्च पूर्वादिष्वप्यनुक्रमात् । एवं संपूज्य गोविंदं भक्तिप्रह्वेन चेतसा । रात्रौ जागरणं कुर्याच्छ्रुत्वा माहात्म्यमुत्तमं । ततः प्रभातसमये कृत्वा चावश्यकं विधिं । अग्निं संस्थाप्य विधिवत्पूर्ववत्पायसं श्रपेत् । पायसं सघृतं चैव हुत्वा संकर्षणादिभिः । चतुर्दशाहुतीर्हुत्वा पूर्ववत्प्रापणं हरेत् । इदं विष्णुश्च मंत्रेण शतमष्टोत्तरं तिलैः । जुहुयाच्चांगदेवेभ्यस्ततः स्विष्टकृदादिकं । समाप्य पूर्ववत्सर्वं गुर्वादीन्पूजयेत्ततः । कृष्णामेकां सवत्सां च गां दद्याच्च पयस्विनीं । भूषणानि सवस्त्राणि दद्यादाचार्यतुष्टये । तावन्न किंचिदाप्नोति व्रतस्योद्यापने विधिः । भक्त्या संपूजितो यावन्नाचार्यः फलदो हि सः । ततो द्वादशसंख्याकान्द्विजान्संकर्षणादिभिः । नामभिः परिपूज्यापि वासोलंकारचर्चितान् । भोजयेत्परमान्नेन तेभ्यो दद्याच्च दक्षिणां । फलोपचितसंयुक्तांस्तिलपूर्णान्नवान्घटान् । संकर्षणादिभिश्चैव नामभिः पृथगंकितान् । अन्यानपि यथाशक्ति भोजयेद्द्विजपुंगवान् । दीनानाथांश्च संतर्प्य भूयसीं दक्षिणां दिशेत् । व्रतसंपूर्णतां चैव वाचयित्वा क्षमाप्य च । पूजितं सत्कृतं देवं सवस्त्रं सोपचारकं । आचार्याय प्रदद्यात्तु प्रणम्य च पुनः पुनः । तदाज्ञां प्राप्य सुप्रीतः स्वेष्टबंधुजनैः सह । कुर्वीत पारणं चित्ते स्मरन्देवं सनातनं । एवमुद्यापनं कृत्वा यत्फलं लभते नरः । तदाख्यातुं न वै शक्तो वागीशश्चतुराननः । भवाब्धौ विषये घोरे विषयाणां समाकुले । संप्राप्यैकादशीं मर्त्यः कश्चित्तरति पुण्यवान् । तृणकाष्ठसमूहं वै यथा दहति पावकः । तथैवैकादशीवह्निर्दहति पापसंचयं । नाहिंसायाः परो धर्मो नानृतात्पातकं परं । केशवान्नापरो देवो नैकादश्याः परं व्रतं । एवं कृते सुपुण्ये तु व्रतस्योद्यापने शुभे । नारी वा पुरुषो वापि याति विष्णुसलोकतां । इति कृष्णैकादशीव्रतोद्यापनं ।

अथ भीष्मपंचकव्रतं मदनरत्ने देवीपुराणे—एकादश्यां तु गृह्णीयाद्व्रतं पंचदिनात्मकं । प्रातः स्नात्वा विधा-

नेन मध्याह्ने च तथा व्रती । नद्यां निर्झरगर्ते वा समालभ्य च गोमयं । यवव्रीहितिलैः सम्यक् पितॄन्संतर्पयेत्क्रमात् । स्नात्वा मौनं नरः कृत्वा धौतवासा दृढव्रतः । ततः संपूजयेद्देवं सर्वपापहरं हरिं । स्नापयेच्चाच्युतं भक्त्या मधुक्षीरघृतेन च । तथैव पंचगव्येन गंधचंदनवारिणा । चंदनेन सुगंधेन कुंकुमं नागकेसरं । कर्पूरोशीरमिश्रेण लेपयेद्गरुडध्वजं । अर्चयेद्रुचिरैः पुष्पैर्गंधधूपसमन्वितैः । गुग्गुलं घृतसंयुक्तं दद्देत्कृष्णाय भक्तिमान् । दीपकं च दिवारात्रौ दद्यात्पंचदिनानि तु । नैवेद्यं देवदेवस्य परमान्नं निवेदयेत् । एवमभ्यर्च्य देवेशं स्तुत्वा चैव प्रणम्य च । ॐनमो वासुदेवेति जपेदष्टोत्तरं शतं । जुहुयाच्च घृताभ्यक्ततिलव्रीहियवान्व्रती । षडक्षरेण मंत्रेण स्वाहाकारान्वितेन च । उपास्य पश्चिमां संध्यां प्रणम्य गरुडध्वजं । जपित्वा पूर्ववन्मंत्रं क्षितिशायी भवेन्नरः । सर्वमेतद्विधानं च कार्यं पंचदिनेष्वपि । विशेषोक्तं व्रते चास्मिन्यदन्यूनं शृणुष्व तत् । प्रथमेह्नि हरेः पादौ पूजयेत्कमलैर्नरः । द्वितीये बिल्वपत्रेण जानुदेशं समर्चयेत् । पूजयेत्तु तृतीयेह्नि नाभिं भृंगारकेण तु । बाणबिल्वजपाभिश्च ततः स्कंधौ समर्चयेत् । ततस्तु पूजयेच्छीर्षं मालत्या चक्रपाणिनः । कार्तिक्यां देवदेवस्य भक्त्या तद्गतमानसः । अर्चयित्वा हृषीकेशमेकादश्यां समाहितः । त्रिःप्राश्य गोमयं सम्यगेकादश्यामुपावसेत् । गोमूत्रं मंत्रवद्भूयो द्वादश्यां प्राशयेद्व्रती । क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा दधि । संप्राश्य कायशुद्ध्यर्थं लंघनीयं चतुर्दिनं । पंचमे दिवसे स्नात्वा विधिवत्पूज्य केशवं । भोजयेद्ब्राह्मणान्भक्त्या ततो दद्याच्च दक्षिणां । ततो नक्तं समश्नीयात्पंचगव्यपुरःसरं । एवं सम्यक्समाप्य स्याद्यथोक्तं व्रतमुत्तमं । इति । तत्रैव भविष्योत्तरे—स्त्रीभिर्वाक्येन कर्तव्यं स्वपत्युः पुण्यवर्धनं । विधवाभिस्तु कर्तव्यं पुत्राणां शुभवृद्धये । सर्वकामसमृद्ध्यर्थं मोक्षार्थं चैव पांडव । नित्यं स्नानेन दानेन कार्तिकीं यावदेव तु । वैश्वदेवस्तु कर्तव्यो विष्णुध्यानपरायणैः । पापस्य प्रतिमा कार्या रौद्रवक्त्रातिभीषणा । खड्गहस्तातिविकृता लौही दंष्ट्राकरालिनी ।

१ अरविंदमशोकं च चूतं च वनमल्लिका । नीलोत्पलं च पंचैते पंचबाणस्य सायकाः ।

तिलप्रस्थोपरि स्थाप्य कृष्णवस्त्राभिवेष्टिता । रक्तवस्त्रकृतापीडा ज्वलत्कांचनकुंडला । संपूज्या परया भक्त्या धर्मराजस्य नामभिः । इममुच्चारयेन्मंत्रं गृहीतकुसुमांजलिः । यदन्यजन्मनि कृतमिह जन्मनि वा पुनः । पापं प्रशममायातु तव पादप्रसादतः । एवं संपूज्य विधिवत्प्रतिमा सर्वकांचनी । वाचकाय प्रदातव्या धर्मो मे प्रीयतामिति । कृतकृत्यः स्थिरो भूत्वा विरक्तः संयतो भवेत् । शांतचेता निराबाधः परं पदमवाप्नुयात्। नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः । अष्टपादस्त्रिनयनः शंकुकर्णो महास्वनः । जटी द्विजिह्वस्ताम्राक्षो मृगराजतनुच्छदः । चिंतनीयो महादेवो यस्य रूपं न विद्यते । इति ।

पाद्मे तु—स्नात्वा मौनं नरः कृत्वा धौतवासा दृढव्रतः । भीष्मायोदकदानं च अर्घ्यं चैव प्रयत्नतः । दद्यादिति शेषः । पूजा भीष्मस्य कर्तव्या दानं दद्यात्प्रयत्नतः । पंचरत्नं विशेषेण दद्याद्विप्राय यत्नतः । वासुदेवोपि संपूज्यो लक्ष्म्यायुक्तः सदा प्रभुः । यत्किंचित्क्रियते सर्वं पंचधा तु प्रकल्पयेत् । अर्घ्यमंत्रः—सत्यव्रताय शुचये गांगेयाय महात्मने । भीष्माय च ददाम्यर्घ्यमाजन्मब्रह्मचारिणे । वसूनामवताराय शंतनोरात्मजाय च । अर्घ्यं ददामि भीष्माय सोमवंशोद्भवाय च । इति । उदकदानमंत्रः—वैयाघ्रपादगोत्राय सांकृत्यप्रवराय च । गंगापुत्राय भीष्माय प्रदास्येहं तिलोदकं । अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे । इति । अत्रैकादशीशब्देन प्रसिद्धव्रतदिनग्रहणं ।प्रकरणांतरेण लक्षणायां प्रमाणाभावात्। तिथिश्च युग्मवाक्याद्द्वादशीविद्धैव ग्राह्या । दिक्पंचदशभिस्तथेत्युक्तवेधस्यैव दूषकत्वं । एवंच दशम्यविद्धैकादशीमारभ्य पंचदिनात्मकं व्रतं चतुर्दश्यविद्धपूर्णमास्यां चैतत्समाप्यते तदा नैव संदेहः । तिथिक्षयवशेन नैवं घटते चेत् विद्धायामप्यारंभः । प्रधानव्रतानुरोधेनांगतिथिगुणस्य परविद्धत्वादेरनादरणीयत्वात् । एवमविद्धैकादश्यामारभ्य परविद्धपूर्णमास्यां समापने यदि तिथिवृद्धिवशेन षड्दिनापत्तिस्तदा पूर्वपौर्णमास्यामपि समाप्तिः । उपक्रमसमाप्त्योरंगत्वाविशेषेपि मुख्यं चेति न्यायेनोपक्रमधर्मस्यैव बलवत्त्वात् ।

अथ प्रयोगः । स्वगृह्योक्तविधिना प्रातः स्नात्वा संध्यामु-

पास्य वारिपूर्णं ताम्रपात्रमादायोदङ्मुखः पवित्रपाणिराचम्य देशकालौ संकीर्त्य श्रीकृष्णप्रीत्यर्थं भीष्मपंचकव्रतं करिष्ये इति संकल्प्य मध्याह्ने निर्झरगतें वा गोमयेन स्नात्वा तर्पणकाले यव-व्रीहितिलैः पितॄन्संतर्प्य पुनः स्नात्वा विष्णुपूजासमाप्तिपर्यंतं दृढमौनी भवेत् । धौतं वासः परिधाय तिलकं कृत्वा गंधपुष्पा-दियुतमर्घ्यमुक्तमंत्रेण भीष्माय पंचकृत्वो दत्त्वोक्तमंत्रेण यज्ञो-पवीती पितृतीर्थेन सतिलमुदकं पंचकृत्वो भीष्माय दत्त्वा भीष्मं लक्ष्मीसहितं वासुदेवं च पंचोपचारैर्जले संपूज्य पंचर-त्नानि ब्राह्मणाय दद्यात् । ततो गृहं गत्वा प्राणायामांते आवा-हनाद्युपचारान्समर्प्य जलेनाभिषिच्य मधुक्षीरघृतैः पंचगव्येन संस्नाप्य सुगंधिचंदनोदकेनाभिषिच्य वस्त्रालंकारौ समर्प्य कर्पूरो-शीरमिश्रेण सुगंधिचंदनेन कुंकुमनागकेसरसंमिश्रितेन विष्णुं लेपयेत् । चंदनलिप्तैर्मनोहरपुष्पैः सधूपैरभ्यर्च्य सघृतगुग्गुलधूपं समर्प्य दीपं दद्यात्स दीपः पंचसु दिनेष्वनवच्छिन्नो भवेत् । पा-यसं निवेद्य पूजाशेषं समापयेत् । ततो हरये नम इति कमलैः पादौ पूजयेत् । ततः सहस्रनामस्तोत्रादिना स्तुत्वा प्रणम्याष्टा-क्षरं मंत्रमष्टोत्तरशतं जप्त्वा गृह्योक्तप्रकारेणाग्निप्रतिष्ठापनादि कृत्वा घृताभ्यक्ततिलव्रीहियवान् ॐ विष्णवे नमः स्वाहेति अष्टोत्तरशतं हुत्वा सुवर्णं दद्यात् । गंधद्वारामिति गोमयमा-दाय त्रिःप्राश्योपवसेत् । शाकं नीवारादि वा भक्षयेत् । सायंसं-ध्यामुपास्य विष्णुं प्रणम्याष्टाक्षरं पुनर्जप्त्वा भूमिशायी भवेत् । एवं पंचस्वपि दिनेषु कुर्यात् । तत्र विशेषः । द्वितीयेह्नि कम-लस्थाने बिल्वपत्रैर्जानुदेशं पूजयेत् । गोमयस्थाने गोमूत्रं गा-यत्र्या आदाय प्राश्नीयात् । तृतीयेह्नि भृंगारकेण नाभिं पूज-येत् । क्षीरमाप्यायस्वेत्यादाय प्राश्नीयात् । चतुर्थेह्नि बाणबिल्व-जपाभिः स्कंधावर्चयेत् । दधिक्राव्ण इति दध्यादाय प्राश्नीयात् । पंचमेहनि मालत्या शीर्षं पूजयेत् । प्राशनात्पूर्वं पापपुरुषदान-पक्षे उक्तलक्षणां तत्प्रतिमां यमायेत्यादिनामभिः पूजयेत् । ततः पुष्पपूर्णांजलिमादाय—यदन्यजन्मनि कृतमिह जन्मनि वा पुनः । पापं प्रशममायातु तव पादप्रसादतः । इति सं-पूज्य श्रीकृष्णप्रीत्यर्थं धर्मो मे प्रीयतामिति वाचकायान्यस्मै वा प्रतिमां दत्त्वा ब्राह्मणान्पूजयित्वा यथाशक्ति गोहिरण्यादि

तेभ्यो दद्यात् । ततो नीलोत्पलेत्यादिप्रकारं महादेवं ध्यायेत् । ततो ब्राह्मणांस्त्र्यवरान्भोजयित्वा तेभ्यो यथाशक्ति दक्षिणां दत्त्वा नक्तं पंचगव्यं उक्तमंत्रैश्चत्वारि शुक्रमसीति घृतं चादाय प्रणवेनाभिमंत्र्य प्रणवेन तत्प्राशनपूर्वकं शाकमुन्यन्नभोजनं कुर्यात् । उक्तदानाभावपक्षे ब्राह्मणभोजनादि स्त्रीशूद्राणां पंचगव्यादानं तत्प्राशनं चामंत्रकं । जपहोमावप्रणवौ । द्वितीयादिदिनेषु वस्त्रं गौर्घृतं पायसं श्वेतकृष्णतिलसहितं वस्त्रं च सुवर्णस्थाने क्रमेण देयानि । तांबूलाभ्यंगवर्जनसत्यवचनादिनियमयुक्तः पंचदिनेषु भवेत् । इति भीष्मपंचकं ।

अथ **चतुर्दशी** । कृतोपवासजागरणेन तस्यामरुणोदयव्यापिन्यां विश्वेशमभ्यर्च्य शैवान्भोजयित्वा पारणं कार्यं । **शिवरहस्ये** जागरादिप्रकृत्य—ततोऽरुणोदये जाते स्नात्वा स्नात्वा च भस्मना । समाप्य संध्यां विश्वेशं समभ्यर्च्य यथाविधि । मद्भक्तान्भोजयामासुर्ऋषयो बुभुजुः स्वतः । इति पठितेन पुराकल्पेन विध्युन्नयनात् ।—ततः प्रभाते विमले कृत्वा पूजां महाद्भुतां । दंडपाणेर्महाधाम्नि वनेस्मिन्कृतपारणाः । इति **सनत्कुमारसंहितायां** पारणोक्त्या पूर्वोपवाससूचनाच्च । कार्तिकव्रतोद्यापनांगोपवासे तु परविद्धैव चतुर्दशी ग्राह्या । प्रधानभूतव्रतसमाप्तेः परविद्धपूर्णमास्यामनुष्ठेयाया अनुरोधेनांगोपवासनिर्णयस्योचितत्वात् । शुक्लपक्षेऽष्टमी चैवेति शास्त्राच्च । उद्यापनविधिश्चोक्तः **पाद्मे**—ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती । व्रतसंपूर्णतार्थाय विष्णुप्रीत्यर्थमेव च । तुलस्या उपरिष्टात्तु कुर्यान्मंडपिकां शुभां । सुतोरणां चतुर्द्वारां पुष्पचामरभूषितां । द्वारेषु द्वारपालांश्च पूजयेन्मृन्मयान्पृथक् । पुण्यशीलं सुशीलं च जयं विजयमेव च । तुलस्या मूलदेशे च सर्वतोभद्रमेव वा । चतुर्भिर्वर्णकैः सम्यक् सौभाग्यसमलंकृतं । तस्योपरि सपिधानं पंचरत्नसमन्वितं । महाफलेन संयुक्तं कुंभं तत्र निधापयेत् । पूजयेत्तत्र देवेशं शंखचक्रगदाधरं । कौशेयपीतवसनं युक्तं जलधिकन्यया । इंद्रादिलोकपालांश्च पूजयेन्मंडपे व्रती । तस्यामुपवसेद्भक्त्या शांतः प्रयतमानसः । पूजयेद्देवदेवेशं सौवर्णं गुर्वनुज्ञया । उपचारैः षोडशभिर्नानाभक्ष्यसमन्वितैः । रात्रौ जागरणं कुर्याद्गीतवाद्यादिमंगलैः । गीतं

कुर्वंति ये भक्त्या जागरे चक्रपाणिनः । जन्मांतरशतोद्भूतैस्ते मुक्ताः पापसंचयैः । नराणां जागरे विष्णोर्गीतं नृत्यं च कुर्वतां । गोसहस्रं च ददतां फलं सममुदाहृतं । गीतनृत्यादिकं कुर्वन्दर्शयन्कौतुकानि च । पुरतो वासुदेवस्य रात्रौ यो हरिजागरे । पठन्विष्णुचरित्राणि यो रंजयति वैष्णवान् । सुखेन[1] कुरुते वाद्यं स्वेच्छालापांश्च दर्शयन् । भावैरेतैर्नरो यस्तु कुरुते हरिजागरं । दिनेदिने तस्य पुण्यं तीर्थकोटिसमं स्मृतं । ततस्तु पूर्णमास्यां च सपत्नीकान्द्विजोत्तमान् । त्रिंशन्मितानथैकं वा स्वशक्त्या वा निमंत्रयेत् । अतोदेवा इति द्वाभ्यां जुहुयात्तिलपायसं । प्रीत्यर्थं देवदेवस्य देवानां च पृथक् पृथक् । दक्षिणां च यथाशक्ति प्रदद्यात्प्रणमेच्च तान् । पुनर्देवं समभ्यर्च्य देवांश्च तुलसीं तथा । ततो गां कपिलां तत्र पूजयेद्विधिवद्व्रती । गुरुं व्रतोपदेष्टारं वस्त्रालंकरणादिभिः । सपत्नीकं समभ्यर्च्य नत्वा सर्वान्क्षमापयेत् । युष्मत्प्रसादाद्देवेश प्रसन्नो भव सर्वदा । व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया । तत्सर्वं नाशमायातु स्थिरा मे चास्तु संततिः । मनोरथाश्च सफलाः संतु नित्यं तवार्चनात् । देहांते वैष्णवं स्थानं प्राप्नुयामतिदुर्लभं । इति क्षमाप्य तान्विप्रान्प्रसाद्य च विसर्जयेत् । तामर्चां गुरवे दद्याद्रत्नयुक्तां तदा व्रती । ततः सुहृद्गुरुयुतः स्वयं भुंजीत भक्तिमान् । कार्तिके चाथ तपसि विधिरेवंविधः स्मृतः । इति ।

अस्यामेव पौर्णमास्यां **वृषोत्सर्गविधिर्भविष्ये**—कार्तिक्यां तु वृषोत्सर्गो विवाहः शुभलक्षणः । कार्यः कुरुकुलश्रेष्ठ हरेर्नीराजनं तथा । गजाश्वरथदानं च घृतधेन्वादयस्तथा । प्रदेयाः पुण्यकृद्भिस्तु तास्ताः संकल्प्य देवताः । इति । **मात्स्ये**—कार्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् । शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतं । इति । तत्कालांतरविधिर्हेमाद्रौ **विष्णुधर्मोत्तरे**—अश्वयुक्शुक्लपक्षस्य पंचदश्यां नराधिप । कार्तिकेप्यथवा मासि वृषोत्सर्गं तु कारयेत् । ग्रहणे द्वे महामुख्ये तथा चैवायनद्वयं । विषुवद्वितयं चैव मृताहे बांधवस्य च । इति । तत्रैव **ब्राह्मे**—अथ चैत्र्यां वृषोत्सर्गः कार्तिक्यां वा प्रयत्नतः । कर्तव्यस्त्वथ रेवत्यां त्रिभि-

---

[1] मुखेन ।

वर्णैर्द्विजातिभिः । इति । तत्रैव देवीपुराणे—गोविवाहोऽथ वा कार्यो माघ्यां वा फाल्गुनेपि च । इति । मात्स्ये—कार्तिक्यामाश्वयुज्यां वा माघ्याषाढयोरथापि वा । फाल्गुन्यां वाथ चैत्र्यां वा वैशाख्यां वा तथैव च । वैधृतौ वा व्यतीपाते मन्वादिषु युगादिषु । दिनच्छिद्रेऽर्कसंक्रांतौ क्रांतिसाम्ये तथैव च । अष्टकासु च कर्तव्य इति । तत्रैव—मातापित्रोः क्षयाहे तु विशेषेण प्रशस्यते । इति । कात्यायनः । अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः कार्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुजस्येति । पौर्णमास्यामेव कर्तव्य इति कर्कः । तेन रेवतीयुक्ताश्विनीपौर्णमासी प्रशस्तेति लभ्यते । वृषलक्षणं हरिहरः—लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः । श्वेतः खुरविषाणाभ्यां स वृषो नील उच्यते । तथा—चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपतेः । लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत् । तथान्यत्रापि—भूमौ कर्षति लांगूलं प्रलंबं स्थूलवालधिः । पुरस्तादुन्नतो नीलो वृषभः स प्रशस्यते । प्रसिद्धा चेदृशवृषोत्सर्गस्याश्वमेधसाम्यप्रतिपादिका गाथा । एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् । इति । एतत्संवादिवचो हेमाद्रौ—अश्वमेधसमं पुण्यं वृषोत्सर्गादवाप्यते । इति । तथा—श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य प्रशस्यते । स्निग्धवर्णोऽथ रक्तश्च क्षत्रियस्य प्रशस्यते । कांचनाभश्च वैश्यस्य कृष्णः शूद्रस्य शस्यते । यस्य प्रागायते शृंगे भ्रूमुखाभिमुखे सदा । सर्वेषामेव वर्णानां स च सर्वार्थसाधकः । इति । तथा—रक्तशृंगाग्रनयनः श्वेतवर्णो भवेद्यदि । शफैः प्रवालसदृशैर्नास्ति धन्यतरस्ततः । इति ।—अतसीपुष्पवर्णश्च तथा धन्यतरः स्मृतः । श्वेतं च जठरं यस्य भवेत्पृष्ठं च गोपतेः । वृषभश्च समुद्रः स सततं कुलवर्धनः । इति । कात्यायनः—एकवर्णं द्विवर्णं वा वृषभं च समुत्सृजेत् । यो वा यूथं छादयति यं वा यूथं च छादयेत् । रोहितो वैव स्यात्सर्वांगैरुपेतः जीववत्सायाः पयस्विन्याः पुत्रो यूथेव च रूपस्वितमः स्यादिति । वृषोत्सर्गफलं च हेमाद्रौ आदित्यपुराणे—जले प्रक्षिप्य लांगूलं तोयं चोद्धरते वृषः । दशवर्षसहस्राणि पितरस्तेन तर्पिताः । कूले समुद्धृता या च

शृंगे भवति मृत्तिका। भक्ष्यभोज्यमयैः शैलैः पितरस्तेन तर्पिताः। इत्यादि। नीलवृषोत्सर्गे च फलातिशय उक्तस्तत्र वाराहे—मुक्त्वा च नीलकंठं तु कौमुद्याः समुपागमे। इत्यादिना। महाभारते दानधर्मेषु—नीलषंडप्रमोक्षेण अमावास्यां तिलोदकैः। वर्षासु दीपकैश्चैव पितॄणामनृणो भवेत्। इति। नीलवृषस्य लांगूलं तोयमभ्युद्धरेद्यदि। षष्टिवर्षसहस्राणि पितरस्तेन तर्पिता इत्यादि।

अथ प्रयोगः। स चाश्वलायनशाखिभिर्गृह्यपरिशिष्टोक्तरीत्या कार्यः। तद्यथा। अथोत्सर्गः। शूलगववत्कार्तिक्यां पौर्णमास्यां वैशाख्यां वा रेवत्यां वाश्वयुजस्य गोर्जीवत्पुत्रायाः सुतं प्रेष्ठं स्वस्य यूथस्याकुष्ठिनमपृषतमेकहायनं द्विहायनं त्रिहायनं वा नीलं बभ्रुं पिंगलं लोहितं वा लक्षणमप्येके कामं कृष्णमालोहितमष्टाभिर्वत्सतरीभिश्चतसृभिर्वा व्रीहियवमतीभिरद्भिरापोहिष्ठीयाभिर्ऋग्भिर्वामदेव्याभिश्च प्रांचमभिषिच्यालंकृत्य गोष्ठे चतुष्पथे वाग्निमुपसमाधाय रौद्रं स्थालीपाकं सर्वहुतं हुत्वा सौम्यं पायसं पौष्णं यावकं च पूर्णपात्रोदकेन निनीतेन मार्जयित्वा वृषमग्निं त्रिःप्रदक्षिणं पर्यानीयांकयित्वा कद्रुद्रायेमारुद्रायातेपितरिमारुद्रायस्थिरधन्वन इति सूक्तैश्चतस्रो दिश उपस्थाय प्रांचं प्रागुदंचं वा वत्सतरीसमेतमुत्सृज्य। ततः। एतंयुवानं परिवो ददामि तेनक्रीडंतीश्चरथ प्रियेण। मानः शाप्तजनुषा सुभागा रायस्पोषेण समिषा मदेमेति। शांतापृथिवी ऋचा ऋषभंमासमानानामिति च सूक्तेन स यत्पिबति खादति लांगूलं चोदयच्छते तेन देवानृषीन्पितॄन्प्रीणाति सप्त सप्त चोभयतः परावरानुद्धरति यत्प्रेतार्थमुत्सृष्टस्तं महतो नरकादुत्तारयति तस्मादेकादशेह्नि प्रेताय वृषमुत्सृजेदाद्यं मासिकं च दद्यादिति। अपरपरिशिष्टे तु कुंभांश्च गां वृषभमिति सूक्तेनोत्सर्गानंतरं रुद्रसूक्तैर्दिशामुपस्थानमुक्त्वोक्तं ब्राह्मणान्भोजयित्वा तिलानुदकुंभांश्च गां वासो हिरण्यं दक्षिणां स्वस्त्ययनं वाचयीत। इति। अत्रत्ये शौनकोक्ते वृषोत्सर्गे निर्दिष्टचरुयावकपायसात्मकहविस्त्रयश्रपणस्य हेमाद्र्युदाहृतकालिकापुराणोक्तवृषोत्सर्गनिर्देशेन कर्मैक्यप्रतीतेः कालिकापुराणोक्तविध्युपसंहारोपि समर्थैः कार्यः। यथोक्तं हेमाद्रौ कालि-

कापुराणे—नीलोत्पलदलप्रख्यः श्वेतांघ्रिश्चंद्रमस्तकः। सुभ्रूर्युंचा लोहिताक्षो वृषभो नील उच्यते। वृषभं लोहितं पिंगं सुश्वेतं वाथ मोचयेत्। चतुष्पात्सकलो धर्मो वृषोयं हरवाहनः। तमुद्दिश्य स मोक्तव्यो विधिना येन मे शृणु। सोपवासः शुचिः स्नात्वा गत्वा चैव हरालयं। वितानं दीपमुद्बोध्य विन्यसेच्छिवमूर्धनि। गव्येन शुभगंधेन स्नपनं कारयेच्छिवं। पलैस्तु पंचविंशद्भिः सर्पिषा यत्नतो बुधः। समुद्वर्त्य कषायैस्तु क्षाल्य कोष्णेन वारिणा। भूयोप्यभ्यंजयेत्तेन पंचगव्येन शांकरं। ततः स्नाप्य शिवं भक्त्या कर्पूरागरुचंदनैः। पूजयेत्कुसुमैः श्रेष्ठैः समालिप्य च चंदनैः। सौवर्णं कमलं कार्यं पंचत्रिंशद्दलांगुलं। सरत्नं च न्यसेन्मूर्ध्नि केसराढ्यं सकर्णिकं। वस्त्रयुग्मं तथा श्वेतं सूक्ष्मं दद्यात्सुशोभनं। दत्वार्घ्यं बोधयेद्दीपांस्ततः षट्त्रिंशसंख्यया। रौप्यताम्रादिपात्रस्थैर्नीराजनं तु कारयेत्। ततो भूतबलिं दद्यात्सर्वदिक्षु प्रयत्नतः। पूजांते पूजयेद्विप्रानष्टौ दद्याच्च दक्षिणां। ततो वेद्यां वितानं च चतुरस्रं प्रकल्पयेत्। तत्रैवाग्निं समाधाय त्रींश्चरूञ्श्रपयेद्बुधः। स्थालीपाकं च रुद्रीयं यावकं च सपायसं। तेषामाहुतयो दत्वा पभी रौद्रबलिं ततः। हरेत्सर्वासु काष्ठासु मंत्रेण विधिपूर्वकं। सार्धं वत्सतरीभिश्च ब्रह्मघोषेण वै पुनः। अभिषिच्य वृषं तं तु विधिदृष्टेन कर्मणा। रक्तपीतसितैः कृष्णैः पुष्पैश्चापि विभूषयेत्। संयुक्तं वस्त्रयुग्माभ्यां हेमवैडूर्यसंभवे। ताभ्यामपि संभवे संयुक्तं कुर्यादिति शेषः। घंटिके घंटिकाभ्यां च वासयित्वा विभूषयेत्। विकिरेच्च ततो लाजान्जातवेदःप्रदक्षिणं। परीत्यांजलिना पुच्छं सहेमेन तु धारयेत्। हराय परमेशाय पुष्पोदकयुतेन च। हस्तमुत्क्षिप्य मोक्तव्यो मयादत्तमुदीरयेत्। जंघमूर्धं स्फिजामूर्धं मोचयित्वा प्रदक्षिणं। अंकयेत्तु त्रिशूलेन कुंकुमेन विपश्चिता। दद्यादंकयुतं कुंभं प्रणम्येशं च सोदकं। कर्षार्धं हेमविन्यस्तं सपूपं तिलसंयुतं। तच्चास्य वस्त्रयुग्मेन सहाचार्याय दापयेत्। शिवव्रतधरान्विप्रान्संयतांश्च विशेषतः। हिरण्यवस्त्रदानेन व्रतस्थान्भोज्य तोषयेत्। दीनानां दुःखितानां च भोजनं चानिवारितं। अरण्ये चत्वरे वापि गोष्ठे वा मोचयेद्ध्रुवं। न गृहे मोचयेद्विद्वान्पुष्कलं कामयन्फलं। इति। तैत्तिरीयैर्बौधायनोक्तविधिना

वृषोत्सर्गः कार्यः । सयथा । कार्तिक्यां पौर्णमास्यां आश्विन्यां वैशाख्यां वा गवां मध्ये क्रियेतैकवर्णो द्विवर्णो वा यो वा यूथं छादयति लोहितवर्णाया जीववत्सायाः पुत्रो यूथेषु मुख्यतमो यो भवति तमलंकरोति गंधमाल्यादिभिर्वस्त्रैश्च शिवस्त्वष्टः पिशंगरूप इति द्वाभ्यां यूथमुख्याश्च समीपे देवयजन उल्लेखनाद्यग्निप्रतिष्ठापनांतं कृत्वा नमस्ते रुद्रेति पंचदशभिरष्टाभिरर्धर्चैश्च । ततः स्विष्टकृदादिवरदानांतं कृत्वा बिल्वपर्णेषु यो रुद्रो अग्नाविति हुतशेषं निधाय रुद्रं जपित्वा गोमिथुनं लाजामंत्रेण त्रिः प्रदक्षिणमग्निं पर्यानीयांकयित्वा ऋचांप्राचीमिति तिलोदकं निधाय तं वत्सतरीश्च पाययित्वा तृप्ता यांतु पितर इति ध्यात्वोत्सृज्यैतं युवानमिति गच्छंतमनुमंत्रयते । त्वां गावो वृणत राज्यायेति गवां मध्ये तिष्ठंतमनुमंत्रयते मयोभूर्वात इत्यनुवाकेनाथ तासां पयसि पायसं श्रपयित्वा ब्राह्मणान्भोजयित्वाशिषो वाचयित्वा यथाशक्ति दक्षिणां दत्त्वाश्वमेधफलमवाप्नोतीत्याह भगवान् बौधायनः । **वाजसनेयिनः** कात्यायनोक्तविधिना कुर्युः । मध्येगवां सुसमिद्धमग्निं कृत्वा आज्यं संस्कृत्येहरतिरिति षड्जुहोति[1] । पुषागाअन्वेतु न इति पौष्णस्य जुहोति रुद्रान्जपित्वैकवर्णं तमलंकृत्य यूथे मुख्याश्चतस्रो वत्सतर्यः ताश्चालंकृत्यैतं युवानं परिवो ददामीत्येतयर्चा तमुत्सृजेत् । नभस्थमभिमंत्रयते मयोभूरित्यनुवाकशेषेणेति । पौष्णस्य श्रपणानुपदेशात्सिद्धस्योपादानमिति **कर्कः** । विष्णुस्मृतौ—पौष्णचरुमात्रविधानात्तत्रत्येतिकर्तव्यता अविरुद्धा समर्थैर्यजुःशाखिभिरुपसंहार्या । सा यथा **हेमाद्रौ विष्णुः** । गवांमध्ये सुसमिद्धमग्निं परिस्तीर्य पौष्णं चरुं पयसा श्रपयित्वा पूषागा अन्वेतु न इह रतिरिति हुत्वा वृषभमयस्कारस्त्वंकयेत् एकस्मिन्पार्श्वे चक्रेणापरस्मिन्शूलेन दक्षिणबाहौ चक्रेण वामस्फिजि त्रिशूलेनेति व्यवस्थोक्ता **विष्णुस्मृतिटीकायां** । अंकितं हिरण्यवर्णेति चतसृभिः शंनो देवीति च स्नापयेत् । स्नातमलंकृतं स्नातालंकृताभिश्चतसृभिर्वत्सतरीभिः सार्धमानीय रुद्रान्पुरुषसूक्तं कूष्मांडीश्च जपेत् । पितावत्सेति वृषस्य दक्षिणकर्णे पठेदत्रच—वृषो हि भगवान्धर्मश्चतुःपादः प्रकीर्तितः ।

---

१ यड्जुहोति ।

वृणोमि तमहं भक्त्या स मे रक्षतु सर्वतः । एतंयुवानं० । माहास्महि प्रजया मा तनूभिर्मारधाम द्विषते सोमराजन् ।— वृषं वत्सतरीयुक्तमैशान्यां कारयेद्दिशि । होतुर्वस्त्रयुगं दद्यात्सुवर्णं कांस्यमेव च । अयस्काराय दातव्यं वेतनं मनसेप्सितं । भोजनं बहुसर्पिष्कं ब्राह्मणांश्चात्र भोजयेत् । उत्सृष्टो वृषभो यस्मिन्पिबत्यथ जलाशये । जलाशयं तत्सकलं पितॄंस्तस्योपतिष्ठति । शृंगेणोल्लिखते भूमिं यत्र क्वचन तर्पितः । पितॄणामन्नपानादि प्रभूतमुपतिष्ठते । इति । पितावत्सेतिमंत्रः काठकशाखास्थः ।

अथ भट्टचरणोक्तिं मानांतरसंहितामनुसृत्य पदार्थान्वदामः। प्रागेव सुमुहूर्ते रुद्राय महादेवाय जुष्टो वर्धस्वेति शिरस्त आपुच्छाद्व्रीहियवमतीभिरद्भिर्वृषं प्रोक्ष्य वर्धयेद्यावत्सदंतो भवति सेचनसमर्थो वा । ततो ग्रामाद्बहिः प्राच्यामुदीच्यां वा दिशीष्टदेशे ध्वजादियुतं षोडशस्तंभं मंडपं छायामात्रं वा कृत्वा तदैशानदेशेऽष्टहस्तां चतुर्हस्तां वा वेदिं कृत्वा द्व्यहेन सद्यो वा पितॄणामुद्धारकामनया फलांतरकामनया वा संकल्प्य गणपतिकुलदेवतापूजनं स्वस्तिवाचनं च कृत्वा मातृकापूजनसमये वस्त्रगततंडुलपुंजेषु ॐगणपतिं स्थापयामि ॐ गौरीं स्थापयामीत्येवं प्रणवादिनामभिः कुलदेवतांतानां षोडशानामेव स्थापनादिपूजांतं कृत्वा । ततो वृद्धिश्राद्धमाचार्यवरणं च । मंडपपक्षे तद्देवताप्रतिष्ठापनं । अत्र ग्रहमखः कृताकृतः । पूर्वदिने वृषस्य वत्सतरीणां चतसृणां द्वयोरेकस्या वा मांगलिकस्नानं । ब्राह्मणभोजनं कृत्वा स्वयं हविष्यं भुंजीत । उपवासं वा कुर्यात् । ततः श्वोभूते शिवालयं गत्वा संकल्पपूर्वकं दीपोद्बोधनवितानबंधनादिदक्षिणादानांतं कालिकापुराणोक्तं शिवाराधनं कृत्वा चतुर्हस्तवितानाच्छादितायां वेद्यां स्थंडिलं विधाय वृषोत्सर्गांगभूतं होमं करिष्य इति संकल्प्याध्वरनामाग्निस्थापनांतं स्वगृह्योक्तविधिना स्वयमाचार्यो वा कुर्यात् । ततोग्नेरैशान्यां पंच गोमातरः पूज्याः । ॐ नंदां ॐ सुमनसं ॐ सुभद्रां ॐ सुशीलां । ॐ सुरभिं । तदग्रे महीद्यौरित्यादिविधिना स्थापिते पंचरत्नाद्यन्विते कलशे ताम्रादिमयपूर्णपात्रे कृताग्न्युत्तारणहैमरुद्रप्रतिमायां रौद्रमंत्रेणावाहनादिभी रुद्रं संपूज्य त-

त्कलशस्य रुद्रानुमंत्रणार्थं ऋत्विजं योजयेत्। ततः सवत्सतरीकं वृषं प्रांचं व्रीहियवमतीभिरद्भिरभिषिंचेत्। आपोहिष्ठेतिनवर्चस्य सूक्तस्यांबरीषः सिंधुद्वीप आपो गायत्री पंचमीवर्धमाना सप्तमीप्रतिष्ठा अंत्येद्वे अनुष्टुभौ वृषवत्सतर्यभिषेके विनियोगः। कयानश्चित्र इति तिसृणां गौतमो वामदेव इंद्रो गायत्री। अभीषुण इति पादनिचृत् वृषवत्सतर्य०। ततो वस्त्रगंधाक्षतमाल्यैरलंकृत्यान्वाधानं। चक्षुषीआज्येनेत्यंते रुद्रं चरुणा सोमं पायसेन इंद्रं यावकेनेति शौनकमते। परिशिष्टमते रुद्रमित्यस्यस्थाने हरमित्यादि १२ नामनिर्देशः कार्यः। इंद्रमित्यस्यस्थाने पूषणमिति विशेषः। शेषेणस्विष्टकृतमित्यादि शूलगवंवेति कृतवांश्च यस्तं ब्रह्माणमुपविशेत्। निर्वापे रुद्राय त्वाजुष्टं निर्वपामीत्येवं हविस्त्रयस्य समंत्रो निर्वापस्तथा प्रोक्षणं। पूर्वपरिशिष्टमते रौद्रस्य तूष्णीं निर्वापप्रोक्षणे। आज्यभागांते ॐ रुद्रायस्वाहा सोमायस्वाहा इंद्रायस्वाहेति हविस्त्रयस्यावदानधर्मेण होमः शौनकमते। परिशिष्टमते उपस्तरणानंतरं सर्वं चरुं अवदानधर्मेणादायाभिघार्य हराय मृडाय शर्वाय भवाय महादेवाय उग्राय भीमाय पशुपतये रुद्राय शंकराय ईशानाय स्वाहेति उग्रायेत्यादि षण्णामभिरेव वा रुद्रायस्वाहेति वा जुहुयात्। ततोऽवदानधर्मेण सोमायस्वाहेति पायसं हुत्वा। तथैव पूष्णेस्वाहेति यावकं हुत्वा। चतसृषु दिक्षु चतस्रः कुशसूना निधाय तासु हविःशेषेण बलिं हरेत्। यास्ते रुद्र पूर्वस्यां दिशि सेनास्ताभ्य एतन्नमस्ते अस्तु मामा हिंसीरिति। दक्षिणस्यां प्रतीच्यामित्येवमादिशेत्। दर्भस्तंभैस्तृणैश्च ग्रथितः कटः सूना। ततो हविर्द्वयशेषेणैव स्विष्टकृद्रज्जुप्रहरणं। पूर्णपात्रनिनयनांते निनीताद्भिः स्वस्य वृषस्य च मार्जनं संस्थाजपेनोपस्थानं। अस्मिन्काले वा वृषाभिषेकः। ततः सुवासिनीभिः कृतनीराजनं वृषं वेदेरुत्तरतः प्रादक्षिण्येन नीत्वा प्राङ्मुखं वृषं स्वयमुदङ्मुखो मधुपर्केण यथागृह्यं पूज्य गंधेन रक्तपीतसितकृष्णपुष्पैर्वासोभ्यां हेमवैडूर्याभ्यां घंटिकाभ्यामन्यैश्च विविधैर्भूषणैरलंकृत्य छत्रोपानत्कांस्यभाजनादि यथाशक्ति समर्प्य हरिद्राकुंकुमादिना संपूज्यांकनार्थं दक्षिण ऊरौ वामे च चिह्नं कृत्वा घृषे न्यासं कु-

र्यात् । इषेत्वेति मूर्ध्नि । इमारुद्रायेति दक्षिणचिह्ने । नमस्ते रुद्र इति वामचिह्ने । सहस्राणीति ललाटे । विभ्राडिति त्र्यंबकमिति नेत्रयोः । मानस्तोक इति नासिकायां । अवतत्येति मुखे । नीलग्रीवेति कंठे । मर्माणि त इति बाहुमध्यतः । समिधाग्निमिति बाह्वोः । नमो वः किरिकेभ्य इति हृदि । हिरण्यगर्भ इति नाभौ । मीढुष्टमेति कट्यां । मानोमहांतमित्यूर्वोः । उदुत्यमिति जंघयोः । इमारुद्राय इति जान्वोः । रक्षोहणमिति गुदे । वृष्णस्त इति लिंगे । वृषभंमा इति पुच्छे । त्रिपादूर्ध्वेति खुरेषु । एवं न्यासं कृत्वाग्नेः पश्चिमभागे वेदिसमीपे स्वगृह्योक्तविधिना वृषाय वत्सतरीदानं कन्यादानवत्कुर्यात् । तद्यथा । देशकालौ स्मृत्वा मम सर्वपूर्वजानां निरतिशयसानंदब्रह्मलोकप्राप्त्यर्थं रुद्रस्वरूपिणे वृषाय वत्सतरीदानं करिष्य इति संकल्प्य वत्सतर्यस्तारयंतु पुण्यंवर्धतामिति वृषखुरे जलसेचनादिकं कार्यं । ततो मम समस्तेत्यादि रुद्ररूपिणे वृषाय यथाशक्त्यलंकृता वत्सतरीस्तुभ्यमहं संप्रददे । अनेन वत्सतरीदानेन वृषस्वरूपी श्रीरुद्रः प्रीयतामित्युक्त्वास्य नीलोद्वाहस्य प्रतिष्ठासिध्यर्थं इदं हिरण्यं दक्षिणात्वेन संप्रदद इति सुवर्णपरिमितं न्यूनं वा हिरण्यं दद्यात् । ततो रुद्रकलशोदकेन वृषवत्सतरीणामभिषेकः । अपोहिष्ठेतिनवर्चः ९ । समुद्रज्येष्ठाः ४ । इमंमे गंगे २ । कयानः ३ । सहस्राक्षं शतधारमृषिभिः पवमानं कृतं । तेन त्वामभिषिंचामि पावमान्यः पुनंतु ते । भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिंद्रश्च वायुश्च भगं सप्तर्षयो ददुः । यच्च केशेषु दौर्भाग्यं सीमंते यच्च मूर्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नंतु सर्वदा । सुरास्त्वा० । सिद्ध्ये । एवमभिषिच्य वृषकर्णे जपेत् । धर्मस्त्वं वृषरूपेण गवामानंदकारकः । अष्टमूर्तेरधिष्ठानमतः पाहि सनातन । ततः ॐ तीक्ष्णशृंगाय विद्महे वेदपादाय धीमहि । तन्नो वृषः प्रचोदयात् । इति पुष्पैः संपूज्यानया गायत्र्या ऋषभंमासमानानामिति च वृषं संप्रार्थयेत् । ततो गाश्च—गावो ममाग्रतः संतु गावो मे संतु पृष्ठतः । गावो मे हृदये संतु गवां मध्ये वसाम्यहं । पंच गावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नंदा तस्यै धेन्वै नमोनमः । या लक्ष्मीः सर्वदेवानां या च देवेष्ववद-

स्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । अयं हि वो मया दत्तः सर्वासां पतिरुत्तमः । तुभ्यं चैता मया दत्ताः पत्न्यः सर्वा मनोरमाः । इति । ततो वृषान्वारब्ध आचार्यो लाजादिना विवाहहोमं कुर्यात् । ततोऽग्नेः पूर्वत उदङ्मुखवृषपुच्छं वत्सतरीपुच्छैस्ताम्रपात्रे मेलयित्वा यवतिलमिश्रोदकैर्देवर्षिपितृतर्पणं कार्यं यजमानेन । देशकालौ संकीर्त्य दुर्गतिगतानां पितृणामुद्धारार्थं आत्मनः संतानाविच्छेदाय वृषवत्सतरीपुच्छेषु तर्पणं करिष्ये इति संकल्प्य नित्यपितृतर्पणवद्देवर्षिपितृतर्पणं कृत्वा वाराहब्रह्मांडपुराणमंत्रैस्तर्पणं कुर्यात् ।— ब्राह्माद्या देवताः सर्वा ऋषयो मुनयस्तथा । असुरा यातुधानाश्च मातरश्चंडिकास्तथा । दिक्पाला लोकपालाश्च ग्रहदेवाधिदेवताः । ते सर्वे तृप्तिमायांतु नीलपुच्छे सुतर्पिताः । विश्वेदेवास्तथादित्याः साध्याश्चैव मरुद्गणाः । क्षेत्रपीठोपपीठानि नदा नद्यश्च सागराः । पाताले नागपत्न्यश्च नागाश्चैव सपर्वताः । पिशाचा गुह्यकाः प्रेता गंधर्वा गणराक्षसाः । पृथिव्यापश्च तेजश्च वायुराकाशमेव च । दिवि भुव्यंतरिक्षे च ये च पातालवासिनः । शिवः शिवा तथा विष्णुः सिद्धिर्लक्ष्मीः सरस्वती । तपोधनाश्च भगवानव्यक्तः परमेश्वरः । क्षेत्रौषधिलता वृक्षा वनस्पत्यधिदेवताः । कपिलः शेषनागश्च तक्षकोऽनंत एव च । अन्ये जलचरा जीवा असंख्यातास्त्वनेकशः । चतुर्दश यमाश्चैव ये चान्ये यमकिंकराः । सर्वेऽपि यक्षराजानः पक्षिणः पशवस्तथा । स्वेदजोद्भिदजा जीवाश्चांडजाश्च जरायुजाः । अन्येपि वनजीवा ये दिवा निशि विहारिणः । अजा गोमहिषीरूपा ये चान्ये पशवस्तथा । शांतिदाः शुभदास्ते स्युर्नीरेणानेन तर्पिताः। आब्रह्मस्तंबपर्यंतं ये चान्ये गोत्रिणस्तथा । ते सर्वे तृप्तिमायांतु नीलपुच्छे सुतर्पिताः । सर्पव्याघ्रहता ये च शृंगिदंष्ट्र्यनिलादिभिः । अपुत्रा अक्रिया ये च अदाना धर्मवर्जिताः । आमगर्भमृता ये च शस्त्रघातमृताश्च ये । संस्काररहिता ये च रौरवादिषु गामिनः । आब्रह्मस्तंबपर्यंतं देवर्षिपितृमानवाः । तृप्यंतु पितरः सर्वे मातृमातामहादयः । अतीतकुलकोटीनां सप्तद्वीपनिवासिनां । आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकं । पितृवंशे मृता ये च मातृवंशे तथैव च । गुरुश्वशुरबंधूनां ये

चान्ये बांधवाः स्मृताः । ये मे कुले लुप्तपिंडाः पुत्रदारविव-र्जिताः । क्रियालोपगता ये च जात्यंधाः पंगवस्तथा । विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम । ते पिबंतु मया दत्तं वृष-पुच्छे तिलोदकं । ये बांधवा बांधवा वा येऽन्यजन्मनि बांधवाः । ते सर्वे तृप्तिमायांतु वृषपुच्छतिलोदकैः । वृक्षत्वं च गताः केचि-त्तृणगुल्मलतास्थिताः । यातनासु च घोरासु जातीषु विवि-धासु च । नरकेषु च घोरेषु पतिता ये स्वकर्मणा । देवत्वं मानुषत्वं च तिर्यक्त्वं वा गताश्च ये । कृमिकीटपतंगत्वं गता ये च स्वकर्मभिः । तेषामुद्धरणार्थाय जलमेतद्ददाम्यहं । आब्रह्म-स्तंबपर्यंतं जगत्तृप्यतु० ॥ अथ यजमानः पुत्रकामश्चेत्तदा देश-कालसंकीर्तनपूर्वकं पुत्रकामो वृषपुच्छे स्नानमहं करिष्ये इति संकल्पं कुर्यात् । ततः परिहिताहतवाससौ प्राङ्मुखौ दंपती वस्त्रपीठे उपवेशयित्वा तयोरुपरि सप्तधान्यफलान्वितवंश-पात्रे पुच्छान्येकीकृतानि पुरुषांतरेण धारयित्वोदङ्मुख आ-चार्यो वंशपात्रोदकेन दंपती अभिषिंचेत् समुद्रज्येष्ठा इत्यादि-भिर्वारुणैश्च मंत्रैः । ततो वस्त्रांतराणि परिधाय वेद्यां वृषदक्षि-णखुरे पायसादिसंभवद्द्रव्येण प्राचीनावीती दक्षिणामुखः सव्यं जान्वाच्य यजमानः पित्रादीनुद्दिश्य श्राद्धपूर्वकं पिंडदानं त-न्मात्रं वा कुर्यात् । मात्रादिभ्यो मातामह्यादिभ्यश्च पृथग्दद्या-दिति केचित् । तत्र संकल्पः । एवंगुणविशेषण० सर्वपितॄणां ब्रह्मलोकप्राप्त्यर्थं आत्मनश्च संतानाविच्छेदार्थं वृषखुरे सश्राद्धं पिंडदानं करिष्ये इति महालयवदेकोद्दिष्टदेवतोद्देशेनापि कृत्वा पौराणमंत्रैः पिंडदानं कुर्यात् । पितृवंशे मृता ये च मातृवंशे तथैव च । गुरुश्वशुरबंधूनां ये चान्ये बांधवाः स्मृताः । ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः । क्रियालोपगताश्चैव जात्यंधाः पंगवस्तथा । विरूपा आमगर्भाश्च ज्ञाताऽज्ञाताः कुले मम । खुरदत्तेन पिंडेन तृप्ता यांतु गतिं च ते । वृक्षयोनिगता ये च तिर्यग्योनिगताश्च ये । पंगुत्वं च गता ये वै ये च मूकत्वमा-गताः । आब्रह्मणो ये मम वंशजाता मातुस्तथा वंशभवा म-दीयाः । वंशद्वये ये मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च । मित्राणि सख्यः पशवश्च वृक्षा दृष्टाश्च स्पृष्टाश्च कृतोपकाराः । जन्मांतरे ये मम संगताश्च तेभ्यः स्वधापिंडमहं ददामि ।

अजातदंता ये केचिद्ये च गर्भे प्रपीडिताः । तेषामुद्धरणार्थाय इमं पिंडं० । बंधुवर्गाश्च ये केचिन्नामगोत्रविवर्जिताः । स्वगोत्रे परगोत्रे वा तेभ्यः पिंडं० । उद्बंधनमृता ये च विषशस्त्रहताश्च ये । शृंगिभिर्दंष्ट्रिभिर्वापि तेभ्यः पिंडं० । अग्निदाहे मृता ये च सिंहव्याघ्रमृताश्च ये । आत्मोपघातिनो ये च तेभ्यः पिंडं० । अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे । विद्युच्चौरहता ये च तेभ्यः पिंडं ददाम्यहं । रौरवे चांधतामिस्रे कालसूत्रे च ये गताः । तेषामु० पिंडं० । असिपत्रवने घोरे कुंभीपाके च ये गताः । तेषामु० । अनेकयातनासंस्था मृताः प्रेतेषु ये गताः । तेषामुद्धरणार्थाय० । असंख्ययातनासंस्था ये नीता यमकिंकरैः। तेषामु० । पशुयोनिगता ये च पक्षिकीटसरीसृपाः । अथवा वृक्षयोनिस्थास्तेभ्यः पिंडं० । अन्यैर्दुर्मरणैर्ये च क्षुत्तृड्भ्यामपि[1] ये मृताः । भूतप्रेतपिशाचा वा तेभ्यः पिंडं० । दिव्यंतरिक्षभूमिस्थाः पितरो बांधवादयः । ते सर्वे तृप्तिमायांतु पिंडेनानेन सर्वदा । जात्यंतरसहस्राणि भ्रमंते स्वेन कर्मणा । मानुष्यं दुर्लभं येषां तेभ्यः पिंडं० । ये केचित्प्रेतरूपेण वर्तंते पितरो मम । ते सर्वे तृप्तिमायांतु पिंडेनानेन सर्वदा । एवं पिंडदानं कृत्वा स्वगृह्योक्तविधिना पिंडदानशेषं समाप्य वृषखुरे पिंडदानं पूर्णमस्त्विति ब्राह्मणान्प्रति ब्रूयात् । ते च संपूर्णमस्त्विति प्रतिब्रूयुः । पिंडोद्धारणांते जातवेदसः प्रादक्षिण्येन परितो लाजान्विकीर्य वृषवत्सतरीः प्रादक्षिण्येनाग्नेः पूर्वतो नीत्वा वृषदक्षिणऊरौ त्रिशूलेन वामे चक्रेण चांकयित्वालंकृतं प्रांचमुत्सृजेत् । देशकालौ संकीर्त्य पितॄणामुद्धारणपूर्वकं ब्रह्मलोकावाप्तये स्वसंतानाविच्छेदाय वृषमुत्सृजामीति संकल्पपूर्वमुत्सृजेदिति केचित् । सहेमपुष्पोदकेनांजलिना वृषपुच्छं धारयित्वा हराय परमेशायैष मया दत्तो नममेति जलप्रक्षेपपूर्वकं हस्तमुत्क्षिप्योच्चैर्वदेत् । हरायेत्यादिद्वादशनामोच्चारणपूर्वकं वा । व्रजतः पृष्ठे हस्तं दत्त्वा मंत्रौ वदेत् । ॐ एतं युवानं परि वो ददामि तेन क्रीळंतीश्चरथ प्रियेण । मा नः शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम । ॐ शांता पृथिवी० सर्वतः ॐ शांतिः शांतिः शांतिः । सर्वतोव्रजस्वेत्युक्त्वा ऋषभंमासमा-

---

1 क्षुधया तृषया मृताः ।

नानामिति सूक्तेनोपतिष्ठेत । अस्य सूक्तस्य ऋषभ ऋषभोऽनुष्टुप् अंत्या महापंक्तिः ऋषभोपस्थाने विनियोगः । ततः कद्रुद्रायेति सूक्तस्य घौरः कण्वो रुद्रो गायत्री जपे विनियोगः। जपांते प्राचं कृत्वा गोभिः सह जलं पिब तृणानि भक्षय श्रेष्ठं यूथं पर्यटेति वदेत् । अथ दक्षिणाभिमुखं कृत्वा । इमारुद्रायेति सूक्तस्य कुत्सो रुद्रो जगती अंत्ये त्रिष्टुभौ जपेवि० । ॐ इमारुद्राय तवसे० इति जपांते गोभिः सहेत्यादिपूर्ववत् । ततः प्रत्यङ्मुखं कृत्वा आतेपितरिति सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् । जपेवि० । आते पितर्० इति सूक्तजपांते गोभिः सहेत्यादिपूर्ववत् । अथोदङ्मुखं कृत्वा इमारुद्राय स्थिरधन्वन इति सूक्तस्य वसिष्ठो रुद्रो जगती । अंत्या त्रिष्टुप् जपेवि० । ॐ इमारुद्राय स्थिरधन्वने० इति सूक्तजपांते गोभिः सहेत्यादिपूर्ववत् । इति शौनकमते । परिशिष्टमते तु वृषेण त्रिरग्निप्रदक्षिणां कारयित्वोक्तरीत्या स्वत्वत्यागं विधाय कद्रुद्रायेमारुद्रायातेपितरिमारुद्रायस्थिरेति सूक्तैश्चतस्रो दिश उपस्थायैतं युवानं शांतेति मंत्राभ्यां ऋषभंमेति सूक्तेन च वत्सतरीभिः सह वृषं प्राचं प्रागुदंचं वोत्सृजेत् इति विशेषः । ततो गच्छति वृषेऽनुगच्छन्स्तुवीत । वृषो हि भगवान्धर्मो मुक्तयो वत्सिका इमाः । सारूप्यं चैव सायुज्यं सान्निध्यं च सलोकताम् । इमाः सरूपाः पत्न्यस्तु चतस्रस्तव गोपते । कल्पिताः क्रीडनार्थं च त्वया सार्धं व्रजंत्विमाः । धर्मोसि त्वं चतुष्पादः स्मृतो वत्सतरीस्त्विमाः । चतुर्णां पोषणार्थाय मयोत्सृष्टास्त्वया सह । देवतानां पितॄणां च मनुष्याणां च योगतः । भूतानां तृप्तिजननास्त्वया सार्धं व्रजंत्विमाः । नमो ब्रह्मण्यदेवाय भूतर्षिपितृपोषक । त्वयि मुक्तेऽक्षया लोका मम संतु निरामयाः । वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः । वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः । धर्मतस्तव संभूतिः स्वाहा त्वं च विभावसोः । वृषरूपेण या देवी सर्वकामप्रदा भव । अदितिर्देवमातस्त्वं वेदमाता तथेश्वरी । धेनुरूपेण सा देवी मम पापं व्यपोहतु । गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः । गावो मे हृदये संतु गवां मध्ये वसाम्यहं । या लक्ष्मीः सर्वदेवानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम० । पंचगावः समुत्पन्ना

मथ्यमाने महोदधौ । तासां मध्ये तु या नंदा तस्यै देव्यै नमोनमः । धर्मं देहि यशो देहि पुत्रान्देहि सुसंपदः । एकोत्तरशतं चैव कुलानां तारयस्व मे । रुद्रमाता मया दत्ता पत्न्यस्तव वृषोत्तम । पितॄणां तारणार्थाय पर्यटस्व महीमिमां । खुराग्रक्षेपणैः सर्वं मम पापं व्यपोहतु । पितरस्तृप्तिमायांतु खुराग्रजलसीकरैः । ये त्वां हिंसंति पाप्मानो नरकं यांतु तेऽक्षयं । ये त्वां रक्षंति धर्मिष्ठाः स्वर्गे ते निवसंतु वै । तव दर्पकृतोच्चाटैर्नदीकूलविहारणैः । अक्षयाः संतु मे लोकाः पूर्वजानां तु सौरभ । धनं संतानमारोग्यं बांधवानां विशोकता । ततः प्रदक्षिणीकृत्य वृषं तमतिवाहयेत् । तत्र मंत्राः । धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः । चर त्वं धर्मरूपेण वृष वत्सतरीयुतः । धर्मस्त्वं वृषरूपेण ब्रह्मणा निर्मितः पुरा । तवोत्सर्गप्रभावेण मामुद्धर महार्णवात् । एवं नमस्कृत्य मंत्रवाद्यघोषेण सीमांतं नीत्वा दक्षिणस्कंधेन प्रेरयन्विसृजेत् । वृषवत्सतरीणां सर्वमलंकाराद्याचार्यो गृह्णीयात् । सच न वाह्यो गावश्च न दोह्याः । न वाह्योऽसौ नच क्षीरं पातव्यं केनचिद्गवां । इति वचनात् । तत आगत्य चरणक्षालनं आचमनादि विधाय स्थापितदेवतानामुत्तरपूजां विधाय उत्तिष्ठेति मंत्रेण यांतु देवगणा इति विसृज्य देवप्रतिमामाचार्याय दद्यात् । रुद्रकलशः सोपस्करो रुद्रजापकाय देयः । ततो रुद्रस्थालीपाकव्रीहिसंबंधितुषफलीकरणमग्नौ प्रहृत्य प्रायश्चित्तादिहोमशेषं समापयेत् । केचित्स्विष्टकृदन्त्रैवेच्छंति । ततोंकनकत्रें सोदकुंभं हिरण्यं यथाशक्ति दत्वास्य वृषोत्सर्गकर्मणः परिपूर्णतासिध्यर्थं शतं शिवव्रतधरान्ब्राह्मणान्यथोपपन्नेनान्नेन भोजयिष्य इति संकल्पयेत् । एतदशक्तौ पंचाशत्तदशक्तौ पंचविंशतिं यथाशक्ति वेति वृद्धाः । **शांखायनभाष्ये कौर्मे**—कुर्याल्लक्षादिभोज्यं तु एकादश शतानि वा । अथवा तु शतं भोज्यं दद्यादन्नमवारितं । उत्सृष्टे वृषभे दद्याच्चतुर्दशपदानि च । शय्यां सोपस्करां दद्याद्द्याद्दानानि वै दश । चतुर्दश तथा विप्राः सभार्या वेदपारगाः । उमामहेश्वरप्रीत्यै परिधार्याः स्वशक्तितः । भुवं सस्यवतीं दद्याद्वृषलांगलसंयुतां । दद्याच्च सप्तधान्यानि कपिलां गां सवत्सकां । आचार्यं पूजयेच्चैव सपत्नीकं विचक्षणः । इति । ततोस्य वृषो-

त्सर्गस्य प्रतिष्ठाफलसिद्ध्यर्थं आचार्यपूजनं करिष्ये इति संकल्प्य यथाशक्ति वस्त्रालंकारचंदनमाल्यादिभिराचार्यमभ्यर्च्य तिलाज्जुदकुंभं कर्षार्धपरिमितं हेमं वृषयोजनार्थं यूपं वस्त्रयुग्मं च दद्यात् । ततो यथाशक्ति ब्रह्मणे दक्षिणां दत्त्वा नानागोत्रेभ्यश्च भूयसीं दक्षिणां दत्त्वा सहिरण्याज्यकांस्यपात्रे—आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतं । आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः । इत्यवलोक्य ब्राह्मणाय प्रतिपाद्य न्यूनातिरिक्तं पूर्णमस्त्विति प्रार्थयेत् । पूर्णमस्त्विति ब्राह्मणाः प्रतिब्रूयुः । इदानीं कलशोदकेनाभिषेक इति केचित् । ब्राह्मणाशिष आदाय सर्वाणि ह वा अस्य रुद्रस्य नामधेयानि सर्वाः सेनाः सर्वाण्युच्छ्रयणानीति विचिंत्य शंतातीयं जपन् गृहान् गत्वा संकल्पितब्राह्मणान्भोजयित्वा यथाशक्ति हिरण्यवस्त्रदानेन तांस्तोषयेत् । स्वस्ति भवंतो ब्रुवंत्वित्युक्त्वा ते स्वस्तीति ब्रूयुः । तद्दिने दीनदुःखितानामनिवारितभोजनं देयं । तत ईश्वरार्पणं कृत्वा बंधुभिः सह भुंजीत । इति आश्वलायनवृषोत्सर्गप्रयोगः ।

बौधायनोक्तप्रयोगे वृषवत्सतरीभिस्तिलोदकपानसमर्थे पितृतृप्तिध्यानविधानान्न पृथक् तर्पणं । गोमिथुनविधानाद्दक्षिणांतरनिवृत्तिः । प्रयोगारंभात्पूर्वमेव वत्सतरीणां दोहनं । अंते तदीयपयसि ब्राह्मणभोजनार्थं पायसश्रपणविधानात् । शेषं यथासूत्रं पौराणांगोपसंहारेण कार्यं । इति तैत्तिरीयप्रयोगः ।

अथ कातीयः । मातृपूजापूर्वमाभ्युदयिकं कृत्वा गोष्ठे गवांमध्ये वा पंचभूसंस्कारान्कृत्वा आवसथ्यस्थापनं कार्यं ।—गोष्ठाभावे गवांमध्ये तदभावे नदीतटे । अग्निसंनिधावुपविश्येश्वरप्रीतये वृषोत्सर्गमहं करिष्य इति संकल्प्य । विशेषः कारिकायां—अकालमव्रणं कुंभमश्वत्थदलसंयुतं । गंधोदकयुतं वह्नेः स्थापयित्वेशगोचरे । सरेद्वैकल्पितानूर्जे पौर्णमास्यां वृषोत्सृजि । ब्रह्मणो गमनादींश्च पूर्णपात्रवरांतकान् । प्रणयनकाले क्षीरजलयोः प्रणयनं तंडुलानंतरं पौष्णपिष्टचरोः सिद्धस्यासादनं । प्रणीतपयसि पायसश्रपणं । पर्युक्षणांते सुसमिद्धेऽग्नौ षडाज्याहुतीर्जुहोति । इहरतिः स्वाहा । इहरमध्वं स्वाहा । इहधृतिः स्वाहा । इहस्वधृतिः स्वाहा । उपसृज धरुणं मात्रे

धरुणो मातरं धयन्स्वाहा। रायस्पोषमस्मासुदीधरत्स्वाहेति। सर्वत्रेदमग्नय इति त्यागः। ततः आघाराज्यभागांते पायसेन नवाहुतीर्जुहुयात्। अग्नयेस्वाहा १ रुद्राय० २ अपडपस्पृश्य। शर्वाय० ३ पशुपतये० ४ उग्राय० ५ शनये० ६ भवाय० ७ महादेवाय० ८ ईशानाय० ९ यथादैवतं त्यागः। पूषागा इत्यादिना सनोतुन इत्यंतेन मंत्रेण स्वाहायुतेन पिष्टचरोरेकाहुतिः। इदं पूष्णे। पायसपौष्णाभ्यां स्विष्टकृते हुत्वा। व्याहृत्यादिहोमसंस्रवप्राशनांते पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दक्षिणां दद्यात्। ततो विशेषः **कारिकायां**—घटेन स्नापयेत्तेन वृषं वत्सतरीयुतं। जस्वैव सघटे रुद्रानग्नेरुत्तरतः स्थितः। रुद्राध्यायं जपेत्कर्णे दक्षिणे वृषभस्य तु। अलंकृत्य वृषं पुष्पमाल्याद्यैर्वाससापि च। घंटिकानूपुराद्यैश्च सुवर्णतिलकेन तु। वध्नीयात्कंकणान्यादौ ग्रीवां सूत्रेण वेष्टयेत्। यूथे मुख्याश्चतस्रो या अलंकृत्यैवमेव ताः। ततस्तर्पणपिंडदानादेः पौराणस्योपसंहारे पूर्वं तर्पणादिकार्यं ततो वत्सतरीमध्ये वृषं प्रांचं कृत्वा एतं युवानमिति मंत्रपाठ इति **वासुदेवः**। वत्सतरीणां कर्णे पठित्वा सोदकं वृषपुच्छमादाय वत्सतरीरुद्दिश्योत्सृजेदिति **कारिकायां**। ततश्चैताभ्यो वत्सतरीभ्य एतं वृषममलंकृतं संप्रददे नमम। वत्सतरीस्वरूपी परमेश्वरः प्रीयतामिति मंत्रांते वदेत्। ततो विशेषः **कारिकायां**—पाणिभ्यां संहिताभ्यां तु गवांमध्ये स्थितं वृषं। मयोभूरित्यनुवाकेन शेषेणैवाभिमंत्रयेत्। अनुवाकेऽवधिः कर्णं सूर्यस्वाहांतको भवेत्। ततोऽस्य दक्षिणे भागे त्रिशूलाकृतिमालिखेत्। वामभागे तथा चक्रं प्रतप्तेनायसेन तु। विपरीतं तु शूलस्य विप्रवत्क्षत्रवैश्ययोः। प्रदक्षिणं परिभ्रास्य प्रागुदीच्यां समुत्सृजेत्। वृषं वत्सतरीयुक्तं ततस्तमनुमंत्रयेत्। धर्मोसि त्वं चतुष्पादश्चतस्रः स्ते प्रियाः शुभाः। एता हि योषणा तुभ्यं मयोत्सृष्टास्त्वया सह। धर्मस्त्वं वृषरूपेण जगदानंदकारकः। अष्टमूर्तेरधिष्ठानमतः पाहिसनातन। त्वयि मुक्तेऽक्षया लोका मम संतु निरामयाः। ततः। मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षजाः। गुरुश्वशुरबंधूनां ये चान्ये पिंडवर्जिताः। वृषोत्सर्गेण ते सर्वे लभंतां गतिमुत्तमां। दद्यादनेन मंत्रेण तिलपुच्छयुतं जलं। पि-

तूभ्यश्च समासेन ब्राह्मणेभ्यश्च दक्षिणां । वृषोत्सर्गनिमित्तं हि त्रिप्रभृतिद्विजभोजनं । इति । वृषवत्सतरीषु न कस्यापि औपादानिकस्वत्वांगीकार उचित इति **हरिहरः** । इति कातीयवृषोत्सर्गः ।

एवमेव **शांखायनानां** विशेषस्तदीयसूत्रोक्तो लिख्यते । तिस्र आहुतयः । इहरति० ध्वंस्वाहा । इहधृति० उपसृजं० राय० रत्स्वा० । ततः पूषागा इत्यनेन चरोरेका चतुरवत्ताहुतिः । ततो रुद्रकलशे जपः तद्विधिसूत्रे पाठद्वयं । रुद्रान् जपित्वेति रुद्रमिति वा । प्रथमपाठे कद्रुद्रायेति पूर्वोक्तानि सूक्तानि त्र्यंवकमित्येषां पाठः । द्वितीयपाठे रुद्रपरिशिष्टोक्तो रुद्रजपः । अग्निमीळे० येनेदं० सहस्रशीर्षा० अहंरुद्रेभिः० । नतमंहः० आशुःशिशानो० विभ्राड्बृहत्पि० कद्रुद्राय० इमारुद्राय० आतेपितः० इमारुद्रायस्थिर० सोमारुद्राधारयेथा० जराबोध० नमोमहद्भ्यः० रुद्राणामेति० प्रवःपांतं० आवो राजानं० कद्धिष्ण्यासु० हंसःशुचिषत्० कथामहेरुद्रिया० तमुष्टुहियः० भुवनस्यपितरं० रथीतमं कपर्दिनं० रुद्रस्यये० अस्मेरुद्रा० प्रवोछारिरिचे० त्र्यंबकमिति । एवं विहितस्य रुद्रजपस्याद्यंतयोर्जपः प्रणवव्याहृत्यादेः कार्यः । यथोक्तमृग्विधाने—ओंकाराद्यास्तु ता जप्त्वा सावित्रीं च तदित्यृचं । आपोहिष्ठेति सूक्तं च शुद्धवत्योघमर्षणं । शंवत्यः स्वस्तिमत्यश्च पावमान्यस्तथैव च । सर्वत्रैतत्प्रयोक्तव्यमादावंते च कर्मणां । इति । ता व्याहृतीः । सूक्तर्चः शुद्धवत्य० ९ एतोनु० ३ अद्य० ऋतंच० शंवत्यः० शन्नः० ३४ स्वस्तिमत्यः स्वस्तिनो० ७ पावमान्यः स्वादिष्ठया० १० एवं जपांते वारुणलिंगमंत्रैर्वृषमभिषिच्यः पुरुषसूक्तन्यासं कृत्वा कुंकुमेन ललाटे अर्धचंद्राकृतिं कृत्वा वृषो हि भगवानिति जपित्वा कर्पूरादिगंधैर्वृषमुपलिप्य तीक्ष्णश्रृंगायेति धर्मस्त्वमिति च प्रार्थ्य घंटाचामरादिभिर्वृषमलंकृत्य पूर्वविधिना तर्पणपिंडदाने कृत्वैतं युवानं० माश्वश्चात्रजनुषा संविदेमेति प्राचमुत्सृजेत् वत्सतरीमध्यस्थे वृषे मयोभूरित्यनुवाकशेषेणानुमंत्र्य सर्वगृहस्थगोपयसि पायसं श्रपयित्वा ब्राह्मणान्भोजयेत् पूर्वोक्तान्यतरसंख्यया । बहुधैवमनंतेन वृषोत्सर्गो न्यरूप्ययं । असुना मुदमायातु सोमः श्रीवृषवाहनः।

अत्रैव नीलवृषदानं ब्राह्मे—नीलं च वृषभं दद्याच्चतुर्वत्सतरीयुतं । सर्वसस्यचरं रम्यं सर्वगंधसमन्वितं । सुवाससं ब्राह्मणाय महाकांतारतारकं । यावंति तस्य रोमाणि शरीरे संति संख्यया । तावद्युगसहस्राणि स्वर्गे वसति तत्प्रदः । पूजयित्वा ततो विष्णुं रक्तमाल्यानुलेपनैः । भोक्तव्यं गोरसप्रायं स्वप्तव्यं स्थंडिले ततः इति । तथा तत्रैव—पूर्णमास्यां तु संपूज्यो भक्त्या दामोदरः सदा । ततश्चंद्राद्याः पूज्यास्तारकाकृत्तिकास्तु षट् । कार्तिकेयस्तथा खड्गो वरुणश्च हुताशनः।धान्यैः सशूकैर्द्वारोर्ध्वं भूषितव्यं निशागमे । माल्यैर्धूपैस्तथा गंधैर्भक्षैरुच्चावचैस्तथा । परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्पणैः । एवं देवस्तु संपूज्यो दीपो देयो गृहाद्बहिः । दीपोपांते तथा गर्तश्चतुरस्रो मनोरमः । चतुर्विंशांगुलः कार्यः सिक्तचंदनवारिणा । गवां क्षीरेण संपूर्णः समंतात्परिरक्षितः । तत्रहेममयो मत्स्यो मुक्तानेत्रो मनोहरः । प्रक्षेप्तव्यो विधानेन नमोस्तु हरये पठेत् । ब्राह्मणायाथ योग्याय दद्यात्तत्क्षीरसागरं । इति ।

अस्यामेव पूर्णमास्यां नक्षत्रयोगेन पुण्यत्वमुक्तं । निर्णयामृते ब्राह्मे—आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवति क्वचित् । तिथिः सापि महापुण्या मुनिभिः परिकीर्तिता । प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप । सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा । तथा—पुण्या महाकार्तिकी स्याज्जीवेंद्वोः कृत्तिकास्थयोः । इति । विशाखासु यदा भानुः कृत्तिकासु च चंद्रमाः । स योगः पद्मको नाम पुष्करेष्वपि दुर्लभः । इति ।

अस्यामेव पौर्णमास्यां कार्यांतराणि । तत्र तावल्लक्षप्रदक्षिणाव्रतोद्यापनं । विष्णुधर्मोत्तरे—श्रीकृष्ण उवाच । चातुर्मास्ये तु संप्राप्ते पंचगव्याच्छुचिर्भवेत् । स्वकृतं पापमुच्चार्य ज्ञातं च सकलं भवेत् । संकल्प्य कुर्यान्नियतः कार्तिक्यां तु जितेंद्रियः । लक्षं समाप्य पश्चात्तु कुर्यादुद्यापनं व्रती । आचार्यं वरयेद्विद्वान्ब्राह्मणानृत्विजस्तथा । स्वस्तिवाचनपूर्वेण कालरूपं जनार्दनं । वस्त्रेण परिधानेन निर्व्रणे कलशेऽर्चयेत् । हुत्वा तु विष्णुगायत्र्या शतमष्टोत्तरं चरुं । कपिलां गां ततो दद्यादाचार्याय सदक्षिणां । ब्राह्मणानृत्विजश्चैव यथान्यायं प्रपूजयेत् ।

पायसं जुहुयात्तत्र सहस्रं विजितेंद्रियः । अंहोमुग्वैश्वदेवेन सूक्तेन प्रत्यृचं बुधः । नतमंहोन आयुरित्यंतं दशसहस्रं वेत्यर्थः । ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणां । एवं कृत्वा व्रतमिदं पवित्रं पापनाशनं । पूर्वजन्मार्जितैः पापैरिह जन्मार्जितैरपि । आगामिजन्मभिश्चैव मुच्यते नात्र संशयः । गुंजात्रयसुवर्णं च दद्याच्चैव तु दक्षिणां । प्रत्येकं च सहस्रे तु तदर्धं च तदर्धकं । भगवानुवाच । तस्मात्त्वमपि राजेंद्र कृत्वेदं व्रतमुत्तमं । मुक्तस्त्वं सर्वपापेभ्य आपद्भ्यश्च विमुच्यसे । इति ।

ततः लक्षनमस्कारव्रतोद्यापनमुक्तं ब्रह्मांडे—आषाढस्य सिते पक्षे एकादश्यां समाहितः । संकल्प्य देवदेवस्य पुरतश्चक्रपाणिनः । मम लक्षनमस्कारव्रतस्य पुरुषोत्तम । निर्विघ्नेन व्रतं सांगं कुरु त्वं कृपया हरे । पापपंकनिमग्नं मां पापवेषस्य भाजनं । व्रतेनानेन सुप्रीतः समुद्धर जगत्पते । इति संकल्प्य मनसा कार्तिके तु समाचरेत् । प्रातःस्नात्वा व्रतं कुर्यादामध्याह्नं सदा मुनिः । यद्वा तदा न भुंजीत कृत्वा तु लघुभोजनं । अनृतं न वदेत्कापि नतु ध्यायेत्कदाचन । देवतार्चा जपं होमं न त्यजेत्तु कथंचन । अतिथिं पूजयेन्नित्यं यथाशक्त्यनुसारतः । कार्तिके मासि संप्राप्ते पौर्णमास्यां ततः परं । संस्थाप्य कलशं पूर्णं सवस्त्रं सपिधानकं । विष्णोश्च प्रतिमां तत्र पूजयेद्विष्णुनामिकां । अतोदेवेति सूक्तेन पूजयेदुपचारकैः । नामभिः केशवाद्यैश्च अंगपूजा विधीयते । नैवेद्यांतं समभ्यर्च्य कुर्यात्पश्चाच्च तर्पणं । पौरुषेण च सूक्तेन तिलगोधूमतंडुलैः । शंखेनापूरितं तोयं तिलगोधूमतंडुलैः । गंधपुष्पाक्षताद्यैश्च अर्घ्यं विष्णोर्निवेदयेत् । देव देव जगन्नाथ सर्वव्रतफलप्रद । व्रतेनानेन सुप्रीतो गृहाणार्घ्यं मयार्पितं । पौरुषेणापि सूक्तेन सप्तावृत्त्या च वै हुनेत् । चरुणा तिलव्रीह्याद्यैः समिद्भिः सर्पिषा सह । होमशेषं समाप्याथ पूर्णाहुतिमतः परं । आचार्यं पूजयेत्पश्चाद्दद्याद्गोमिथुनं गुरोः । ब्राह्मणान्भोजयेत्पश्चाच्छतं विंशति पंच वा । दक्षिणां च यथाशक्ति गृह्णीयादाशिषस्ततः । अनुज्ञातश्च तेभ्यो वै स्वयं भुंजीत बंधुभिः । इदं व्रतं महापुण्यं पापारण्यदवानलं । पापपर्वतकुलिशं पापाब्धितरणोडुपं । सर्वपापहरं नृणां सद्यो विष्णोः प्रसादनं । नानेन सदृशं

किंचिल्लोकेषु त्रिषु विद्यते । सर्वेषामाश्रमाणां च विहितं श्रुतिचोदितं । नारीणां सधवानां च विधवानां विशेषतः । सर्वेषामपि पापानां प्रायश्चित्तमिदं भवेत् । इति ।

तथा **तुलसीलक्षपूजोद्यापनमुक्तं भविष्ये**—अथ राजन्प्रवक्ष्यामि लक्षश्रीतुलसीव्रतं । विष्णुप्रीतिकरं नृणां विष्णुभक्तिविवर्धनं । कार्तिके मासि कुर्वीत माघे वारंभणं तथा । दिने दिने सहस्रं तु अर्पयेत्तुलसीदलं । एवं मासत्रयं कुर्यात्तत उद्यापनं चरेत् । मासत्रयं दशदिनाधिकमिति विशेषः । वैशाखे माघमासे तु कुर्यादुद्यापनं क्रमात् । यस्मिन्मासे प्रकर्तव्यं दर्शने गुरुशुक्रयोः । शुभे दिने शुभर्क्षे च शुभलग्ने सुवासरे । आचार्यं वरयेदादौ वेदवेदांगपारगं । दांतं शांतं तथा सांगं निःस्वकं ब्रह्मचारिणं । विधिज्ञं तत्ववेत्तारं पुत्रवतं तपस्विनं । स्वगृह्योक्तेन मार्गेण पूर्वेद्युः स्वस्तिवाचनं । प्रभाते स्थंडिलं कुर्यात्कुर्यादग्निमुखं तथा । आघारांतं प्रकुर्वीत गृह्योक्तविधिना तथा । पंचखाद्यं तथा सर्पिः पालाशं चरुमेव च । जुहुयादिति शेषः । अष्टाक्षरद्वादशार्णषड्वर्णैः प्रणवेन तु । यथासंख्यं मंत्रविनियोगः । दलानां तु दशांशेन तर्पणं कारयेत्पुरा । तर्पणस्य दशांशेन होमं कुर्याद्विचक्षणः । होमांते कपिलां दद्यादाचार्याय सवत्सकां । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् । होमस्य तु दशांशेन ब्राह्मणान्भोजयेत्ततः । सहस्रनामदानं तु कुर्याद्वै ब्राह्मणोत्तमे । सहस्रनामभिः कुर्यात्तर्पणं तु विचक्षणः। वृंदावनं सुवर्णेन कृत्वा तेनैव मंजरीं । कृत्वाचार्याय वर्याय दापयेन्मंत्रराजतः । प्रणवेनेत्यर्थः । एवं व्रते कृते विष्णुः सुप्रीतो वरदो भवेत् । सम्यग्दानं समासाद्य विष्णुलोकं स गच्छति । होमभस्म समादाय रक्षणं त्वात्मनश्चरेत् । ब्रह्मराक्षसभूतानि पिशाचग्रहरक्षकाः । पीडां न तत्र कुर्वंति होमभस्म तु यत्र वै । सर्पादिबाधके प्राप्ते गर्भिण्याश्च विनिर्गमे । भस्मप्रक्षेपमात्रेण सर्वं पश्येत्स्फुटं नृणां । इति । संकटमिति शेषः ।

**अथान्यल्लक्षपूजोद्यापनं स्कान्दे** लक्षपूजां प्रक्रम्य—श्रीकामो बिल्वपत्रैश्च शांतिकामश्च दूर्वया । आयुःकामेन कर्तव्यं चंपकैः पूजनं हरेः । विद्याकामेन कर्तव्यमतसीधात्रि-

भिस्तथा । विष्णोः प्रसादकामेन तुलसीभिः समाहितं । पुत्रकामेन कर्तव्यं बार्हतं पूजनं शुभं । दुःखप्रशमनार्थाय शस्यधान्यैः प्रपूजयेत् । रंगवल्ल्यादिभिश्चैव देवस्याग्रे विनिर्मितैः । पद्मादिभिः स्वस्तिकाद्यैश्चक्राद्यैः पूजयेद्विभुम् । एवं हि सर्वपुण्यैश्च सर्वकामार्थसिद्धये । लक्षपूजां प्रकुर्याच्च सुप्रसन्नो हरिर्भवेत् । उद्यापनं ततः कार्यं मंडपं तत्र कारयेत् । वेदिका च प्रकर्तव्या मंडपे च सुशोभना । पुण्याहवाचनं कुर्यादाचार्यं वरयेत्ततः । आचार्यस्तु दशांशेन तर्पयेद्यदि वा द्विजैः । गीतवादित्रनिर्घोषैर्ब्रह्मघोषेण भूयसा । प्रविश्य मंडपे तस्मिन्रात्रौ जागरणं ततः । वेदिकायां प्रकर्तव्यं स्वस्तिकं परमाद्भुतं । तन्मध्ये तु दलैः कुर्याच्छ्वेतद्वीपं तु शोभनं । कलशं स्थापयेत्तत्र ताम्रं चैव महत्प्रभं । पंचपल्लवसंयुक्तं न्यसेद्वस्त्रं सुसूक्ष्मकं । सौवर्णीं प्रतिमां तत्र स्थापयेच्च हरेर्विभोः । पूजां तत्र प्रकुर्वीत पंचामृतपुरःसरैः । धूपैर्दीपैः सनैवेद्यैर्गीतवादित्रनृत्यकैः । वेदशास्त्रपुराणैश्च रात्रौ जागरणं व्रती । कुर्यादितिशेषः । ततः प्रभातसमये सुस्नातः सुशुचिर्भवेत् । स्थंडिलं कारयेत्तत्र स्वशाखोक्तविधानतः । हवनं च प्रकुर्वीत सतिलाज्येन पायसा । मूलमंत्रेण गायत्र्या विष्णोर्नाम्नां सहस्रकैः । विष्णोरित्यस्य मध्यमणिन्यायेनान्वयः । मूलमंत्रे नियममाह । येन मंत्रेण पूजा तु कृता तेनैव होमयेत् । शर्कराघृतमिश्रेण चरुणा जुहुयात्ततः । अष्टाधिकसहस्रं तु शतमष्टाधिकं तु वा । पृथक् द्रव्यचतुष्केण दशांशेन तु होमयेत् । ततः स्विष्टकृतं हुत्वा पूर्णाहुतिमनंतरं । श्रेयःसंपादनं पश्चादाचार्यं पूजयेत्ततः । ब्राह्मणान्पूजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणां । आचार्यं पूजयेत्सम्यग्वस्त्रालंकारभूषणैः । पयस्विनीं च गां दद्याद्धिरण्यादींस्तथैव च । प्रतिमां च सवस्त्रां च कलशं पर्वतं तथा । पर्वताकारं तंडुलमयं श्वेतद्वीपमित्यर्थः । दत्त्वा क्षमापयेत्पश्चाद्देवदेवं जनार्दनं । येन येन प्रकुर्याच्च लक्षपूजां च विष्णवे । तत्तद्द्यात्सुवर्णेन कृत्वा विष्णुं प्रपूजयेत् । यदि दीपः कृतस्तेन तद्दानं चैव कारयेत् । सुवर्णवर्तिकां कृत्वा दीपपात्रं च रौप्यकं । गोघृतेन समायुक्तं सर्वकामार्थसिद्धये । क्षमापयेत्तथा देवं ब्रा-

ह्मणान्भोजयेच्छतं । होमादिकं यथाशक्ति कृत्वा च फल-
मश्नुते । एवं यः कुरुते पूजां तस्य विष्णुः प्रसीदति ।

अथ लक्षवर्तिव्रतोद्यापनमुक्तं वायुपुराणे—लक्षव-
र्तिव्रतस्यास्य विधानं कीदृशं वद । इत्युपक्रम्य—कालो
हि कार्तिको मासो वैशाखो माघ एव च । सहस्रगु-
णितं धत्ते व्रतमेतद्धि कार्तिके । तस्मात्कोटिगुणं धत्ते माघ-
मासे व्रतोत्तमं । तस्मादनंतगुणितं फलं वैशाखमासि वै ।
एतस्मिन्मासत्रितये यस्मिन्मासे समाप्यते । तस्मान्मासत्रया-
त्पूर्वमारब्धव्यमिदं व्रतं । अंते मासि प्रकुर्वीत समाप्तिं च
विचक्षणः । सहस्रवर्तिभिः कुर्यादारार्तिं विष्णवेऽन्वहं । गो-
घृतेनाथ तैलेन सम्यगार्क्कैर्मनोहरैः । यस्मिन्मासे समाप्तिः
स्यात्पौर्णमास्यां तु कारयेत् । उद्यापनं विधानेन व्रतसंपूर्ति-
कारणं । प्रातः स्नात्वा शुचिर्भूत्वा पंचगव्यं तु प्राशयेत् । पु-
ण्याहवाचनं कृत्वा वरेदाचार्यमुत्तमं । ब्राह्मणानृत्विजश्चैव कु-
र्यात्तर्पणमंजसा । सतिलैश्च यवैः कुर्यादग्नेनयेत्यृचा द्विजः ।
वर्त्या दशांशतः कुर्यात्तर्पणं तु विचक्षणः । तर्पणस्य दशांशेन
होमं कुर्याद्विधानतः । तर्पणोक्तेन मंत्रेण पायसं च घृतान्वितं ।
पालाशसमिधश्चैव मंत्ररत्नेन वैष्णवः । मंत्ररत्नेन तद्विष्णोरि-
त्यनेन । घृतं च विष्णुगायत्र्या होमस्यायं विधिः स्मृतः । क-
लशेंबु तथा स्थाप्यं परिधानं सवस्त्रकं । तत्र मासाधिदेवस्य
प्रतिमां कारयेत्ततः । कार्तिके दामोदरेत्येवमूह्यं । कालो विष्णु-
स्तथा वह्नी रविर्दीपो निशाकरः । रुद्रः शेषो जगद्व्यापी तेजोरूपी
महेश्वरः । निरंजनः कलाध्यक्षो विश्वरूपो जगत्प्रभुः । स्वप्र-
काशः स्वयंज्योतिश्चतुर्व्यूहो जलाशयः । परब्रह्मेति द्वादशना-
मभिः पूजयेद्धरिं । शिरो ललाटं नेत्रे च कर्णौ नासामुखे
तथा । कंठस्कंधौ तथा बाहू स्तनौ वक्षस्तथोदरं । नाभिं कटी
च जघने ऊरू जानू च गुल्फके । पादौ तदग्रे क्रमशो ह्यंगा-
न्येव तु पूजयेत् । आचार्यं पूजयेत्पश्चाद्ब्राह्मणानृत्विजस्तथा ।
गौर्दातव्या सवत्सा च सालंकारा गुणान्विता । त्रिंशत्पलं कां-
स्यपात्रं घृतेन परिपूरितं । सुवर्णवर्तिसंयुक्तमाचार्याय नि-
वेदयेत् । अथवा तद्दशफलं तथा घृतसमन्वितं । अथ वा तु
यथाशक्ति दद्यादावश्यकं त्विदं । व्रताभावे तु गां दद्यात्कांस्यं

वै घृतपूरितं । यावज्जीवं जीवपतिर्भवत्येव न संशयः । रजोदोषनिवृत्तिः स्यात्पौर्णमास्यां ददाति या । ब्राह्मणान्भोजयेत्पश्चाद्वित्तशाठ्यं न कारयेत् । या चैवं कुरुते नारी तस्याः पुण्यफलं शृणु । अवश्यान्यपि पापानि रहस्यानि कृतानि च । नश्यंति तानि सर्वाणि व्रतस्यास्य प्रभावतः । इति ।

अथ रुद्रलक्षवर्तिव्रतोद्यापनं । तत्रादौ तदारंभविहिता पूजोच्यते ।—देवदेव जगन्नाथ प्रार्थयेहं जगत्पते । अतोऽत्र प्रीतिभावेन लिंगेऽस्मिन्संनिधो भव । आवाहनं । कार्तस्वरमयं दिव्यं नानामणिविभूषितं । अनेकरत्नसंयुक्तमासनं प्रतिगृह्यतां । आसनं । गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतं । तोयमेत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां । पाद्यं । वरेण्य यज्ञपुरुष प्रजापालनतत्पर । नमो माहात्म्यदेवाय गृहाणार्घ्यं नमोस्तु ते । अर्घ्यं । पाटलोशीरकर्पूरसुरभि स्वादु शीतलं । तोयमाचमनीयार्थं निर्मलं प्रतिगृह्यतां । आचमनीयं । पंचामृतं मयानीतं पयो दधि घृतं मधु । कर्पूरशर्करायुक्तं गृहाण त्रिपुरांतक । पंचामृतं । मंदाकिन्याः समानीतं हेमांभोरुहवासितं । स्नानाय ते मया भक्त्या नीरं स्वीक्रियतां शिव । स्नानं । सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यतां । वस्त्रं । महादेव नमस्तेस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम । यज्ञोपवीतं । मलयागरुसंभूतं घनसारं मनोहरं । हृदयानंदनं चारु चंदनं प्रतिगृह्यतां । गंधं । रंजिताः कुंकुमेनैव अक्षताश्च सुशोभनाः । गृहाण त्राहि मां सर्वपापेभ्यो वृषभध्वज । अक्षताः । माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो । मया हृतानि पूजार्थं पुष्पाणि प्रतिगृह्यतां । पुष्पाणि । अत्र बिल्वदलार्पणं । वनस्पत्युद्भवो दिव्यो गंधाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां । धूपं । आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापह । दीपं । अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं । भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यतां । नैवेद्यं । कर्पूरवासितं तोयं मंदाकिन्याः समाहृतं । आचमनं जगन्नाथ मयादत्तं हि भक्तितः । आचमनं । पुगीफलं महद्दिव्यं नागवल्लीदलैर्युतं । कर्पूरैलाल-

वंगाढ्यं तांबूलं प्रतिगृह्यतां । तांबूलं । हिरण्यगर्भगर्भस्थं हेम-बीजं० । दक्षिणां । मंदारचंपकजपाशतपत्रजातीकह्लारकिंशुक-सरोरुहवंधुकानि । धत्तूरकर्पूरशिरीषकुरंटबाणविल्वानि देव मम भक्तियुतो गृहाण । यज्ञेनेति मंत्रपुष्पं । नमस्ते देवदेवेश नमस्ते धरणीधर। नमस्ते विश्वरूपाय नमस्ते पुरुषोत्तम । नम-स्कारः । लोकात्मन्सर्वभूतात्मन्निमेषत्रुटिसंभव । जन्ममृत्युज-राव्याधिसंसारभयनाशन । प्रदक्षिणा । मंत्रहीनं क्रियाहीन-मिति प्रार्थना ।

अथ कथा । नारद उवाच—देवदेव जगन्नाथ जगदानं-दकारक । कौतूहलपूर्वकं वै किंचित्प्रश्नं करोम्यहं । श्रुतानि देवदेवेश व्रतानि नियमास्तथा । तीर्थानि च महादेव यज्ञदा-नान्यनेकशः । नास्ति मे निश्चयो देव भ्रामितोहं त्वया पुनः । कथयस्व महादेव यद्गोप्यं व्रतमुत्तमं । शिव उवाच । शृणु नारद यत्नेन व्रतानामुत्तमं व्रतं । रुद्रवर्त्यां महापुण्यं सर्वोप-द्रवनाशनं । सुखसंस्पर्शकं चैव पुत्रराज्यसमृद्धिदं । शंकर-प्रीतिजनकं शिवलोकप्रदं शुभं । स्वभर्त्रा सह संबंधमहास्नेह-करं परं । शृणु नारद यत्नेन गिरीशो यत्र तुष्यति । दीपानां लक्षकं यस्तु कुर्यात्परमधार्मिकः । यावत्कालं प्रज्वलंति दी-पास्ते लिंगसंनिधौ । ब्रह्मणो युगसाहस्रं दाता स्वर्गे महीयते । कौस्तुभेन(?) समायुक्ता दीपा दत्ताः शिवालये । सुरलोके च कैलासे तिष्ठंति शिवमूर्तयः । एवं हि वहवः संति दीपाश्च द्विजसत्तम । अधुना संप्रवक्ष्यामि यत्पूर्वं कथितं तव। यत्कृत्वा कृतकृत्याः स्युर्देवासुरनरेश्वराः । ये वै ज्ञात्वा न कुर्वंति ते ज्ञात्वा दुःखभागिनः । रुद्रवर्तिसमं नास्ति त्रिषु लोकेषु सु-व्रतं । अतएव सदा कार्यं व्रतमेतत्सुदुर्लभं । मयाख्यातं व्रत-मिदं किमन्यच्छ्रोतुमिच्छसि। नारद उवाच। केन चीर्णं व्रतमिदं कथयस्व प्रसादतः । पूजाविधिं च मे ब्रूहि उद्यापनविधिं वद । ईश्वर उवाच । शृणु नारद महाभाग यत्त्वं श्रोतुमिहेच्छसि । तदहं ते प्रवक्ष्यामि विस्तरेण महामते । क्षिप्रायाश्च तटे रम्ये उज्जनीति पुरी शुभा । तस्यामासीत्सुगंधाख्या वारस्त्री चाति-सुंदरी । तया शुल्कं कृतं दंडभेदश्चैव सुदुःसहः । सुवर्णानां शतं द्वे च प्रतिज्ञां कृतवत्यथ । युवानश्च तया विप्र भ्रंशि-

तास्तु सुगंधया । एवं हि बहवो लोका लुंठिताश्च सुगंधया । कदाचित्सा गता क्षिप्रं कौतुकाविष्टमानसा । ददर्श च मनोरम्यामृषिभिः परिसेवितां । केचिद्ध्यानपरा विप्राः केचिज्जपपरायणाः । केचिच्छिवार्चने सक्ताः केचिद्विष्णोः प्रपूजने । तेषां मध्ये वसिष्ठो हि तया दृष्टो महामुने । उपद्रष्टा तु सर्वत्र कुशलो नीतिमार्गवित् । तस्या धर्मेऽभवद्बुद्धिर्भाविपुण्यबलात्तदा । विगताशा जीवने हि विषयेषु विशेषतः । विनम्रकंधरा भूत्वा प्रणिपत्य पुनः पुनः । स्वकर्मपरिहाराय प्रपच्छ मुनिपुंगवं । सुगंधोवाच । अनाथनाथ विप्रेंद्र सर्ववेदविशारद । प्रसीद पाहि मां देव शरणागतवत्सल । मया कृतानि विप्रेंद्र पापानि सुबहूनि च । तस्य पापस्य नाशाय कारणं ब्रूहि मे प्रभो । ईश्वर उवाच । एवमुक्तस्तया विप्रो वसिष्ठो मुनिरादरात् । तदा ज्ञात्वा च तत्सर्वं तस्याः कर्म पुरःसरं । ततश्चोवाच स मुनिर्वचस्तां सत्यसंगरः । वसिष्ठ उवाच । शृणु सुश्रोणि सुभगे तव पापस्य संक्षयः । येन जायेत पुण्येन तत्सर्वं कथयामि ते । कुरुष्व तीर्थगमनं त्रिषु लोकेषु विश्रुतं । प्रयागमिति चाख्यातं सर्वदेवाभिरक्षितं । गत्वा तत्र कुरुक्षेत्रे व्रतं त्रैलोक्यदुर्लभं । रुद्रवर्त्या महापुण्यं शिवप्रीतिकरं परं । अत्रच तत्र गत्वा क्वचित्क्षेत्रे रुद्रवर्तिव्रतकर्तव्यतोच्यते । अतएव सुगंधयोत्तरवाहिनीस्नानोत्तरं काश्यां तद्व्रतं कृतमिति वक्ष्यते । कार्पासतंतुभिः कार्या रुद्रवर्तिः शिवप्रिया । लक्षसंख्या च कर्तव्या गव्याज्येन परिप्लुता । देया शिवालये नित्यं भक्तियुक्तेन चेतसा । कृत्वा व्रतमिदं भद्रे प्राप्स्यसि त्वं परां गतिं । शिव उवाच । ततः सा कोशमादाय भृत्यं चैव सुमित्रकं । आगत्य तीर्थराजं वै दत्त्वा दानानि भूरिशः । व्रतं कृत्वा ययौ काशीं सुमित्रेण समन्विता । कृत्वा सर्वाणि तीर्थानि विश्वेशं प्रणिपत्य च । उपोषित्वा रात्रिमेकां जागरश्च तथा कृतः । स्नात्वा चोत्तरवाहिन्यां दत्त्वा दानानि भूरिशः । ततश्चक्रे व्रतं विप्र वसिष्ठेनोदितं तु यत् । यथोक्तविधिना सर्वं तया चानुष्ठितं व्रतं । ततः सा सशरीरैव तस्मिँल्लिंगे लयं गता । एवं या कुरुते नारी व्रतमेतत्सुदुर्लभं । यं यं चिंतयते कामं व्रतस्यास्य प्रभावतः। पुत्रपौत्रधनं चैव जायते नात्र संशयः।

प्रसंगेनापि वक्ष्यामि माणिक्यवर्तिसंज्ञकं। व्रतमिति शेषः। तस्यादानेन विप्रेंद्र मदर्धासनभागिनी। जायते मत्प्रिया सा हि यावदाभूतसंप्लवं। अथ चोद्यापनं वक्ष्ये व्रतसंपूर्णहेतवे। प्रारंभः कार्तिके माघे वैशाखे श्रावणे तथा। तेष्वेवोद्यापनं कार्यं यथोक्तविधिना ततः। कलशं ताम्रजं चैव वस्त्रयुग्मेन वेष्टयेत्। तस्योपरि न्यसेद्देवमुमया सहितं शिवं। सुवर्णनिर्मितं देवं वृषभेण समन्वितं। पूर्वोक्तेन विधानेन पूजां कृत्वा विधानतः। रात्रौ जागरणं कार्यं कथाश्रवणपूर्वकं। ततः प्रभाते विमले स्नात्वा नद्यां विधानतः। आचार्यं वरयेद्भक्त्या द्विजैरेकादशैः सह। होमश्चैव तदा कार्यो घृतपायसबिल्वकैः। अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु यत्। रुद्रसूक्तं पठन्विप्र मूलमंत्रेण वा पुनः। ततः पूर्णाहुतिं हुत्वा ब्राह्मणैः स्वस्तिवाचनं। आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः। तस्मै देया सवत्सा च गौरेका द्विजसत्तम। ऋत्विजस्तोषयेत्पश्चाद्वस्त्रालंकारभूषणैः। तत्रैव भोजनीयाश्च सपत्नीकाः प्रयत्नतः। एवं विधिं या कुरुते सर्वपापैः प्रमुच्यते। कथां श्रुत्वा विधानेन स्थाप्य सर्वं निवेदयेत्। अश्वमेधसहस्रस्य वाजपेयशतस्य च। कथाश्रवणमात्रेण फलं तल्लभते नरः। इति भविष्योत्तरपुराणे लक्षवर्तिकथोद्यापनं समाप्तं।

अथ **धारणापारणव्रतोद्यापनं** भविष्ये—चातुर्मास्ये तथा चादौ मासि कौंतेय सुव्रत। पुण्याहं कारयेत्पूर्वमेकादश्यां सुशोभने। पश्चात्संकल्प्य राजेन्द्र तदारभ्य व्रतं चरेत्। आदौ मासि तथा चांते चातुर्मास्येप्यथापि वा। एकस्मिन्धारणं कार्यं पारणं च तथापरे। उपवासो धारणं स्यात्पारणं भोजनं भवेत्। अष्टोत्तरशतं दद्यादर्घ्यान्देवाय तन्मनाः। समाप्ते मासि राजेन्द्र कुर्यादुद्यापनं बुधः। चातुर्मास्ये व्रती चैव मासिमासि तु कारयेत्। प्रतिमासमुद्यापनभेदमित्यर्थः। उपवासदिने प्राप्ते पुण्याहं कारयेत्पुरा। आचार्यं वरयेत्पश्चाद्ब्राह्मणांश्च ततः परं। कुर्यात्तु प्रतिमां पश्चाल्लक्ष्मीनारायणस्य वै। पूर्णकुंभे तु संस्थाप्य पूजयेन्निशि भूमिप। पंचामृतैस्तथा पुष्पैस्तुलसीदलसंचयैः। मालतीकेतकीभिश्च मल्लिकाकुसुमैस्तथा। रात्रौ जागरणं कुर्यात्पुराणकथनादिभिः। प्रातःकाले

समायाते ब्राह्मणांस्तु निमंत्रयेत् । पश्चात्संध्यादिकाः कृत्वा देवपूजां समापयेत् । पश्चादग्निं समाधाय होमं कुर्याद्यथाविधि । निषुसीदेति मंत्रेण जुहुयात्तु तिलौदनं । अरायिकाणेमंत्रेण जुहुयाच्च घृतौदनं । अष्टाक्षरेण मंत्रेण पायसं जुहुयात्ततः । लक्ष्मीनारायणो देवः स्थानत्रयेपि देवता । पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत् । ब्राह्मणान्पूजयेत्पश्चादाचार्यं पूजयेत्ततः । एवं कृत्वा महाराज ब्रह्महत्यादिपातकैः । मुच्यते नात्र संदेहस्तस्मात्कुरु महाव्रतं ।

अथ कथा । पुरा त्रेतायुगे राजन्किष्किधा नगरेऽभवत् । वालिश्च सुग्रीवश्चैव युयुधाते परस्परं । सुग्रीवस्य रुमां भार्यां बलाद्वाली जहारह । कदाचिद्दैवयोगेन रामो लक्ष्मणसंयुतः । जानक्या मार्गणार्थाय किष्किंधोपवनं ययौ । रामाय कथितं सर्वं सुग्रीवेण प्रयत्नतः । ततश्चिच्छेद राजेंद्र रामस्तान्सप्त तालकान् । बाणेनैकेन रामोपि जघान समरे हरिं । सुग्रीवाय ततस्तारां दत्त्वा राज्येऽभ्यषेचयत् । सुग्रीवः प्राप्तवान्हत्यां हत्वा वालिनमग्रजं । ततश्च राघवादिष्टः कृत्वा धारणपारणं । होमादिकं तु कृत्वैव तद्व्रतस्य प्रभावतः । विमुक्तस्तद्वधाद्दोषात्तथान्यैः पातकैरपि । नारदोपि पुरा राजन्पूर्वजन्मनि शूद्रजः । ब्राह्मणैरुपदिष्टस्तु चक्रे धारणपारणं । सर्वपापविनिर्मुक्तस्तद्व्रतस्य प्रभावतः । जितेंद्रियस्ततो भूत्वा ब्रह्मपुत्रत्वमाप्तवान् । तस्मात्सर्वप्रयत्नेन कुर्याद्धारणपारणं । इंद्रियाणां वशार्थाय सर्वपापप्रशान्तये । तस्मात्त्वमपि राजेंद्र कुरुष्व व्रतमुत्तमं । किं दानैस्तपसा किं वा किमन्यैर्व्रतसंचयैः । धारणं पारणं कृत्वा व्रतानामुत्तमव्रतं । सर्वयज्ञेषु तीर्थेषु सर्वदानेषु यत्फलं । तत्फलं समवाप्नोति कृत्वा धारणपारणं । इदं व्रतं महापुण्यं तपसामुत्तमं तपः । अन्यैरपि कृतं भूप पापं मुक्त्वा दिवं गताः । ब्रह्महत्यादि पापानि दहत्येव न संशयः । देहांते परमं स्थानं साक्षाद्विष्णुतनुं विशेत् । इदं व्रतं महापुण्यं पवित्रं पापनाशनं । पठतां शृण्वतां चैव ददाति परमां गतिं । इति ।

मासोपवासव्रतोद्यापनं तु यद्यपि द्वादश्यां विहितं तथापि केनापि कारणेन तत्रासंभवे पूर्णमास्यामपि तत्कार्यं । कार्तिकव्रतसामान्योद्यापनकालत्वेन पूर्णमास्यास्तत्र तद्विधा-

नात् । उद्यापनविधिश्च पाद्मे—कृत्वा मासोपवासं च यथोक्तविधिना नरः । या नारी कुरुते साध्वी वासुदेवं समर्चयेत् । अन्यूनाधिकमेवं तु व्रतं त्रिंशद्दिनैरिदं । कृत्वा मासोपवासं तु संयतात्मा जितेंद्रियः । ततोऽर्चयेत वै पुण्यं द्वादश्यां गरुडध्वजं । पूजयेत्पुष्पमालाभिर्गंधधूपविलेपनैः । वस्त्रालंकारवाद्यैश्च तोषयेदच्युतं नरः । स्नापयेत्तु हरिं भक्त्या तीर्थचंदनवारिभिः । चंदनेनानुलिप्तांगान्धूपपुष्पैरलंकृतान् । वस्त्रदानादिभिश्चैव भोजयेत्तु द्विजोत्तमान् । दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत् । विप्रान्क्षमापयित्वा तु विसर्ज्याभ्यज्य पूज्य च । एवं वित्तानुसारेण भक्तियुक्तेन शक्तितः । एतदर्थोऽधस्य पूज्येत्यत्रान्वयः । पूज्याभ्यज्यविसर्ज्यक्षमापनमिति प्रातिलोम्येनान्वयश्च बोध्यः ।—एवं मासोपवासं तु कृत्वाभ्यर्च्य जनार्दनं । भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते । एवं मासोपवासं हि सम्यकृत्वा त्रयोदश । निर्यापयेत्ततस्तान्वै विधिनानेन तच्छृणु । कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः । पूजयित्वा च देवेशमाचार्यानुज्ञया हरिं । अर्चयित्वा यथाशक्त्या ह्यभिवाद्य गुरुं तथा । ततोनु भोजयेद्विद्वान्नमस्कारपुरःसरं । विशुद्धकुलचारित्रान्विष्णुपूजनतत्परान् । पूजयित्वा द्विजान्सर्वान्भोजयित्वा त्रयोदश । तावंति वस्त्रयुग्मानि भोजनाच्छादनानि च । यौगपद्यानि सूत्राणि ब्रह्मसूत्राणि चैव हि । दद्याच्चैव द्विजाग्रेभ्यः पूजयित्वा प्रणम्य च । ततोनु पूजयेच्छक्त्या शय्यां स्तरणसत्कृतां । साच्छादनशुभां श्रेष्ठां सोपधानामलंकृतां । कारयित्वात्मनो मूर्तिं कांचनीं तु स्वशक्तितः । न्यस्य तस्यां तु शय्यायामर्चयित्वा स्रगादिभिः । आसनं पादुके छत्रं वस्त्रयुग्ममुपानहौ । पवित्राणि च पुष्पाणि शय्यायामुपकल्पयेत् । एवं शय्यां तु संकल्प्य प्रणिपत्य च तान्द्विजान् । संकल्प्य दत्त्वा । प्रार्थयेच्चानुमंत्रार्थं विष्णुलोकं व्रजाम्यहं । नरो धीमान्व्रजेच्छ्रीमान्विष्णोः स्थानमनामयं । मंडपस्थैः स्थितैर्विप्रैरिति वाच्यं मुहुर्मुहुः । इति व्रजस्वेति । मंत्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः । सर्वं संपूर्णतां यातु भवद्वाक्यप्रसादतः । विधिर्मासोपवासस्य यथावत्परिकीर्तितः । इति ।

अथ शय्यादानं भविष्ये—तस्माच्छय्यां समासाद्य सा-

रदारुमयीं दृढां । दंतपत्रान्वितां रम्यां हेमपट्टैरलंकृतां । हंसतूलीप्रतिच्छन्नां शुभगंडोपधानिकां । प्रच्छादनपटीयुक्तां गंधधूपादिवासितां । तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितं । उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् । तांबूलकुंकुमक्षोदकर्पूरागरुचंदनं । पार्श्वेषु स्थापयेद्भक्त्या सप्तधान्यानि चैव हि । शयनस्थस्य भवति यदन्यदुपकारकं । भृंगारकनकाढ्यं च पंचवर्णवितानकं । शय्यामेवंविधां कृत्वा ब्राह्मणायोपपादयेत् । सपत्नीकाय संपूज्य दद्याद्वै विधिपूर्वकं । मंत्रं प्रयोगे वक्ष्यामः । दत्वैतस्य हि सकलं प्रणिपत्य विसर्जयेत् । इति । **मृतशय्यायां विशेषस्तत्रैव** । मृतस्यैकादशाहेपि विधिरेवं प्रकीर्तितः । विशेषं चात्र राजेंद्र कथ्यमानं निशामय । तेनोपभुक्तं यत्किंचित्पूर्वं तस्य गृहे स्थितं । तद्गात्रलग्नं च तथा वस्त्रवाहनभाजनं । यद्यदिष्टं च तस्य स्यात्तत्सर्वं परिकल्पयेत् । तमेव पुरुषं हैमं तस्यां संस्थापयेत्सदा । पूजयित्वा प्रदातव्या मृतशय्या यथोदिता । इति । अथ **प्रयोगः**। देशकालौ संकीर्त्य मम दशसहस्रवर्षावच्छिन्नस्वर्गलोकवाससिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शय्यादानमहं करिष्ये । इति काम्यदाने संकल्पः । प्रेतशय्यादानेतु । अमुकगोत्रस्य अमुकनाम्नः प्रेतस्य प्रेतत्वनिवृत्त्या उत्तमलोकप्राप्त्यर्थं मरणदिनादारभ्य एकादशेहनि शय्यादानं करिष्ये । तदंगत्वेन पात्रपूजनं शय्यास्थप्रतिमायां लक्ष्मीनारायणपूजनं च करिष्ये । इति संकल्प्य । वस्त्रालंकारादिभिः पात्रं संपूज्य अग्न्युत्तारणपूर्वकमुक्तविधप्रतिमायामावाहनादि षोडशोपचारैर्लक्ष्मीनारायणौ पूजयेत् । प्रेतशय्यादाने तु प्रेतप्रतिमायां प्रेतपूजनं करिष्ये इति संकल्प्यैकदेशो विकारः । यथाविभवं पात्रपूजनांते अग्न्युत्तारणपूर्वकं शय्यास्थप्रतिमायां अमुकगोत्रं अमुकनामानं प्रेतमावाहयामीत्येवं षोडशोपचारैः संपूजयेत् । ततः शय्याशिरःप्रदेशे घृतपूर्णकुंभं निधाय पार्श्वतः सप्तधान्यानि निधाय शय्यायां नारिकेलादिफलं च निधाय पूर्ववद्दानफलं च संकीर्त्य इमां शय्यां सारदारुमयीं तूलिकोत्तरच्छदप्रच्छन्नां लक्ष्मीनारायणप्रतिमायुतां शुभगंडोपधानघृतकुंभसप्तधान्यतांबूलकर्पूरकुंकुमागरुचंदनदीपिकोपानहच्छत्रचामरवितानासनभोजनभाजनजलभाजनतांबूलपात्रफलयुतां तुभ्यमहं संप्र-

ददे । इति पात्रहस्ते जलं प्रक्षिप्य मंत्रं पठेत् ।—यस्मादशून्यं शयनं केशवस्य शिवस्य च । शय्या ममाप्यशून्या स्यात्तथा जन्मनि जन्मनि । इति । प्रेतशय्यादाने तु लक्ष्मीनारायणपदस्थाने प्रेतपदोच्चारणमिति विशेषः । प्रतिग्रहीता स्वस्तीत्युक्त्वा देवस्यत्वेति प्रतिगृह्णीयात् । दाता कृतस्य शय्यादानस्य पूर्णतायै इदं हेमसुवर्णपरिमाणं दक्षिणात्वेन तुभ्यमहं संप्रददे इति पात्रहस्ते दद्यात् । प्रतिग्रहीता स्वस्तीत्युक्त्वा कइदं कस्मा इति बह्वृचः पठेत् । यजुःशाखी देवस्यत्वेति । ततस्तं करे धृत्वा शय्यायामुपवेशयेत् । पूर्णतां वाचयित्वा भूयसीं संकल्प्येश्वरार्पणं कुर्यात् । इति कौस्तुभे द्विविधशय्यादानं ।

अथ **गोपद्मव्रतं** ।—चतुर्भुजं महाकायं जांबूनदसमप्रभं । शंखचक्रगदापद्मरमागरुडशोभितं । सेवितं मुनिभिर्देवैर्यक्षगंधर्वकिंनरैः । एवंविधं हरिं ध्यात्वा ततो यजनमारभेत् । ध्यानं । आवाहयामि देवेशं भक्तानामभयप्रदं । सुस्निग्धं वरदं शांतं मनसावाहयेद्धरिं । आवाहनं । सुवर्णमणिभिर्दिव्यैः खचिते देवनिर्मिते । दिव्यसिंहासने स्निग्धे प्रविशस्व सुरोत्तम । आसनं । पादोदकं सुरश्रेष्ठ सुवर्णकलशे स्थितं । गंधपुष्पाक्षतैर्युक्तं गृहाण रमया सह । पाद्यं । अष्टद्रव्यसमायुक्तं स्वर्णपात्रस्थितं जलं । अर्घ्यं गृहाण देवेश भक्तानामभयप्रद । अर्घ्यं । देवदेव नमस्तेस्तु पुराणपुरुषोत्तम । मया नीतमिदं तोयं गृह्णीष्वाचमनीयकं । आचमनीयं । पंचामृतैस्ततः स्नानं मंत्रैर्वेदोद्भवैरपि । मध्येमध्ये प्रपूजा च मधुपर्कपुरःसरं । पंचामृतं । नदीनां चैव सरसो मया दत्तं शुभं जलं । अनेन स्नानमंत्रेण मंत्रैर्वारुणसंभवैः । स्नानं । वस्त्रयुग्मं समानीतं पट्टसूत्रेण निर्मितं । सुवर्णसदृशं चेदं गृहाण त्वं सुरेश्वर । वस्त्रं । कार्पासतंतुभिर्युक्तं सुवर्णेन विराजितं । अनेकरत्नखचितं गृहाणेशोपवीतकं । उपवीतं । केयूरमुकुटवलयैर्नूपुरैरंगुलीयकैः । निर्मितानि स्वर्णरत्नैर्गृहाणाभरणानि भो । आभरणानि । चंदनं मलयोद्भूतं कस्तूर्यगरुसंयुतं । कर्पूरेण च संमिश्रं स्वीकुरुष्वानुलेपनं । अनुलेपनं । शतपत्रैः कर्णिकारैश्चंपकैर्मल्लिकादिभिः । तुलसीदलयुक्तानि गृहाण पुरुषोत्तम । पुष्पाणि । दशांगं गुग्गुलं धूपं सुगंधं च मनोहरं । कृ-

ष्णागरुसमायुक्तं गृहाण रमया सह । धूपं । एकार्तिक्यं समानीतं गोघृतेन सुवर्तिना । संयुक्तं तेजसा कृष्ण गृहाणादित्यदीधिते । दीपं । अन्नं च पायसं भक्ष्यं सिताघृतसमन्वितं । दधिक्षीरघृतैर्युक्तं गृहाण सुरपूजित । नैवेद्यं । इदं फलमिति फलं । नागवल्लीदलैर्युक्तं कर्पूरैलासमन्वितं । सुगंधखादिरैर्युक्तं तांबूलं प्रतिगृह्यतां । तांबूलं । हिरण्यगर्भेति दक्षिणां । नमस्ते देवदेवेश नमस्ते गरुडध्वज । नमस्ते विष्णवे तुभ्यं व्रतस्य फलदायक । नमस्कारः । यानि कानिचेति प्रदक्षिणा । नंदनस्य प्रसूनैश्च तथा चैत्ररथस्य च । सुरहस्तच्युतैरीश गृहाण कुसुमांजलिं । पुष्पांजलिं । नीराजनं गृहाणेश पंचवर्तिभिरावृतं । तेजोराशे मया दत्तं लोकानंदकर प्रभो । नीराजनं । ततः संवत्सरोक्तं वायनं दद्यात् । सुपक्वान्नमिदं सर्वं गृहाण त्वं द्विजोत्तम । त्वत्प्रसादादहं विप्र मुच्येय कर्मबंधनात् । वायनं । मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । व्रतेनानेन सुप्रीतः संपूर्णफलदो भव । प्रार्थना । इति पूजाविधिः ।

अथ कथा । सनत्कुमार उवाच । क्षेत्राणां च व्रतानां च तीर्थानां बहुधा प्रभो । विधानं विविधाख्यानं त्वत्प्रसान्मया श्रुतं । युगेयुगे हि ये धर्मास्तेऽपि स्वामिन्निरूपिताः । अथाप्येकं हि पृच्छामि चतुर्युगफलप्रदं । सर्वव्रतशिरोरत्नं सर्वसंपत्सुखप्रदं । दुःस्वप्ननाशनं दुष्टग्रहपापहरं तथा । सर्वरोगप्रशमनं विष्णुसायुज्यमुक्तिदं । नारीणामथवा पुंसां भुक्तिमुक्तिप्रदं व्रतं । ब्रूहि चेदस्ति देवर्षे दयां कृत्वा कृपायुतः । नारद उवाच । भगवन्सर्वमाख्यानं यत्पृष्टं विदुषा त्वया । इदानीमेव यत्पृष्टं तद्गुह्यं परमं हरेः । तथाप्येतत्प्रवक्ष्यामि त्वामवाच्यं नहि प्रभो । गोपद्मसंज्ञकं ह्येकं व्रतानामुत्तमोत्तमं । अष्टसिद्धिप्रदं दिव्यं विख्यातं भूमिमंडले । सनत्कुमार उवाच । भगवन्भूतभव्येश सर्वशास्त्रविशारद । तद्व्रतं ब्रूहि मे शीघ्रं किंविधानं कदा भवेत् । कस्मिन्मासे प्रकर्तव्यं कथमुद्यापनं प्रभो । पुरेदं केन वा चीर्णं देवर्षे कथय व्रतं । नारद उवाच । आषाढकार्तिकौ मासौ व्रतग्रहणसिद्धिदौ । शुभे वारे शुभे लग्ने चंद्रे वा तद्व्रतं भवेत् । आषाढ्यां पौर्णमास्यां तु तथाष्टम्यां हरेर्दिने । प्रारभेद्व्रतमेतत्तु कार्तिकावधि तत्तिथौ । तिलामलककल्केन स्नात्वा

नित्यं विधाय च । नदीतीरे तथा गोष्ठे शिवागारे हरिस्थले । गृहे वृंदावने वापि लिखेद्गोपद्मकं पदं । त्रयस्त्रिंशत्तु पद्मानि कुर्याद्भक्त्या दिनेदिने । तत्संख्यया प्रकर्तव्या अर्घ्यप्रदक्षिणानतीः । कृष्णनाथं समुद्दिश्य लक्ष्म्या सह जगत्प्रभुं । गंधाद्यैरुपचारैस्तु यथाशक्ति प्रपूजयेत् । तथा पक्वान्ननैवेद्यं समर्प्य प्रार्थयेद्धरिं । ब्राह्मणं च ततः पूज्य पद्मसंख्यां समुत्सृजेत् । प्रथमेऽब्दे तु वटकैर्द्वितीयेऽपूपकैर्व्रती । तृतीये शालिपिष्टान्नैश्चतुर्थे पूरिकादिभिः । पंचमे परमान्नेन वायनं च द्विजातये । आषाढीमवधिं कृत्वा कार्तिक्यां तु समापयेत् । पंचवर्षमिदं कार्यं पश्चादुद्यापनं भवेत् । एतद्व्रतं नरा नार्यः कुर्युरिष्टं लभंति वै । अत्रार्थे कथयिष्यामि इतिहासं पुरातनं । ऋषीणां पृच्छ्यमानानां सूतेनोक्तं मया श्रुतं । ऋषय ऊचुः । केन चादौ पुरा चीर्णं मर्त्ये केन प्रकाशितं । कीदृगुद्यापनं तस्य किं फलं सूत कथ्यतां । पुरा शक्रोऽमरावत्यां देवदानवकिंनरैः । रुद्रैरादित्ययक्षाद्यैर्गंधर्वैर्वसुभिः सह । रंभया नृत्यमारेभे क्रीडालोभेन विह्वलः । एवं नृत्ये क्रियमाणे त्रुटितं सारमंडलं । मृदंगचर्म त्रुटितं क्रियतामधुनात्र किं । ततः प्रत्याह तं शक्रो धर्ममूर्तिमयं प्रभुं । क्षणमात्रं विचार्याथ धर्मराजस्तमुक्तवान् । धर्मराज उवाच । इंद्र व्रतं जन्ममध्ये न कृतं प्राणिभिः क्वचित् । तच्चर्मस्नायुभिः शक्र कर्तव्यं छादनं तयोः । शक्र उवाच । कर्मभूमौ तु यः कश्चित्स्यादेवं कथयस्व तं । धर्मराज उवाच । चातुर्मास्यव्रतं चैकं संक्रांतिव्रतमेव च । न कुर्वंति च या नार्यस्तासामाच्छादनं त्वचः । कुर्वंतु दुंदुभींश्चास्य विचार्यध्वं महाधियः । कृष्णस्य भगिनी साक्षात्सुभद्रानाम नामतः । तया नहि कृतं किंचिन्न श्रुतं जातुचिद्व्रतं । सूत उवाच । ते तस्य वचनं श्रुत्वा भुवं समुपचक्रमुः । तत्र संसदि यज्जातं हृदिकृत्याथ नारदः । द्वापारे द्वारवत्यां वै कृष्णं यादवनंदनं । प्रगायन्कृष्णनामानि वीणापाणिस्तमभ्यगात् । स्वर्चितस्तेन कृष्णेन भक्त्या परमया मुदा । वाक्सुधाद्रवसेकेनासिच्य कृष्णस्तमुक्तवान् । कृष्ण उवाच । भो भो लोकज्ञ देवर्षे भुवनेषु चरस्यदः । लोकांतरेषु चारित्रं यद्विशेषं वदस्व मे । नारद उवाच । भगवन्देवदेवेश शृणुष्व कथयामि ते । अहं सकाशाद्धर्मस्य ह्यागतश्च तवां-

तिकं । तत्र जातं महाश्चर्यं धर्मस्य सदसि शृणु । तत्र सर्वे समानीताः सुरा इंद्राश्चतुर्दश । इंदुश्चैकादश रुद्रा आदित्या द्वादशापि च । वसवोऽष्टौ तथा नागयक्षराक्षसपन्नगाः । रंभया च समारब्धं नृत्यं शक्रस्य पश्यतः । त्रुटितं चर्म वाद्यानामत्र- तास्तस्य साधनं । यमः प्राह तदा दूतान्सुभद्रा ह्यव्रतास्ति भो । तदानयध्वं तच्चर्मेत्यादिष्टं तत्त्वदर्पितं । सूत उवाच । इति नारदवाक्यं तु श्रुत्वा कृष्णस्त्वरान्वितः । शीघ्रं गत्वा हृषीकेशः सुभद्रामंदिरं प्रति । तया संपूजितः कृष्णस्तामुवाच तु सत्वरं । किंचिद्व्रतं त्वया भद्रे कृतं नो वेति शंस मां । सुभद्रोवाच । सर्वव्रतानि भो कृष्ण कृतान्येव न संशयः । नो चेत्तव सहो- दर्यं स्यां न चार्जुनवल्लभा । पुत्रोऽभिमन्युः स्यान्नो चेत्कथयस्व सहोदर । कृष्ण उवाच । तथापि शीघ्रं भगिनि अद्यैकं व्रत- माचर । गोपद्मेति च विख्यातं सर्वलोकेषु विश्रुतं । सूतेन कथितं पूर्वमृषीणां हितकाम्यया । इति कृष्णवचः श्रुत्वा सुभद्रा तत्तथाकरोत् । आचार्यं केशवं कृत्वा रात्रौ यामचतुष्टयं । कृष्णोपदिष्टविधिना सत्वरं च समापितं । उद्यापनं च तत्कालं कृतं गोपद्मके व्रते । तद्व्रतस्य प्रभावेण यमलोकं न सा गता । एवं व्रते समाप्ते तु काले यमभटा विशन् । भटा ऊचुः । सुभद्रे तव देहस्य चर्मार्थं चागता वयं । तच्चर्म सुरवाद्यानां छाद- नार्थं यतो व्रता । सूत उवाच । इति दूतवचः श्रुत्वा सुभद्रा प्राह सत्वरा । सव्रता ह्यधुना चाहं विचारयंत्वशंकिताः । तावद्यमभटाः सर्वे पद्मानि ददृशुस्तदा । गोपद्मनिचयं तस्या गृहे गां च सवत्सकां । विष्णुं च रमया विप्रान्वेदघोष- समन्वितान् । स्थंडिले हस्तमात्रे तु सुसमिद्धं मरुत्सखं । अहो कृष्णेनोपदिष्टं व्रतमेतन्न संशयः । तद्वीक्ष्यैव भटाः सर्वे पुनर्जग्मुर्यमांतिकं । तद्व्रतस्य प्रभावेण सुभद्राप्यैहिकं सुखं । भुक्त्वांते वरयोगेन गताच्युतपदं महत् । तस्माद्भो ऋषयः सर्वे कुरुध्वं व्रतमुत्तमं । व्रतं गोपद्मसदृशं न भूतं न भविष्यति । नारद उवाच । इति तस्य वचः श्रुत्वा चक्रुर्व्रतम- नुत्तमं । सनत्कुमार भो ब्रह्मंस्त्वमप्येतद्व्रतं कुरु । भुक्तिमुक्तिप्रदं चैव नात्र कार्या विचारणा । सनत्कुमार उवाच । भो भो नारद देवर्षे सर्वज्ञानसुधानिधे । त्वद्वाक्यामृतसंसिक्तः परां

शीतलतामियां । शीघ्रं ब्रूहि सखे मेऽद्य व्रतस्योद्यापने विधिं । नारद उवाच । पूर्णेब्दे बाणसंख्याके व्रतस्योद्यापनं भवेत् । आदौ मध्येऽवसाने च त्रिषु चोद्यापनं स्मृतं । अशक्तौ पंचमे वर्षे यथावद्भक्तिसंयुतः । विष्णोश्च प्रतिमा कार्या सुवर्णस्य पलेन च । पलस्यार्धेन वार्धेन वित्तशाठ्यविवर्जितः । आषाढस्य सिते पक्षे कार्तिकस्याथ वा तिथौ । एकादश्यां निराहारो दंतधावनपूर्वकं । तिलामलककल्केन स्नात्वा धार्येऽथ वाससी । ब्राह्मणांश्च समाहूय धृतालंकारभूषणः । पुण्याहं वाचयित्वा तु आचार्यब्रह्मऋत्विजां । वरणं तु प्रकर्तव्यं पद्मानि च समालिखेत् । पुष्पमंडपिका कार्या चतुर्द्वारोपशोभिता । द्वारेषु द्वारपालांश्च पूजयेच्च पृथक्पृथक् । मध्ये रत्नाकरं कृत्वा प्रतिमायां यजेद्धरिं । रमया सहितं कृष्णं भक्त्या गंधादिभिः स्मरन् । नारायण जगन्नाथ मुरारे मधुसूदन । त्रिपुरारे जगत्स्रष्टः केशमूर्ते नमोनमः । इमं मंत्रं समुच्चार्य जगन्नाथं समर्चयेत् । पश्चादिमं महापुण्यमितिहासं व्रतोद्भवं । शृणुयाद्भक्तिभावेन गीततूर्यादिना ततः । जागरस्तु प्रकर्तव्यः परेह्नि तु कृताह्निकः । त्रयस्त्रिंशन्मितान्विप्रानाहूय होममाचरेत् । अतोदेवेतिमंत्रेण जुहुयात्तिलपायसं । शर्कराघृतसंयुक्तं संख्ययाष्टोत्तरं शतं । ततस्तु प्रतिमां विष्णोः स्वर्चितां वस्त्रवेष्टितां । पुंवत्ससहितां धेनुमाचार्याय निवेदयेत् । अथवा वर्षसंख्याकान्वित्तशाठ्यविवर्जितः । ब्राह्मणांश्च सपत्नीकान्भोजयेच्च सुपूजितान् । भुंजीयाद्बंधुभिः सार्धं दीनानाथांश्च भोजयेत् । एवं यः कुरुते ह्येतद्व्रतं पुण्यतमोत्तमं । ऐहिकां च श्रियं भुक्त्वा अंते स्थानं तु वैष्णवं । यंयं चिंतयते कामं तंतं प्राप्नोति निश्चितं । इदं पुण्यतमाख्यानं पुत्रपौत्रप्रवर्धनं । ये शृण्वंति नरा नार्यः पदं वैष्णवमाप्नुयुः । अशक्तेभ्यो न दातव्यं न तत्फलमवाप्नुयात् । तस्माद्भयात्प्रकर्तव्यं वांछितार्थस्य सिद्धये । इह भुक्त्वा तु विपुलान्सर्वान्कामान्मनोरमान् । अंते स्वर्गपदं गच्छेत्सर्वपापविवर्जितः । नातः परतरं पुण्यं त्रिषु लोकेषु विश्रुतं ७५ इति श्रीमन्नारदीयपुराणे पातालखंडे सनत्कुमारनारदसंवादे गोपद्मव्रतं सोद्यापनं सपूर्णं ।

अथेदमेतत्तुल्यन्यायमेव गोपद्मव्रतोद्यापनं भविष्ये—आषाढ्याः शुक्लपक्षे तु एकादश्या विशेषतः ।

तदारभ्य च कार्तिक्या द्वादश्यांतं व्रतं चरेत् । गोष्ठेथवापि गोस्थाने गोमयेनोपलिप्य च । त्रयस्त्रिंशत्तु पद्मानि गंधपुष्पैः प्रपूजयेत् । तत्संख्याकानि चार्घ्याणि नमस्कारप्रदक्षिणाः । तत्संख्यानि ह्यपूपानि ब्राह्मणाय निवेदयेत् । प्रथमे वत्सरे चैत-द्द्वितीये चैवमेव हि । वायने च तथा भेदः पायसं त्वेव निर्मितं । तृतीये मंडकान्दद्याच्चतुर्थे गुडमिश्रितान् । पंचमे घृतपक्वांश्च पूर्णे वत्सरपंचके । उद्यापनं प्रकुर्वीत आदौ चांते च मध्यमे । एकादश्यामुपोष्याथ दंतधावनपूर्वकं । अभ्यंगवस्त्राभरणैः स्वर्चितैर्ब्राह्मणैः सह । पुण्याहं वाचयित्वा तु प्रतिमायां यजे-द्धरिं । कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः । माषमात्रसुवर्णेन वित्तशाठ्यं न कारयेत् । कृतायामिति शेषः । उपचारैः षोडशभिः स्वर्चितां वस्त्रवेष्टितां । प्रतिमां पूजयेत्पश्चाद्रात्रौ जागरणं तथा । प्रभाते विमले सूर्ये कृत्वाह्निकपुरःसरं । अहः-प्रवृत्तौ विहितं संध्यावंदनं तदादिनित्यकर्म कृत्वेत्यर्थः । जुहुयात्पुरुषसूक्तेन स्वाहाकारैः पुनःपुनः । पुनर्द्वादशनाम्नापि पिप्पलस्य समिच्छतं । पायसेन शतं चाष्टौ कृत्वा पूर्णाहुतिं तथा । ततस्तु प्रतिमां दद्यात्स्वर्चितां वस्त्रवेष्टितां । सवत्सां विधिना धेनुमाचार्याय निवेदयेत् । ब्राह्मणान्पंच योषिद्भिः षड्रसान्नेन भोजयेत् । भुंजीत बंधुभिः सार्धमेकाग्रेणैव चेतसा । इदं व्रतं महापुण्यं शृण्वंतु मुनिपुंगवाः । इह भुक्त्वा तु विपुला-न्सर्वान्कामान्मनोगतान् । अंते गच्छति सा स्वर्गं कुलकोटिश-तैरपि । इति ।

**अथ गोप्रदानविधिः ।** पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं गोदानं करिष्य इति संकल्प्य । ब्राह्मणं गां च यथाशक्ति वस्त्रादिभिः संपूजयेत् । तद्यप्यंतिकामः करिष्यमाणगोदाने प्रतिग्रहीतारं त्वामहं वृणे इति वृत्वा । नारायणं ब्राह्मणे आवाह्य श्रीनारायणाय नम इति आसनपाद्यादिषोडशोपचारैः पूजयेत् । ततः पक्षे गोशरीरे देवता आवाहयेत् । शृंगमूले ब्रह्मविष्णू आवाहयामि । शृंगाग्रे सर्वतीर्थान्या० शिरोमध्ये महादेवमावाह० । ललाटाग्रे गौरीमा० नासावंशे षण्मुखं० नासायुग्मेकंबलाश्वतरौ नागौ० कर्णयो-रश्विनौ० चक्षुषोः शशिभास्करौ० दंतेषु वायुमा० जंघासु

धर्ममा० खुरमध्ये गंधर्वान्० खुराग्रेषु पन्नगान्० खुरपश्चिमाग्रेषु अप्सरसां गणान्० पृष्ठे रुद्रान्० सर्वसंधिषु वसून्० श्रोणीतटेपितॄन्० लांगूले सोमम्० वालेषु आदित्यरश्मीन्० गोमूत्रे गंगां० गोमये यमुनां० क्षीरे सरस्वतीं० दध्नि नर्मदां० सर्पिषि हुताशनं० उदरे पृथ्वीं० पयोधरेषु सागरान्० कृत्स्नशरीरे कामधेनुं० गृह्णावैप्रतिष्ठा०। ततः षोडशोपचारैः संपूज्य। आगावो अग्मन्निति पुष्पांजलिं दद्यात्। सर्वत्र पात्रं देयद्रव्यं च संपूज्य दद्यात्। तथाच दामोदरीये मनुः—योर्चितः प्रतिगृह्णाति योर्चयित्वा प्रच्छयति। तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये। इति। ततः सवत्सां गां प्राङ्मुखीमवस्थाप्य दाता पुच्छदेशे बद्धशिखः प्राङ्मुखस्तिष्ठेत्। पात्रभूतो विप्रस्तत्रैव दक्षिणत उदङ्मुखस्तिष्ठेत्। दाता यथाशक्तिकनकयुतमाज्यपात्रमादाय तत्र गोपुच्छं निक्षिप्य सतिले प्रागग्रे विप्रपाणौ घृताक्तं सतिलकुशं पुच्छं निक्षिप्य जलं क्षिपेत्। तत्र मंत्रः—यज्ञसाधनभूता या विश्वस्याघौघनाशिनी। विश्वरूपधरो देवः प्रीयतामानया गवा। इति। केचिद्गोपुच्छे देवर्षिपितृतर्पणं कृत्वा वक्ष्यमाणपौराणमंत्रैरपि तर्पणमिच्छंति। ब्रह्माद्या देवताः सर्वा ऋषयो मुनयस्तथा। असुरा यातुधानाश्च मातरश्चंडिकास्तथा। दिक्पाला लोकपालाश्च ग्रहदेवाधिदेवताः। ते सर्वे तृप्तिमायांतु गोपुच्छोदकतर्पिताः। विश्वेदेवास्तथादित्याः साध्याश्चैव मरुद्गणाः। क्षेत्रोपपीठपीठानि नदा नद्यश्च सागराः। पातालनागकन्याश्च वायुराकाशमेव च। दिवि भुव्यंतरिक्षे च ये च पातालवासिनः। शिवः शिवा तथाविष्णुः सिद्धिर्लक्ष्मीः सरस्वती। तपोवनानि देवाश्च भगवान्परमेश्वरः। क्षेत्रौषधिलता वृक्षा वनस्पत्यधिदेवताः। कपिलः शेषनागश्च तक्षकोऽनंत एव च। अन्ये जलचरा जीवा असंख्यातास्त्वनेकशः। चतुर्दश यमाश्चैव ये चान्ये यमकिंकराः। सर्वेपि यक्षराजानः पक्षिणः पशवस्तथा। स्वेदजोद्भिज्जजा जीवा अंडजाश्च जरायुजाः। अन्ये च वनगा वा ये दिवानिशिविहारिणः। अजागोमहिषीरूपा ये चान्ये पशवस्तथा। शांतिदाः शुभदास्ते स्युर्गोपुच्छोदकतर्पिताः। सर्पव्याघ्रहता ये च शस्त्रघातहताश्च ये। संस्काररहिता ये च रौरवादिषु गामिनः। आब्रह्मस्तंबपर्यंतं

देवर्षिपितृमानवाः । तृप्यंतु पितरः सर्वे मातृमातामहादयः । अतीतकुलकोटीनां सप्तद्वीपनिवासिनां । आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकं । पितृवंशे मृता ये च मातृवंशे तथैव च । गुरुश्वशुरबंधूनां ये चान्ये बांधवाः मृताः । ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः । क्रियालोपगताश्चैव जात्यंधाः पंगवस्तथा । विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम । ते पिबंतु मया दत्तं गोपुच्छस्य तिलोदकं । ये बांधवा बांधवा वा येऽन्यजन्मनि बांधवाः । ते सर्वे तृप्तिमायांतु गोपुच्छस्य तिलोदकैः । वृक्षत्वं च गताः केचित्तृणगुल्मलतास्थिताः । यातनासु च घोरासु जातीषु विविधासु च । नरकेषु च घोरेषु पतिता ये स्वकर्मभिः । देवत्वं मानुषत्वं वा तिर्यक्प्रेतपिशाचतां । कृमिकीटपतंगत्वं याता ये च स्वकर्मभिः । तेषामुद्धरणार्थाय जलमेतद्ददाम्यहं । ततोऽमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकशाखाध्यायिनेऽमुकशर्मणे ब्राह्मणाय तुभ्यमिमां सवत्सां सुवर्णश्रृंगीं रौप्यखुरां ताम्रपृष्ठीं मुक्तालांगूलां कांस्यदोहनां रक्तवस्त्रावृतां घंटालंकृतकंठां गंधपुष्पमालाशोभितां एतावदसंभवे यथाशक्त्यलंकृतां वा संप्रददे नममेति वदेत् । ब्राह्मणः प्रतिगृह्णामीत्युक्त्वा ॐ स्वस्तीति वदेत् । ततः सुवर्णपरिमितं यथाशक्ति वा हिरण्यं सतुलसीदलं दक्षिणां दद्यात् । कृतस्य गोदानस्य पूर्णतायै इमां दक्षिणां तुभ्यमहं संप्रददे । नममेति पूर्ववत् ब्राह्मणो वदेत् । सब्राह्मणां धेनुं कानिचित्पदान्यनुव्रज्य महाभारतोक्तां गोमतीं जपेत् । गावो मामुपतिष्ठंतु हेमश्रृंग्यः पयोमुचः । सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा । गावः पश्याम्यहं नित्यं गावः पश्यंतु मां सदा । गावोऽस्माकं वयं तासां यतो गावस्ततो वयं । इति । यमोक्तां वा—गावः सुरभयो नित्यं गावो गुग्गुलसंनिभाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् । अन्नमेव परं गावो देवानां हविरुत्तमं । पावनं सर्वभूतानां क्षरंति च वहंति च । हविषा मंत्ररूपेण तर्पयंत्यमरान्दिवि । ऋषीणामपि होतॄणां गावो होमे प्रतिष्ठिताः । सर्वेषामेव भूतानां गावः शरणमुत्तमं । गावः पवित्रं परमं गावो मंगलमुत्तमं । गावः सर्वस्य लोकस्य गावो धन्याः सवाहनाः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य

एवच । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतं । एकत्र मंत्रास्तिष्ठंति हविरन्यत्र तिष्ठति । इति । **वसिष्ठोक्तौ** प्रार्थनामंत्रौ पठेत्—घृतक्षीरदुघा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्तास्ता मे संतु सदा गृहे । घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितं । घृतं मे सर्वतश्चैव गवां मध्ये वसाम्यहं । इति । अत्र दानात्पूर्वं गोः पूजनसमये तस्याः श्रृंगमूलादौ ब्रह्मविष्ण्वादिदेवता आवाह्य ताभिः सह गोपूजनं कार्यमिति केचित् । ता देवता **हेमाद्रौ भविष्ये**—श्रृंगमूले गवां नित्यं ब्रह्मविष्णू समाश्रितौ । श्रृंगाग्रे सर्वतीर्थानि स्थावराणि चराणि च । शिरोमध्ये महादेवः सर्वभूतमयः स्थितः । ललाटाग्रे स्थिता गौरी नासावंशे च षण्मुखः । कंबलाश्वतरौ नागौ नासायुग्ममुपाश्रितौ । कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ । दंतेषु वायवः सर्वे जिह्वायां वरुणः स्थितः । सरस्वती च हुंकारे मासपक्षौ च गंडयोः । संध्याद्वयं तथोष्ठाभ्यां ग्रीवामिंद्रः समाश्रितः । रक्षांसि वक्षोदेशे तु साध्याश्चोरसि संस्थिताः । चतुष्पात्सकलो धर्मः स्वयं जंघासु संस्थितः । खुरमध्ये तु गंधर्वाः खुराग्रेषु च पन्नगाः । खुराणां पश्चिमाग्रेषु गणा अप्सरसां तथा । रुद्राश्च सकलाः पृष्ठे वसवः सर्वसंधिषु । श्रोणीतटस्थाः पितरः सोमो लांगूलमाश्रितः । आदित्यरश्मयो वालाः पिंडीभूताश्च संस्थिताः । साक्षाद्गंगा च गोमूत्रे गोमये यमुना स्थिता । क्षीरे सरस्वतीदेवी नर्मदा दध्नि संस्थिता । हुताशनः स्वयं सर्पिर्ब्राह्मणानां गुरुः परः । अष्टाविंशतिदेवानां कोटयो रोमसु स्थिताः । उदरे पृथिवी ज्ञेया सागराश्च पयोधराः । इति ।

अस्यामेव पौर्णमास्यां **त्रिपुरोत्सवाख्यं** दीपदानमुक्तं **भविष्ये**—पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रिपुरोत्सवः । दद्यादनेन मंत्रेण सुदीपांश्च सुरालये । कीटाः पतंगाः शलभाश्च वृक्षा जले स्थले ये विचरंति मर्त्याः । दृष्ट्वा प्रदीपं नहि जन्मभागिनो भवंति सत्यं श्वपचाश्च विप्राः । इति । येनार्जितानि० । योनंतदेव०ऊर्जाख्यदीधितिरियं स्मृतिकौस्तुभस्य ॥

अथ **मार्गशीर्षकृत्यं निर्णयामृते भारते**—मार्गशीर्षं तु यो मासमेकभक्तेन संक्षिपेत् । भोजयेत्तु द्विजान्भक्त्या स मुच्ये-

ह्याधिकिल्बिषैः। इति। ऋग्विधाने—सदसस्पतिमेकर्चं मेधाकामो जपेद्बुधः।अयुतं चैव सिद्धिश्च मार्गशीर्षे न संशयः। इति।

अत्र कृष्णाष्टम्यां भैरवजयंतीव्रतमुक्तं शिवरहस्ये—कालाष्टमीति विज्ञेया कार्तिकस्यासिताष्टमी। तस्यामुपोषणं कार्यं तथा जागरणं निशि। इति। भैरवस्य तु कर्तव्या पूजा यामचतुष्टये। कार्यं शिवकथालापैर्निशि जागरणं सदा। जागरं चोपवासं च कृत्वा कालाष्टमीदिने। प्रयतः पापनिर्मुक्तः शैवो भवति शोभनः। इति। यामचतुष्टयं रात्रिसंबंधि विवक्षितं प्रकरणात्। काशीवासिनां नित्यं चैतत्। तदधिकारे—यो देवि भैरवाष्टम्यामुपवासं प्रयत्नतः। न करिष्यति मोहेन यास्यत्येवेह यातनां। इति तत्रैव वचनात्। काशीखंडे—मार्गशीर्षासिताष्टम्यां कालभैरवसंनिधौ। उपोष्य जागरं कुर्यान्महापापैः प्रमुच्यते। यत्किंचिदशुभं कर्म कृतं मानुषबुद्धितः। तत्सर्वं विलयं याति कालभैरवदर्शनात्। अनेकजन्मनियुतैर्यत्कृतं जंतुभिस्त्वघं। तत्सर्वं विलयं याति कालभैरवजागरात्। कृत्वा च विविधां पूजां महासंभारविस्तरैः। नरो मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेदिति। अत्र चैकैवाष्टमी मुख्यगौणचांद्रमानाभ्यां कार्तिकमार्गशीर्षासिताष्टमीत्वेन पुराणयोरुक्तेति ज्ञेयं। पूजोपवासजागरणानां त्रयाणामपि फलसंबंधावगमात्प्राधान्यं। अतएवाष्टम्या दिनद्वयगामित्वे प्रधानकालव्याप्तिलाभात्पूर्वैव ग्राह्या। कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी। पूर्वविद्धा प्रकर्तव्येति शास्त्राच्च। रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः। इति वचनाच्च। यत्तु शिवरहस्ये—नित्ययात्रादिकं कृत्वा मध्याह्ने संस्थिते रवौ। कृत्तिवासेश्वरं प्रापुर्बिल्वपत्रादिसाधनाः। इति प्रक्रम्य—तदोग्ररूपादनघान्मत्तः श्रीकालभैरवः। आविरासीत्तदा लोकान्भीषयन्नखिलानपि। इति मध्याह्ने भैरवप्रादुर्भावश्रवणान्मध्याह्नव्यापिनी परा ग्राह्येति। तदसत्। पूर्वार्धगतनित्ययात्रासंबंधित्वेन मध्याह्नानुवादात्। अस्तिच प्राप्तिः काशीखंडे—सचैलमादौ संस्नाप्य चक्रपुष्करिणीजले। संतर्प्य देवान्सपितॄन्ब्राह्मणांश्च तथार्थिनः। इति। माध्याह्निकमणिकर्णिकास्नानोपक्रमाया एव नित्ययात्रायाः—ततः पुनर्दंडपाणिमित्येषां पंचतैर्थिका। दैनंदिनी विधातव्या महाफल-

मभीप्सुभिरित्यंतेन ग्रंथेन विधानात् । अस्तु चोत्तरार्धगतक्रियान्वयो मध्याह्नस्य तथापि मध्याह्नेऽन्यैरपि कृत्तिवासेश्वरे गंतव्यमिति विधिकल्पनं पुराकल्पबलेन स्यात् । ततश्च भैरवजयंत्याः कथं निर्णयः । नच तदेति सर्वनाम्ना मध्याह्नपरामर्श इत्यपि शंक्यं । अव्यवहितस्य प्रसीदेशेत्यभिवंदनस्य परामर्शसंभवे बह्वर्थव्यवहितमध्याह्नपरामर्शायोगात् । तत्परामर्शेऽपि नैतदर्थवादबलेन मध्याह्नविषयविध्युन्नयनं संभवति । सामान्यविधिविरोधे मध्याह्ने भोज्यवेलायामिति वाक्यशेषेणानंतव्रते मध्याह्नकल्पनासंभवसिध्यै माधवोक्तन्यायस्य प्रकृतेऽपि तुल्यत्वात् । द्विविधसामान्यशास्त्रविरोधस्येहापि दर्शितत्वात् । विशेषप्रवृत्तकर्मकालशास्त्राविरोधस्येहाधिक्याच्च । उक्तौ हि रात्रौ पूजाजागरणविधी । संति च **शिवरहस्ये** भैरवप्रादुर्भावांते तदुपोद्बलकानि वचांसि—एतस्मिन्नंतरे देवाः सूर्येऽप्यस्तंगतः शिवे । ततः संध्यादिकं कृत्वा शिवपूजापरा बभुः । ततः काशीपालनार्थं भैरवः स्थापितो मया । कृत्तिवासेश्वरश्चैव दक्षिणादिशि सादरं । ततः सायं विष्णुमुख्याः कृत्वा पूजां मम प्रिये । भैरवाभ्यर्चनार्थाय मुख्यभैरवसंनिधौ । ततस्ते भैरवं देवमुपचारैश्च षोडशैः । संपूज्यार्घ्यप्रदानानि चक्रुर्भक्तिसमन्विताः । उपोषणस्यांगभूतमर्घ्यदानमिह स्थितं । तथा जागरणं रात्रौ पूजा यामचतुष्टयं । इति । अत्रास्तोत्तरमेव क्षेत्रपालत्वं तत्प्रयुक्तं सार्घपूजनं तदैवेति स्पष्टं प्रतीयत इति न मध्याह्नादरः प्रामाणिक इति प्रदोषव्यापिन्येव ग्राह्या इति सिद्धं । भैरवदर्शनं च कालोदके स्नात्वा कार्यमित्युक्तं **काशीखंडे**—तीर्थे कालोदके स्नात्वा कृत्वा तर्पणतत्परः । विलोक्य कालराजं च निरयादुद्धरेत्पितॄन् । इति । पूजांते त्रयोऽर्घ्या देयाः । तत्रमंत्राः **शिवरहस्ये**—भैरवार्घ्यं गृहाणेश भीमरूपाव्ययानघ । अनेनार्घ्यप्रदानेन तुष्टो भव शिवप्रिय । सहस्राक्षिशिरोबाहो सहस्रचरणाजर । गृहाणार्घ्यं भैरवेदं सपुष्पं परमेश्वर । पुष्पांजलिं गृहाणेश वरदो भव भैरव । पुनरर्घ्यं गृहाणेदं सपुष्पं यातनापह । इति भैरवजयंतीनिर्णयः ।

अत्र शुक्लपंचम्यां **नागपूजा** प्रसिद्धा दाक्षिणात्यानां । द्योतिता च **हेमाद्रौ स्कान्दे**—शुक्ला मार्गशिरे पुण्या श्रावणे

या च पंचमी। स्नानदानैर्बहुफला नागलोकप्रदायिनी। इति। इयं पंचमी नागपूजायां षष्ठीयुतैव ग्राह्या। पंचमी नागपूजायां कार्या षष्ठीसमन्विता। इति वचनात्परैवेत्युक्तं **तिथिदीधितौ**। कुलधर्माविरोधेन चैतत्।

अथ **चंपाषष्ठी**। तत्स्वरूपं **मल्लारिमाहात्म्ये**—मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता। रविवारेण संयुक्ता सा चंपेतीह विश्रुता। इति। विशाखाभौमयोगेन सा चंपेतीह विश्रुता। इति। **मदनरत्ने**। **स्मृत्यंतरे** तु—मार्गशीर्षेऽमले पक्षे षष्ठ्यां वारेंऽशुमालिनः। शततारागते चंद्रे लिंगं स्याद्दृष्टिगोचरं। इति शिवलिंगदर्शनं कार्यमित्यर्थः। उक्तप्रकारयोगानामन्यतरो यस्यां लभ्यते सा पूर्वा परा वा ग्राह्या। योगाभावे तु परैव ग्राह्या। षष्ठी तु शस्तोत्तरेति **दीपिकोक्तेः**। स्कंदव्रते त्वियं पूर्वैवेत्युक्तं **तिथिदीधितौ**।

अथ सप्तम्यां कर्तव्यमुक्तं **निर्णयामृते ब्राह्मे**—तद्विष्णोर्दक्षिणं नेत्रं तदेवाकृतिमत्पुनः। अदित्यां कश्यपाज्जज्ञे मित्रो नाम दिवाकरः। सप्तम्यां तेन सा ख्याता लोकेस्मिन्मित्रसप्तमी। षष्ठ्यां च स्नपनं कार्यं तस्मै मित्राय भानवे। तत्रोपवासः कर्तव्यो भक्ष्यान्यथ फलानि वा। रात्रौ जागरणं कार्यं गीतनृत्यपुरस्कृतं। सप्तम्यां वपनं कृत्वा ततः स्नात्वा यजेद्रविं। नानाकुसुमसंभारैर्भक्ष्यैः पिष्टमयैः शुभैः। मधुना च प्रशस्तेन होमजप्यसमाधिभिः। ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्च मानवान्। अष्टम्यां संविभज्यांश्च तर्प्यांश्च नटनर्तकाः। दिनद्वये च भोक्तव्यं पिष्टान्नं मधुसंयुतं। इति। दिनद्वये सप्तम्यामष्टम्यां च। अत्र पौर्णमास्यां मृगशीर्षयुक्तायां लवणदानमाह **निर्णयामृते विष्णुः**—मार्गशीर्षपौर्णिमास्यां मृगशिरोयुक्तायां चूर्णितलवणस्य सुवर्णनाभं प्रस्थमेकं चंद्रोदये ब्राह्मणाय प्रतिपादयेत्। अनेन कर्मणा रूपसौभाग्यभागभिजायते इति।

अत्रैव **दत्तात्रेयजयंतीविधिः सह्याद्रिखंडे**—मार्गशीर्षे पंचमेह्नि दशेह्नि च सुनिर्मले। मृगशीर्षयुते पूर्णमास्यां ज्ञस्य च वासरे। जनयामास देदीप्यमानं पुत्रं सती शुभं। तं विष्णुमागतं ज्ञात्वा अत्रिर्नामाकरोत्स्वयं। दत्तवान्स्वस्य पुत्रत्वाद्दत्तात्रेय इतीश्वरं। इति। इयं प्रदोषव्यापिनी ग्राह्या शिष्टाचारात्।

अत्रैव प्रत्यवरोहणाख्यं कर्माहाश्वलायनः—मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्यां पौर्णमास्यां वेति । अथ प्रयोगः । कर्ता मार्गशीर्षपौर्णमास्यां पूर्वेद्युश्चतुर्दश्यां वा प्रत्यवरोहणं कर्तुं दिवैव निवेशनमलंकृत्य फलरहितधान्यतृणनिर्मितं कटं संपाद्य नांदीश्राद्धं च कृत्वा सूर्यास्तमिते सायमौपासनानंतरं प्राणानायम्य देशकालौ संकीर्त्य मम स्त्रीपुत्रादिसहितस्य जलस्थलचरसर्पबाधानिवृत्त्यभयहेमंतसौमनस्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रत्यवरोहणाख्यं कर्म करिष्ये इति संकल्प्य । चक्षुषी आज्येनेत्यंते अत्र प्रधानं श्वेतं श्वेतं पायसेन इध्मसंनहनेन रुद्रमित्यादि पूर्णपात्रनिधानांतेऽष्टौ मुष्टींस्तूष्णीं निरुप्याष्टकृत्वस्तूष्णीं प्रोक्ष्य पयसि चरुश्रपणाद्याज्यभागांते पुत्राद्यन्वारब्धोऽवदानधर्मेणावदाय जुहुयात् । अपश्वेतेति मंत्रयोर्हिरण्यगर्भऋषिः श्वेतो देवता आद्यानुष्टुप् द्वितीया गायत्री प्रत्यवरोहणप्रधानहोमे वि० अपश्वेत पदाजहि पूर्वेणचापरेणच । सप्तच वारुणीरिमाः सर्वाश्च राजबांधवीः स्वाहा । श्वेतायेदं नमम । नवैश्वेतश्चाभ्यागारेहिर्जघान किंचन । श्वेतायवै दार्वाय नमः स्वाहा । श्वेतायेदं० । इति द्वेआहुती हुत्वा । अभयं नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपित्वा । शिवोनः सुमना भवेति हेमंतं ध्यात्वा पूर्वनिर्मितं कटमास्तीर्य स्त्रीपुत्रादिसहितस्तत्रोपविश्य । स्योनापृथिवीमेधातिथिर्भूमिर्गायत्री प्रत्यव० । ॐस्योनापृ० सप्रथः इति जपित्वा । यजमानः प्राक्शिरा उदङ्मुखो दक्षिणपार्श्वेन कटे शयीत । ततो गृहपतेरंते यथाज्येष्ठं सर्वे पुत्रपौत्रादयस्तत्रैव शयीरन् । तत उत्थायोपविश्य प्राङ्मुखाः सर्वे अतोदेवा मेधातिथिर्विष्णुर्गायत्री जपेवि० । एतामृचं त्रिर्जपेयुः । पुनस्तत्रैव शयित्वोत्थायोपविश्य दक्षिणामुखाः अतोदेवा अवंतुन इति पादं जपित्वा । पुनरपि तथैव शयित्वोत्थायोपविश्य प्रत्यङ्मुखाः यतो विष्णुर्विचक्रमे इति जपेयुः । पुनस्तथैव शयित्वोत्थायोदङ्मुखाः पृथिव्याः सप्तधामभिरिति जपेयुः । ततः स्विष्टकृद्वर्जं होमशेषं समापयेत् । ततो यथापूर्वं शयित्वा उदिते सूर्ये कृतनित्यक्रियाः सर्वे संगम्य सौर्याणि स्वस्त्ययनानि च सूक्तानि जपेयुः । तत्र कारिकाः—उदुत्यं नव षट् चित्रं देवानामुदगादिति । नमोमित्रस्य सूक्तं तु सूर्यो न इति

चापरं। उक्तानि सूर्यसूक्तानि वक्ष्ये स्वस्त्ययनानि च। आनोभद्रास्तथा स्वस्तिनोमिमीतां परावतः। इति। तत्र उदुत्यमितिनवानां काण्वः प्रस्कण्वः सूर्यो गायत्री। चित्रंदेवानामिति षण्णामांगिरसः कुत्सः सूर्यस्त्रिष्टुप्। नमोमित्रस्येति सौर्योभितपाः सूर्यो जगती दशमी त्रिष्टुप्। सूर्यो न इति पंचर्चस्य सूर्यश्चक्षुः सूर्यो गायत्री। आनोभद्रा इति दशर्चस्य राहूगणो गोतमो विश्वेदेवाः पंचाद्याः सप्तमी च जगत्यः षष्ठी विराट् शेषास्त्रिष्टुभः। स्वस्तिनो मिमीतामित्यस्यात्रिर्विश्वेदेवास्त्रिष्टुप्। परावत इत्यस्य मानवो नाभानेदिष्ठो विश्वेदेवा जगती अंत्ये त्रिष्टुभौ जपेवि०। यद्यपि सौर्याणि चत्वारि ग्रंथकृद्भिर्दर्शितानि तथापि त्रयाणां पाठेन शास्त्रार्थोपपत्तेस्तृतीयचतुर्थयोर्विकल्पः। स्योनेत्यारभ्यैतदंतं मंत्रज्ञाः पुत्रादयोऽमात्या अपि कर्त्रा सह जपेयुः। ततो गृहसिद्धान्नेन ब्राह्मणान्भोजयित्वा ॐस्वस्तिभवंतोब्रुवंत्विति कर्ता वदेत्। ॐस्वस्ति इति ब्राह्मणाः प्रतिब्रूयुः इति कारिकाकारः। जयंतस्त्वाह। स्वस्त्ययनं ब्रूतेत्युक्ताः स्वस्त्ययनमिति वदंति। अथवा स्वस्तिपदोपलक्षितान्पुण्याहं स्वस्ति ऋद्धिमित्येवमादीन्शब्दान्वदंतीति। ततः सामात्यो भुंजीतेति प्रत्यवरोहणं। येनार्जितानि० योनंतदेवकृत० तस्य मार्गाख्यदीधितिरियं स्मृतिकौस्तुभस्य॥

अथ **पौषकृत्यं** **निर्णयामृते**—पौषमासं तु कौंतेय एकभक्तेन यः क्षिपेत्। सुभगो दर्शनीयश्च यशोभागी च जायते इति। **वामनपुराणे**—प्रासादनगरादीनि गृहप्रावरणानि च। नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः। इति।

मार्गशीर्ष्यादिपौर्णमासीचतुष्टयानंतरासु पौषकृष्णाष्टमीप्रभृतिषु चतसृष्वष्टमीषु **अष्टकाश्राद्धं** कार्यं। तत्पूर्वसप्तमीषु पूर्वेद्युःश्राद्धं तदुत्तरनवमीषु चान्वष्टक्यं कार्यं। अशक्तस्त्रिष्वेकस्यां वा कुर्यात्। हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वा पूर्वेद्युः पितृभ्यो दद्यादपरेद्युरन्वष्टक्यमित्याश्वलायनोक्तेः। तिस्रोष्टकास्तिस्रोन्वष्टका इति **विष्णूक्तेश्च**। अयं त्रित्वपक्षो नाश्वलायनशाखिनां। मलमासे च नानुष्ठेयमेतत्। ऋतुद्वयांतर्गतमलमासेष्टकानिवृत्त्यर्थत्वेनोर्ध्वमाग्रहायण्यास्तिस्रोष्टका इति शास्त्रांतरप्रसिद्धत्रित्वनिरासार्थत्वेन च सौत्रचतुर्ग्र-

हणस्य वृत्तिकृता व्याख्यानात् । यद्यपि प्रयोगपारिजातोदाहृताग्निस्मृतौ—सिंहस्थे मकरस्थे वा प्रोष्ठपान्माघमासयोः । कृष्णपक्षेऽष्टका कार्या गृहस्थाद्यैः स्वशक्तितः । इति भाद्रेऽष्टकोक्ता तथाप्याश्वलायनैस्तत्र नाष्टकानाम्ना संकल्पः कार्यः । माघ्यावर्षेतिसंज्ञांतरवति तत्रत्यश्राद्धेऽष्टकाधर्मातिदेशस्याश्वलायनोक्तेः । चतुर्ग्रहणेन न्यूनसंख्याया इवाधिकसंख्याया अपि निरासौचित्याच्च । एकस्यामिति पक्षे माघ्या उपरिष्टादष्टम्यां क्रियेत । तत्रापि पूर्वेद्युरान्वष्टक्ययोरसंभवेऽष्टकामात्रमपि । यद्युवै उपरिष्टान्माघ्याः पूर्णमास्या अपरपक्षस्य सप्तम्यामष्टम्यां नवम्यामिति क्रियेतापिवाष्टम्यामेवेति बौधायनोक्तेः । तिस्र इति पक्षे मार्गशीर्षे न कार्यं । अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिष्विति पाद्मोक्तेः । तत्राष्टकाश्राद्धमपराह्णव्यापिन्यामष्टम्यां पार्वणवत्कार्यं । तदनुरोधेन पूर्वेद्युःश्राद्धमान्वष्टक्यं च कार्यं । अवश्यं कार्यं चैतत् । अप्यनडुहो यवसमाहरेदग्निना वा कक्षमुपोषेदेषामेष्टकेति नत्वेवानष्टकः स्यादित्याश्वलायनोक्तेः । प्रत्याम्नायांतरमपि वृत्तिकृतोपन्यस्तं । अपिचानूचानेभ्य उदकुंभमाहरेदपि वा श्राद्धमंत्रानधीयीतेति ।

अथ प्रयोगः । पूर्वेद्युस्तिथ्यादिसंकीर्त्य पार्वणवत्पितॄन्संकीर्त्य श्वोऽष्टकाश्राद्धं कर्तुं पूर्वेद्युःश्राद्धं करिष्य इति संकल्प्य क्षणदानांतं दर्शवत्कृत्वा पिंडपितृयज्ञविधानेनेध्माधानांतं कुर्यात् । हविस्त्रयपक्षे पात्रासादने स्थालीत्रयासादनं स्थालीनां क्रमेण व्रीहिभिः पूरणं क्रमेणौदनतिलमिश्रौदनपायसानां श्रपणं क्रमेण त्रयाणामभिघारणं । उदगुद्वास्योल्मुकात्पश्चिमतः क्रमेणाग्नेयीसंस्थानामासादनं दक्षिणतोऽभ्यंजनांजनकशिपूपबर्हणासादनं अपूपमात्रपक्षे तत्स्थापनार्थैकैव स्थाली शूर्पोलूखलमुसलकृष्णाजिनानां निवृत्तिः । अस्नेहपक्वो गोधूमविकारोऽपूप इति मिताक्षरायां । अतोऽपूपा मंडका इति वृद्धाः । चतुःशरावपरिमितगोधूमानां पिष्टेन कार्याः । शराव इति पुरुषाशनपरिमाणे वर्तते इति जयंतः । तेषां सिद्धानामुपादानमिति वृत्तिकृदादयः । अतः पात्रासादनांते स्थाल्यां गृहसिद्धानपूपान्निधायोल्मुकप्रणयनादि दक्षिणतोभ्रवानिधानांतं कृत्वाऽपूपस्थालीमग्नौ निधायाभिघार्योदगुद्वास्योल्मुकपश्चिमतो निदध्यात् । पक्ष-

द्वयेपि इध्माधानांते ब्राह्मणपच्छौचाद्याच्छादनप्रदानकरशुद्ध्यंतं कृत्वा त्रिषु पात्रेषु ओदनादिभ्यस्त्रिभ्यः पृथगुद्धृत्य केवलापूपेभ्यो वोद्धृत्य घृताक्तं कृत्वा। अपूपानां बहुसाधनसाध्यत्वात्स्त्रीकर्तृकत्वाच्च नित्येग्नौ श्रपणं न संभवतीति गृहसिद्धानामेवोपादानमिच्छंति इति वृत्तिकारः। अग्नौ करिष्य इति पितृविप्रान्प्राचीनावीत्यनुज्ञाप्य कुरुष्वेति तैरनुज्ञातो मेक्षणे ध्रौवाज्येन सकृदुपस्तीर्य क्रमेण त्रिभ्योपि हविर्भ्यो द्विर्द्विरवदाय पक्षांतरेऽपूपेभ्यएव द्विरवदाय शिष्टमभिघार्यावत्तमभिघार्य प्राकृतमंत्रयोः स्थाने उदीरतामित्यष्टाभिर्जुहुयात्। प्रतिमंत्रमुक्त्वावदानावृत्तिः। उदीरतामित्यष्टानां शंखऋषिः पितरोदेवता त्रिष्टुप्छंदः पूर्वेद्युः श्राद्धांगाग्नौकरणहोमे विनियोगः। उदीरता० १ इदंपितृभ्यो० २ आहंपितॄन्० ३ बर्हिषदः० ४ उपहूताः० ५ आच्याजानु० ६ आसीनासो० ७ येनःपूर्वे० ८ प्रतिमंत्रमंते स्वाहाकारस्थाने स्वधाइति पठनीयं। पितृभ्यइदंनममेति त्यागश्च। यज्ञोपवीती मेक्षणमग्नौ प्रहृत्याप उपस्पृश्य प्राचीनावीती हुतशिष्टपरिवेषणादिसंपन्नवाचनांतं कृत्वा उद्धृत्य भुक्तशेषान्नं निदधाति। चरुत्रये स्यात्पात्रोत्सर्गपर्यंतं श्राद्धशेषं समापयेत्। ततः पार्वणद्वयदेवतानां तिलतर्पणं कृत्वा संयतो दिनशेषं नयेत्॥ अथाष्टम्यां कर्ता प्राणानायम्य देशकालौ संकीर्त्य प्राचीनावीती दर्शवत्पितृनामानि संकीर्त्याष्टकाश्राद्धं करिष्य इति संकल्प्य क्षणदानांतं कृत्वा औपासनाग्निं प्रज्वाल्य प्राणायामादि अष्टकांगहोमंकरिष्ये। देवता० चक्षुषीआज्येनेत्यंते अग्निं द्विश्चरुणा। ग्रीष्मं हेमंतमृतून् वर्षाः शरदं संवत्सरमधिपतिमहोरात्रे चरुणा। पृथिवीमंतरिक्षं द्यां देवीं दिशः प्रदिश उद्दिशोऽपो विद्युतश्चरुणा। आपोमरीचीर्धातारं समुद्रं भूतं भविष्यद्विश्वं ब्रह्माणं चरुणा। विश्वानादित्यान्वसून्देवान्रुद्रान् गोप्तॄन्मरुतः प्रजापतिं परमेष्ठिनं चरुणा। प्रजापतिं चरुणा। शेषेणेत्यादि। निर्वापकाले शूर्पे पवित्रे निधाय तच्छूर्पमग्नेः पश्चिमतो निधायाष्टाविंशतिमुष्टीन्तूष्णीं निरुप्य तावद्वारं तूष्णीं प्रोक्ष्यावहत्याद्याज्यभागांतं कृत्वाऽवदानविधिनाऽवदाय। अग्नेनयेतिद्वयोरगस्त्यऋषिः अग्निर्देवता त्रिष्टुप्छंदः अष्टकांगहोमे विनियोगः। अग्नेनयसुपथा० विधेमस्वाहा। अग्नयइदं०। अग्नेत्वंपारयान० शंयोःस्वाहा। अग्नयइदं०।

ग्रीष्मो हेमंतऽऋतवः शिवानो वर्षाः शिवाऽअभयाः शरन्नः । संवत्सरोऽधिपतिः प्राणदोनोऽहोरात्रे कृणुतां दीर्घमायुः स्वाहा । ग्रीष्माय हेमंतायर्तुभ्यो वर्षाभ्यः शरदे संवत्सरायाधिपतयेऽहोरात्राभ्यामिदं० । शांतापृथिवीशिवमं० सर्वतःस्वाहा । पृथिव्याअंतरिक्षायदिवेदिग्भ्यः प्रदिग्भ्य उद्दिग्भ्योऽर्ध्वथोविद्युत इदं० । आपो मरीचीः प्रवहंतु नोधियो धाता समुद्रो वहंतु पापं । भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माधिगुप्तः स्वाराक्षाणिस्वाहा । अभ्द्योमरीचिभ्यो धात्रे समुद्राय भूताय भविष्यते विश्वस्मै ब्रह्मणइदं० । स्वाराक्षराणीत्यशुद्धः पाठः । विश्व आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतः सदंतु । ऊर्जं प्रजाममृतं पिन्वमानः प्रजापतिर्मयि परमेष्ठी दधातु स्वाहा । विश्वेभ्य आदित्येभ्यो वसुभ्यो देवेभ्यो रुद्रेभ्यो गोप्तृभ्यो मरुद्भयः प्रजापतये परमेष्ठिन इदं० । ग्रीष्म इत्यादय एतदंता मंत्रा एकश्रुत्येन वाच्याः । अविज्ञातस्वरोमंत्रः सौत्र एकश्रुतिर्भवेदिति कारिकोक्तेः । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । प्रजापतेनत्वदेता० रयीणां स्वाहा । प्रजापतयइदं० । स्विष्टकृदादिहोमशेषं समाप्य । ब्राह्मणपादप्रक्षालनादि । कामकालौ विश्वेदेवौ । वृद्धि-(इष्टि)श्राद्धे ऋतुदक्षावष्टम्यां कामकालाविति प्रयोगपारिजाते शंखोक्तेः । आच्छादनकरशुध्यंतं कृत्वा भोजनार्थादुद्धृत्य घृतेनाङ्क्त्वा पित्रर्थविप्रसमीप उपविश्य प्राचीनावीती पाणिं पर्युक्ष्य तत्र दक्षिणाग्रान्दर्भानास्तीर्य मेक्षणे उपस्तरणादिविधिनाऽवदाय सोमायेत्यादिमंत्राभ्यामाहुतिद्वयं हुत्वा पुनः पर्युक्ष्य संस्थाजपेनोपतिष्ठेत । एवं पितामहादिपाणिष्वपि । विप्रास्तदन्नं पात्रे निक्षिप्याचम्योपविशेयुः । कर्तान्नस्य हुतशिष्टस्य च परिवेषणादिसंपन्नवाचनांतं कृत्वा भुक्तवत्स्वनाचांतेषु विप्रसमीपे भोजनपात्राद्बाहुमात्रमुत्सृज्य रेखाद्वयपूर्वकं भोजनार्थादन्नादुद्धृत्य तेनैव पिंडदानविकिरदाने कुर्यात् । न कार्यमग्निप्रत्येयादित्याद्यत्र तु कर्मणि । प्राशयेन्मध्यमं पिंडं श्राद्धशेषं समापयेत् । इति कारिका । स्वस्त्ययनवाचनं विसर्जनात्पूर्वं प्रत्यवरोहणवत्कार्यमित्यपि पक्षं वृत्तिकृत् । विसर्जनांते पार्वणद्वयदेवतानां तर्पणं कुर्यात् । इति प्रथमाष्टका ।

द्वितीयादिषु तिसृषु द्रव्यविधिर्हेमाद्रौ वायुपुराणे—आद्या-

पूपैः सदा कार्या मांसैरन्या भवेत्सदा । शाकैरन्या तृतीया स्यादेवं द्रव्यगतो विधिः । तत्रैव ब्राह्मेतु शाकमांसापूपात्मकानि द्रव्याणि तिसृष्वेतासु विधाय भाद्रगतायां चतुर्थ्यां शाकविधिरुक्तः । अत्र हेमाद्रिः । शाकादिशब्दाः सर्वस्यापि भोज्यस्य तत्तद्द्रव्ये प्रधानत्वप्रतिपादनपराः नतु द्रव्यांतरनिवृत्तिपरा इति । अतश्च तीर्थयात्रांगश्राद्धे इदं घृतं सोपस्करमितिवदिमेऽपूपाः सोपस्करा इत्येवं त्यागवच ऊह्यं । श्राद्धे मांसस्य कलिवर्ज्यत्वात्तत्स्थाने माषान्नं देयं । इदं माषान्नं सोपस्करमित्येव संकल्पः ।

नवम्यामन्वष्टक्यं । कर्ता देशकालकीर्तनांते प्राचीनावीती दक्षिणामुखः पित्रादिमात्रादिसपत्नीकमातामहादिपार्वणदेवतानामानि प्रकृतिवन्निर्दिश्यान्वष्टक्यश्राद्धं करिष्य इति संकल्प्य क्षणदानांतं कुर्यात् । तत्रच द्विमातृकेण मात्रोः स्थाने क्षणः क्रियतामिति । बहुमातृकेण मातॄणां स्थाने क्षणः क्रीयतामिति क्षणदानं कार्यं । एवं पितामहीद्वित्वबहुत्वयोः प्रपितामहीद्वित्वबहुत्वयोश्च क्षणदानं कार्यं । वृत्तिकृता पिंडदानावसरे यदि द्वे मातरौ यदा द्विबहव इत्यादि ग्रंथेन मिलितानेकमात्रादिगतदेवतात्वऊहनिमित्तत्वेन सिद्धवदनुवदता अन्वष्टक्यस्य आरंभप्रभृत्येव तथा ऊहेन मात्राद्युद्देशसूचनात्सिद्धवन्निर्देशस्य विध्युन्नायकत्वं सव्यं हि मनुष्या इत्यादौ प्रसिद्धं । प्रतिपार्वणं नवावरा ब्राह्मणाः । अशक्तौ ततः प्रागप्ययुजः । सप्त पंच त्रय एको वा । सप्तपक्षे एकस्यैक इतरयोस्त्रयः । पंचपक्षे एकस्य त्रयः इतरयोरेकैकः । इदं चान्वष्टक्य एवेति वृत्तिकृत् । पूर्वेद्युःप्रभृतिष्विति जयंतः । दक्षिणाप्रवणदेशोपरि कृतस्थंडिले विधिवदग्निं प्रतिष्ठाप्य परिश्रित्योत्तरतो द्वारं कुर्यात् । नवा परिश्रपणं । परिसमुह्य त्रिवारमप्रदक्षिणमकंपयन्प्राग्दक्षिणाग्रसमूलैर्दर्भैः परिस्तीर्य दर्भेषु चरुस्थालीत्रयशूर्पस्फ्योलूखलमुसलस्रुवस्रुवकृष्णाजिने सकृदाच्छिन्नत्रयेध्ममेक्षणकमंडलूनेकैकश आग्नेयीसंस्थान्यासाद्य स्थालीषु व्रीहिपूरणादिशुद्धौदनतिलमिश्रौदनपायसश्रपणांतं कृत्वा दधिमंथपूर्णपात्रं मधुमंथपात्रं चाग्नावधिश्रयतीति जयंतः । श्रपयित्वा चरूनग्नौ दधिमंथानधिश्रयेत् । इति कारिकाकारः । दधिमिश्रं भर्जितयवपिष्टं

दधिमंथः । मधुमिश्रं तन्मधुमंथः । ओदनाग्रद्रवं पात्रांतरेणादायोल्मुकं प्रणीय पूर्ववत्परिस्तीर्यापहता इति स्फ्येन रेखात्रयं पश्चिमापवर्गमुल्लिख्य प्रत्येकमभ्युक्ष्यैकेन सकृदाच्छिन्नेनावस्तीर्य ध्रुवायामाज्यं कृत्वा दक्षिणत आसाद्य स्रुवेण पंचापि हवींषि प्रत्येकमभिघार्योदगुद्वास्योल्मुकात्पश्चिमदर्भेष्वाग्नेयीसंस्थान्यासाद्याभ्यंजनादीनि दक्षिणत आसाद्य कशिपुत्रयमुपवर्हणत्रयं चासादयेत् । इध्माधानांतं कृत्वा ब्राह्मणपादक्षालनादि । अर्घ्येषु विशेषः । नवपात्राण्यासाद्योत्तानीकृतेषु प्रत्येकं त्रींस्त्रीन्दर्भान्निधाय जलेन संपूर्य शन्नोदेवीरिति सर्वाणि सकृदनुमंत्रयेत् । तिलोसीत्यनूहितावृत्त्या प्रतिपात्रं तिलान्निक्षिप्य गंधादि च निक्षिप्य तत्तद्विप्राग्रतो निधानांतं कृत्वा पितरिदंते अर्घ्यं० । मातरिदंते अर्घ्यं० । मातरौइदंवां । मातरइदं वो अर्घ्यं इत्येवं यथालिंगं दत्त्वा करशुद्ध्यंते पात्रचतुष्टये मधुमंथवर्ज्यं चतुर्भ्यं उद्धृत्य घृताक्तं कृत्वाग्नौकरिष्य इत्युक्त्वा क्रियतामित्युक्ते मेक्षणे उपस्तीर्य चतुर्भ्यो द्विर्द्विरवदाय हवींष्यवत्तं चाभिघार्य सोमायेति हुत्वा तथैव हविश्चतुष्टयस्य दक्षिणभागादवदायाग्नयइति मंत्रेण पूर्वाहुतेर्दक्षिणतो हुत्वा यज्ञोपवीती मेक्षणं परिहृत्याप उपस्पृश्यान्नपरिवेषणांते हुतशिष्टचतुष्टयं पार्वणत्रयपात्रे परिविष्य त्यागादिसंपन्नवाचनांतं कृत्वा । पिंडार्थं विकिरार्थं च सर्वस्मादन्नाद्धविश्चतुष्टयान्मधुमंथाभ्यां चोद्धृत्य शेषनिवेदनादिकाले वर्हिःषु प्रत्यगपवर्गं सतिलजलैः शुंधंतां पितरः शुंधंतां मातरः शुंधंतां सपत्नीकमातामहाः इत्येवं नवमंत्रैर्निनयनं कृत्वा । शुक्लांवराः शुक्लगंधाः शुक्लयज्ञोपवीतिनः । आत्मनोऽभिमुखासीना ज्ञानमुद्रा निरायुधाः । वसवः पितरो ज्ञेया रुद्रास्तत्र पितामहाः पितुः पितामहाः प्रोक्ता आदित्या वर्हिंषि स्थिताः । इति ध्यात्वा मधुसर्पिस्तिलयुतान्नवपिंडान्दद्यात् । एतत्ते इत्यादि यथालिंगं । एतत्ते मातर्यज्ञदे येचत्वामित्येवमेकमातृकस्य । एतद्वां मातरौ यज्ञदारुद्रदे येचयुवामिति द्विमातृकस्य । एतद्वो यज्ञदारुद्रदाविष्णुदाः येचयुष्मानिति वहुमातृकस्य । येचेत्यस्य स्थाने नोह इति वृत्तिकृत् । अत्र पितरोऽमीमदंतपितर इत्यत्र नोहः । स्त्रीपिंडेषु ओदनाग्रद्रवं लवणमिश्रक्षीरं च निनयेत् ।—अभ्यं-

जाथांपदं द्वित्वे बहुत्वेऽभ्यङ्ग्ध्वमित्यथ । द्वित्वेंजाथांपदं ब्रूयाद्बहुत्वेऽङ्ग्ध्वंपदं वदेत् । दद्याद्दशामनूहेन मंत्रस्यावृत्तिरिष्यते । अनूहेनैव पिंडाश्च सकृदेवोपतिष्ठते । अनूहेनैवं चैषां स्याद्युगपच्च प्रवाहणं । पिंडत्रयमनूहेन पत्नीं वै प्राशयेदथ । स्यात्पात्रोत्सर्गपर्यंतं श्राद्धशेषं समापयेत् । अक्षय्योदकदानादि । जयंतमते थेचेत्यस्य स्थाने याश्चेत्यूहः । एतद्वो मातरो वास इति च । श्राद्धांते पार्वणत्रयदेवतानां तिलतर्पणं कुर्यात् । इत्यनाहिताग्नेः ।

**अथाहिताग्नेः प्रयोगपारिजाते** पूर्वेद्युःश्राद्धप्रकरणे । आहिताग्निश्चाच्छादनांतं कृत्वा दक्षिणाग्निप्रज्वलनादिहविरासादनांतं कृत्वा ब्राह्मणाननुज्ञाप्य दक्षिणाग्नाविध्ममुपसमाधाय उदीरतामित्यष्टावाहुतीर्हुत्वा मेक्षणादिविसर्जनांतमनाहिताग्निवत्कुर्यादिति । अष्टकान्वष्टकास्वप्येतेन ग्रंथेनौपासनगतपाणिहोमयोः दक्षिणाग्नौ कर्तव्यताज्ञापनात्प्रयोग ऊह्यः । जयंतस्त्वान्वष्टक्यांते आह । एवमाद्याहिताग्नेरौपासनाभावे शालाग्नौ भवतीति ।—इत्यष्टकाप्रयोगस्य निरूपणमकार्यदः । देवेनानंतसंज्ञेन मुदं यात्वमुना हरिः ॥ १ ॥

**पौषशुक्लाष्टम्यां** बुधवारे कृत्यमुक्तं भविष्ये—पुष्ये मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् । तदा तु सा महापुण्यां महाभद्रेति कीर्तिता । तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनं । मत्प्रीतये महादेवि पूज्योहं विधिवद्बुधैः । इति । तथा—पुष्ये मासि यदा देवि अष्टम्यां नगजे बुधे । नक्षत्रं जायते पुण्यं यल्लोके रौद्रमुच्यते । तदा तु सा महापुण्या जयंती अष्टमीयुता । तस्यां स्नानं तथा दानं जपो होमश्च तर्पणं । सद्यः कोटिगुणं देवि कृतं भवति कृत्स्नशः । रौद्रं भरणीति **वराहमिहिरः** ।

अथ पौर्णमास्यां पुष्ययुतायां अलक्ष्मीनाशनाय स्नानादि विहितं ब्राह्मे—इदं जगत्पुरा लक्ष्म्या त्यक्तमासीत्ततो हरिः । पुरंदरश्च सोमश्च तथा शुक्रबृहस्पती । पंचैते पुष्ययोगेन पूर्णमास्यां तपोबलात् । अलंकृतं पुनश्चक्रुः सौभाग्योत्सवलक्ष्मिभिः । तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये । गौरस-

१ नोभयेषांस्यात् ।

र्षपकल्केन समालिप्य स्वकां तनुं । कृतस्नानैस्ततः कार्यमलक्ष्मीनाशनं परं । उद्वर्त्य देवं च तथा सर्वौषधियुतैर्जलैः । स्नापयित्वा नवं वस्त्रं गृहीत्वाच्छादनं ततः । द्रष्टव्यं मंगलशतं धूपस्रक्माल्यशोभितं । ततो नारायणं शक्रं चंद्रं शुक्रं बृहस्पतिं । संपूज्य पुष्पधूपाद्यैर्नैवेद्यैश्च पृथक्पृथक् । प्रशस्तैर्वैदिकैर्मंत्रैः कृत्वाग्निहवनं शुभं । धनैर्विप्रांश्च संतर्प्य नवैर्वस्त्रैश्च शोभितैः । ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसं । पुष्ययोगे तु कर्तव्यं राज्ञा स्नानं च सर्वदा । इति । येनार्जितानि युधि० श्रीवाजवाहदुरसंज्ञनृपस्य तस्य वाचा हरेरिव गिराऽवनिदेवतुष्ट्यै ॥ १ ॥ योनंतदेवकृत० तस्य पौषाख्यदीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥ इति पौषकृत्यानि समाप्तानि ॥

**अथ माघमासकृत्यं** । तत्र धर्मप्रश्ने **बौधायनः** । तपस्यायामवगाहनं देवतास्तर्पयित्वा पितृतर्पणमनुतीर्थं उत्सिचन्नूर्जंवहंतीरिति । अथ **माघस्नानकालः** । **प्रयागसेतौ ब्राह्मे**—अरुणोदये तु संप्राप्ते स्नानकाले विचक्षणः । माधवांघ्रियुगं ध्यायन्यः स्नाति सुरपूजिते । प्रयागवारिणि शुभे तस्य पुण्यस्य का मितिः । इति । **पाद्मे**—माघमासे रटंत्यापः किंचिदभ्युदिते रवौ । ब्रह्मघ्नं वा सुरापं वा कं पतंतं पुनीमहे । इति । जले पतंतं स्नानं कुर्वंतमिति केचिद्व्याचख्युः । अन्ये ब्रह्मघ्नादिपदसमभिव्याहाराच्छ्रेयोभ्यः पतंतमिति । **भविष्ये**—यो माघमास्युषसि सूर्यकराभितप्तः स्नानं समाचरति चारुनदीप्रवाहे । उद्धृत्य सप्तपुरुषान्पितृमातृतश्च स्वर्गं प्रयात्यमलदेहधरो नरोसौ । इति । अत्र सूर्यकराभितप्त इति विशेषणादुषःशब्दः प्रातःकालपर इति **वृद्धाः** । एतेषां स्नानकालानामुत्तमाधमत्वमुक्तं **ब्राह्मे**—उत्तमं तु सनक्षत्रं लुप्ततारं तु मध्यमं । सवितर्युदिते भूप ततो हीनं प्रकीर्तितं । इति । आरंभसमाप्तिकालौ **ब्राह्मे**—एकादश्यां तु शुक्लायां पौषमासे समारभेत् । द्वादश्यां पौर्णमास्यां वा शुक्लपक्षे समापनं । इति । **विष्णुः**—दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत् । केचित्तु मकरस्थे रवौ माघ इति मंत्रान्मकरप्रभृति कुंभसंक्रमणपर्यंतं स्नानं कार्यमित्याहुः । अत्राधिकारिणो **भविष्ये**—ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः । बालवृद्धयु-

वानश्च नरनारीनपुंसकाः । स्नात्वा माघे शुभे तीर्थे प्राप्नुवंतीप्सितं पदं । इति । स्नानसाधनीभूतजलविशेषेण फलविशेषोऽभ्यधायि पाद्मे—तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः । षडब्दफलदं तद्धि मकरस्थे दिवाकरे । बहिःस्नानं तु वाप्यादौ द्वादशाब्दफलं स्मृतं । तडागे द्विगुणं राजन्नद्यां चैव चतुर्गुणं । दशधा देवखातेषु शतधा च महानदी । शतं चतुर्गुणं राजन्महानद्योश्च संगमे । सहस्रगुणितं सर्वं तत्फलं मकरे रवौ । गंगायां स्नानमात्रेण लभते मनुजो नृप । शतेन गुणितं माघे सहस्रं राजसत्तम । निर्दिष्टमृषिभिः स्नानं गंगायमुनसंगमे । इति । आरंभे संकल्पमंत्रश्च विष्णुः—तत्र चोत्थाय नियमं गृह्णीयाद्विधिपूर्वकं । माघमासमिमं पूर्णं स्नास्येहं देव माधव । तीर्थस्यास्य जले नित्यमिति संकल्प्य चेतसि । इति । एतन्मंत्रलिंगात्संपूर्णमाघस्नानमेकतीर्थएव कर्तव्यं ।

प्रात्याह्निकस्नानविधिः पाद्मे—मकरस्थे रवौ माघे गोविंदाच्युतमाधव । स्नानेनानेन मे देव यथोक्तफलदो भव । इति मंत्रं समुच्चार्य स्नायान्मौनसमन्वितः । वासुदेवं हरिं कृष्णं माधवं वा स्मरेत्पुनः । सेतौ—ब्रह्मक्षत्रविशां चैव मंत्रवत्स्नानमिष्यते । तूष्णीमेव तु शूद्राणां तथैव कुरुनंदन । नमस्कारोथ वा कार्यः सर्वपापौघहानिदः । इति । शूद्राणामिति स्त्रीणां संकरजातानामुपलक्षणं । तथा । ततः स्नात्वा शुभे तीर्थे दत्त्वा शिरसि वै मृदं । वेदोक्तविधिना राजन्सूर्यायार्घ्यं निवेदयेत् । पितॄन्संतर्प्य तत्रस्थोऽवतीर्य च ततो जलात् । इष्टं देवं नमस्कृत्य पूजयेत्पुरुषोत्तमं । शंखचक्रधरं देवं माधवं नाम पूजयेत् । माधवनाम्ना पूजयेदित्यर्थः । वह्निं हुत्वा विधानेन ततस्त्वेकाशनो भवेत् । भूशय्या ब्रह्मचर्येण शक्तः स्नानं समाचरेत् । इति । तथा—कर्तव्यो नियमः कश्चिद्व्रतरूपी नरोत्तमैः । फलातिशयहेतोर्वै किंचिद्भोज्यं त्यजेद्बुधः । भूमौ शयीत होतव्यमाज्यं तिलसमन्वितं । त्रिकालं चार्चयेन्नित्यं वासुदेवं सनातनं । दातव्यो दीपकोऽखंडो देवमुद्दिश्य माधवं । इंधनं कंबलं वस्त्रमुपानद्युगलं घृतं । तैलं कार्पासकोष्ठं च उष्णीं तूलवतीं पटीं । अन्नं चैव यथाशक्ति देयं माघे नराधिप । सुवर्णं रक्तिकामात्रं दद्याद्वेदविदे तथा । परस्याग्निं

न सेवेत त्यजेद्विप्रः प्रतिग्रहं । परस्येति दोषातिशयार्थं । न वह्निं सेवयेत्स्नातो ह्यस्नातोपि वरानने । होमार्थं सेवयेद्वह्निं शीतार्थं न कदाचन । इति नारदीये सामान्यनिषेधात् । तथा—अहन्यहनि दातव्या तिलाः शर्करयान्विताः । अनभ्यंगी वरारोहे सर्वं मासं नयेद्व्रती । अप्रावृतशरीरस्तु न साक्षात्स्नानमाचरेत् । सूर्यप्रीतिकामेन प्रत्यहं दंपतीभ्यां भोजनं वस्त्रादि च देयं । माघे मास्युषसि स्नानं कृत्वा दंपत्यमर्चयेत् । भोजयित्वा यथाशक्ति माल्यवस्त्रविभूषणैः । सौभाग्यं पदमाप्नोति शरीरारोग्यमुत्तमं । सूर्यलोकप्रदं पुण्यं सूर्यव्रतमिदं स्मृतं । इति वचनात् । निर्णयामृते विष्णुः । माघे मास्यग्निं प्रत्यहं तिलैर्हुत्वा सघृतं कृसरं ब्राह्मणान्भोजयित्वा दीप्ताग्निर्भवतीति । वामनपुराणे—माघे मासि तिलाः शस्तास्तिलधेनुश्च दानतः । इध्मेंधनाद्यश्चान्ये माधवप्रीणनाय तु । इति ।

अथ तिलपात्रदानं विष्णुः—ताम्रपात्रे तिलान्कृत्वा पलषोडशकल्पिते । सहिरण्यं स्वशक्त्या वा विप्राय प्रतिपादयेत् । नाशयेत्त्रिविधं पापं वाङ्मनःकायसंभवं । कौर्मे—तिलपूर्णं कांस्यपात्रं सहिरण्यं द्विजातये । प्रातर्दत्वा तु विधिवद्दुःस्वप्नं प्रतिहंति सः । ताम्रपात्रं दशगुणं जघन्यं परिकीर्तितं । द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं स्मृतं । स्वर्णमेकं जघन्ये तु द्विगुणं मध्यमे स्मृतं । त्रिगुणं चोत्तमे तद्वत्सुवर्णं परिकीर्तितं । ब्राह्मे—ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रैर्द्विजाय तु । सहिरण्यं च यो दद्याच्छ्रद्धावित्तानुसारतः । सर्वपापविशुद्धात्मा लभते परमां गतिं । इति । सहिरण्यतिलपात्रदाने मंत्रो मदनरत्ने—देवदेव जगन्नाथ वांछितार्थफलप्रद । तिलपात्रं प्रदास्यामि तवांगे संस्थितो ह्यहं । इति । अहिरण्यतत्पात्रदाने तु—तिलाः पुण्याः पवित्राश्च सर्वपापहराः स्मृताः । शुक्लाश्चैव तथा कृष्णा विष्णुगात्रसमुद्भवाः । यानि कानि च पापानि ब्रह्महत्यासमानि च । तिलपात्रप्रदानेन तानि नश्यंतु मे सदा । इति मंत्रः । तिलपात्रं यमदैवत्यं ब्रह्मलोकप्राप्तिकामः संप्रददे इति संकल्पः ।

अथान्यदानमंत्राः । हिरण्यगर्भसंभूतं सौवर्णं चांगुलीयकं । धर्मायेदं प्रयच्छामि प्रीणातु कमलापतिः । अंगुलीयकस्य । कांचनं हस्तवलयं रूपकांतिसुखप्रदं । विभूषणं प्रदास्यामि

विभूषयतु मां सदा । वलयस्य । क्षीरोदमथने पूर्वमुद्धृतं कुंडलद्वयं । श्रिया सह समुद्भूतं ददे श्रीः प्रीयतां मम । कुंडलस्य । मणिकांचनपुष्पाणि मुक्ताफलमयानि[1] च । तुलसीपत्रदानस्य कलां नार्हंति षोडशीं । सुवर्णतुलसीदानाद्ब्रह्मणः कायसंभवात् । पापं प्रशममायातु सर्वे संतु मनोरथाः । इति सहिरण्यतुलसीपत्रस्य । शालग्रामशिला पुण्या भुक्तिमुक्तिप्रदायिनी । शालग्रामप्रदानेन मम संतु मनोरथाः । चक्रांकितसमायुक्ता शालग्रामशिला शुभा । दानेनैव भवेत्तस्या उभयोर्वांछितं फलं । सचक्रशालग्रामशिलादानस्य । विष्णुधर्मे—अहिंस्रः सर्वभूतेषु वासुदेवपरायणः । नमोस्तु वासुदेवायेत्यहश्चाष्टशतं जपेत् । अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात् । इति । इतिमाघस्नाननियमाः । संपूर्णमाघस्नानाशक्तस्त्र्यहस्नानं तदशक्त एकाहस्नानमपि कुर्यात् । पाद्मे—प्रयागे माघमासे तु त्र्यहस्नानस्य यत्फलं।नाश्वमेधसहस्रेण तत्फलं लभते भुवि । इत्यादिवचोभ्यः । स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे । तत्फलं लभते माघे वेण्यां चैव दिनेदिने । इति वचनाच्च ।

अथार्धोदयः । मदनरत्ने—माघामायां व्यतीपाते आदित्ये विष्णुदैवते । अर्धोदयं तदित्याहुः सहस्रार्कग्रहैः समं । निर्णयामृते महाभारते—अमार्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः । अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः । अमार्क० घयोः । अर्धोदयः स विज्ञेयः किंचिन्न्यूनो महोदयः । दिवैव योगः शस्तोयं नतु रात्रौ कदाचन । इति प्रयोगपरिजाते वसिष्ठः । सूर्यस्यार्धोदये काले ह्येते योगाः प्रकीर्तिताः । अर्धोदय इति ख्यातः कोटिसूर्यग्रहैः समः । स्कान्दे—अर्धोदये तु संप्राप्ते सर्वं गंगासमं जलं । शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसंनिभाः । इति । तत्रैव दानविशेषोपि विहितः । चतुःषष्टिपलं मुख्यममत्रं तत्र कारयेत् । चत्वारिंशत्पलं वापि पंचविंशतिमेव वा । निधाय पायसं तत्र पद्ममष्टपलं लिखेत् । पद्मस्य कर्णिकायां तु कर्षमात्रं सुवर्णकं । तदभावे तदर्धं वा तदर्धं वापि कारयेत् । कृत्वा तु तंडुलैः शुद्धैः पद्ममष्टदलं शुभं । अमत्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकं । तेषां प्रीति-

१ मुक्ताहारमयानि चेति पाठः ।

करी पूजा श्वेतमाल्यैः सुशोभनैः । वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत् । मंत्रः—सुवर्णपायसामत्रं यस्मादेतत्त्रयीमयं । आवयोस्तारकं यस्मात्तद्गृहाण द्विजोत्तम । इति । समुद्रमेखलां पृथ्वीं सम्यग्दत्वा तु यत्फलं । तत्फलं लभते मर्त्यः कृत्वा दानममत्रकं । इति । पलं सुवर्णाश्चत्वारः । कर्षः सुवर्णः । अमत्रं पात्रं कांस्यमयं । एवं सुघटितं कार्यं कांस्यभाजनमुत्तमं । इति शास्त्रांतरसंवादात् । समुद्रमेखलायाः पृथ्व्याः सम्यग्दानफलकामोऽर्धोदयविहितामत्रदानं करिष्य इति संकल्प्य । पात्रवरणं कृत्वा सुलिप्ते देशे प्रक्षालिततंडुलैरष्टदलं कृत्वा । तत्रोक्तान्यतरपरिमाणं कृताग्न्युत्तारणं कांस्यपात्रं निधाय तत्र पायसं प्रक्षिप्य तस्मिन्नष्टदलं कृत्वा तत्कर्णिकायामुक्तान्यतरपरिमाणं हैमं लिंगं निधाय । पात्रे ब्रह्माणं पायसे विष्णुं लिंगे शिवं यथाधिकारं तत्तल्लिंगकवैदिकमंत्रैर्नाममंत्रैर्वावाहनाद्युपचारैः संपूज्य पुष्पांजलिं दद्यात् । ततो ब्राह्मणं वस्त्रादिभिरभ्यर्च्योक्तमंत्रोच्चारणपूर्वकममुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकशर्मणे तुभ्यमेतत्सुवर्णलिंगपायसयुक्तममत्रं संप्रददे नममेति पात्रहस्ते जलं दद्यात् । प्रतिग्रहीता देवस्त्वेति प्रतिगृह्णीयात् । ततोस्य दानस्य संपूर्णतासिध्यर्थं इदं हिरण्यं संप्रददे इति यथाशक्ति दक्षिणां दद्यात् । इत्यमत्रदानप्रयोगः ।

अथ **हेमाद्रिमदनरत्नोक्तमर्धोदयव्रतं** । पूर्वाह्णे संगमे स्नात्वा आचम्य प्राणानायम्य देशकालौ संकीर्त्य सर्वपापविशुद्ध्यर्थं अर्धोदयव्रतं करिष्ये ।—त्रिदैवत्यव्रतं देवाः करिष्ये भुक्तिमुक्तिदं । भवंतु संनिधौ मेऽद्य त्रयो देवास्त्रयोऽग्नयः । इति संकल्प्य शुचौ देशे तिलपर्वतत्रयं कार्यं । प्रतिपर्वतं तिलाः साष्टशतत्रयसंख्यद्रोणमिताः शतत्रयसंख्यद्रोणमिता वा । कुडवं प्रस्थमाढकं । द्रोणं च खरिका चेति पूर्वपूर्वाच्चतुर्गुणं । ब्रह्मविष्णुशिवप्रतिमाः प्रत्येकं पलतदर्धतदर्धा ग॥
हिनी ।
परिमाणा हेम्ना कार्याः । सोपस्कारा शय्या सव कल्पकृतं
पूजात्रयसामग्रीत्युपकल्पनं कृत्वा मध्याह्ने स्नाना
कृत्वाचार्यवरणं यथाशक्ति वस्त्रालंकारभूषणैर्हस्त त्स्ये—पंचयो-
पीठछत्रकमंडलुभिः तत्पूजनं कृत्वा । आचार्यद्व प्रतिष्ठानाद्यत्पुरो
प्रतिमात्रयं पर्वतत्रयमध्यभागेषु निधाय बहुमूलकः । प्रति-

ब्रह्मप्रतिमायां ब्रह्माणं पूजयेत् । तत्र मंत्रः—नमो विश्वसृजे तुभ्यं सत्याय परमात्मने । देवाय देवपतये ज्ञानानां पतये नमः । अनेन षोडशोपचारैः पूजयेत् । ततो ब्रह्मणे नम इति पादौ । हिरण्यगर्भाय नम इत्यूरू । धात्रेनम इति जंघे । परमेष्ठिन इति जानुनी । वेधसेनम इति गुह्यं पद्मोद्भवायनम इति नाभिं । हंस-वाहनायनम इति कटिदेशं । शतानंदायनम इति वक्षः ।सावित्रीपत-येनम इति बाहू । ऋग्वेदाय नम इति पूर्ववक्त्रं । यजुर्वेदायनम इति दक्षिणं । सामवेदायनम इति पश्चिमं । अथर्ववेदायनम इत्युत्तरं । चतुर्वक्त्राय नम इति शिरः । हंसायनमः कमलाय नम इत्यासनं । ततः समंतात्प्राच्यादिदिक्षु इंद्रादिलोकपालान्नाममंत्रैः पूजयेत् । ततः प्रार्थना । हिरण्यगर्भ पुरुष प्रधानाव्यक्तरूप-धृक् । प्रसादसुमुखो भूत्वा पूजां गृह्ण नमोस्तुते । तदुत्तर-पर्वतस्थप्रतिमायां विष्णुं पूजयेत् । तत्र मंत्रः—नारायण जगन्नाथ नमस्ते गरुडध्वज । पीतांवर नमस्तुभ्यं जनार्दन नमोस्तुते । ततः अनंतायनम इतिपादौ । विश्वरूपाय० ऊरू । मुकुंदाय० जानुनी । गोविंदाय० जंघे । प्रद्युम्नाय० गुह्यं । पद्म-नाभाय० नाभिं । भुवनोदराय० उदरं । कौस्तुभवक्षसे० वक्षः । चतुर्भुजाय० बाहून् । विश्वतोमुखाय० वदनं । शतसहस्रशिर-सेन० शिरः । ततः प्रार्थयेत् । आदित्यचंद्रनयन दिग्वाहो दैत्यसूदन । पूजां दत्तां मया भक्त्या गृहाण करुणाकर । इति । तदुत्तरस्थप्रतिमायां शिवं पूजयेत् । मंत्रः—महेश्वर महेशान नमस्ते त्रिपुरांतक । जीमूतकेशाय नमो नमस्ते वृषभध्वज । इति । ततः ईशानाय नमः पादौ । चंद्रशेखराय० जंघे० । पशु-पतयेदेवाय० जानुनी । शंकराय० ऊरू । उमाकांताय० गुह्यं । नीललोहिताय० नाभौ । कृत्तिवाससे० उदरं । नागोपवी-तिने० वक्षः । भोगिभोगाय० बाहू । नीलकंठाय० कंठं । चतुःषष्ट्य० मुखानि । कपर्दिने० मौलीन् । ततः प्रार्थ-पंचविंशति अंधकारेऽप्रमेयात्मन्नमो लोकांतकाय च । पूजां पद्मस्य कर्णिव भक्त्या गृहाण वृषभध्वज । इति । श्लोका नाम-वा तदर्धं वापि प्रणवपूर्वा द्विजकर्तृकव्रते पठनीयाः । पूजात्रयेपि शुभं । अमत्रं स्थाऽमृताभिषेकपूर्वकोऽभिषेकः कार्यः । वस्त्रा-

१ मुक्ताहारमयानि चोक्तं वस्त्रयुगं विष्णवे पीतं शंकराय लोहितं

देयं । पुष्पार्पणकाले कमलानि ब्रह्मणे तुलसीपत्राणि विष्णवे विल्वपत्राणि शंकरे देयानि । तत्कालसंभवान्यन्यानि दिव्यपुष्पाणि त्रिभ्योपि देयानि । पूजांते आचार्यो गृह्योक्तविधिना स्थंडिलं संस्कृत्य प्रजापतये विष्णुरूपाय रुद्राय नम इति वह्निं संस्थाप्य चरुश्रपणसहितं आज्यभागांतं विधिना कृत्वा । अग्नयेप्रजापतये स्वाहा । अग्नयेविष्णवे स्वाहा । अग्नयेरुद्राय स्वाहेति चर्वाहुतित्रयं हुत्वा । आज्याहुतित्रयं जुहुयात् । प्रजापतेनत्वदेता० । इदंविष्णुः० । त्र्यंबकंयजामहे० । ततश्चर्वज्याभ्यां स्विष्टकृतं हुत्वा शेषं कर्म समापयेत् । पूर्णाहुतिकाले ब्रह्मणे विष्णवे महादेवाय स्वाहेति मंत्रेणैव पूर्णाहुतिः । होमांते स्वर्णशृंगीं रौप्यखुरां घंटाभरणभूषितां ताम्रपृष्ठां कांस्यदोहां सर्वोपस्करसंयुतां पयस्विनीं गां आचार्याय दद्यात् । यज्ञसाधनभूता० । गवामंगेषु तिष्ठंति० । यथाशक्तिसुवर्णं दक्षिणापि देया । ततस्त्रीन्ब्राह्मणान्यथाविभवं पूजयित्वा । देशकालौ संकीर्त्य इमां ब्रह्मप्रतिमां तिलपर्वतसहितां सोपस्करां ब्रह्मप्रीत्यै तुभ्यं संप्रददे नमम इति पात्रहस्ते जलं प्रक्षिप्य कृतस्य दानस्य सपूर्णतायै ब्रह्मप्रीत्यै इमां सोपस्करां शय्यां इमां सवत्सां गां इमानि हिरण्यभूमिधान्यानि तुभ्यं संप्रददे नममेति पुनर्जलं प्रक्षिपेत् । एवं विष्णुप्रीत्यै शिवप्रीत्यै च तत्प्रतिमादानं शय्यादि दानं च कृत्वा कर्मणः सांगतायै दशावरान्ब्राह्मणान्भोजयेत् । इत्यर्धोदयव्रतं ।

अथ प्रयागे वेणीस्नानमाहिमा मात्स्ये—सितासिते तु यत्स्नानं माघमासे युधिष्ठिर । न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि । पाद्मे—कुरुक्षेत्रसमा गंगा यत्रकुत्रावगाहिता । तस्माद्दशगुणा प्रोक्ता यत्र विंध्येन संगता । तस्माच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी । काश्याः शतगुणा प्रोक्ता गंगा यमुनसंगता । सहस्रगुणिता सापि भवेत्पश्चिमवाहिनी । पश्चिमाभिमुखी गंगा कालिंद्याः सह संगता । हंति कल्पकृतं पापं सा माघे नृप दुर्लभा । इति ।

अथ प्रयागक्षेत्रपरिमाणं वेणीपरिमाणं च मात्स्ये—पंचयोजनविस्तीर्णं प्रयागस्य तु मंडलं । अप्रयागं प्रतिष्ठानाद्यत्पुरो वासुकेर्ह्रदात् । कंबलाश्वतरौ नागौ नागश्च बहुमूलकः । प्रति-

ष्ठानशब्देन कूपो लक्ष्यते । प्राच्यामातत्कूपादुत्तरत आवासु-
कीह्रदात्पश्चिमे कंबलाश्वतरौ नागौ दक्षिणे बहुमूलको नाग इति
कोणेषु साधितेषु यच्चतुरस्रं तत्प्रयागमित्यन्वयः । तद्याप्यं वेणी-
परिमाणं पाद्मे—माघः सितासिते विप्र राजसूयैः समो भवेत् ।
चतुर्विंशतिविस्तीर्णे सितनीलांबुसंगमे इति । चतुर्विंशति-
धनुर्विस्तीर्ण इत्यर्थः । तदवधयोपि । कालिंद्या उत्तरे कूले भागी-
रथ्याश्च पश्चिमे । वटस्य पूर्वदिग्भागे स्नातः किमनुशोचसि ।
इति सूचिताः । अतएव नद्योस्तटांतरगतसंगमे नैष महिमेति
गम्यते । योजनापरिमाणं स्मृतौ—हस्तो वितस्तिद्वितयं
दंडो हस्तचतुष्टयं । तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयं ।
इति । धनुःप्रमाणमादित्यपुराणे—षण्णवत्यंगुलश्चैव धनु-
र्दंडः प्रकीर्तितः । इति । अत्रच घृतश्राद्धप्रभृति यात्राविधिः प्राप्ति-
निमित्तकवपनादिंतीर्थश्राद्धांतकर्मविधिश्च मथुरासेतूकरीत्या
संकल्पवाक्येषु प्रयागपदोहकल्पनया चोन्नेयः । इयांस्तु ती-
र्थांतरात्प्रयागे विशेषः । तीर्थांतरे दशमासोत्तरं पुनर्गमने वपना-
द्यावश्यकं न तन्मध्ये । प्रयागे तु तन्मध्ये योजनत्रयाधिकदे-
शाद्यात्रार्थं पुनरागतेन वपनाद्यवश्यं कार्यं ।—ऊर्ध्वमब्दाद्विमा-
सोनाद्यदा तीर्थं व्रजेन्नरः । तदा तद्वपनं शस्तं प्रायश्चित्तमृते
द्विज । प्रयागे प्रतियात्रं तु योजनत्रय इष्यते । इति वचनात् ।
जीवत्पितृकोऽपि गुर्विणीपतिरपि कृतचूडो बालोऽपि प्रथमया-
त्रायां वपनं कुर्यात् । अकृतचूडो न कुर्यादिति केचित् । अभ-
र्तृकस्त्रीणां वपने न विवादः । सभर्तृकाणामपि सामान्यव-
चोभ्य एव संपूर्णवपनमुचितमिति वृद्धाः । अन्येतु—विद्व-
द्विप्रनृपस्त्रीणां नेष्यते केशवापनं । सर्वान्केशान्समुद्धृत्य छेदये-
दंगुलद्वयं । तीर्थादिषु सभर्तृणां स्यादेवं केशवापनं । इति
दिवोदासीयवचनाद्व्यंगुलं केशच्छेदनमेवोचितं । नचेदं नि-
र्मूलं । क्षुरकर्म न शस्तं स्याद्योषितां तु वरानने । सभर्तृकाणां
तत्रैव विधिं तासां शृणुष्व मे । सर्वान्केशान्समुद्धृत्य छेदयेदं-
गुलद्वयं । इति प्रभासखंडवचःसंवादात् । नचैतत्प्रभासमा-
त्रविषयं । होलाकाधिकरणन्यायेन लाघवेनोभयमूलत्वेन साधा-
रणश्रुतेरेव स्वीकरणात् । मतद्वयेपि वेणीभूतकेशा मांगलिक-
वेषालंकृता भर्तारं नमस्कृत्य तदनुज्ञया वापनं द्व्यंगुलछेदनं वा

कृत्वा वेणीपूजनं स्वयं कुर्याद्भर्तृद्वारा वा कारयेत्। स्त्रीकर्तृकपूजायां वेण्यै नम इति मंत्रः। पुंकर्तृकायामिमंमे गंगे इति। पूजारंभे गंगां ध्यायेत् सितमकरनिषण्णामिति। यमुनां ध्यायेत्।— शंभोरंभोमयी मूर्तिः खट्वांगास्थिकपालिनी। महामणिफणाटोपभैरवा प्रेतसंस्थिता। अविमुक्तस्मशानेयं हैमवत्यां श्रितादिशं। निजाश्रितचतुर्वर्गसिद्धिसाधनतत्परा। त्रिजगत्पापनाशाय पयोरूपा महानदी। इति। सरस्वतीं ध्यायेत् दोर्भिर्युक्ता चतुर्भिरिति। पूजांते पत्नी छिन्नवेणीयुक्तं वैणवपात्रं अंजलौ निधाय तस्यां स्वर्णादिमयवेणीं मुक्ताप्रवालादि च निधाय—वेण्यां वेणीप्रदानेन मम पापं व्यपोहतु। जन्मांतरेष्वपि सदा सौभाग्यं मम वर्धतां। इति वेण्यां क्षिपेत्। ब्राह्मणाः सुमंगलीरियं वधूरिति पठेयुः। ततो वेणीदानपूर्णतासिद्ध्यर्थं ब्राह्मणान्दक्षिणया सुवासिनीः सौभाग्यद्रव्यकंचुक्यादिभिस्तोषयेत्। इति वेणीदानं।

अथास्थिप्रक्षेपविधिः। सच यद्यपि ब्रह्मांडे तीर्थसामान्ये विहितः।—स्नात्वा ततः पंचगव्येन सिक्त्वा हिरण्यमाल्याज्यतिलेन योज्यं। ततस्तु मृत्पिंडपुटे निधाय पश्येद्दिशं प्रेतगणोपगूढां। नमोस्तु धर्माय इति प्रविश्य तीर्थे स मे प्रीत इति क्षिपेच्च। स्नात्वा ततो तीर्थदिवाकरौ च दृष्ट्वा प्रदद्यादथ दक्षिणां च। एवं कृते प्रेतपुरे स्थितस्य स्वर्गे गतिः स्यात्तु महेंद्रतुल्या। इति। गंगायां चासौ ब्रह्मलोकप्राप्तिसाधकत्वेन यमेनोक्तः।—गंगातोयेषु यस्यास्थि क्षिप्यते शुभकर्मणः। न तस्य पुनरावृत्तिर्ब्रह्मलोकात्सनातनात्। इति। वाराहेच माथुरयमुनान्तर्गतार्धचंद्राख्यप्रदेशे विहितः। दर्शितश्चास्माभिस्तद्विधिर्मथुरासेतौ। तथापि प्रयागे समुचितः। शिष्टाचाराद्वृद्धोक्तेश्च।

अथ शौनकाद्युक्तविधिना तत्प्रयोगः। शुक्रास्तादिरहितकाले कृतौर्ध्वदेहिकस्यास्थ्नां तीर्थे प्रक्षेपं कर्तुं यत्र तानि खातानि भवेयुस्तां भुवं सचैलस्नानपूर्वकं प्रोक्षेद्द्रव्यैः। गायत्र्या गोमूत्रेण। गंधद्वारामिति गोमयेन। आप्यायस्वेति पयसा। दधिक्राव्ण इति दध्ना। घृतं मिमिक्ष इति घृतेन। ततः उपसर्पेति चतसृणां शंखः पितरस्त्रिष्टुप् भूप्रार्थनखननमृदुद्धरणास्थिग्रहणेषु

क्रमेण विनियोगः । एताभिः क्रमेणास्थिग्रहणांतानि कर्माणि कृत्वा स्वयं जलाशये विधिना गृह्योक्तेन स्नायात् । ततोऽस्थीनि स्पृष्ट्वा पंचगव्यैरेतोन्विंद्रमिति मंत्रावृत्त्या स्नात्वा स्पृष्ट्वैव दशस्नानानि कुर्यात् । उक्तमंत्रैस्तेनैव क्रमेण पंचगव्यस्नानानि । देवस्यत्वेति कुशोदकेन । मानस्तोके इति भस्मना । अश्वक्रांते रथक्रांते इति मृदा । मधुवाता इति मधुना । आपोहिष्ठेति शुद्धोदकेन । एवं दश स्नानानि विधायास्थ्नां कुशैर्मार्जनं कुर्यात् । तत्र मंत्रा अतोदेवेति ऋक् । अथ सप्त सूक्तानि । एतोन्विंद्रं० १ शुचीवो० २ नतमंहः० ३ इतिवाइतिमेमनः० ४ स्वादिष्ठया० ५ ममाग्नेवर्चः० ६ कद्रुद्राय० ७ ततो यदीयान्यस्थीनि तस्य कृतसपिंडीकरणस्य पार्वणश्राद्धं हिरण्येन कुर्यात् । इति । दशाहाभ्यंतरे यस्य गंगातोयेऽस्थि मज्जति । गंगायां मरणे यादृक्तादृक्फलमवाप्नुयात् । इति शास्त्रात् । यदि दशाहाभ्यंतरेऽस्थिप्रक्षेपश्चिकीर्षितस्तदैकोद्दिष्टं तत्रैवसकृत्पिंडदानं तिलतर्पणं च कृत्वा पुनः पंचगव्येन पंचामृतैः शुद्धोदकेन च प्रक्षाल्य यक्षकर्दमेनानुलिप्य पुष्पैः प्रपूज्य वस्त्रपट्टांबरश्वेतचीनांशुकमांजिष्ठवस्त्रनेपालकंवलशुद्धमृद्भिरावेष्ट्य ताम्रसंपुटे कुर्यात् ।—अजिनं कंबलं दर्भा गोकेशाः शाणमेव च । भूर्जपत्रं ताडपत्रं सप्तधा वेष्टनं स्मृतं । इति—अजिनं कंबलं दर्भा गोकेशा भूर्जपत्रकं । ताडपत्रं च नेत्रं चेत्यस्थ्नां वेष्टनसप्तकं । इति वा पाठः । व्यासस्तु—पट्टवस्त्रं च कौशेयं मांजिष्ठं श्वेतवस्त्रकं । कंबलं शाणपट्टं च अजिनं च यथोत्तरं । इति क्रममाह । अतोऽमीषां कल्पानां विकल्पः । यक्षकर्दमलक्षणं मंत्रराजानुष्टुब्विधाने ।—त्रिपलं चंदनं प्रोक्तं कुंकुमं तत्समं स्मृतं । कर्पूरं तु तदर्धं स्याद्घनसारश्च तत्समः । पलमेकं च कस्तूरी मेलनाद्यक्षकर्दमः । इति । ततोस्थिषु हेमखंडमौक्तिकरूप्यप्रवालनीलमणीन्प्रक्षिप्य गृह्योक्तविधिना स्थंडिलादिकृत्वा अष्टोत्तरशतं तिलाज्याहुतीर्जुहुयात् । उदीरतां शंखः पितरस्त्रिष्टुप् । अस्थिप्रक्षेपांगतिलाज्यहोमे विनियोगः । होमं समाप्य सवेष्टनास्थिगर्भं ताम्रसंपुटमादाय तीर्थं गच्छेत् । मूत्रं पुरीषमाचामं कुर्यान्नास्थीनि धारयन् । काशीखंडेऽन्येपि नियमाः—अस्पृष्टहीनजातिः स [illegible] । इति । ततस्तीर्थं प्राप्य

तीर्थप्राप्तिनिमित्तं स्नानादि विधायास्थीनि स्नापयित्वा अमुकगोत्रस्यामुकशर्मणोऽपुनरावृत्तिब्रह्मलोकावाप्तये वेणीतीर्थेऽस्थिप्रक्षेपमहं करिष्य इत्येवं संकल्प्य पलाशपत्रपुटे पंचगव्येनास्थीन्यासिच्य हिरण्यशकलमाल्यघृततिलमिश्रितानि कृत्वा मृत्पिंडे निधाय दक्षिणां दिशमवेक्षमाणो नमोस्तुधर्मायेति वदन् तीर्थे प्रविश्य नाभिमात्रे जले स्थित्वा स मे प्रीतोस्तु इति तीर्थे निक्षिपेत् । ततः स्नात्वा जलाद्बहिरागत्य सूर्यं दृष्ट्वा हरिं स्मृत्वा ब्राह्मणाय यथाशक्ति रजतं दक्षिणां दद्यात् । अमुकगोत्रस्येत्याद्यंते कृतस्यास्थिप्रक्षेपस्य सांगतासिध्यर्थं इदं रजतं चंद्रदैवत्यं तुभ्यं संप्रददे इति । लोभेन परास्थ्नां नयने चांद्रायणं प्रायश्चित्तं—मातृकुलं पितृकुलं वर्जयित्वा नराधमः । अस्थीन्यन्यकुलोत्थानि नीत्वा चांद्रायणं चरेत् । इति वचनात् ।—अस्थीनि मातापितृवंशजानि नयंति गंगामपि ये कदाचित् । सबांधवस्यापि दयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि । इति वचनांतराच्च । इत्यस्थिप्रक्षेपविधिः ।

अथ **त्रिवेण्यां देहत्यागविधिः**। तत्र **श्रुतिः**—ये वै तन्वां १ विसृजंति धीरास्ते जनासो अमृतत्वं भजंते । इति । अमृतत्वं मोक्षं । इदं च माघविषयं—ध्यात्वा विष्णुपदांभोजं प्रयागे विष्णुतत्परः । तनुं त्यजति वै माघे तस्य मुक्तिर्न संशयः । इति **ब्राह्मोक्तेः**। कालांतरे तनुत्यागात्तु स्वर्गप्राप्तिः—गंगायमुनमासाद्य यस्तु प्राणान्परित्यजेत् । दीप्तकांचनवर्णाभैर्विमानैर्भानुवर्णिभिः । गंधर्वाप्सरसां मध्ये स्वर्गे मोदति मानवः । इति पाद्मगतसामान्यवचनस्योक्तविशेषशास्त्रवशेन माघेतरकालविषयत्वात् । अत्रच यथाशक्ति सर्वप्रायश्चित्तं कृत्वा स्वीयश्राद्धाधिकार्यभावे जीवच्छ्राद्धं सपिंडनांतं विधाय ब्राह्मणदीनानाथेभ्यो गवादिदानानि कृत्वा । कृतोपवासः पारणाहे फलोल्लेखपूर्वकं संकल्प्य विष्णुं ध्यात्वा वेणीं प्रविशेदित्याहुर्वृद्धाः । इति वेण्यां देहत्यागविधिः ।

अथ **जीवच्छ्राद्धं**। तत्र **शौनकः**—जीवच्छ्राद्धं प्रवक्ष्यामि शौनकोहं द्विजन्मनां । कृष्णपक्षे त्रयोदश्यां स्नात्वोपोष्य समाहितः । तस्मिन्नहनि संभारानुपकल्प्य यथाक्रमं । पट्टवस्त्रं हेमसूचीं वै अंकुशं तांतवं तथा । पाशं केशांश्च पालाशं वृंतं

कृष्णाजिनं तथा । औदुंबरसमिद्धर्हिरासनं कलशान्नवान् । ग्रीवामात्रे जले तीर्थे स्नात्वा मध्यंदिने जपेत् । जपेद्गायत्रीं । उत्थाय ब्राह्मणान्भोज्य कृत्वा पुण्याहसुव्रतं। वस्त्रांगुलीयकादीनि दत्त्वाचार्याय भक्तितः । सघृतं पायसान्नं च स भुक्त्वा दक्षिणामुखः । सायंकालेऽग्निमाधाय पुरस्तात्तत्र संस्कृतं । सुसंस्कृतं चरुं हुत्वा मंत्रैः षड्भिर्यथाक्रमं । द्वाभ्यां चत्वारिशृंगेति तत्सवितुर्ऋचैकया । अग्नेनयेति द्वाभ्यां च जातवेदस इत्यृचा। हुत्वा पुरुषसूक्तेन प्रत्यृचं षोडशाहुतीः । अतोदेवादिषड्भिश्च सावित्र्याष्टशतानि च । अष्टाविंशतिसंख्या वा होमशेषं समापयेत् । गत्वा चतुष्पथं सूचीं रज्ज्वाद्यंकुशांस्तथा । प्रीयतां किंकरायेति दद्यात्कृष्णाय वै मुने । कृष्णाय किंकरायैतत्स तु मे प्रीयतां नमः । इति यमकिंकरोद्देशेन त्यागः । निधाय कलशान्प्रीतः सोदकांस्तंतुवेष्टितान् । पुरुषाकृतिवत्कुर्याच्छिरसि त्रीन्मुखे तथा। ग्रीवैकं चतुरो वक्षो बाह्वोर्द्वौद्वौ तथैवच । एकं लिंगे पादयोश्च पंचपंचेति कथ्यते । एवमेकविंशतिकलशाः । यन्मे प्रीतोसि भगवन्नित्याहृत्य सुसंस्कृतान् । पंचगव्येन प्रक्षाल्य एतोन्विंद्रादिभिस्तथा । पालाशवृंतानीति शेषः । कृष्णाजिने तु पालाशवृंतैः कृत्वा नराकृतिं। चत्वारिंशच्छिरोग्रीवं दशत्रिंशदुरस्यपि । बाह्वोश्चैकशतं दद्यात्पंचपंचांगुलिष्वपि । जठरे विंशतिं दद्याज्जंघयोर्विंशतिद्वयं। ऊर्वोश्चैव षष्टिर्दद्यान्मेढ्रे चत्वारि विन्यसेत् । त्रीणि त्रीणि वृषणयोः पादयोस्त्रिशतं तथा। विन्यसेच्छेदवृंतानि दशपादांगुलीषु च । शतानि त्रीणि षष्टिश्च पालाशं वृंतमाहरेत् । अलाभे यज्ञवृक्षाणां वृंतान्यपि समाहरेत् । निवेश्य कलशे प्राणान्घृते देहं निवेश्य च । कलश इत्येकत्वमविवक्षितं । कलशेषु प्राणप्रवेशं चिंतयित्वेत्यर्थः । मध्ये शयित्वा स्वं देहं विवस्वत्युदिते सति । सुस्नाप्य सकलं ऋग्भिः स्वदेहं स्वयमेव तु । सम्यक् पुरुषसूक्तेन श्रीसूक्तेन समाप्य च । अन्नेन ब्राह्मणान्भोज्य यमकिंकरतृप्तये । दाहश्च तस्य कर्तव्यः पितृमेधविधानतः । होतृप्रीत्या च वरयेद्बालवृद्धातुरानपि । होताचार्यस्तत्प्रीत्या तद्वचनेन बालादीन्प्रार्थयेत्तिलोदकदानाद्यर्थं । तिलोदकं च कर्तव्यं गोत्रनामसमायुतं । नद्यादितीरे कर्तव्यं दशाहं वा दिनं गृहे । दिनं चेद्गृहएव तदि-

त्यर्थः । एकादश्यां च कर्तव्यं श्राद्धं तु ब्राह्मणाय च । सर्वमेकाह्नि वा कुर्यात्सपिंडीकरणं विना । एकादश्यां च नो कुर्यात्तत्पिंडान्मंत्रवत्तथा । मंत्रकर्माणि जीवेन श्राद्धं कुर्याच्च सत्स्वपि । यथाविधि प्रकर्तव्यं सपिंडीकरणादृते । अनेनाः स्त्री च शूद्रश्च वृंतैर्दग्ध्वा स्वकां तनुं । तदह्नयैव क्रियाः सर्वाः कुर्यादिति समाश्रुतिः । देशांतरमृतस्यैवं चंडालाद्यैर्हतस्य च । यद्येकाह्नि कुर्यात्सुब्राह्मणस्य चकारादन्यवर्णयोश्चैकादश्यां कुर्याद्दिनांतरे वा सपिंडीकरणवर्जं । स्त्रीशूद्रौ प्रत्याह । एकादश्यामिति स्त्रिया शूद्रेण चैकादश्यां पिंडोपलक्षितमौर्ध्वदेहिकं न कार्यं । समंत्रककर्माणि तूष्णीं कार्याणि । सत्स्वपि पिंडादिष्वधिकारिषु जीवच्छ्राद्धं न कार्यं । असत्सु त्वाह यथेति । अनेना इति कृतप्रायश्चित्त इत्यर्थः । देशांतरमृतादेरस्थ्नामप्यलाभे पर्णवृंतदाहमात्रमतिदिश्यते । इति शौनकोक्तो जीवच्छ्राद्धविधिः ।

अथ बह्वृचेतरावश्यापेक्षितो ब्राह्मोक्तो जीवच्छ्राद्धविधिः । तत्र जलधेनुत्रयदानविधानात्तदुपयोगित्वेन जलधेनुविधिः प्रदर्श्यते । **विष्णुधर्मोत्तरे**—जलधेनुं प्रवक्ष्यामि प्रीयते दत्तयानया । देवदेवो हृषीकेशः सर्वेशः सर्वभावनः । जलकुंभं नरव्याघ्र सुवर्णरजतान्वितं । रत्नगर्भमशेषैस्तु ग्राम्यैर्धान्यैः समन्वितं । सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितं । कुष्ठमांसीमुरोशीरवालकामलकैर्युतं । प्रियंगुपत्रसहितं सितवस्त्रोपशोभितं । सोपानत्कं च सछत्रं दर्भविष्टरसंस्थितं । चतुर्भिः संवृतं भूप तिलपात्रैश्चतुर्दिशं । स्थगितं दधिपात्रेण घृतक्षौद्रवता मुखे । उपोषितः समभ्यर्च्य वासुदेवं जलेशयं । पुष्पधूपोपहारैश्च यथाविभवमादृतः । संकल्प्य जलधेनुं तु कुंभं तमभिपूज्य च । पूजयेद्वत्सकं तद्वत्कृतं जलमयं बुधः । एवं संपूज्य गोविंदं जलधेनुं सवत्सकां । सितवस्त्रधरः शांतो वीतरागो विमत्सरः । दद्याद्द्विजाय राजेंद्र प्रीत्यर्थं जलशायिनः । जलशायी जगद्योनिः प्रीयतां मम केशवः । इति चोच्चार्य भूनाथ विप्राय प्रतिपाद्यतां । अपक्वान्नाशिना स्थेयमहोरात्रमतः परं । अनेन विधिना दत्त्वा जलधेनुं नराधिप । सर्वान्कामानवाप्नोति ये दिव्या ये च मानुषाः । इति । अत्र सुव-

र्णादीनां विनियोगो दानांतरे दृष्टानुसारेणेत्थं वृद्धैरुक्तः । सुवर्णं शृंगाकृति । रजतं खुराकृति । तिलपात्राणि ताम्रमयानि । दधिपात्रं कांस्यमयं । धान्यानि पार्श्वद्वये । कुष्ठादीनि घ्राणदेशे । प्रियंगुपत्रं श्रवणे । यज्ञोपवीतं शिरसि । वत्सश्चतुर्थांशेन कार्यः । दक्षिणा सुवर्णमारभ्य यथाशक्ति देयेति । एवं जलधेनुत्रयं संपाद्य सर्वप्रायश्चित्तादिमुमूर्षुकर्तव्यं कृत्वा । कृष्णद्वादश्यां कृतोपवासः त्रयोदश्यां देशादिसंकीर्त्य मम और्ध्वदेहिकफलावाप्तये जीवच्छ्राद्धं करिष्ये इति संकल्प्य शालग्रामादौ श्रीविष्णुं षोडशोपचारैः संपूज्य तदग्रे जलधेनूस्तिस्रः संपूज्य यथाशक्ति सतिलाः सदक्षिणास्ता निवेदयेत् । सोमायत्वापितृमते स्वधानमः इत्युत्तरां । अग्नये कव्यवाहनाय स्वधानमः । इति दक्षिणां । यमायांगिरस्वते पितृमते स्वधानमः इति मध्यमां । ततः पंचब्राह्मणानां पादप्रक्षालनं कृत्वा देवे द्वौ पित्र्ये त्रीनुपवेश्य श्राद्धवद्देवान्संपूज्य । वसुभ्यस्त्वाहं विप्रं भोजयामि । रुद्रेभ्यस्त्वाहं विप्रं भोजयामि । आदित्येभ्यस्त्वाहं विप्रं भोजयामि। इति प्रत्येकं क्रमेणोक्त्वा। आसनावाहनादिना तानपि श्राद्धवत्पूज्य सर्वान् श्राद्धविधिना भोजयित्वा वस्वादिभ्यस्त्रीन्पिंडान्दत्वोत्तरस्थां सोमोद्देश्यकां सोपस्करां जलधेनुं वसुस्थानीयब्राह्मणाय दद्यात् । दक्षिणां अग्न्युद्देश्यकां रुद्रस्थानीयब्राह्मणाय दद्यात् । मध्यस्थां यमोद्देश्यकां सूर्यस्थानीयाय दद्यात् ।विश्वेदेवब्राह्मणाभ्यां सदक्षिणं तिलपूरितं कांस्यपात्रं देयं । स्वस्त्युदकाक्षयजलादि दत्त्वा विसर्जयेद्विष्णुं । ॐ नमो नारायणायेत्यष्टाक्षरं चैक्येन स्मरन् । ततः श्राद्धशेषं समाप्य स्वयं पारणां कृत्वा रात्रौ कामकुलेशानविशेषणं नारायणं स्मरन्यथाशक्ति जागरं कुर्यात् । प्रातःस्नानादि कृत्वा ततश्चतुर्दश्यां यथाप्राप्ति सरिद्वरां गच्छेत् । तत्र पूर्वेण ग्रामद्वारेण विप्रो गच्छेत् । उत्तरेण क्षत्रियः । पश्चिमेन वैश्यः । दक्षिणेन शूद्रः । गमनकाले च यवान्वस्त्राणि लोहखंडानि विकिरन् । —जितं ते पुंडरीकाक्ष नमस्ते मधुसूदन । नमस्तेस्तु हृषीकेश महापुरुष पूर्वज । इति पठन् गच्छेत् । नदीतीरे दक्षिणाभिमुखः स्मार्तं लौकिकं वा वह्निं स्वयं ज्वालयेत् । ततश्चित्यर्थं गर्तखननं भूमिप्रार्थनादि प्रत्यक्षमरणवत्सर्वं । जीवच्छ्राद्धे सर्वत्र प्रेतशब्दो न प्रयोज्यः ।

ततः प्रत्यक्षदाहे कर्तव्यं स्वशाखोक्तं। पूर्णाहुत्यंतं होमं कृत्वा प्रधानहोमस्थाने निरग्निभूम्यै यमाय रुद्राय च स्वाहांते संस्कृताज्येनाहुतित्रयं हुत्वा पंचाशत्कुशैः कृतां ब्रह्मलोकगमनहेतुमात्मप्रतिकृतिमन्येन क्रव्यादमग्निमित्यादिना स्वस्वशाखीयमंत्रेण दाहयेत्। ततो वातास्त इत्यादिशवदाहवत्। ततो मुद्गमिश्रं तिलमिश्रं च तंडुलचरुद्वयमन्यस्मिन्नग्नौ सपवित्रकं श्रपयेत्। तदग्निसमीपे कर्षूत्रयं कृत्वा प्रत्येकं मधुक्षीरघृतोदकैः पूरयेत्। तदुपांते मुद्गपूरितानि त्रीणि शरावाणि ॐ पृथिव्यैनमस्तुभ्यं। ॐ यमायनमस्तुभ्यं। ॐ रुद्राय श्मशानपतये नमस्तुभ्यं। इति प्रत्येकं निवेदयेत्। ततो दीप्तं प्रतिकृतिदाहार्थमग्निं ॐ क्रव्यादवह्नितप्तायै भूम्यै नम इति पठन्क्षीराक्तजलकुंभजलेन निर्वापयेत्। ततः स्नात्वा नाभिमात्रे जले स्थित्वा यमादिभ्यः सप्ततिलजलाञ्जलीन्दद्यात्। तत्रायं प्रकारः। ॐ यमायस्वधानमः धर्मराजाय० मृत्यवेधर्मराजाय० अंतकायधर्म० वैवस्वतायधर्म० कालायधर्मरा० सर्वप्राणिहरायेति। ततः ॐ नमो रुद्रायश्मशानपतये नमः। इति मंत्रेण जलोदकपूर्णं कुंभं भुवि विकिरेत्। ततो दक्षिणाग्रदर्भेषु ॐ शुक्रवाहनाय रुद्राय स्वधा नमः इति रुद्रं स्मरन्नमुकगोत्रामुकैतत्तिलोदकं तुभ्यमस्त्विति दद्यात्। ततः पूर्वकृतचरुभ्यां पंच पंच पिंडान्प्रत्येकमित्येवं दशपिंडान्स्वोद्देशेन पिंडदानविधिना दत्त्वार्घ्यं गंधपुष्पधूपदीपबलीन्दत्वा प्रत्येकं सर्वब्राह्मणानक्षय्यमस्त्विति ब्रूयात्। ततो विष्णोः सौम्यं मुखं स्मरेत्। पिंडानामूष्माणि निवृत्ते एकैकं पिंडं जलपूर्णकुंभे निधाय नाभिमात्रे जले प्रविश्य एकैकं जलमध्ये क्षिपेत्। तत एकैकं जलपूर्णकुंभमेकैकं च तिलजलांजलिमित्येवं पंचपंच कुंभाः जलांजलयश्च देयाः। ततः स्नात्वा गृहे आगत्य गृहद्वारोपांते पात्रद्वये क्षीरं जलं च क्षिपेत्। जीवात्र स्नाहीति जलं निवेद्येदं दुग्धं पिबेति दुग्धं निवेदयेत्। तस्मिन्दिने आशौचं। ततो रात्रौ दक्षिणाग्रदर्भेषु उदङ्मुखः स्वपेत्। प्रातरमावास्यायां स्नात्वा जीवच्छ्राद्धं करिष्य इति संकल्प्य सपिंडकं स्वस्यैकोद्दिष्टं श्राद्धं कुर्यात्। तत्र पिंडसमीपे घृतान्नमांसदधिभिः कर्षूत्रयं पूरयेत्। ततो मासिकानि षोडश कृत्वा सपिंडीकरणं

प्रत्यक्षमृतवत्कुर्यात् । सर्वत्र जीवच्छ्राद्धे प्रेतशब्दोच्चारणं नास्ति । इति जीवच्छ्राद्धविधिः समाप्तः ।

अन्येपि धर्मा माघे प्रयागे कार्यतया ब्राह्मे उक्ताः ।— वैष्णवानि पुराणानि विष्णुभक्तिविशारदाः । शृण्वंति कथयंतीह ते गच्छंति हरेः पुरं । ये कुर्वंति महाभागा वेदपारायणं क्वचित् । यावंत्यक्षरजालानि यावंतः स्वरबिंदवः । तावंति माधवस्यास्य रूपाणि स्थापितान्यलं । कन्यागोभूहिरण्यानि दानानि विविधानि च । प्रयागे कुर्वतां पुंसामणुरप्यखिलं जगत् । प्रयागे पुण्यवांल्लोके अन्नदानं करोति यः । कृतं तेन मुनिश्रेष्ठ कोटिब्राह्मणभोजनं । तिलतर्पणमप्यत्र पुनात्यासप्तमं कुलं । इति । तत्र पुराणश्रवणविधिः कार्तिककृत्ये हेमाद्र्युक्तो दर्शितः पारायणविधिर्बौधायनीयधर्मप्रश्नोक्तो नवरात्रप्रकरणे दर्शितः ।

अन्नदानमिति सामान्योक्त्या सहस्रभोजनस्यापि संग्रहात्तद्विधिर्बौधायनसूत्रोक्तोऽभिधीयते । अथातः सहस्रभोजनविधिं व्याख्यास्यामः । उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे त्रिजन्मनक्षत्रे वा दक्षिणायने वा क्रियेत स्वगृहे देवगृहे वा यश्च शुचिर्देशः स्यात्तत्र शुचिर्भूत्वा युग्मान्ब्राह्मणान्सुप्रक्षालितपाणिपादानाचमय्यासनं दत्त्वा गंधपुष्पधूपदीपैरलंकृत्य संकल्पसिद्धिरस्त्विति वाचयित्वा त्रिवृतान्नेन ब्राह्मणान्पूज्याशिषो वाचयित्वा प्रदक्षिणां नमस्कारं विधाय सहस्रात्मानमीश्वरं सहस्रभोजनेन संपूज्यैकस्मै स्वाहा द्वाभ्यां स्वाहेति दशानुवाकान् भोजनांते द्वादशब्राह्मणाः श्राविता भवंति षड्वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा देवयजनोल्लेखनप्रभृत्यग्निमुखान्कृत्वा पक्वाज्जुहोति । विष्णोर्नुकमिति पुरोनुवाक्यामनूच्य विष्णोः पृष्ठमसीति याज्यया जुहोति । अथाज्याहुतीरुपजुहोति केशवायस्वाहा नारायणायस्वाहेति द्वादशनामधेयैः। स्विष्टकृतः प्रभृति सिद्धमाधेनुवरप्रदानात्पयोदनं मुद्गौदनं दध्योदनं वा ब्राह्मणाय निवेदयित्वा वस्त्रयुगानि कुंडलानि अंगुलीयकमुपानहौ छत्रमिति च दद्यादन्नशेषमाज्यशेषं पक्वशेषमुभौ जायापती प्राश्नीयातां सर्वकल्मषैर्महापातकैः प्रमुच्यते । षष्टिर्वर्षसहस्राणि ब्रह्मणो लोकमतीत्य विष्णुलोके महीयते । इति भगवान्बौधा-

यनः । प्रयागसेतौ माघं प्रकृत्य—तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी । तिलभुक् तिलदाता च षट्तिलाः पापनाशनाः । तैलमामलकाश्चैव तीर्थे देयानि नित्यशः । इति ।

अत्र च तिलहोमत्वेन अयुतलक्षहोमाद्यात्मनो ग्रहमखस्यापि संग्रहः । तत्र स्वल्पसमिदादिहोमसत्वेपि अयुतादिसंख्यापूर्तेस्तिलैः कर्तव्यताया मदनरत्नादौ कथनात्—शेषाणां स्थापनैर्मंत्रैर्होमो व्याहृतिभिस्तिलैः । इति वसिष्ठवचनाच्च । तद्विधिश्च मात्स्ये—ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिचोदितः । प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परः । तृतीयः कोटिहोमस्तु सर्वकामफलप्रदः । इति । स्कान्दे—श्रीकामः शांतिकामो वा तथैवाभिचरन्रिपून् । वृष्ट्यायुःपुष्टिकामो वा ग्रहयज्ञं समारभेत् ।

तद्योग्यदेशश्च महाकपिलपंचरात्रे—स्फुटिता च सशल्या च वल्मीकारोहिणी तथा । दूरतः परिवर्ज्या भूः कर्तुरायुर्धनापहा । ईशकोणप्लवा सा च कर्तुः श्रीदा सुनिश्चितं । पूर्वप्लवा वृद्धिकरी वरदा तूत्तराप्लवा । इति क्रमप्रवणभूप्राशस्त्यमभिधाय शेषदिक्प्रवणानिषेधो दर्शितः हयशीर्षपंचरात्रे—ज्ञात्वा भूमिं परीक्षेत पूर्वोदक्प्रवणां शुभां । श्वेतारुणा पीतकृष्णा विप्रादीनां प्रशस्यते । प्रयोगसारे—वितस्तिमात्रविस्तारं निर्माय विवरं भुवि । निक्षिपेत्ता मृदस्तस्मिंस्तासु शिष्टासु शोभनं । समासु मध्यमं विद्यान्न्यूनास्वधममुच्यते । सशल्या च भूर्निषिद्धा । प्रासादारंभकाले च गृहादौ च विशेषतः । शल्योद्धारस्तु कर्तव्यो यदीच्छेच्छुभमात्मनः । इति पंचरात्रोक्तेः । यस्तु प्राचां भूसमीकरणादरः स मंडपे नियमार्थः पूर्वोक्तानेकशास्त्रविरोधात् । तस्मादेतस्यां दिशि यतेत वा यातयेदिति श्रुत्या यथा वै दक्षिणः पाणिरेवं देवयजनमिति कल्पेन विरोधाच्च । किंतु प्राचीसाधनार्थः । अतएवोक्तं हयशीर्षपंचरात्रे—भूमिं तोयसमां कृत्वा दर्पणोदरसन्निभां । द्वादशांगुलमानेन तत्र वृत्तं तु भ्रामयेत् । मध्ये तु निश्चलं शंकुं स्थाप्य छायां निरीक्षयेत् । वृत्तरेखा तु या बाह्या शंकुच्छायाप्रकल्पिता । प्रवेशनिर्गमौ तस्यां शंकुछायां निरूपयेत् । शंकुच्छायाग्रचिह्नाभ्यां प्राक्प्रतीच्यौ प्रसाधयेत् । तोयसमामिति तोयगत्या समतया परीक्षितामित्यर्थः । शंकु-

छायायै प्रकल्पितेति विग्रहः । पदार्थादर्शे रात्रौ प्राचीसाधनोपाय उक्तः । कृत्तिका श्रवणः पुष्यश्चित्रास्वात्योर्यदंतरं । एतत्प्राच्या दिशो रूपं युगमात्रोदिते पुरः । इति । युगलक्षणं शुल्बे—षडशीतिरंगुलानि युगमिति । अयं च प्राचीज्ञानोपायो युगमात्रोपरिगतकृत्तिकादेर्नलिकानिरीक्षणेन, चित्रास्वात्यन्तराले तु एकदंडसंबद्धनलिकाद्वयकरणेन युगपन्नक्षत्रद्वयनिरीक्षणेन ज्योतिषप्रसिद्धो बोध्यः ।

मात्स्ये—ग्रहस्योत्तरपूर्वेण मंडपं कारयेद्बुधः । रुद्रायतनभूमौ वा चतुरस्रमुदक्प्लवं । दशहस्तमथाष्टौ वा हस्तान्कुर्याद्विधानतः । तस्य द्वाराणि चत्वारि कतर्व्यानि विचक्षणैः । इति । दानोद्द्योते पंचरात्रादौ—कनीयान्दशहस्तः स्यान्मध्यमो द्वादशोन्मितः । तथा षोडशभिर्हस्तैर्मंडपः स्यादिहोत्तमः । इति । संग्रहे—दशद्वादशहस्तो वा द्विद्विवृद्ध्या ततः क्रमात् । इत्युक्तेश्चतुर्दशहस्तोपि लभ्यते । तुलापुरुषदानाधिकारे लैंगे—विंशद्धस्तप्रमाणेन मंडपं कुंडमेव वा । अथाष्टादशहस्तेन कलाहस्तेन वा पुनः । इति । कलाः षोडश । अत्र च दशहस्तेऽष्टहस्ते चैक एवाग्निः कुंडं चैकमेखलमेवेति पक्षाश्रयणेन ऋत्विगुपवेशनादिसौकर्यं बोध्यं । चतुरस्रसाधनं च शुल्बोक्तपंचशंकुपक्षेण बोध्यं । इष्टप्रमाणसूत्रस्य सपाशद्वयस्य मध्येऽर्धार्धयोश्च चिह्नानि विधायेष्टदेशे निपात्य पाशयोश्चिह्नेषु च पंचशंकून्निहत्योपांत्यशंकोः पाशौ प्रतिमुच्य मध्यचिह्नं दक्षिण उत्तरतश्चाकृष्य चिह्ने कृत्वा मध्यमे शंकौ पाशौ प्रतिमुच्य चिह्नयोरुपरि मध्यचिह्नमेवोभयत आकृष्य शंकून्निहन्यात् । तत एकं पाशं पश्चिमशंकौ निधाय द्वितीयं दक्षिणे शंकौ निधाय मध्यचिह्नं नैर्ऋत्यामाकृष्य शंकुः । एवमेवोत्तरशंकौ द्वितीयपाशं निधाय वायव्ये शंकुः । ते श्रोणी प्रथमपाशं पूर्वशंकौ एवमेवांसौ । यद्वा प्राक्सूत्रस्याद्यंतयोर्मध्ये च त्रीन्शंकून्निहत्य तदर्धे अक्षापरपर्यायकर्णार्धेन वृद्धिः कार्या । तच्चतुर्विंशत्यंगुलं तिलोनमेकोनत्रिंशदंगुलं सूत्रं भवति । तद्द्विपाशं विधाय वृद्ध्यंते चिह्नं कृत्वा वृद्धिपाशं मध्यशंकौ निधायेतरपाशं पश्चिमशंकौ निधाय चिह्नं नैर्ऋत्यामाकृष्य शंकुः । एवं वायव्यां । एवमंसाविति । कर्णलक्षणं च प्रमाणं तृतीयेन वर्धयेत्तच्चतुर्थेनात्मन-

श्चतुस्त्रिंशोनेनेति शुल्वोक्तं बोध्यं । कनीयसि मंडपे पूर्वादिदिक्शंकूनामभितो हस्तमात्रे द्वौद्वौ शंकू निखाय द्विहस्तविस्तृतानि चत्वारि द्वाराणि । मध्यमे चतुरंगुलाधिकद्विकराणि उत्तमे त्वष्टांगुलाधिकद्विकराणि ।—कल्पयेद्द्विकरं द्वारं चतुरंगुलवृद्धितः । मध्यमोत्तरयोरिति पांचरात्रोक्तेः । मंडपतृतीयभागेन मध्ये वेदिः कार्या । तस्याश्चतुर्षु कोणेषु चत्वारः स्तंभाः परितो द्वादशेति षोडशस्तंभो मंडपः संपद्यते ।

स्तंभपरिमाणं शारदातिलके—षोडशस्तंभसंयुक्ते चत्वारस्तेषु मध्यमाः । अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाभितः । पंचहस्तप्रमाणास्ते निश्छिद्रा ऋजवः स्मृताः । इति । पंचरात्रे तु—मंडपार्धोच्छ्रितान्वेदसंख्यांश्चूडान्वितांस्तथा । स्तंभान्समं च संस्थाप्य स्तंभद्वादशकं पुनः । बाह्ये पीठप्रमाणेन तत्रतत्र विभागतः । इति । पीठं वेदिः । तस्या मंडपतृतीयांशमितत्वात्तत्परिमिता बाह्याः स्तंभा इति प्रतीतेरेतद्वाक्यसंवादेन षोडशहस्तविषये शारदावाक्ये हस्ततृतीयांशसहितपंचहस्तमितत्वं द्वादशस्तंभेषु बोध्यं । क्वचित्तथेत्यनंतरं वलिकामूर्ध्वतस्तेषामिति पाठः । तत्र चतुर्णां स्तंभानां शिखाभिः प्रोतरंध्राणि उभयतोरंध्रद्वयवंति तिर्यक्काष्ठानि वलिकासंज्ञानीति ज्ञेयं । बाह्यस्तंभेषु नैतानि नियतानि इति मदनरत्ने । सर्वस्तंभानां पंचमांशो भूमौ निखेयः ।—पचमांशं न्यसेद्भूमौ सर्वसाधारणो विधिः । इति वास्तुशास्त्रात् ।

अथ तोरणानि मंडपाद्बहिरेकहस्तोपरि द्विहस्तोपरि वा द्वारसंमुखतया पूर्वादिदिक्षु कार्याणि । मंडपद्वारबाह्ये च वेदिमानेन दिक्क्रमात् । प्लाक्षमौदुंबराश्वत्थवटोत्थं तोरणं न्यसेत् । इति मंत्रमुक्तावल्युक्तेः । अत्र वेदिमानं हस्तमानमिति वृद्धाः ।—हस्तद्वयं बहिस्त्यक्त्वा तोरणानि निवेशयेत् । इति पिंगलमताच्च । सिद्धांतशेखरे—न्यग्रोधतोरणं पूर्वे याम्ये ह्यौदुंबरं मतं । पश्चिमेऽश्वत्थसंभूतमुत्तरे प्लक्षतोरणं । पूर्वे वा प्लक्षसंभूतं न्यग्रोधश्चोत्तरे मतः । एकमेषामलाभे स्यात्तदभावे शमीद्रुमः । जंबूखदिरसालाश्च ताला वा तोरणे स्मृताः । इति । भविष्ये—प्लक्षोदुंबरकाश्वत्थवटाः प्रागादितोरणाः । पंचषट्सप्तहस्ताः स्युः कनिष्ठादौ तु मंडपे । इति ।

अत्र कनिष्ठमंडपे द्विहस्तविस्तृतपंचहस्तोच्छ्रायः । मध्यमे सपाद्-द्विहस्तविस्तृतषड्ढस्तोच्छ्रायः । उत्तमे सार्धद्विहस्तविस्तृतसप्तहस्तोच्छ्राय इति व्यवस्थेति केचित् । अन्ये तु दशद्वादशषोडशहस्तमंडपेषु तोरणव्यवस्थैषा । अन्येषु तु मंडपेषु अपराजितपृच्छोत्थं मानं ग्राह्यं । तोरणान्यपि चत्वारि द्वाराधिककराणि तु । परिधिस्तंभतोद्यानि युगुलैर्युगुलैः करैः । इति । अधिकः करः करांतराणि येषु । परिधिस्तंभता मंडपबाह्यस्तंभपरिमाणं । ततो द्वाभ्यां कराभ्यामुच्चानीत्यर्थः । वीप्सानेकमंडपाभिप्रायेत्याहुः । आग्नेये—पंचषट्सप्तहस्तानि हस्तखाते स्थितानि तु । तदर्धं विस्तृतानि स्युर्युतान्यग्रे ध्वजादिभिः । इति । तिर्यक्फलकानीति शेषः । शारदातिलके—तिर्यक्फलकमानं स्यात्स्तंभमानार्धमानतः । इति । अत्रार्धशब्दः किंचिदधिकार्धपर इति बोध्यं । अर्धात्परिमाणमिति न्यायात् । वैष्णवयागेषु तिर्यक्फलकमध्यभागे सजातीयकाष्ठप्रभवाः स्तंभद्वादशांशदीर्घाः दैर्घ्यचतुर्थांशविस्ताराः शंखचक्रगदापद्मांकिताश्चक्रांकिता एव वा चत्वारः कीला निवेश्याः । मस्तके द्वादशांशेन शंखचक्रगदांबुजं । प्रागादिक्रमयोगेन न्यसेत्तेषां स्वदारुजं । इति वास्तुशास्त्रात् । तोरणस्तंभमूलेषु कलशान्मंगलांकुरान् । प्रदद्यादुपरिष्टात्तु कुर्याच्चक्रं सुदर्शनं । इति पांचरात्रोक्तेश्च । शैवयागेषु शंखादिस्थाने तत्तुल्यं त्रिशूलमेव कार्यं ।—शूलेन चिह्निताः कार्या द्वारशाखास्तु मस्तके । शूले नवांगुलं दैर्घ्यं तुरीयांशेन विस्तृतिः । ऋजुं वै मध्यशृंगं स्यात्किंचिद्वक्रं तु पक्षयोः । इति । प्रथमं तत्समाख्यातं द्व्यंगुलं रोपयेत्सदा । शेषाणां द्व्यंगुला वृद्धिर्वंशश्चांगुलवृद्धितः । इति पिंगलमतात् । प्रथममित्यधममंडप इत्यर्थः । ततश्च मध्यमे एकादशांगुलं उत्तमे तु त्रयोदशाङ्गुलमिति बोध्यं । सारसंग्रहे—आच्छादयेत्ततो वंशकटैः केरदलैश्च तं । तं मंडपं । केरदलानि नालिकेरदलानि ।—अग्निमीळेतिमंत्रेण प्रदद्यात्पूर्वतोरणं । इषेत्वेत्यादिमंत्रेण दक्षिणे तोरणं न्यसेत् । अग्न आयाहिमंत्रेण पश्चिमस्य निवेशनं । शंनोदेवीति मंत्रेण दद्यादुत्तरतोरणं । मंडपस्य बहिर्दंडैर्दशहस्तायतैः सह । पूर्वाद्यष्टहरित्स्वष्टौ ध्वजान्संस्थापयेत्क्रमात् । तेषां हस्तद्वयं व्यासो म-

ध्यश्च करसंमितः । व्यासार्धशिखरं पुच्छं हस्तत्रितयमानकं । मत्स्याभं शिखरं पुच्छं शिखरं तु त्रिकोणकं । तयोर्मध्ये चतुष्कोणं ध्वजानेवं प्रकल्पयेत् । मातंगवत्समहिषसिंहमत्स्यैणवाजिनः । वृषभं च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत् । अथवा दिग्गजानष्टावैरावतपुरःसरान् । इति । तथा मंत्रैस्तु लोकपालानां पताका विनियोजयेत् । ऊर्ध्वं ध्वजं च बध्नीयाद्घंटाचामरभूषितं । पंचहस्तो ध्वजः प्रोक्तः पताका बाहुसंमिताः । दंडस्तु दशहस्तः स्यात्तत्तत्स्थाने तु ताऩ्यसेत् । द्वादशाङ्गुलविस्तारास्तत्तन्मूर्त्या च लांछिताः । पीतरक्तश्यामधूम्रश्वेतधूम्रासिताऽर्जुनाः । आयुधांकाः पताकाः स्युः पुष्पगंधसमन्विताः । चंद्रमंडलगौरेण वितानेन विभूषितं । दुकूलैर्वेष्टितस्तंभं नानादीपाद्यलंकृतं । आम्रपल्लवमालाभिः शोभितं द्वारमुत्तमं । वेष्टितं दर्भरज्ज्वा च विद्ध्यान्मंडपं शुभं । इति यज्ञमंडपनिर्माणं ।

अथ **कुंडनिर्माणं** । नवग्रहमखे कुंडं हस्तमात्रं समं भवेत् । चतुरस्रमधोहस्तं योनिवक्त्रं सुमेखलं । चतुरंगुलविस्तारा मेखला तद्वदुच्छ्रिता । इति । अध इति अधःखातोपि हस्तपरिमितो भवतीत्यर्थः । यद्यप्यत्राविशेषेण हस्तमात्रमित्युक्तं तत्सहस्रहोमात्मकग्रहमखविषयं शीघ्रदाहिघृतादिसाधनकलक्षहोमादिविषयं वा । मुष्टिमानं शतार्धे तु शते चारत्निमात्रकं । सहस्रे त्वथ होतव्ये कुर्यात्कुंडं करात्मकं । द्विहस्तमयुते तच्च लक्षहोमे चतुःकरं । दशलक्षमिते होमे षट्करं संप्रचक्षते । अष्टहस्तात्मकं कुंडं कोटिहोमेपि नाधिकं । इति वाजपेयेप्युदाहृतभविष्योक्तेः । एकहस्तमितं कुंडमेकलक्षे विधीयते । लक्षाणां दशकं यावत्तावद्धस्तेन वर्धयेत् । दशहस्तमितं कुंडं कोटिहोमेपि शस्यते । इति । **शारदातिल**कोक्तौ हस्तमितकुंडविधेर्घृतपुष्पादिहोमहविर्विषयत्वस्य तेनैवोक्तेश्च । एतत्संवादिसिद्धांतशेखरोक्तेस्तद्विषयत्वस्य दानोद्द्योतमदनरत्नेऽभिधानाच्च । कोटिहोमे योयं दशहस्तमितकुंडविधिः । यश्च स्कान्दे—कोटिहोमे चतुर्हस्तं चतुरस्रं समंततः । योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलं । इति । स द्विविधोपि व्रीह्यादिहोमविषय इत्यपि तत्रैवोक्तं । अन्यत्र तु—कुंडमानं

वदंत्येके शतस्यार्धेऽष्टपर्वकं । शतैकपर्वमानं स्यात्सहस्रार्धे नृपाङ्गुलं । सहस्रे त्वथ मानं स्यात्पर्वविंशतिसंमितं । अयुते हस्तमात्रं स्याल्लक्षहोमे द्विहस्तकं । अयुते तु चतुर्हस्तं कोटिहोमे तु षट्करं । इति । अङ्गुलस्वरूपं आदित्यपुराणे—जालांतरगते भानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते । त्रसरेणुस्तु विज्ञेयस्तेऽष्टौ स्युः परमाणवः । इति । त्रसरेणवस्तु तेप्यष्टौ रथरेणुस्तु संस्मृतः । रथरेणवस्तु ते ह्यष्टौ वालाग्रं संस्मृतं बुधैः । वालाग्रान्यष्ट लिक्षा तु यूका लिक्षाष्टकं स्मृतं । अष्टौ यूका यवं प्राहुरङ्गुलं तु यवाष्टकं । इति । मुष्ट्यादिमानं आदित्यपुराणे—रत्निस्त्वङ्गुलिपर्वाणि विज्ञेयस्त्वेकविंशतिः । अयमेव मुष्टिरपि । चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानि तु । अन्यत्र—अरत्निः सकनिष्ठः स षोडशांशवियुक्करः । इति रामवाजपेये । चतुरस्रवृत्तचंद्रार्धाभत्र्यस्रीणि च क्रमेणैव मुख्यानि विप्रराजविडंत्येष्वखिलेषु वाभ्यस्रीति । अभ्यस्रि चतुरस्रं । चतुरस्रकुंडनिर्माणं च मंडपोक्तरीत्योह्यं ।

अथ चतुरस्रभुजान्प्रदर्शयामः । एकहस्ते अंगुलानि २४ चतुर्विंशतिः द्विहस्ते ३३।७।४।२ सत्रिपादत्रियूकोनिताः स्युश्चतुस्त्रिंशत् । इति तंत्रात् । यातु प्राचां वेदत्रीणीति चतुस्त्रिंशत्संख्योक्तिः सा अदूरविप्रकर्षेण ज्ञेया । त्रिहस्ते ४१।४।४।४।४ एकाध्ययश्च यवैः पंचभिः पंचलिक्षोनितैश्च युता इति तंत्रात् । चतुर्हस्ते ४८। पंचहस्ते ५३।५।२।५।२। षड्ढस्ते ५८।६।२।३।४ अष्टपंक्तिलिक्षायुतैश्च सपादैर्यवैः षड्भिरिति तंत्रात् । सप्तहस्ते ६३।४। अष्टहस्ते ६७।७।०।४। नवहस्ते ७२।०।०।०। दशहस्ते ७५।७।१।२। षोडशहस्ते ९६॥

अथ कुंडेषु खननविधिर्दानोद्योते—चतुर्विंशतिमं भागमंगुलं परिकल्प्य तु । चतुर्विंशांगुलं हस्तं कुंडानां परिकल्पयेत् । हस्तमात्रं खनेत्तिर्यगूर्ध्वं मेखलया सह । इति । कुंडक्षेत्रं चतुर्विंशतिधा विभज्य चतुर्विंशतिभागमंगुलं परिकल्प्य तादृशचतुर्विंशत्यंगुलैर्हस्तं परिकल्प्य तत्परिमितमधःखननं तिर्यक्कार्यं । ऊर्ध्वमानेन तु प्रथममेखलाग्रेण सह तावत्परिमाणं यथा भवति तथा कार्यमित्यर्थः । योन्यादिकुंडेषु

तु स्वस्वप्रकृतिभूतचतुरस्रविस्तारपरिमितमधःप्रदेशात्प्रथममेखलाग्रेण सह स यथा भवति तथा विधेया ।

कंठपरिमाणं सिद्धांतशेखरे—कुंडे हस्तमिते कंठं कुर्यादेकांगुलं ततः।इति। अतश्चाधिकपरिमाणे स्वस्वचतुर्विंशांशपरिमितः कंठो ज्ञेय इत्यपि दानोद्योते मेखलासंख्या तत्परिमाणविशेषा उक्ताः प्राचीनैः । व्यासे चतुर्विंशतिधा विभक्ते तिस्रश्चतुस्त्रीक्षणभागविस्तृताः। समंततः कंठबहिस्तु मेखला नवर्तुरामांशकतुंगतामता।इति। प्रथमा चतुर्भागविस्तृता नवभागोच्चा। द्वितीयांशत्रयविस्तारा षडंशोच्चा। तृतीयांशद्वयविस्तारांशत्रयोच्चाएव। एवं तिस्रो मेखला इत्यर्थः। द्विहस्तादौ मेखलानां विस्तारपरिमाणानि सौकार्यार्थमुक्तानि सारसंग्रहे—द्विहस्तस्य च षड्वेदत्र्यंगुलैर्मेखलात्रयं । मेखलास्तु त्रिहस्तस्य सप्तपंचगुणांगुलैः । चतुर्हस्तैर्मेखलाः स्युरष्टर्तुचतुरंगुलैः । मेखला पंचहस्तस्य निधिद्वीपशरांगुलैः । षट्करस्य च ताः प्रोक्ता विश्वरुद्रनवांगुलैः। दशहस्तमिते कुंडे मनुभानुदिशांगुलैः । इति । गुणास्त्रयः, ऋतवः षट्, निधयो नव, द्वीपाः सप्त, शराः पंच, विश्वे त्रयोदश, रुद्रा एकादश, मनवश्चतुर्दश, भानवो द्वादश, दिशोऽष्टौ, यत्तु लक्षहोमप्रकरणे मदनरत्ने—द्विहस्तविस्तृतं तद्वचतुर्हस्तायतं तथा । लक्षहोमे भवेत्कुंडं योनिवक्रं त्रिमेखलं । द्विरंगुलोच्छ्रिता कार्या प्रथमा मेखला बुधैः । त्रिरंगुलोन्नता तद्वद्द्वितीया समुदाहृता । उच्छ्रायविस्तराभ्यां च तृतीया चतुरंगुला। चतुरंगुलस्तु विस्तारः पूर्वयोरपि शस्यते। इति । तदनेकरामवाजपेयादिग्रंथविरुद्धत्वादुपेक्ष्यं ।

योनिलक्षणमुक्तं स्वायंभुवे—मेखलामध्यतो योनिः कुंडार्धा त्र्यंशविस्तृता। अंगुष्ठमानोष्ठकंठी कार्याश्वत्थदलाकृतिः। इति । मेखलामध्यश्चोपरितनो ग्राह्यः । योनिः स्यान्मेखलोपरीति सिद्धांतशेखरोक्तेः । कुंडार्धपरिमाणेन दीर्घा तत्तृतीयांशेन विस्तृता । अंगुष्ठशब्देन कुंडचतुर्विंशांश उच्यते । विशेषांतरमाहुः प्रांचः—योनेर्मूले नालमुर्वीविलात्तु प्रोक्तं कैश्चिल्लग्नमंतःसरंध्रं । योनौ कुंडे नैव योनिस्तथेष्टा नाभिः कैश्चित्कुंडमध्ये परोक्ता । इति । इयं चाश्वत्थपत्रसदृशी गजोष्ठसदृशी वा ।—अश्वत्थपत्रवद्योनिर्गजोष्ठप्रतिमा तथा। इति सारसंग्रहवचनात्।

अथ नवकुंडीचिकीर्षायां तल्लक्षणान्युच्यंते। चतुरस्रं तावन्मंडपगतचतुरस्रतासाधनविधयैव व्याख्यातं। अथ योनिकुंडं—तत्र प्रांचः। अष्टोनद्विशतांशसूत्रकचतुःकोणे पुरस्तादद्दत्वष्टत्रिंशतमेधयंत्वथ लवान्श्रोण्योरिमानर्धशः। अग्रात्सूत्रयुगे त्रिकोणमिति तच्छ्रोण्योस्तदर्धभ्रमाद्वृत्तार्धे बहिरालिखेदिति भवेत्कुंडोत्तमं योनिवत्। प्रकृतिचतुरस्रे प्राक्पश्चिमशंकंतरालसूत्रस्याष्टोनद्विशतसंख्या द्वानवत्यधिकशतसंख्या इति यावत्। इयंतोंशाः कार्याः। पूर्वसूत्रोपरिभागे तादृशानष्टत्रिंशतमंशान् दद्तु वर्धयंतु। तदंते शंकुः। चतुरस्रस्य श्रोण्योः पश्चिमतिर्यक्सूत्रांतयोर्नैर्ऋत्यवायव्यकोणयोरिति यावत्। इमानष्टत्रिंशतं लवानंशान् अर्धश एकोनविंशतिं दक्षिणत एकोनविंशतिं उत्तरतस्तिर्यक्सूत्रे एधयंतु वर्धयंतु। तदंतयोः शंकू तावारभ्य पूर्वशंकुपर्यंतं सूत्रद्वये दत्ते त्रिकोणं निष्पद्यते। ततो दक्षिणशंकोरुत्तरत उत्तरशंकोश्च दक्षिणतस्तिर्यक्सूत्रचतुर्थांशेन शंकुः। तत्र प्रत्येकं निहितपाशेन तच्चतुर्थांशसूत्रेण प्रांतस्थशंकुप्रभृतिमध्यसूत्रपश्चिमांतपर्यंतं वृत्तार्धद्वयं चतुरस्राद्बहिरालिखेदिति **योनिकुंडसिद्धिः।** अत्र चतुर्विंशत्यंगुलसमचतुरस्रप्रकृतिके वृत्तार्धद्वयगतक्षेत्रफलांगुलानि त्रिषष्ट्यधिकशतं। उपरितनत्र्यस्रफलं च त्रयोदशाधिकशतचतुष्टयमंगुलानीत्युभययोगे प्रकृतिचतुरस्रगतक्षेत्रफलस्य षट्सप्तत्यधिकपंचविंशत्यंगुलात्मकस्य लाभ इति प्रत्यक्षसंवादात्प्रत्यक्षश्रुतिमूलककात्यायनशुल्बसंवादाच्चायमेव प्रकारः श्रेयान्नतु शारदादिमंत्रोक्त इत्याहुः। नव्यास्तु कामिकादिबहुतरग्रंथविरोधात्, एवं कृते स्थिरं कुंडं भवेदश्वत्थपत्रवत्। इति क्रियासारोक्ताकारविरोधाच्चात्रापरितुष्यंत आहुः। प्रकृतिचतुरस्रे प्रागुदङ्मध्यसूत्रद्वयदानेन चत्वारि चतुरस्राणि कृत्वा प्राक्सूत्रं चतुर्विंशतिधा विभज्य तदेकभागविंशांशत्रयसंमितांस्तादृशपंचांशान्प्राक्सूत्राग्रभागे संवर्ध्य तदंते शंकुः। तमारभ्योदक्सूत्रदक्षिणोत्तरांतौ यावत्सूत्रद्वयं दत्वा प्रत्यक्भागस्थितचतुरस्रयोः प्रत्येकं कर्णसूत्रद्वयदानेन निर्णीतमध्यदेशयोः शंकू। प्रकृतिचतुरस्रकर्णरज्जुचतुर्थांशेन तयोरेकैकस्मिन्निहितपाशेन वृत्तार्धे तथा लेख्ये। यथा वृत्तार्धारंभ उदक्सूत्रदक्षिणोत्तरांतयोर्भवति समाप्तिश्च प्राक्सूत्रं पश्चिमांते भवतीति

योनिकुंडं । अत्र वृत्तार्धद्वयमेलनेन वृत्तात्मकमेकं क्षेत्रं, तदर्धद्वयस्य प्रागग्रत्र्यस्रस्य च मध्यवर्तित्र्यस्रं, प्रागग्रत्र्यस्रं चेति क्षेत्रत्रयं । तत्र वृत्तफलं षड्विंशत्यधिकशतद्वयमंगुलानि सार्धयवः किंचिदधिकश्चेति । मध्यवर्तित्र्यस्रफलं चतुश्चत्वारिंशदधिकशतमंगुलानि । प्राक्त्र्यस्रे तु पंचाधिकशतद्वयमंगुलानि षड्यवास्तिस्रो यूकाः किंचिदधिका इति । फलत्रयमेलने तु पंचसप्तत्यधिकपंचशतान्यंगुलानि सप्तयवाः सप्तयूकाः पंचलिक्षाः षड्वालाग्राणि षड्रथरेणवस्त्रयस्त्रसरेणवो द्वौ परमाणू चेति प्रकृतिफलं पूर्णमिव भवति । ध्वजायसिद्ध्यर्थं मध्यसूत्रे रथरेणुवर्धनेन पूर्णमेवेत्याहुः । अत्र सौकर्यार्थं नव्यमतावलंबनेन मध्यसूत्रवृद्धिभेदाः प्रदर्श्यंते । एकहस्ते अंगुलानि ५ यवः १ यूका २ लिक्षाः ० । द्विहस्ते अंगुलानि ७ यवौ २ यूकाः ४ लिक्षाः ५। त्रिहस्ते अंगुलानि ८ यवाः ७ यूकाः ३।४ चतुर्हस्ते अंगुलानि १० यवौ २ यूकाः ५ लिक्षे २।१ एकहस्ते वर्धनीयानां चतुर्हस्ते द्विगुणत्वात् । पंचहस्ते अङ्गुलानि ११ यवाः ४ यूकाः २ लिक्षाः ३। षड्ढस्ते अंगु० १२ यवाः ५ यूका ० लिक्षे २। सप्तहस्ते अंगुलानि १३ यवाः ५ यूका। १ लिक्षे २ अष्टहस्ते अंगुलानि १४ यवाः ४ यूकाः ६ लिक्षा १। नवहस्ते अंगुलानि १५ यवाः ३ यूकाः ६ लिक्षाः ३।२ दशहस्ते अंगु० १६ यवौ २ यूकाः ४ लिक्षाः २।३ षोडशहस्ते अंगुलानि २० यवाः ५ यूके २ लिक्षाः ४।२ एकहस्ते वर्धनीयानां षोडशहस्ते चतुर्गुणत्वात् । इदंच कुंडमाग्नेय्यामुदीचीं प्राचीस्थानेंगीकृत्य कार्यं ।—योन्याख्यमुच्यते कुंडमाग्नेय्यामुत्तरामुखं । इति मदनरत्नोक्तेः ।

अथार्धचंद्रं । तत्—दक्षिणदिश्युत्तरमुखमर्धचंद्रमथोच्यते। याम्ये तन्मारणे शस्तमुत्तराभिमुखं सदा । इति सिद्धांतशेखरोक्तेः। प्रांचः—चतुःकोणक्षेत्रे जिनलवकमध्यस्थितगुणे विहायाधः सार्धद्वयमुपरि तावच्च मतिमान् । कलांशेनांशस्योनितमुपरि तिर्यक्कुरु गुणं भ्रमार्धे तन्मानादपि शशिदलं कुंडमिति तु । प्रकृतिचतुरस्रे उदङ्मध्यसूत्रं चतुर्विंशतिधा विभज्याधःसार्धभागद्वयं परित्यज्य शंकुः । उपर्यप्येकभागीयषोडशांशोनं तावदेव परित्यज्य शंकुः । उपरि-

तनशंकोरुपरि प्राक्पश्चिमं सूत्रं तिर्यग्दत्त्वोपरितनशंकौ निहितपाशेन पारिभाषिकयवार्धाधिकैकोनविंशांशसूत्रेण तिर्यक्सूत्रांतं वृत्तार्धं लेख्यमित्यर्धचंद्रसिद्धिरित्याहुः । नव्यास्तु तत्र सूत्रगणने प्रकृतिक्षेत्रात्पंचांगुलानि न्यूनानि—चतुरस्रे ग्रहैर्भक्ते त्यक्त्वाद्यांतौ तदंशकौ । मध्ये सप्तांशमानेन कुंडं खंडेंदुवक्रमात् । इति । कामिकोक्ते तु सतृतीयांशद्व्याद्यष्टाविंशत्यंगुलानि न्यूनानीति महान्विसंवादः । चतुरस्रीकृतं क्षेत्रं दशधा विभजेत्पुनः । एकमेकं त्यजेदंशमध ऊर्ध्वं च तंत्रवित् । इति शारदोक्तेः । किंचिदधिकमंगुलत्रयं वर्धत इत्यल्पोप्यस्ति विसंवाद इत्यपरितुष्यंत आहुः । प्राचामिव चतुर्विंशतिभागेषु एकभागीयविंशांशत्रयेण किंचिदधिकपंचलिक्षाधिकपंचयूकैकयवात्मकेन सहितस्यैकोनविंशत्यंगुलमितसूत्रस्य वृत्तार्धसिद्धिपर्याप्तभ्रामणेन पूर्ववत्कृतेनार्धचंद्रे कृते सत्येकहस्तगतं सध्वजायक्षेत्रफलं सिध्यतीति ।

अथ द्विहस्तादौ भ्रामणसूत्रमानानि । एकहस्ते अंगलानि १९।१।१।४ द्विहस्ते अंगुलानि २७।०।६।०।६। त्रिहस्ते अंगु० ३३।१।३।२।२ चतुर्हस्ते अंगु० ३८।२।३।३।२ पंचहस्ते अंगु० ४२।६।४।३। षड्ढस्ते अंगु० ४६।७।१।७। सप्तहस्ते अंगु० ५०।५।२।३।४। अष्टहस्ते अंगु० ५४।१।२।५।१ नवहस्ते अं० ५७।३।४।५।२। दशहस्ते अंगु० ६०।४।३।४। षोडशहस्ते अंगु० ७६।४।६।०।४। एकहस्ते भ्रामणस्य द्विगुणं चतुर्हस्ते। षोडशहस्ते चतुर्गुणं द्विहस्ते द्विगुणमष्टहस्त इति पूर्ववत् ।

अथ त्र्यस्रि । नैर्ऋत्यां प्राङ्मुखं प्रांचः ।—क्षेत्रस्य मध्यमगुणे जिनभागभक्ते श्रोण्योः पृथक्शरलवान्परिवर्ध्य धीमान् । अग्रे विनाष्टमलवेन दशाथ सूत्रैस्त्र्यस्रि त्रिभिर्भवति कुंडमिह प्रयुक्तैः । इति । प्रकृतिचतुरस्रमध्यसूत्रे चतुर्विंशतिधा विभक्ते तादृशान्पंचपंचांशांस्तिर्यक् पश्चिमसूत्रदक्षिणोत्तरांतयोः संवर्ध्य प्राक्सूत्राग्रे चैकांशस्याष्टमभागोनान्संवर्ध्येत्यनुषंगः । अग्रत्रयमेलनार्थं सूत्रद्वये दत्ते प्राक्सूत्रेऽपहृते त्रिभिः सूत्रं त्र्यस्रं भवतीत्याहुः । नव्यास्तु प्राचामिव चतुर्विंशतिभागेषु सत्सु तादृशान्द्वादशैकभागे चैकोनविंशतिधा विभक्ते तादृशनवभिः सहितान्समं विभज्यार्धानर्धांत्पारिभाषिककिंचिदूनैकयूकोनय-

वार्धयुक्तषडंगुलानि श्रोणिसूत्रस्योभयतः संवर्ध्य वृद्ध्यंतयोः शंकून्निहत्य सवृद्धिश्रोणिसूत्रं द्विगुणमुभयतःपाशं मध्ये सचिह्नं कृत्वा शंकोः पाशौ प्रतिमुच्य चिह्नं प्राच्यामाकृष्य शंकुं निहन्यात्। एवं समभुजं युक्तं त्र्यस्रं। क्षेत्रफले यवाधिक्येन ध्वजायसिद्धिरित्याहुः।

अत्र सौकर्याय भुजाः प्रदर्श्यंते। एकहस्ते अं० ३६।४। द्विहस्ते अं० ५१।४।७।५।४। त्रिहस्ते अं० ६३।१।६।३। चतुर्हस्ते अं० ७३।०।०। पंचहस्ते अं० ८१।४।७।५। षड्ढस्ते ८९।३।२।१। सप्तहस्ते अं० ९६।४।४।४।४। अष्टहस्ते अं० १०३।१।७।३। नवहस्ते अं० १०९।४। दशहस्ते अं० ११५।३।३।१।३। षोडशहस्ते अं० १४६।०।०।०।०। इति।

अथ वृत्तं। प्रतीच्यां प्राङ्मुखं। प्रांचः। षोडशधाकृतमध्यमसूत्रक्षेत्रपुरःपरिवर्धितभागे। एकैकएव ततोंतरचिह्नान्मंडलकुंडमिति भ्रामणात्स्यात्। इति। प्रकृतिचतुरस्रे प्राक्सूत्रे षोडशधाविभक्ते तादृशैकभागस्य पुरोवृद्धौ सत्यां सवृद्धिकेन तत्सूत्रार्धेन प्रकृतिमध्यशंकुप्रभृतिभ्रामणेन वृत्तकुंडं भवतीति। अत्र सार्धत्रयोदशांगुलसूत्रेण भ्रामणे क्षेत्रफले प्रकृतिश्चत्वार्यंगुलानि न्यूनानि। यत्तु शुल्बे चतुरस्रं मंडलं चिकीर्षन्मध्यादंसौ निपात्य पार्श्वतः परिकृष्य तत्र यदतिरिक्तं भवति तस्य तृतीयेन सह मंडलं परिलिखेत्स समाधिरिति। मध्यसूत्रार्धेन कर्णसूत्रार्धस्य यदंतरं तत्तृतीयांशसहितेन मध्यसूत्रार्धेन भ्रामणात्कुंडसिद्धिः। चतुर्विंशत्यंगुलेऽक्षापरनामककर्णसूत्रार्धे तावत्तिलोनसप्तदशांगुलं प्रमाणं तृतीयेन वर्धयेत्तच्चतुर्थेनात्मनश्चतुस्त्रिंशोनेनेति बौधायनीयशुल्बे प्रमाणं मध्यसूत्रं तस्य तृतीयांशवृद्धौ चतुर्विंशत्यंगुले द्वात्रिंशदंगुलानि संपद्यंते। तृतीयांशस्यापि चतुर्थांशेनांगुलद्वयेन वृद्धौ तस्य च चतुस्त्रिंशत्तमांशन्यूनत्वे तिलद्वयोनचतुस्त्रिंशदंगुलानि कर्णौ भवतीत्यर्थकत्वात्। अथांगुलप्रमाणं। चतुर्दशाणव(?)चतुस्त्रिंशत्तिलाः पृथक् संश्लिष्टमित्यपरमिति च तच्छुल्बात्। ततश्च सूत्रार्धयोरंतरं तिलोनपंचांगुलानि। तत्तृतीयांश एकमंगुलं तृतीयांशद्वयं चेति तावद्वृद्धिसहितद्वादशांगुलसहितद्वादशांगुलसूत्रेण भ्रामणं वृत्तसिद्धिकरमित्यर्थः। अत्र च ज्योतिषरीत्या

व्यासार्धमानं अं० १३।५।२।१।२।३।५।६। अत्र क्षेत्रफले चत्वार्यंगुलानि वर्धंते। दश वर्धंत इति पदार्थादर्शकारोक्तिस्तु साहसं। अतएवात्र याज्ञिकादृतेपि प्रकारेऽपरितोषादुक्तं पदार्थादर्शे—वृत्तकुंडे मध्यसूत्रं चतुर्विंशतिधा भजेत्। एकांशपंचविंशांशसहितं सार्धमंशकं। बहिर्न्यस्य भ्रमान्मध्याद्वृत्तकुंडमुदीरितं। इति। प्राक्सूत्रे चतुर्विंशतिधाविभक्के सत्येकस्य भागस्य पंचविंशतितमांशसहितं तादृशं सार्धमंशं पुरः संवर्ध्य तदंते शंकुं निहत्य प्रकृतिमध्यशंकुं तच्छंकोरंतरालमितसूत्रेण भ्रामितेन संजातवृत्ते न्यूनानतिरिक्तक्षेत्रफलसिद्धिरित्याशयः। एवं चैकहस्ते भ्रामणसूत्रं अं० १३।४।३। द्विहस्ते अं० १९।१।३।२। त्रिहस्ते अं० २३।३।६।०।४। चतुर्हस्ते अं० २७।०।६। पंचहस्ते अं० ३०।२।३।३।१। षड्ढस्ते अं० ३३।१।४।२।५। सप्तहस्ते अं० ३५।६।५।७। अष्टहस्ते अं० ३८।२।४।५। नवहस्ते अं० ४०।५।०।५। दशहस्ते अं० ४२।६।५।५।४ षोडशहस्ते अं० ५४।१।४।२।१। इति।

अथ षडस्रि। वायव्यां प्राङ्मुखं प्रांचः—जिनलवचतुरस्रक्षेत्रमध्यस्थसूत्रे जलनिधिलववृद्धे पार्श्वयुग्मेधरोर्ध्वे।अनललवमितांकौ मध्यसूत्राधरोर्ध्वावपि रसगुणयोगाल्लक्ष्मसु स्यात्षडस्रि। इति। प्रकृतिचतुरस्रगततिर्यङ्मध्यसूत्रं चतुर्विंशतिधाविभक्तं चतुर्भिश्चतुर्भिस्तादृशभागैर्दक्षिणोत्तरांतयोः संवर्ध्य तदंतरयोश्चिह्ने तत्र शंकू तिर्यक्सूत्रसंपातेन निर्णीतस्य दक्षिणरेखामध्यस्याध ऊर्ध्वं च त्रिभिस्त्रिभिरंशैश्चिह्ने कार्ये। तयोः शंकू तयोरेकैकमसाच्चतुरंशमितेन सूत्रेण दक्षिणतो वृत्तार्धे कार्ये। वृद्धयंतस्थदक्षिणशंकोश्च त्र्यंशमितसूत्रेणोपर्यधश्च वृत्तार्धे। एवं द्वयोर्द्वयोर्वृत्तार्धयोर्योगेनोपर्यधश्च मत्स्यौ भवतः। तयोरार्जवेन प्राक्सूत्रं। एवमेवोत्तरतो मत्स्यौ द्रष्टव्यौ। तयोरंतरा सूत्रं च प्रकृतिगतप्राक्सूत्रमपि मूलाग्रयोस्त्रिभिस्त्रिभिरंशैः संवर्ध्य तदंतयोश्चिह्ने। तयोः प्राक्चिह्नमारभ्य दक्षिणोत्तरावुपरि मत्स्यौ यावत्सूत्रे देये। एवं प्रत्यक्चिह्नमारभ्याधस्तनमत्स्यावधि द्वे सूत्रे। एवं षट्सूत्रसंपातेन षडस्रसिद्धिः। तत्रोपर्यधश्च त्र्यस्रद्वयमध्ये दीर्घचतुरस्रमिति क्षेत्रत्रयफलमेलनेन प्रकृतिसंवादः। यद्वा—अष्टोनद्विशतांशकेतरगुणे क्षेत्रस्य तिर्यक्-

स्थितांतःसूत्रोभयतो भवर्धनभवांकोर्ध्वाधरें चिह्नयेत्। तत्त्वांशेषु झषैः पुरोप्यधरतोऽकद्व्यंशवृद्धौ झषद्वंद्वाद्विद्विगुणैर्द्विपार्श्वगुणितत्रिभ्यः षडस्रीरितं। इति। भानि २७ तत्त्वानि २५ अंकद्विशब्देन २९ मध्यसूत्रभागाद्वा नवत्यधिकशतसंख्याः कार्याः। तेच चतुर्विंशत्यंगुले तावंतो यवाः तिर्यक्सूत्रांतयोस्ताद्दशसप्तविंशत्यंशवृद्धिः प्रत्येकं। दक्षिणरेखामध्यस्याध ऊर्ध्वमंकौ प्रत्येकं पंचविंशत्यंशव्यवधानेन। एवं चतुःसंख्यास्थाने सप्तविंशतिमंगीकृत्य त्रिस्थाने पंचविंशतिमंगीकृत्य मत्स्याः पूर्ववत्। प्राक्सूत्रस्योभयतोप्येकोनत्रिंशदंशैर्वृद्धिं पूर्ववत् षट्सूत्रपातं च कृत्वा षडस्रं संपाद्यं। पूर्ववच्च क्षेत्रफलं द्रष्टव्यमित्याहुः। अत्र प्रकारद्वयेऽपि भुजसाम्याभावात्प्राचीप्रतीच्योः कोणपाते सति। न कुर्यात्कुंडकोणेषु योनिं तां तंत्रवित्तमः। इति निषेधेन योनिस्थानाभावापत्तेश्चायुक्तमेतत्। उक्तंच वाजपेयिभिरेव—प्रागादिकुंडत्रयमुत्तराग्रं याम्यस्थयोनीतरपंचकुंडी। प्रागग्रिका पश्चिमयोनिरत्र। इति। योनिलक्षणावसरे च—मघवशिखिकृतांतदिक्स्थकुंडेष्वियमधिमेखलमेयमध्यभागे। यमदिशि शशिदिङ्मुखानिवेश्य वरुणदिशीतरकुंड ऐंद्रवक्त्रः। इति। एवं विरोधाच्चापरितुष्यंत आहुर्नव्याः। प्राकृतप्राक्सूत्रार्धं द्वादशधा विभज्यैकांशस्य नवमांशोनैस्त्रिभिरंशैः कृतवृद्धिकेन तेन सूत्रेण वृत्ते कृते कोणपातवर्जं तद्वृत्तव्यासार्धपरिमितानि षट्सूत्राणि पातयेत्। वृत्तरेखामार्जनाच्च षडस्रसिद्धिः। यद्वा वृत्तमकृत्वैव षट्सूत्रपातनेन तत्कार्यं। तच्चेत्थं। तावत्यैव वृद्ध्या प्राक्सूत्रं तिर्यक्सूत्रं च मूलाग्रयोः संवर्ध्य तिर्यक्सूत्रस्य दक्षिणेन शंकुदत्तपाशेन वृत्तभ्रामणार्थसूत्रमितभुजेन प्राच्याग्नेय्योर्मध्ये प्रतीचीनैर्ऋत्योश्च मध्ये वृत्तार्धयोः कृतयोः प्राकृतमध्यशंकुस्थितपाशेन तेनैव कृताभ्यां वृत्तार्धाभ्यां संभेदे मत्स्यौ संपद्येते। एवमेवोत्तरशंकौ मध्यशंकौ च पाशदानेन वृत्तार्धाभ्यां द्वाभ्यां द्वाभ्यां प्राच्यैशान्योः प्रतीचीवायव्योश्च मध्ये मत्स्यौ कार्यौ। ततो दक्षिणांतशंकुमारभ्य प्राच्याग्नेय्यंतरमत्स्यपर्यंतं प्रतीचीनैर्ऋत्यंतरमत्स्यपर्यंतं च तयोर्दाने सति उत्तरांतशंकुमारभ्यैवमेव प्राच्यैशान्यंतरमत्स्यपर्यंतं प्रतीचीवायव्यांतरमत्स्यपर्यंतं च तयोर्दाने कृते पूर्वयोः पश्चिमयोश्च मत्स्ययोर्मिथः सूत्रद्वये दत्ते सति

समभुजं प्रकृतिसमफलं षडस्रं भवतीति । अथात्र भुजपरिमाणं । एकहस्ते अं० १४।७। द्विहस्ते अं० २१।०।३।५।४ त्रिहस्ते अं० २५।६। चतुर्हस्ते अं० २९।६। पंचहस्ते अं० ३३। २।१।२। षड्स्ते अं० ३६।३।४।१। सप्तहस्ते अं०३९।४।२। अष्टहस्ते अं० ४२।०।५।२।३ नवहस्ते अं० ४४।५।०।१। दशहस्ते अं० ४७।०।३।०।६। षोडशहस्ते अं० ५९।४।०।१।

अथ पद्मकुंडं । उदीच्यां प्राङ्मुखं प्रांचः ।—क्षेत्रेतश्चतुरस्रके विततिवस्वंशेन वृत्तं कृतं व्यासार्धेन तु कर्णिका पुनरियद्वृध्या भ्रमात्केसराः । तद्वृध्या दलमध्यभूः पुनरियद्वृध्या भ्रमेणोर्ध्वभूः क्षेत्रव्यासजिनांशकस्य दहनैरूनं नखांशैः पुनः । तत्संवर्ध्य दलाग्रकाणि रचयेत्क्षेत्रार्धभुज्झन्विना स्यात्त्रिंशल्लवविस्तृतीत्थमियता द्विघ्नेन वृत्तं बहिः । स्वव्यासप्रमितोच्चतामिह खनेत्त्यक्त्वांतरा कर्णिकां कुर्वन्केसरचिह्नमष्टदलकं यद्वा चतुर्भिर्दलैः । इति । प्रकृतिचतुरस्रे अंतर्विततेर्मध्यसूत्रस्याष्टधा विभक्तस्याष्टमांशेन चतुर्विंशतांगुले त्र्यंगुलमित्येवंप्रकारेण व्यासार्धेन प्राकृतमध्यादारभ्य भ्रामितेन वृत्तकर्णिका, अन्यमंशं संवर्ध्य षडंगुलेन व्यासार्धेनापरं वृत्तं तत्र केसराः दलमूलानि च । अतएव कुर्वन्निति (शतृप्रत्ययः) प्रयोगः । पुनस्तावद्वृध्या नवांगुलेन व्यासार्धेन वृत्तं । तत्र दलमध्यानि । पुनस्तावद्वृध्या द्वादशांगुलेन व्यासार्धेन वृत्तं । तत्र दलोपरिभागाः । दलोपांतभागा इति यावत् । तथाच सूत्रं—कर्णिकाकेसरदलमध्योपांतदलाग्रकं । वृत्तैः पंचभिरेतत्स्यात्पद्मकुंडमनुत्तमं । इति । अत्र सव्यासस्य चतुरस्रव्याससाम्येपि फलसाम्याभावात् पुनः प्राकृतचतुर्विंशांशं विंशतिधा विभज्य तादृशविंशांशत्रयन्यूनया तावद्वृध्या तत्त्रयोनपंचदशांगुलेन व्यासार्धेन वृत्तं । अत्रत्यव्यासश्च द्विघ्नेनेयता षड्भिर्विंशांशैरूनस्त्रिंशदंगुलमितः । चतुर्थपंचमवृत्तांतरालभुवि च दलानामष्टानां दिग्विदिङ्मुखानां चतुर्णां वा दिङ्मुखानामग्राणि तथा वक्राणि कार्याणि यथार्धभूत्यागेन क्षेत्रफलं लभ्यते । खनने च षडंगुलोत्सेधतावद्विस्तारकर्णिकाया अविरोधेन तत्कार्यं । कार्यमेव च दलाग्रेषु तदित्याहुः । अत्र दलाग्रेषु च विशिष्यक्रियासंगतैवकारेण नियमाभिधानमग्रांतरालनियमार्थं । तंतश्चोपांत्यभागपर्यंतं दलांतराले

पृथक्खननाभावात् । दलानां परस्परसंभेदेन प्रसिद्धपद्मसाम्यलाभः । लभ्यते च । पत्राग्राणि तदाकारात्खनेदखिलमंतर इति शास्त्रांतरसंवादोपीति संप्रदायः । अत्र पंचमवृत्तव्यासे षड्विंशांशैरूनत्वेन सूक्ष्मगणनायां क्षेत्रफले एकादशांगुलानि न्यूनानि भवंतीत्यपरितोषादाहुर्नव्याः । पारिभाषिकयवोनत्रिंशदंगुलानि पंचमवृत्ते व्यासः । यवार्धोनपंचदशांगुलेन तदर्धभ्रमणमिति । दलनिर्माणं त्वेवं कार्यं । दिक्षु विदिक्षु च सूत्रैर्वृत्तेषु संभिन्नेषु तृतीयवृत्ताग्रस्योक्तसूत्राणामन्यतरस्य च संभेदे निहितादिना त्र्यंगुलकर्कटेन चतुर्थवृत्तांतात्तृतीयवृत्तांतसंबंधि अर्धचंद्रं कृत्वा तत्कोष्ठसंबंधान्यतादृशसंभेदे स्थितेन तेनैव तदर्धभेद्यपरमर्धचंद्रमित्येवं चतुर्थवृत्तगतेषु दिग्विदिक्षु सूत्रांतरालकोष्ठेषु सर्वेष्वपि मत्स्येषु सिद्धेषु द्वयोर्द्वयोर्मत्स्ययोर्द्वे द्वे सूत्रे विदिक्सूत्रांतं दिक्सूत्रांतं च यावद्देये । ततो दिक्षु विदिक्षु चाष्टदलानां सिद्धिः । दिक्ष्वेव वा विदिक्ष्वेव वोक्तप्रकारे चतुर्दलत्वं वेत्याहुः । अन्येत्वाहुः । पारिभाषिकपंचयूकोनपंचदशांगुलेन व्यासार्धेन भ्रामणात्पंचमवृत्तं संपद्यते । ततो दिग्विदिक्तदंतरालसूत्रेषु प्रयुक्तेषु षोडशधा क्षेत्रे भिन्ने सति यत्राग्रवृत्तांतरालसूत्रसंसर्गयावत्पार्श्वस्थितदिग्विदिक्सूत्रदलोपांतवृत्तसंसर्गद्वयप्रभृतिद्वयोर्द्वयोः सूत्रयोर्दानादष्टदलदलत्वं । अर्धभूसंग्रहः प्राग्वत् । लभ्यते चैवं योनिकृतदलाकृतिभंगाभावः । त्र्यंगुलोच्चां षडंगुलविस्तृतां कर्णिकामंतरा त्यक्त्वा तद्बहिः केसरभुवि केसरचिह्नानि कुर्वन्नखिलं यावद्दलोपांतवृत्तं खनेत् । प्रतिपत्रं केसरौ द्वौ द्वौ कर्णिकावृत्तलग्नमूलौ केसरे वृत्तलग्नाग्रौ अग्रे किंचित्स्थूलौ वक्रतयान्योन्याभिमुखौ कुर्यात् । उत्सेधं तु ततः कुर्यात्कर्णिकार्धांशमानतः । इति कामिकोक्तेः । दलमूलेषु युगशः केसराणि प्रकल्पयेत् । एतत्साधारणं प्रोक्तं पंकजं तंत्रवेदिभिः । इति शारदोक्तेश्चैतद्व्याख्यावसरे पदार्थादर्शे यत्रकुत्रापि पंकजं कुर्यादिति वक्ष्यति तत्रायं प्रकारो ज्ञेय इति ग्रंथे वक्ष्यतीत्यस्योपलक्षणत्वाश्रयणेन सर्वतोभद्रप्रकरणाज्ञातस्यापि प्रकारस्य सर्वपद्मसाधारण्येन कथनाच्चेत्याहुः ।

अथ पद्मकुंडे द्विहस्तादिषु सौकर्यार्थं पंचमवृत्तव्यासा एवाभिधीयंते । संपूर्णव्यासाः । एकहस्ते २९।६।६। द्विहस्ते ४२।१।५।

४।७। त्रिहस्ते ५१।५।४।२।१। चतुर्हस्ते ५९।५।४।०।२। पंचहस्ते ६६।५।६।७।२ षड्ढस्ते ७३।०।६।७।२। सप्तहस्ते ७८।७।५।३। अष्टहस्ते ८४।३।२।३।२। नवहस्ते ८९।४।२।०।३। दशहस्ते ९४।३।०।०।६। षोडशहस्ते ११९।३।०।०।४। इति।

अथ द्विहस्तादिषु पंचमवृत्तव्यासार्धानि। एकहस्ते १४। ७।३। द्विहस्ते २१।१।०।२ त्रिहस्ते २५।६।६।१। चतुर्हस्ते २९। ६।४।७।४। पंचहस्ते ३३।२।७।६।२ षड्ढस्ते ३६।४।३।३।२। सप्तहस्ते ३९।३।६।७। अष्टहस्ते ४२।१।५।४।५ नवहस्ते ४४। ६।१। दशहस्ते ४७।१।४।३। षोडशहस्ते ५९।५।३।६। इति।

**अथाष्टास्रं।** तदैशान्यां प्राङ्मुखं **प्रांचः**—क्षेत्रव्यासजिनांशकेषु चतुरः संवर्ध्य[1] साकं सुरांशेनैकस्य किलेंदुना वहिरमुष्मैतद्वितत्यां वहेत्। वेदास्रान्यदुदारदिग्गुणयुतं दिकोणमध्ये कृताष्टांकेष्वष्टगुणैस्तृतीयमिलितैरष्टास्रि कुंडं भवेत्। दिक्सूत्रयुग्ममथ यच्चतुरस्रयुग्ममाद्यं तदत्र परिमार्ज्यमशेषमेव। संपाततोऽतरगतं च तथाष्टसूत्र्यां रेखाष्टकं त्वपनयेदिति कुंडरूपं। प्रकृतिचतुरस्रमध्यसूत्रं चतुर्विंशतिधा विभज्यैकस्यैकेन त्रयस्त्रिंशांशेन सहितैस्ताद्दशचतुरस्रैस्तत्संवर्ध्य ताद्दशसूत्रप्रमाणं वहिश्चतुरस्रांतरं विधाय प्रागुदक्सूत्राभ्यां दिक्षु चिह्नानि कृत्वा मध्यचिह्नवतादिकोणांतरालसूत्रेण प्रत्यंतरालं मध्येंऽकनेन चिह्नाष्टके सिद्धे तेष्वेकैकस्मादातृतीयमष्टौ सूत्राणि मूलाग्रसंवद्धे द्वे द्वे इत्येवं निपात्य चतुरस्रद्वयस्य दिग्रेखाद्वयस्याष्टसूत्राणां मिथः संपातांतररेखाभागाष्टकस्य च मार्जनादष्टास्रिसिद्धिरिति। अत्र तृतीयलांछने सूत्रपातस्यासांप्रदायिकत्वेन नार्पयेत्कुंडकोणेषु योनिमिति नेषेधाद्योनिस्थानाभावप्रसंगेन चापरितुष्यंत आहुर्नव्याः। पदार्थादर्शे–कुंडेऽष्टास्रे मध्यसूत्रं चतुर्विंशतिधा भजेत्। एकसार्धाष्टमंशाढ्यमंशमेकं वहिर्न्यसेत्। चतुर्दिक्ष्वथ तन्मानाच्चतुरस्रांतरं भवेत्। षट्चत्वारिंशदेकांशचतुःषष्ट्यंशसंयुतैः। सप्तांशैर्लांछयेद्बाह्यचतुरस्रास्रिं पार्श्वतः। दिक्ष्वष्टसूत्रसंपातादष्टास्रं समवाहुकं। इति। एकभागस्य सार्धाष्टमांशयुक्तो यश्चतुर्विंशोंशस्तं मध्यसूत्रयोर्दिक्चतुष्टयेपि वर्धयेत्। ततश्च-

---

१ संवर्ध्य कालं.

चतुर्विंशत्यंगुलं सूत्रं यवत्रयाधिकषड्विंशत्यंगुलं भवति तत्परिमितं बाह्यचतुरस्रं विधाय सप्तभिरंशैरेकांशस्य षट्चत्वारिंशत्संख्यचतुःषष्ठ्यंशयुतैर्मितेन सूत्रेण कर्कटेन वा कोणमुभयपार्श्वेषु चिह्नानि कुर्यात्। चतुर्विंशत्यंगुले षट्चत्वारिंशद्यूकाधिकसप्तांगुलेनेति यावत्। ततः कोणचतुष्टये द्वयोर्द्वयोश्चिह्नयोरेकमेकमिति सूत्रचतुष्टये दत्ते बाह्यकोणानामंततश्चतुरस्रस्य च मार्जनादष्टास्रमिति।

अथ अष्टास्रकुंडे द्विहस्तादिषु चतुरस्रभुजा अष्टास्रभुजाश्च प्रदर्श्यंते—

| चतुरस्रभुजाः। | अष्टास्रभुजाः। |
|---|---|
| एकहस्ते चतुरस्रभुजाः २६।३। | एकहस्ते अष्टास्रभुजाः१०।७। |
| द्विहस्ते चतुरस्रभुजाः ३७।२।३। | द्विहस्ते अष्टास्रभु० १५।३।१। |
| त्रिहस्ते चतुरस्र० ४५।५।३।६।१। | त्रिह. अष्टास्र०१८।६।५४।३। |
| चतुर्हस्ते चतुरस्र०५२।६।०।०।०। | चतु.अष्टास्र०२१।६।०।०।६। |
| पंचहस्ते चतुर० ५८।७।६।४। | पंच. अष्टास्र०२४।२।४।७।२। |
| षड्ढस्ते चतुरस्र० ६४।४।६।६।४। | षड्ढस्ते अष्टास्र० २६।५।१। |
| सप्तहस्ते चतुर०६९।६।२।०।३। | सप्तहस्ते अष्टास्र.२८।६।१।४। |
| अष्टहस्ते चतुरस्र०७४।४।६।३।५। | अष्टहस्ते अष्टा. ३०।६।०।५।१ |
| नवहस्ते चतुरस्र०७९।१।०।२।४। | नवहस्ते अष्टा. ३२।५।०।१।१ |
| दशहस्ते चतुरस्र०८३।३।२।०।४। | दशहस्ते अष्टा.३४।२।१।२।२। |
| षोडशहस्ते चतु०१०५।४।०।०। | षोडशह.अष्टा०४३।४।०।१।४ |

एवं भुजादिपरिमाणं द्रष्टव्यम्।

एवमुक्तकुंडानां फलविशेषः। कामिके—ऐंद्र्यां स्तंभं चतुःकोणमग्नौ भागे भगाकृति। चंद्रार्धं मारणे याम्ये नैर्ऋते च त्रिकोणकं। वारुण्यां शांतिके वृत्तं षडस्त्र्युच्चाटनेऽनिले। उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्त्रिभुक्तिदं। इति। उत्तराग्रकुंडानां दक्षिणदिशि योनिः। प्रागग्राणां पश्चिमदिशि। ईशानपूर्वांतरस्थस्य नवमस्याप्येवं। नवमस्यापि कुंडस्य योनिर्दक्षदलस्थिता। इतिस्मरणात्। प्राक्कुंडवत्स्यान्नवमं च कुंडमिति प्राचामुक्तेश्च। तानि च मंडपभुवः प्रागुदक्सूत्राभ्यां कोणसूत्राभ्यां च विभक्तदिक्षु वेदितः पदमात्रं मेखलायोग्यस्थानं च त्यक्त्वा कार्याणि—

शक्रदिक्प्रभृति दिक्षु वेदितोऽथाष्टकुंड्यपि पदांतरे भवेत्। इति

प्राचामुक्तेः । अन्ये तु वेद्यास्त्रिंशांगुलं त्यक्त्वा कुंडमानमथापि वा । कुर्यात्कुंडं दिशि प्राच्यां चतुःकोणं सुलक्षणं । इत्याहुः । चतुःकोणग्रहणं प्रकृतित्वेन सर्वत्रावश्यकत्वार्थं ।

इयतां कुंडानामसंभवे पंचैव कार्याण्येकं वा कार्यं ।—नव पंचाथवैकं वा कर्तव्यं लक्षणान्वितं । इत्याम्नायरहस्यात् । पंचानां व्यवस्थोक्ता नारदीये—यत्रोपदिश्यते कुंडचतुष्कं तत्र कर्मणि । वेदास्रमर्धचंद्रं च वृत्तं पद्मनिभं तथा । कुर्यात्कुंडानि चत्वारि प्राच्यादिषु विचक्षणः । पंचमं कारयेत्कुंडमीशदिग्गोचरस्थितं । इति । नवापि चतुरस्राणि वृत्तानि वा कुर्यात् । —शस्तानि तानि वृत्तानि चतुरस्राणि वा सदा । इति सोमशंकूक्तेः[1] । एकपक्षेपि विकल्पः । क्रियासारे—चतुरस्रं भवेत्कुंडं वृत्तं कुंडमथापि वा । इति तच्च प्रत्यगुत्तरैशान्यन्यतरदेशे कार्यं । —एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद्बुधः । इति सोमशंकूक्तेः[1] । अथवा दिशि कुंडमुत्तरस्यां प्रविद्ध्याच्चतुरस्रमेकमेव । इति वचोंतराच्च । स्त्रीकर्तृकत्वेपि निमित्ते विशेषविधिर्लैङ्गे । स्त्रीणां कुंडानि विप्रेंद्र योन्याकाराणि कारयेत् । इति । स्त्रीकर्तृकतुलापुरुषदानमात्रविषयमेतदिति केचित् । अन्येतु वाक्यस्य बलवत्त्वात्स्त्र्यधिकारिके कुंडमात्रविषयमेतदित्याहुः ।

अथ काम्ये कर्मणि विनियुक्ते पंचास्रिसप्तास्री । प्रांचः । क्षेत्रे व्यासदलेऽर्कभागजुषि संवर्ध्यांशकांस्त्रीन्सहांकानां विंशलवेन मंडलमिति व्यासार्धतः साधयेत् । पंचाशद्वितयोनविस्तृतिमिता ज्याः पंच तत्रावहेज्ज्याषष्ठांशशराणि पंचगमयेद्धन्वानि पंचास्रि तत् । प्रकृतिचतुरस्रमध्यसूत्रार्धं द्वादशधा विभज्य नवांशानां विंशांशेन सहितैस्त्रिभिरंशैः संवर्ध्य तावन्मितेन व्यासार्धेन कृतवृत्तेयो व्यासस्तं पंचधा विभज्य द्वौ भागौ त्यक्त्वा शेषप्रमाणं ज्यासूत्रं वृत्तांतरतो योनिस्थाने कोणमकुर्वन्ज्यां[2] च निपात्य तदग्रात्तावदन्यदित्येवं पंचकृत्वो निपात्य पंचधनुषां मध्यभागाज्ज्याषष्ठांशसूत्रात्मकशरेण नीत्वा सशरधनुषां मार्जने कृतेऽवशिष्टज्याभिः पंचास्रि भवतीति । एतत्फलं विज्ञानललिते । धनुर्ज्याकृतिभिः पंचसूत्रैः पंचास्रि कुंडकं । होमे प्रशस्यते भूतशाकिनीग्रहनिग्रहे ।

---

१ सोमशंभूक्तेः पाठः. २ कुर्वन्यावन्निपात्य.

इति । तथा—क्षेत्रव्यासदलेऽगरामलवजुष्यश्वांशवृद्ध्या वितत्यर्धेन भ्रमयेद्दलेन वलयं तद्व्यासविंशो लवः । येषु स्याद्द्विशिखोनवाहनशरैरेव ज्यया तादृशश्चापान्सप्त मिथो मिलद्गुणमुखां सप्तास्त्रिणि त्वावहेत् । प्रकृतिचतुरस्रमध्यसूत्रार्धमंगरामैः षट्त्रिंशद्भिर्लवैरंशैर्विभज्य अश्वाः सप्त तावद्भिरंशैः संवर्ध्य तादृशवृद्धियुक्तेनानेनानंतरोक्तेन सूत्रार्धेन भ्रामितेन वलयवृत्तं कुर्यात् । ततो वृत्तव्याससूत्रं विंशतिधा विभज्य तादृशैकांशमितशराणि तादृशनवगुणितशरमितसूत्रात्मकसप्तज्यानां परस्परसंलग्नानां पातनेन सप्त धनूंषि तथा प्रदर्शयेत् । यथा योनिस्थाने कोणो न भवति । ततो ज्याभिन्नरेखामार्जने सप्तास्रि भवतीत्याशयः । एतत्कार्यं **विज्ञानललिते**—आभिचारोपशान्त्यर्थं होमे कुंडमिदं स्मृतं । इति । नच काम्यकर्मणि क्रियमाणयोरनयोर्दिङ्नियम इत्याप्याहुः । अकारीत्थमनंतेन सर्वकुंडनिरूपणं । सतां तोषाय तेन स्याद्वकारिः परितोषकृत् । इति ॥

कुंडनिर्माणानंतरं वक्तव्यं **लक्षहोमप्रकरणं स्कान्दे**—तस्य चोत्तरपूर्वेण स्थंडिलं हस्तमात्रकं । द्विवप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितं । तस्य कुंडस्य । स्थंडिलं ग्रहस्थापनार्था वेदिः । वप्रो मेखला—द्व्यंगुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः । अंगुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि । द्व्यंगुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः । नवग्रहमखे कुर्यादृत्विजश्चतुरः शुभान् । अथवा चैकमभ्यर्चेद्विधिना ब्रह्मणा सह । विधिना वरणमधुपर्कादिना । ग्रहाणां जन्मभूगोत्रादि प्रागेव लिखितमिति विस्तरभयान्नेह तत्प्रमाणमपि लिख्यते ।

शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ । प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः । प्राङ्मुखावूर्ध्वदृष्टी उदङ्मुखौ वामदृष्टी प्रत्यङ्मुखा अधोदृष्टयः । आदित्याभिमुखाः सर्वे इति मत्स्यपुराणविरोधादित्थं व्याख्येयमिति **हेमाद्रौ मदनरत्ने** च । यत्तु भानुं तु मंडलाकारमित्यादिना—ध्वजाकाराः केतवः स्युर्गेहेशं तत्स्वरूपिणं । इत्यंतेन मंडलाद्याकारविधानं । तत्स्थापयेच्छुक्लतंडुलैरित्येतस्मिन्पक्षे ज्ञातव्यमित्युक्तं **हेमाद्रौ** । अन्ये तु तत्तन्मंडलेषु ताम्रादिप्रतिमाः पूज्या इत्याहुः । **स्कान्दे**—सूर्यस्य चोत्तरे शंभुमुमां सोमस्य दक्षिणे । स्कंदमंगारकाच्चैव दक्षिणस्यां

निवेशयेत् । सौम्यात्पश्चिमतो विष्णुर्ब्रह्मा जीवस्य पूर्वतः । इंद्रमैंद्र्यां सिताद्विद्धि मंदादाग्नेयतो यमं । राहोः पूर्वोत्तरे कालं सर्वभूतभयावहं । केतोर्नैर्ऋतिदिग्भागे चित्रगुप्तं निधापयेत् । अग्निरापः क्षितिर्विष्णुरिंद्रश्चैंद्री प्रजापतिः । सर्पा ब्रह्म च निर्दिष्टा अधिदेवा यथाक्रमं । अधिदेवानामग्न्यादीनां स्थानमूचतुर्गोभिलवसिष्ठौ ।—ग्रहदेवतयोर्मध्ये अधिदेवान्निवेशयेत् । इति । संग्रहे तु—अधिदेवान्दक्षिणतो वामे प्रत्यधिदेवताः । स्थापनीयाः प्रयत्नेन व्याहृतिभिः पृथक् पृथक् । ग्रहदेवाधिदेवानां नैवेद्यं कुसुमानि च । ग्रहवच्चासनं दानं स्थापनं चानुपूर्वशः । संग्रहे—राहुमंददिनेशानामुत्तरस्यां यथाक्रमं । गणेशदुर्गावायूंश्च राहुकेत्वोश्च दक्षिणे । आकाशमश्विनौ चेति पंचैतान्स्थापयेत्ततः । इति । स्कान्दे तु—उत्तरे शनिसूर्याभ्यां गुरोः केतोश्च दक्षिणे । गणाधिपं प्रतिष्ठाप्य सर्वदेवनमस्कृतं । इति । अस्मिन्पक्षे तु विनायकस्य परितो दुर्गादीनामावाहनमित्युक्तं मदनरत्ने द्वात्रिंशद्देवतानंतरं गोभिलीये—द्वात्रिंशद्देवताः स्थाप्या दिशां पालाश्च दिग्गताः । इति । लक्षहोमे ततः प्राच्यां गरुडप्रतिमायां गरुडावाहनं कार्यं ।—सामनिःशेषदेहस्त्वं वाहनं परमेष्ठिनः । विषपापहरो नित्यमतः शांतिं प्रयच्छ मे । इति ।

ततः कार्यं मात्स्ये—प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितं । चूतपल्लवसंयुक्तं फलवस्त्रयुगान्वितं । पंचरत्नसमायुक्तं पंचभंगयुतं तथा । स्थापयेदव्रणं कुंभं वरुणं तत्र विन्यसेत् । स्कान्दे—दिवाकरकुजाभ्यां च दापयेद्रक्तचंदनं । चंदनं भार्गवे चैव सितवर्णं प्रदापयेत् । कुंकुमेन तु संयुक्तं चंदनं जीवसौम्ययोः । अगरुं चंदनं दद्याद्राहुकेत्वर्कजेषु च । ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमाहरेत् । रवेः कुंदरकं धूपं शशिने च घृताक्षताः । भौमे सर्जरसं चैव अगरुं च बुधे स्मृतं । सिह्लकं गुरवे दद्याच्छुक्रे बैल्वगिरिं तथा । गुग्गुलं मंदवारे तु लाक्षा राहोश्च केतवे । उद्दीप्यस्वेति मंत्रेण दीपं दद्यादतंद्रितः । गुडौदनं रवेर्दद्यात्सोमाय घृतपायसं । लोहिताय हविष्यान्नं बुधाय क्षीरषाष्टिकं । दध्योदनं गुरोर्दद्याच्छुक्राय च घृतौदनं । मिश्रितं तिलमाषैश्च नैवेद्यं तु शनैश्चरे । राहोर्माषौदनं दद्यात्केतो-

श्चित्रौदनं तथा । अर्कः पलाशः खदिर अपामार्गोथ पिप्पलः । उदुंबरः शमी दूर्वा कुशाश्च समिधः क्रमात् । आवाहनमंत्राश्च तत्तच्छाखिनां स्वशाखीयविनियोगानुसारेण ग्राह्याः । बह्वृचानां त्वपेक्षितमंत्राः प्रागेवोक्ता इति न विधिर्लिख्यते । **स्कान्दे**—अष्टोत्तरसहस्रं वा शतमष्टाधिकं तु वा । अष्टाविंशतिरष्टौ वा एकैकस्य तु होमयेत् । **मात्स्ये**—होतव्यं च समित्सर्पिश्चरुभक्षादिकं पुनः । मंत्रैर्दशाहुतीर्हुत्वा होमो व्याहृतिभिः पुनः । इति । दशसंख्या पूर्वसंख्याभिर्विकल्पते । भूराद्याभिस्तिसृभिर्व्याहृतिभिर्व्यस्ताभिराहुतित्रयं समस्ताभिरेकाहुतिरित्येवमावृत्त्या ग्रहमंत्राहुतिसंख्याव्यतिरेकेणोक्तायुताद्याहुतिसंख्यापूर्तिपर्यंतंव्याहृतिहोमः कार्य इति व्याख्यातं **मदनरत्ने** ।

**तत्रैव**—अथाभिषेको मंत्रेण वाद्यमंगलगीतकैः । पूर्णकुंभेन तेनैव होमांते प्रागुदङ्मुखैः । तेनैशानस्थापितेन । अव्यंगावयवैर्ब्रह्मन्हेमस्रग्दामभूषितैः । यजमानस्य कर्तव्यं चतुर्भिः स्नापनं द्विजैः । तन्मंत्रा वैदिकपौराणाः प्रागेव दर्शिताः । **तत्रैव**—ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः । सर्वौषधैः सर्वगंधैः स्नापितो वेदपुंगवैः । यजमानः सपत्नीक ऋत्विजश्च समाहिताः । दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः । सूर्याय कपिलां धेनुं दद्याच्छंखं तथैंदवे । रक्तं धुरंधरं दद्याद्भौमाय ककुदाधिकं । बुधाय जातरूपं तु गुरवे पीतवाससी । श्वेताश्वं दैत्यगुरवे कृष्णां गामर्कसूनवे । आयसं राहवे दद्यात्केतवे छागमुत्तमं । इति । सुवर्णेन समा कार्या यजमानेन दक्षिणा । सर्वेषामथवा गावो दातव्या हेमभूषिताः । सुवर्णमथवा दद्याद्गुरुर्वा येन तुष्यति । सर्वा दक्षिणाः सुवर्णेन सूर्यदक्षिणासमाः कार्याः । तेन सोमप्रीत्यर्थं शंखं दत्त्वा शंखमूल्यस्य धेनुमूल्यतुल्यतायै सुवर्णमपि देयं । अथवा प्रतिग्रहमेकैकां गां स्वर्णभूषितां दद्यात् । तत्र गवामंगेष्विति मंत्रः । अथवा सर्वेभ्यः सुवर्णमेव समानं देयं । गुरुः ऋत्विक् तदिच्छया नियमो वैकल्पिकेष्विति व्याख्यातं **मदनरत्ने** । सर्वेष्वपि पक्षेषु शय्यारत्नभूमयोऽधिका दक्षिणा इत्यपि तत्रैव । **दानमंत्राः**—कपिले सर्वदेवानां पूजनीयासि रोहिणि । सर्वदेवमयी यस्मादतः शांतिं प्रयच्छ मे । पुण्यस्त्वं शंख पुण्यानां मंगलानां च मंगलं । विष्णुना विधृतो नित्यमतः

शांतिं० । हिरण्यगर्भ० प्रयच्छ मे । पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभं । प्रदानात्तस्य मे विष्णुरतः शांतिं० । विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः । चंद्रार्कवाहनो नित्यमतः शांतिं० । यस्मात्त्वं पृथिवी सर्वा धेनो केशवसंनिभा । सर्वपापहरा नित्यमतः०। केशवसंनिभा कृष्णा । यस्माद्दुर्गाणि कर्माणि त्वदाधाराणि सर्वदा । हे लोह लांगलादीनि तस्माच्छांतिं० । यस्मात्त्वं सर्वयज्ञानामंगत्वेन व्यवस्थितः । यानं विभावसोर्नित्यमतः शांतिं० । गवामंगेषु तिष्ठंति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च । यस्मादशून्यं शयनं केशवस्य शिवस्य च । शय्या ममाप्यशून्यास्तु तस्माज्जन्मनिजन्मनि । यथा रत्नेषु सर्वेषु देवाः सर्वे प्रतिष्ठिताः । तथा शांतिं प्रयच्छंतु रत्नदानेन मे सुराः । वस्त्रकांचनरत्नाद्यैर्माल्यधूपानुलेपनैः । अनेन विधिना यस्तु ग्रहपूजां समाचरेत् । सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते । तथाच भूमिदानस्य कलां नार्हंति षोडशीं । दानान्यन्यानि शाम्यंति भूमिदानोद्भवं नहि । यस्तु पीडाकरो नित्यमल्पवित्तस्य चाग्रतः । तं तु यत्नेन संपूज्य शेषानप्यर्चयेन्नरः । ग्रहा गावो नरेंद्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः पूजयंत्येते निर्दहंत्यपमानिताः । तस्मान्न दक्षिणाहीनं कर्तव्यं भूतिमिच्छता । परमा दक्षिणा देया यस्मादेकोपि तुष्यति । **आश्वलायनः**—एतद्विधानं कृत्वा तु कृतकार्यः प्रजायते । यथाशक्ति ततो विप्रानृत्विजश्चेतरानपि । एकमेकाहुतेर्विप्रं होमेत्वन्नेन भोजयेत् । अन्यथा मध्यमश्चापि विप्रमेकं शताहुतेः । सहस्रस्याहुतेर्वैकं जघन्योपि प्रभोजयेत् । अन्यथा दहति क्षिप्रं तद्राष्ट्रं नात्र संशयः । इति । प्रयोगस्तु वृद्धकृतः प्रसिद्ध इति न लिख्यते ।

अथ माघशुक्लतृतीयायां दानविधिर्भविष्ये—माघे शुक्लतृतीयायां गुडस्य लवणस्य च । दानं श्रेयस्करं राजन्स्त्रीणां च पुरुषस्य च । गुडेन तृप्यते देवी लवणेन स्वयं प्रभुः । इति । चतुर्थीकार्यं कौर्मे—कुंभे शुक्लचतुर्थ्यां तु कुंदपुष्पैः सदाशिवं । संपूज्य यस्तु नक्ताशी संप्राप्नोति श्रियं नरः । इति । देवीपुराणेपि—माघमासे तु संप्राप्ते चतुर्थी कुंदसंज्ञिता ।

उपोष्या सा सुरश्रेष्ठ ततो राज्यं भविष्यति । इति । अत्र नक्तो-पवासयोर्विकल्पः ।

ततः पंचमी श्रीपंचमी तत्कार्यं निर्णयामृते पुराण-समुच्चये—माघमासे नृपश्रेष्ठ शुक्लायां पंचमीतिथौ । रतिकामौ तु संपूज्य कर्तव्यः सुमहोत्सवः । दानानि च प्रदेयानि तेन तुष्यति माधवः । इति । अयमुत्सवो वसंतोत्सवः ।

अथ सप्तमी तत्कार्यं निर्णयामृते—सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी । अरुणोदयवेलायां तत्र स्नानं महाफलं । इति । स्नानविधिश्च प्रयागसेतौ भविष्ये—कृत्वा पष्ठ्या-मेकभक्तं सप्तम्यां निश्चलं जलं । राञ्यंते चालयेथास्त्वं दत्त्वा शिरसि दीपकं । सौवर्णे राजते ताम्रे तथाऽलावुमयेऽथवा । तैलेन वर्तिर्दातव्या महारजनरंजिता । समाहितमना भूत्वा दत्त्वा शिरसि दीपकं । भास्करं हृदये ध्यात्वा इमं मंत्रमुदीर-येत् । नमस्ते रुद्ररूपाय रसानां पतये नमः । वरुणाय नम-स्तेस्तु हरिवास नमोस्तु ते । जले परिहरेद्दीपं ध्यात्वा संतर्प्य देवताः । इति । अर्घ्यदानविधिश्च तत्रैव—माघे मासि सिते पक्षे सप्तमी कोटिभास्करा । कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसं-पदः । इति मंत्रः—यद्यज्जन्मकृतं पापं मया जन्मसु सप्तसु । तन्मे रोगं च शोकं च माकरी हंतु सप्तमी । इति । संतर्प्येति नित्य-स्नानांगतर्पणानुवादः । ततश्च तर्पणांतं नित्यस्नानं कृत्वा शिरसि दीपं दत्त्वा भास्करं ध्यात्वा मंत्रमुच्चार्य निश्चलजले दीपमुत्सृज्य स्नात्वार्घ्यं पुष्पादियुक्तं मंत्रेण दद्यादिति प्रयोगः । अत्रारुणोद-यव्यापिनी सप्तमी ग्राह्या । दिनद्वये तथात्वे पूर्वैव ग्राह्या । एकभक्तस्य षष्ठ्यधिकरणत्वसंभवात् यत्तत्र वचनांतरविहितं कार्यं—रविवारेण युक्तायां सप्तम्यामुत्तरायणे । पुंनामधेयन-क्षत्रे पूजयेच्च दिवाकरं । षष्ठीसप्तमीसंयोगे वारश्चेदंशुमालिनः । योगोयं पद्मको नाम सहस्रार्कग्रहैः समः । इति । अर्कग्रहण-वद्दानादिकार्यमित्यर्थः । तस्मिन्कार्ये पूर्वाह्णव्यापिनी ग्राह्या । दिनद्वये तथात्वे पूर्वैव पूर्णत्वाद्युग्मवाक्याच्च ।

अष्टमीकृत्यं हेमाद्रौ पाद्मे—माघमासि सिताष्टम्यां स-लिले भीष्मतर्पणं । श्राद्धं च ये नराः कुर्युस्ते स्युः संतति-भागिनः । इति । तर्पणमंत्रः—वैय्याघ्रपद्यगोत्राय सांकृत्यप्र-

वराय च । गंगापुत्राय भीष्माय आजन्मब्रह्मचारिणे । अपुत्राय जलं दद्मि नमो भीष्माय वर्मणे । भीष्मः शांतनवो वीरः सत्यवादी जितेंद्रियः । आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियां । इति । ततः आचम्यार्घ्यमपि दद्यात् । वसूनामवताराय शंतनोरात्मजाय च । अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे । इति । जीवत्पितृकस्य नात्राधिकारः । —सपितुः पितृकृत्येषु नाधिकारः कथंचन । इति निषेधात् । पितृशब्दस्यात्र जनकवाचित्वासंभवेन संस्कारवाचित्वात् । पुत्रपौत्रोचितां क्रियामित्यनेन पितृकृत्यत्वप्राकट्याच्च ।

अथ नवमीकृत्यं भविष्ये—माघमासे तु या शुक्ला नवमी लोकपूजिता । महानंदेति सा प्रोक्ता सदानंदकरी नृणां । तस्यां स्नानं तथा दानं जपो होम उपोषणं । सर्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैः । इति ।

अथ द्वादश्यांकार्यं ब्राह्मे—माघे तु शुक्लद्वादश्यां यतो हि भगवान्पुरा । तिलानुत्पादयामास तपः कृत्वा सुदारुणं । तिलानामाधिपत्ये तु विष्णुस्तत्र कृतः सुरैः । तस्यामुपोषितः स्नातस्तिलैस्तस्यां यजेद्धरिं । तिलतैलेन दीपाश्च देया देवगृहेषु च । निवेदयेत्तिलानेव होतव्याश्च तथा तिलाः । तिलान्दत्त्वा च विप्रेभ्यो भक्षयेच्च तिलानिह । इति । तिलैरिति मध्यमणिन्यायेन स्नानयजनाभ्यां संबध्यते । तिलैः स्नात्वा तिलैः पूजयेदित्यर्थः ।

अथ पौर्णमासीकृत्यं भविष्ये—एवं माघावसाने तु देयं भोज्यमवारितं । भोजयेद्द्विजदंपत्यं भूषयेद्वस्त्रभूषणैः । कंबलाजिनरत्नानि वासांसि विविधानि च । चोलकानि च देयानि प्रच्छादनपटांस्तथा । उपानहौ तथा गुल्फं मोचकौ पापमोचकौ । तथान्यद्दयितं किंचिन्माघस्नाने प्रदीयते । तन्माघस्नायिनां देवविप्राणां भूतिमिच्छतां । स्वल्पदानेपि दातव्यं माधवः प्रीयतामिति । विष्णुस्मृतौ—सवित्रे प्रसवित्रे च परं धाम जले मम । त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा । दिवाकर जगन्नाथ प्रभाकर नमोस्तु ते । परिपूर्णं करिष्येऽहं माघस्नानं तवाज्ञया । अहन्यहनि दातव्या तिलाः शर्करयान्विताः । माघावसाने सुभगे षड्रसं भोजनं तथा । सूर्यो मे प्रीयतां देवो विष्णु-

मूर्तिर्निरंजनः । दंपत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते । त्रिंशत्तु मोदका देयाः शर्करातिलसंयुताः । भागत्रयं तिलानां तु चतुर्थः शर्करान्वितः । मरीचैर्मिश्रणाक्तानि नारंगानि च दापयेत् । सवितः प्रसवस्त्वं हि परं धाम जले मम । त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा । दिवाकर जगन्नाथ प्रभाकर नमोस्तु ते । परिपूर्णं कुरुष्वेदं माघस्नानमुषःपते । इति । अत्र माघस्नानोद्यापनसंकल्पमंत्रौ सवित्रइत्यादिश्लोकौ । ब्राह्मणभोजने मंत्रः—सूर्यो मे प्रीयतां देवो विष्णुमूर्तिर्निरंजनः । इति । त्रिंशन्मोदकाद्यात्मकवायनदाने सवितरित्यादिश्लोकद्वयं । कंबलादिदाने तु माधवः प्रीयतामिति मंत्रव्यवस्था बोध्या । नारदीये—एवं माघप्लवी याति भित्त्वा देवं दिवाकरं । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः । इति ।

अथ शिवरात्रिः । तत्स्वरूपं शिवरहस्ये—तत्प्रभृत्यथ देवर्षे माघकृष्णचतुर्दशी । शिवरात्रिः समाख्याता प्रियेयं त्रिपुरद्विषः । इति । अत्र शिवस्य रात्रिरिति योगे सत्यसत्यपि च शिवपूजायामष्टम्यादितिथ्यंतरविधौ न तत्र प्रयोगातिप्रसंगभयेन माघकृष्णचतुर्दश्यां रूढिकल्पनं शिवरात्रिशब्दस्य शुक्तं पंकजशब्दस्येव पक्षे ।—माघकृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलिंगतयोद्भूतः कोटिसूर्यसमप्रभः । इति नारदीयवचनावगतसंबंधविशेषस्य—माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर । अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवाकरे । लिंगेषु च समस्तेषु स्थावरेषु चरेषु च । संक्रमिष्याम्यसंदिग्धं वर्षपापविशुद्धये । इति नागरखंडवचनावगतसंबंधविशेषस्य वा समासांतर्गतषष्ठ्यर्थत्वाश्रयणेन तिथ्यंतरे प्रसंगाभावात्, ईदृशषष्ठ्यर्थांगीकरणेन शिवस्य रात्रिर्यस्मिन्निति मानांतरानुसारिणो व्यधिकरणबहुव्रीहेरपि अग्निहोत्रपद इवेहापि संभवाद्रूतेपि न लक्षणा ।

व्रतं चेदमुपवासपूजाजागरात्मककर्मत्रयसंकल्परूपं—माघकृष्णचतुर्दश्यां कर्तव्यं व्रतमुत्तमं । इति हेमाद्र्युदाहृतवचनव्युत्पत्तौ व्रतशब्दश्रवणात् तस्य च संकल्पवाचित्वात् । अन्यथा मिताक्षराप्रभृतिस्मार्तनिबंधेषु नारायणीयवृत्तिप्रभृतिषु श्रौतग्रंथेषु च स्नातकव्रतचातुर्मास्यव्रतप्रकरणादौ भावगोचरविधिष्वपि संकल्पलक्षणोक्तेरनौचित्यप्रसंगात् । संकल्पस्य त्रितयविष-

यत्वे च मानं नागरखंडे—उपवासप्रभावेन बलादपि च जागरात्। शिवरात्रे तथा तस्यां लिंगस्यापि प्रपूजया। अक्षयाँल्लभते भोगान् शिवसायुज्यमाप्नुयात्। इति। अत्र शिवरात्रिशब्देन व्रतमुच्यते। षष्ठ्यर्थसंबंधो विषयतारूपः। ततश्च शिवरात्रिसंबंधिभिरुपवासजागरपूजनैरक्षयान्भोगाँल्लभत इति वाक्यार्थः। विषयसत्यत्वे च सति यथार्थसंकल्पस्य फलजनकत्वात् विषयाणां फलप्रयोजकत्वोक्तिरविरुद्धा। तथा सह्याद्रिखंडे विध्युन्नायकः परकृतिरूपोऽर्थवादः पठ्यते—स्वयं च लिंगमभ्यर्च्य सोपवासः सजागरः। अजानन्नपि निष्पापो निषादो गणतां गतः। इति। अत्रापि स्वयं चेति पदेन स्वातंत्र्यरूपकर्तृत्वकथनात्संकल्पपूर्वकर्तुरेव स्वतंत्रत्वात्। क्रियात्रयविशिष्टसंकल्पस्यैव फलजनकत्वमभिप्रेतं। अन्यथा स्वयं चेत्यस्य वैयर्थ्यापत्तेः, तदर्थंप्रति क्रियात्रयस्य विशेषणत्वोक्तेर्निस्तात्पर्यकत्वापत्तेश्च, नात्रार्चनस्य विशेषणत्वमसिद्धमिति भ्रमितव्यं। क्त्वाप्रत्ययसमानार्थेन ल्यपा पूर्वक्रियायामन्वयबोधस्यावश्याभ्युपेयत्वात्। अतएवोपवासजागरयोरेव कर्तृसंस्कारत्वशंकापरिहारौ व्युत्पत्तिमद्भिरुपेक्षणीयौ। त्रितयासमर्थंप्रति त्वेकसंकल्पपूर्वकं तावन्मात्रेणापि व्रतसिद्धिरित्यप्युक्तं स्कान्दे—अथवा शिवरात्रिं च पूजाजागरणैर्नयेत्। अखंडितव्रतो यो हि शिवरात्रिमुपोषयेत्। सर्वान्कामानवाप्नोति शिवेन सह मोदते। कश्चित्पुण्यविशेषेण व्रतहीनोपि यः पुमान्। जागरं कुरुते तत्र स रुद्रसमतां व्रजेत्। इति। आद्यवाक्ये शिवरात्रिशब्दो न तिथिपरः। तदवच्छेदेन पूजाजागरणविध्यभावेन तैस्तन्नयनस्यासंभवात्। किंतु व्रतपरः। तस्य विषयनिर्वाह्यत्वेन विषयभूतैर्नयनोक्तिसंभवात्। मध्यमवाक्ये कंठरवेणैव व्रतशब्दस्मरणादुपवासमात्रसंकल्पविधिः। तृतीयवाक्ये तु पुण्यविशेषशब्देन जागरमात्रसंकल्पः। व्रतहीनशब्देन च त्रितयहीनसंकल्पत्वमुक्तमिति बोध्यं। अतश्च मुख्यानुकल्पगोचरसकलवाक्यपर्यालोचनया संकल्परूपव्रतस्यैव प्राधान्यप्रतीतेस्तद्विषयेषु प्राधान्योक्तिः प्राचामदूरविप्रकर्षेण व्याख्येया। अस्य व्रतस्य काम्यत्वेपि नित्यत्वमविरुद्धं। अग्निहोत्रवत्काम्यत्वसाधकं प्रागुक्तफलश्रवणमस्ति-चान्यत् स्कान्दे—मम भक्तस्तु यो देवि शिवरात्रिमुपोषकः।

गणत्वमक्षयं दिव्यमक्षयं शिवशासनं । सर्वान्भुक्त्वा महाभोगानन्ते मोक्षमवाप्नुयात् । इति । ईशानसंहितायां—द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तु वा । इति काम्यत्वाभिप्रायेणैवोक्तं । नित्यत्वसाधकं वीप्साश्रवणं नित्यपदमकरणे प्रत्यवायश्च । माधवीये—वर्षे वर्षे महादेवि नरो नारी पतिव्रता । शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूजयेत् । इति । परात्परतरं नास्ति शिवरात्रिः परात्परे । न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरं । जंतुर्जन्मसहस्रेषु भ्रमते नात्र संशयः । इति । अत्रैव रविवारादियोगेऽतिप्राशस्त्यमुक्तं मदनरत्ने स्कान्दे—माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् । भौमो वापि भवेद्देवि कर्तव्यं व्रतमुत्तमं । शिवयोगस्य योगो वै तद्भवेदुत्तमोत्तमं । त्रयोदशी कलाप्येका मध्ये चैव चतुर्दशी । अंते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत् । इति । अत्र तिथिद्वैधेऽर्धरात्रव्याप्त्या ग्राह्यत्वनिर्णयः । अर्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी । तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती । अर्धरात्रयुता यत्र माघकृष्णचतुर्दशी । शिवरात्रव्रती योत्र सोश्वमेधफलं लभेत् । इति नारदीयवचनात् । अत्र यदा परदिन एवार्धरात्रव्याप्तिः दिनद्वयेप्यर्धरात्रव्याप्त्यभावो वा तदा परैवेत्यसंदिग्धं । उपवासादिकर्मकालव्याप्त्यैव निर्णयात् ।—माघासिते भूतदिनं हि राजन्नुपैति योगं यदि पंचदश्यां । जयाप्रयुक्तां नतु जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य । इति वचसः ईदृशविषयत्वाच्च पूर्वार्धयोगकथनेनोत्तरार्धे प्रकृष्टयोगकथनेनार्धरात्रेपि त्रयोदश्यनुवृत्तिप्रतीतेः । द्वितीयपक्षे—प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रियैः । रात्रौ जागरणं यस्मात्कुर्यात्तस्यामुपोषणं । इति । निर्णयामृतोदाहृतवाक्यविहितप्रदोषव्याप्तिलाभाच्च । नच प्रदोषव्याप्तेरेव निर्णायकतयान्यनिरपेक्षात्र विधीयते इति निर्णयामृतोक्तं साधु । अर्धरात्रव्याप्तिविधायकैरनन्यशेषैरनेकशास्त्रैर्विरोधात् । उत्तरार्धेनोत्तरस्यां जागरणोपवासकालव्याप्तिरूपगुणाधिक्यसूचनाच्च । जन्माष्टम्यामिव प्रादुर्भावस्य पूजायाश्चेह निशीथे श्रवणवत् प्रदोषश्रवणाभावाच्च । यद्यप्येतेभ्यः पूर्वोक्तहेतुभ्यो दिनद्वये निशीथव्याप्तावपि परैव ग्राह्येति प्राप्नोति, स्वीकृतं च तथा माधवेन तथापि नैतत्साध्विति हेमाद्रिमदनरत्नादयः । इह

पूर्वविद्धाविधायकानि बहूनि वचनानि दृश्यंते।—कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिश्चतुर्दशी। एताः पूर्वयुताः कार्यास्तिथ्यंते पारणं भवेत्। जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च। पूर्वविद्धैव कर्तव्या तिथिभांते च पारणं। पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनं। माघफाल्गुनयोर्मध्ये यावच्छिवचतुर्दशी। अनंगेन समायुक्ता कर्तव्या सा सदा तिथिः। इत्यादीनि। तथामायुक्तानिषेधोपि स्कांदे—महतामपि पापानां दृष्टा वै निष्कृतिः पुरा। न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं त्विमां। इति। यथा च नैतेषां परत्रैव निशीथव्याप्तिरिति पक्षे प्रवृत्तिः। नियमविधित्वे संभवत्यपूर्वविधित्वस्यान्याय्यत्वात्। तथा पूर्वत्रैव निशीथव्याप्तिरिति पक्षे प्रवृत्तिः। विधित्वे संभवति शास्त्रांतरानुवादत्वेन वैयर्थ्यस्यान्याय्यत्वात्। दिनद्वये निशीथव्याप्तौ हि यथा प्रदोषव्याप्त्याधिक्येन—दिनरात्रिव्रतं यच्च एकमेकतिथौ स्थितं। तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती। इतिवचःसहकृतेन संकल्पकालव्याप्तिसहकृतेन च परा प्राप्यते। तथा—उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम्। कृतैः सुकृतलक्षैश्च लभ्यते वाथवा नवा। ब्रह्मांडोदरमध्ये तु यानि तीर्थानि संति वै। संस्थितानि भवंतीह भूतायां पारणे कृते। इति सार्थवादकाम्यगुणविधिना कृष्णपक्षेष्टमी चैवेति शास्त्रसहकृतेन—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः। इतिवचःसहकृतेन च पूर्वा प्राप्नोति इत्यनियमे प्राप्ते पूर्वविद्धाविधीनां परविद्धानिषेधस्य च नियमविधित्वं लभ्यते। युक्तं चैतत्। उपांशु यजुषेत्यस्य निगदभिन्नाग्नीषोमीयपशुप्राग्भाविपदार्थानां यजुर्विषयतया संकोचसाधकन्यायात्। यदा तु पूर्वदिने निशीथापरपर्यायार्धरात्रैकदेशव्याप्तिः परदिने च संपूर्णतद्व्याप्तिस्तदा परैव ग्राह्या। पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी। व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः। इतीशानसंहितावचनात्। एकदेशव्याप्तेर्दृश्यत इत्येतावतैवालाभे कृत्स्नव्याप्तिप्रापकत्वेनैव व्याप्तेतिपदसाफल्यात्।

अथ शिवरात्रिव्रतप्रयोगः। त्रयोदश्यां कृतैकभक्तश्चतुर्दश्यां कृतनित्यक्रियो धृतत्रिपुंड्ररुद्राक्षो गृहीत्वोदुंबरं पात्रमित्युक्तविधिना मंत्रेण प्रातः संकल्पं कुर्यात्।—विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया। पूजितोपि महादेवो न स्यात्तस्य

फलप्रदः। इति लैंगवचनात्। मंत्रः—शिवरात्रिव्रतं ह्येतत्करिष्येहं महाफलं। निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते। चतुर्दश्यां निराहारो भूत्वा शंभो परेहनि। भोक्ष्येहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर। इति सर्ववर्णानामेतौ मंत्रौ। ब्राह्मणस्तु रात्रीं प्रपद्येजननीमित्यृचावपि पठित्वा जलमुत्सृजेत्। गृह्णीयाद्ब्राह्मणस्त्वेवं नियमं वेदविद्विभो। इति मदनरत्ने स्कान्दवचनात्। ततः कर्तव्यं तत्रैव—शिवमिष्ट्वा गुहं[1] दृष्ट्वा स्वाचांतः शुचिरात्मवान्। संकल्प्यैवं व्रतं कुर्यात्पूर्वेद्युः[2] प्रातरेव च। ततोऽह्नस्तुर्यभागे तु स्वगायत्र्या ह्यतंद्रितः। स्नानं कृष्णतिलैः कुर्याद्गृहे वाथ जलाशये। रम्यं निशामुखे गच्छेच्छिवस्यायतनं व्रती। इति। ततः प्रक्षालितपादः स्वाचांतः देशकालौ संकीर्त्य शिवरात्रौ प्रथमयामपूजां करिष्य इति संकल्प्य भूतशुद्धिप्राणप्रतिष्ठामानसपूजाः कृत्वा आवाहनाद्यलंकारान्तोपचारान्वैदिकमंत्रेण पौराणेन वा नाममंत्रेण वा कुर्यात्। तत्र ॐ ह्रौं ईशानाय नमः इति प्रथमयामे दुग्धेन स्नपनं। ॐ ह्रौं अघोरायनम इति द्वितीययामे दध्ना। ॐ ह्रौं वामदेवायनम इति तृतीययामे घृतेन। ॐ ह्रौं सद्योजातायनम इति चतुर्थे मधुना। ततः शतरुद्रियेण त्रयाणां वर्णानामभिषेकः। चतुर्थस्य तु पौराणस्तोत्रादिना। यद्वा प्रतियाममभ्यंगपंचामृतशुद्धोदकाभिषेकाः कार्याः। तत्परिमाणं हेमाद्रौ शिवधर्मे महापूजाप्रकरणे—पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात्। ईशादिमंत्रैः[3] संस्नाप्य शिवलोकमवाप्नुयात्। यः पुमांस्तिलतैलेन करयंत्रोद्भवेन च। शिवाभिषेकं कुरुते स शैवं पदमाप्नुयात्। स्नानं पलशतं ज्ञेयमभ्यंगः पंचविंशतिः। तैलशोधनार्थस्नानीयजलपरिमाणमेतत्।—पलानां द्वे सहस्रे तु महास्नानं प्रकीर्तितं। तत्रैव पुराणांतरे—पंचविंशत्पलेनैव अभ्यंगं कारयेदथ। शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन वै। पलानां द्विसहस्रेण महास्नानं विधीयते। तावता मधुना चैव दध्ना चैव पुनः पुनः। तावतैव हि क्षीरेण गव्येनैव भवेत्ततः। भूयः सार्धसहस्रेण पलानामैक्षवेण तु। रसेन कारयेत्स्नानं भक्त्या चोष्णांबुना ततः। पुनः शीतांबुना दत्त्वा वस्त्रपूतेन मंत्रवित्।

---

१ गुरुं दृष्ट्वा. २ पारणादिनात्. ३ ईशानादिमंत्रैः.

स्नापयेद्भक्तितो भूपो गंधपात्रस्थितेन तु । अभिषेकांते तर्पणं कुर्यात् । भवंदेवं तर्पयामि । शर्वं देवं त० । ईशानं देवं त० । पशुपतिंदेवं त० । रुद्रंदेवं त० । उग्रंदेवं त० । भीमंदेवं त० । महांतंदेवं त० । तत आचमनादि । अनुलेपनादौ विशेषो हेमाद्रौ—विधिना स्नाप्य चानेन गोरोचनया लिंपेत् । कृष्णा-कुंकुमकर्पूरचंदनागरुयुक्तया । कृष्णा कस्तूरी । लेपयित्वा ततो लिंगमापीडेनघनं शुभं । नीलोत्पलसहस्रेण मालां बद्ध्वा प्रपूजयेत् । अलाभे तु सहस्राणामर्धार्धेनैव पूजयेत् । उत्पलानाम-लाभे तु पत्रैश्च श्रीतरोर्यजेत् । श्रीतरोर्बिल्वस्य । अर्धद्वयेपि मालां बद्ध्वेत्यनुषंगः । अनुलेपनपरिमाणं लैंगे—अनुलिंपेच्च तत्सर्वं पंचविंशत्पलेन वा । इति । आद्ययामे शिवायनम इति गंधादिदानं । द्वितीये शंकरायनम इति । तृतीये महेश्वरायनम इति । चतुर्थे रुद्रायनम इति । धत्तूरकुसुमैर्बिल्वपत्रैश्च पूजन-मतिप्रशस्तं ।—धत्तूरकैश्च यो लिंगं सकृत्पूजयते नरः । स गोलक्षफलं प्राप्य शिवलोके महीयते । इति भविष्यादिव-चोभ्यः । नैवेद्यपरिमाणं हेमाद्रौ—दशद्रोणैस्तु नैवेद्यम-ष्टद्रोणैरथापि वा । शतद्रोणसमं पुण्यमाढकेन विधीयते । वित्तहीनस्य मर्त्यस्य नात्र कार्या विचारणा । द्रोणादिस्वरूपं स्मृत्यर्थसारे ।—शाणं हस्ततलं मानं कुडवं प्रस्थमाढकं । द्रोणं च खारिका चेति पूर्वपूर्वाच्चतुर्गुणं । इति । नैवेद्यांते—बाण-रावणचंडीशनंदीभृंगीरिटादयः । सदाशिवप्रसादोयं सर्वे गृह्णंतु शांभवाः । चंडभागं दत्त्वा करोद्वर्तनं दत्त्वाग्नौ शेषान्नेन भवा-द्युक्तनामभिश्चतुर्थ्यंतैरष्टाहुतीर्हुत्वा तदसंभवे पूर्ववदद्भिस्तर्पणं कुर्यात् । इदंफलमिति फलं समर्प्य नीराज्य भवाद्युक्तमंत्रैस्तत्स-मसंख्यान्पुष्पांजलीन्दत्त्वा तांबूलमुखवासौ दद्यात् । तल्लक्षणं हेमाद्रौ रत्नकोशे—[1]महापिप्पलपत्राणि क्रमुकस्य फलानि च । शुक्तिक्षारेण संयुक्तं तांबूलमिति संज्ञितं । श्वेतपत्रं च चूर्णं च क्रमु-कस्य फलानि च । नारिकेलफलोपेतं मातुलिंगसमायुतं । एलाकं-कोलकर्पूरैर्मुखवासं प्रचक्षते । एतेषामप्यलाभे तु तत्तद्द्रव्यं स्मरे-द्बुधः । इति । ततः—चंद्रादित्यौ च धरणिर्विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यतां । इति पुनर्नीराज-

१ नागवल्लीपत्राणि.

येत् । तत्र विशेषो हेमाद्रौ—शालिपिष्टोद्भवैः सिद्धैर्घृतपूर्णैः समुज्ज्वलैः । ततो नीराजनं दीपैः षड्विंशत्या तु कारयेत् । सर्वपैर्दधियुक्तैश्च दूर्वागोरोचनाक्षतैः । शातकुंभं ततः पद्ममष्टपत्रं सकर्णिकं । ध्यात्वा निवेदयेन्मूर्ध्नि लिंगस्य कुसुमैः सह । सूक्ष्मवस्त्रयुगं पीतं श्वेतं वा पद्मसंनिभं । चामरं दर्पणं चैव दीपवर्तिं प्रदापयेत् । वितानकध्वजौ दद्यात्किंकिणीस्तवकान्वितौ । अथाष्टभिः क्षितिः पीड्या अंगैर्भक्त्या तु दंडवत् । तत उच्चैः पठेत्स्तोत्रं शांकरं च शिवप्रियं । प्रदक्षिणं ततो गच्छेच्छनैर्निर्माल्यवर्जितः । प्रदक्षिणासमये निर्माल्यलंघनं न कुर्यादित्यर्थः ।

तत्रैव कालोत्तरे तु शिवरात्रिं प्रकृत्य—रात्रौ विशेषपूजा तु महास्नपनसंमिता । महादीपद्वयं देयं शतमष्टोत्तरं पुनः । इति । महास्नपनेति महापूजाप्रकरणोक्तस्नपनादिधर्मोपेतेत्यर्थः । पूजारंभप्रभृति संतत एको दीपः अपरो धूपानंतरः । शतमष्टोत्तरं दीपास्तु पूजांते समर्पणीया इति वोध्यं । प्रतियामं पूजासमर्पणं कार्यं । तच्च—नमो यज्ञ जगन्नाथ नमस्त्रिभुवनेश्वर । पूजां गृह्ण मया दत्तां महेश प्रथमे पदे । इति । प्रथमे पदे प्रथमयामे । पूर्वे नंदीमहाकालौ गणभृंगी च दक्षिणे । वृषस्कंदौ पश्चिमे च देशकालौ तथोत्तरे । गंगा च यमुना पार्श्वे पूजां गृह्ण नमोस्तु ते । इति द्वितीये । नमोऽव्यक्ताय सूक्ष्माय नमस्ते त्रिपुरांतक । पूजां गृहाण देवेश यथाशक्त्युपपादितां । इति तृतीये । बद्धोहं विविधैः पाशैः संसारभयवंधनैः । पतितं मोहजाले मां त्वं समुद्धर शंकर । इति चतुर्थे । ततः प्रतियामं पुष्पचंदनाक्षतदूर्वांकुशफलयुतमर्घ्यं दद्यात् । नमः शिवाय शांताय सर्वपापहराय च । शिवरात्रौ मया दत्तं गृहाणार्घ्यमिदं प्रभो । इति प्रथमे । मया कृतान्यनेकानि पातकानि च शंकर । गृहाणार्घ्यमुमाकांत शिवरात्रौ प्रसीद मे । इति द्वितीये । दुःखदारिद्र्यभावैश्च दग्धोहं पार्वतीपते । मां त्वं त्राहि महादेव गृहाणार्घ्यं नमोस्तुते । इति तृतीये । किं न जानासि देवेश तावद्भक्तिं प्रयच्छ मे । स्वपादाग्रतले देव दास्यं देहि जगत्पते । इति चतुर्थे । सर्वांते प्रार्थयेत् । नित्यं नैमित्तिकं काम्यं यत्कृतं तु मया शिव । तत्सर्वं परमेशान मया तुभ्यं समर्पितं । इति । यद्वा प्रतियामं वक्ष्यमाणमंत्रैरर्घ्यदानं कुर्यात् । शिवरात्रिव्रतं

देव पूजाजपपरायणः । करोमि विधिवद्दत्तं गृहाणार्घ्यं नमोस्तुते । इति प्रथमयामे । नमः शिवाय शांताय सर्वपापहराय च । शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह । इति द्वितीये । दुःखदारिद्र्यशोकेन दग्धोहं पार्वतीपते । शिवरात्रौ ददाम्यर्घ्यमुमाकांत गृहाण मे । इति तृतीये । मया कृतान्यनेकानि पापानि हर शंकर । शिवरात्रौ ददाम्यर्घ्यमुमाकांत गृहाण मे । इति चतुर्थे । प्रहरचतुष्टयेपि तन्मंत्रजपतत्कथाश्रवणादिभिर्जागरणं कार्यं । तद्ध्यानं तज्जपः पूजा तत्कथाश्रवणादि च । उपवासकृतां ह्येते गुणाः प्रोक्ता मनीषिभिः । इति वचनात् ।

पार्थिवलिंगे शिवपूजाचिकीर्षायां तद्विधिरुच्यते । देवीपुराणे—मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च । स्नपनं पूजनं चैव विसर्जनमतः परं । हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् । शिवः पशुपतिश्चैव महादेव इति क्रमात् । इति । ततश्च मृदाहरणादयः सप्त पदार्थाः प्रणवादिचतुर्थ्यंतैर्नमोंतैर्हरादिनामभिः कर्तव्याः । अन्ये तूपचाराः पंचाक्षरेण षडक्षरेण वा मंत्रेण कार्याः ।—गोभूहिरण्यवस्त्रादिवलिपुष्पनिवेदने । ज्ञेयो नमःशिवायेति मंत्रः सर्वार्थसाधकः । सर्वमंत्राधिकश्चायमोंकाराद्यः(द्यः) षडक्षरः। इति नंदिपुराणात् । अत्रायमनुष्ठानक्रमः । ॐ अद्यामुकफलकामः शिवपूजां करिष्य इति संकल्प्य । ॐ हरायनम इति मृदमाहृत्य । केशकीटाद्यपनयनेन शोधितायां तस्यां शुचिजलप्रक्षेपेण ॐ महेश्वरायनम इति संघट्टनं कृत्वा तेन पिंडेन—अक्षादल्पपरीमाणं न लिंगं कुत्रचिन्नरः । कुर्वीतांगुष्ठतो ह्रस्वं न कदाचित्समाचरेत् । इतिवचनादशीतिरक्तिकामितादक्षादधिकपरिमाणमंगुलोच्चं लिंगं कृत्वा । ॐ शूलपाणये नमः । शिव इह सुप्रतिष्ठितो भवेति प्रतिष्ठाप्य । ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नं । पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रं । इति ध्यात्वा । ॐ पिनाकधृषे नमः शिव इहागच्छेति आवाहनं कृत्वा । ॐ पशुपतयेनम इति शुद्धोदकेन संस्नाप्यान्यांश्च सर्वान्स्नपनपूर्वभाविनस्तदुत्तरभाविनश्च पाद्यार्घ्यवस्त्रगंधादीनुपचारान्नमः शिवायेति मंत्रेण कुर्यात् । अस्याः

पूजायाः शिवरात्रिपूजया सहानुष्ठाने यथासंभवं पंचामृताभिषेकाद्यपि कार्यं । ततो—मूर्तयोष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः । आग्नेय्यंताः प्रपूज्यास्तु वेद्यां लिंगे शिवं यजेत् । इति भविष्यपुराणोक्तमष्टमूर्तिपूजनं कुर्यात् । तच्च न प्राचीमग्रतः शंभोरिति रुद्रयामले निषेधात्—देवाग्रे स्वस्य चाप्यग्रे प्राची प्रोक्ता गुरुक्रमैः । इत्यागमिकीं प्राचीमनादृत्य प्राच्यैशान्यादिक्रमेणाग्नेयीपर्यंतं वामावर्तेन कुर्यात् । तद्यथा । ॐ शर्वायक्षितिमूर्तये नम इति प्राच्यां । ॐ भवाय जलमूर्तयेनम इति ईशान्यां । ॐ रुद्रायाग्निमूर्तये नम इत्युदीच्यां । ॐ उग्रायवायुमूर्तये नम इति वायव्यां । ॐ भीमायाकाशमूर्तयेनम इति प्रतीच्यां । ॐ पशुपतये यजमानमूर्तये नम इति नैर्ऋत्यां । ॐ महादेवाय सोममूर्तये नम इति दक्षिणस्यां । ॐ ईशानाय सूर्यमूर्तये नम इति आग्नेय्यां । इति । ततः स्तोत्रादिना स्तुत्वा ।—नम ओंकाररूपाय रूपातीताय ते नमः । त्वं माता सर्वलोकानां त्वमेव जगतः पिता । त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियस्त्वं पितामहः । नमस्ते भगवन्रुद्र भास्करामिततेजसे । पार्थिवानां च लिंगानां यन्मया पूजनं कृतं । तेन श्रीभगवान्रुद्रो वांछितार्थं प्रयच्छतु । इति स्तुत्वा महादेवाय नम इति विसर्जयेत् ।

अथ लिंगोद्यापनं लैंगे रुद्रयामले च—अथातः संप्रवक्ष्यामि प्रतिष्ठां लैंगिकस्य च । यस्य येन विधानेन व्रतं संपूर्णतामियात् । सहस्रं वाथ वा लक्षं पूजयित्वा यथाविधि । समाप्ते वापि वा कोटौ विनिर्माय महेश्वरं । स्थापयित्वा तु कलशे संपूज्यार्घादिभिः क्रमात् । गंधैर्माल्यैस्तथा धूपैर्नैवेद्यैर्विविधैस्तथा । हिरण्यं गां च वासांसि शिवाय विनिवेदयेत् । दंडवत्प्रणतो भूत्वा स्तुत्वा चैव विशेषतः । एकाग्रप्रणतो भूत्वा मंत्रमेनमुदीरयेत् । अंगहीनं क्रियाहीनं विधिहीनं महेश्वर । पूजितोसि मया देव तत्क्षमस्व मया कृतं । यच्चाप्युपहतैः पुष्पैरशस्तैर्भावदूषितैः । केशकीटापविद्धैश्च पूजितोसि मया प्रभो । अन्यथासक्तचित्तेन क्रियाहीनेन वा प्रभो । मनोवाक्कायदुष्टेन पूजितोसि त्रिलोचन । यदुपाहृतपात्रेण कृतमर्घ्यादिकं मया । तामसेन च भावेन तत्क्षमस्व मम प्रभो । मंत्रेणाक्षरहीनेन पुष्पेण विकलेन च । पूजितोसि मया देव तत्सर्वं क्षम्यतां मम । व्रतं

संपूर्णतां यातु फलं चाक्षय्यमस्तु मे । एवं स्तुत्वा नमस्कृत्य विसृज्य च महेश्वरं । नैवेद्यादि च तत्सर्वं भस्मांगाय निवेदयेत् । सहस्रं पायसं हुत्वा शतमष्टोत्तरं तु वा । ब्राह्मणान्भोजयित्वाथ दद्यात्तेभ्यश्च दक्षिणां । यथाशक्त्या धेनुवस्त्रहिरण्यं व्रतदक्षिणा ।

अथान्यः प्रकारः । नारद उवाच । कथमुद्यापनं चास्य किंप्रकारं महाफलं । कथयाशु महादेव लोकानामुपकारकं । ईश्वर उवाच । यैः शिवं समुपास्यैव लिंगे प्राप्तो मनोरथः । तत्प्रमाणं तु सौवर्णं यथाशक्त्याथवा सुधीः । रौप्यं ताम्रमथापि स्यादष्टम्यां च यथोक्ततः । चतुर्दश्यामभद्रायां सोमे चाथ प्रयोजयेत् । मंडले लिंगतोभद्रे कलशं तत्र विन्यसेत् । उपोष्य प्रथमे चाह्नि संपूज्य परमेश्वरं । गीतवादित्रनिर्घोषैर्जागरं तत्र कारयेत् । स्तोत्रैश्च विविधैः सूक्तैः पूजयेत्परमेश्वरं । चतुर्दशी दर्शयुता अष्टमी नवमीयुता । पारणं तत्र कर्तव्यं रौद्रयुक्ते पुनर्वसौ । पंचैकदश वा द्वाभ्यामधिका विंशतिः परा । चत्वारिंशच्चतुर्भिश्च ब्राह्मणान्भोजयेत्ततः । आचार्यं प्रथमं पूज्य ब्राह्मणांश्च ततः परं । गणेशं च दिगीशांश्च पूजयेत्तु विधानतः । वस्त्रैश्च दक्षिणाभिश्च पूजयेच्छिवतत्परान् । मृत्युंजयेन मंत्रेण अग्नौ हुत्वाथ पायसं । दशांशतस्तर्पणं स्यात्तद्दशांशेन मार्जनं । लिंगं तत्पूजया युक्तं ब्राह्मणाय निवेदयेत् । शिवशक्त्यात्मकं यस्माज्जगदेतच्चराचरं । तस्मादेतेन मे सर्वं करोतु भगवान्शिवः । कैलासवासी गौरीशो भगवान्भगनेत्रभित् । चराचरात्मको लिंगरूपी दिशतु वांछितं । ततश्च दक्षिणां दत्वा नमस्कुर्यात्पुनःपुनः । सोद्यापनं व्रतं कृत्वा प्राप्नुयात्परमं पदं । शिवलोकं समासाद्य तत्रैव रमते ध्रुवं । मृत्युंजयेति मंत्रेण अग्नौ हुत्वा स्वशक्तितः । इति क्वचित्पाठः । तदनुसरणे सहस्रसंख्यः शतसंख्यो वा होमः कार्यः । तद्दशांशेन तर्पणादि । इति पार्थिवलिंगोद्यापनं ।

अथ **शिवनिर्माल्यग्रहणाग्रहणविचारः** । स्कान्दे । शिवउवाच । अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलं । शालग्रामशिलालग्नं सर्वं याति पवित्रतां । नैवेद्यं मे नरो भुक्त्वा शुध्यै चांद्रायणं चरेत् । इति । एतदपवादः । **शिवनारदसंवादे**—

वाणलिंगे स्वयंभूते चंद्रकान्ते हृदि स्थिते । चांद्रायणसमं ज्ञेय शंभोर्नैवेद्यभक्षणं । इति । तथा **काशीखंडे**—जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः । इत्युपक्रम्य—स्नापयित्वा विधानेन यो लिंगस्नपनोदकं । त्रिः पिबेत्त्रिविधं पापं तस्येहाशु विनश्यति । लिंगस्नपनवार्भिर्यः कुर्यान्मूर्धाभिषेचनं । गंगास्नानफलं तस्य जायतेऽत्र विपाप्मनः । इति । अत्र च भक्षणप्रतिप्रसवः शिवदीक्षावद्विषयः ।—ज्योतिर्लिंगं विना लिंगं यः पूजयति सत्तमः । तस्य नैवेद्यनिर्माल्यभक्षणात्तप्तकृच्छ्रकं । शालग्रामोद्भवे लिंगे वाणलिंगे स्वयंभुवि । रसलिंगे तथाऽर्षे च सुरसिद्धप्रतिष्ठिते । हृदये चंद्रकांते च स्वर्णरूप्यादिनिर्मिते । शिवदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते । इति **भविष्योक्तेः । ज्योतिर्निबंधे**—नैवेद्यादिस्वीकारस्तु दीक्षारहितैरपि कार्यः । ज्योतिर्लिंगं विनेत्युक्तवचनात् । लिंगांतरेषु तीर्थोदकवंदनमात्रं च श्रद्धावच्छिवभक्तमात्राधिकारिकं ।—श्रद्धावतां स्वभक्तानामुपसर्गे महत्यपि । नोपायांतरमस्त्येव विनेशचरणोदकं । ये व्याधयो हि दुःसाध्या वहिरंतःशरीरिणां । श्रद्धयेशोदकस्पर्शात्ते नश्यंत्येव नान्यथा । इति **रत्नेश्वरोपाख्याने** स्कन्दवचनात् ।

अथ लिंगविशेषप्रयुक्तः फलविशेषः । **हेमाद्रौ लक्षणसमुच्चये**—आयुष्यं हीरजं ज्ञेयं रोगहृन्मौक्तिकोद्भवं । सुखकृत्पुष्परागोत्थं वैडूर्यं शत्रुदर्पहृत् । पद्मरागं च लक्ष्मीदमैंद्रनीलं यशःप्रदं । लिंगं मारकतं पुष्ट्यै स्फाटिकं सर्वकामदं । इति । **शिवनारदसंवादे**—पितॄणां मुक्तये पूज्यं लिंगं रजतसंभवं । हेमजं सत्यलोकस्य प्राप्तये पूजयेत्पुमान् । पूजयेत्ताम्रजं लिंगं पुष्टिकामो हि मानवः । तुष्टिकामस्तु सततं लिंगं पित्तलसंभवं । कीर्तिकामोऽर्चयेन्नित्यं लिंगं कांस्यसमुद्भवं । शत्रुमारणकामस्तु लिंगं लोहमयं सदा । तथा सीसमयं लिंगमायुःकामोऽर्चयेत्सदा । **तथा**—ब्रह्मस्वपरिहारार्थं सौवर्णं लिंगमर्चयेत् । **लक्षणसमुच्चये**—स्थिरलक्ष्मीप्रदं हैमं राजतं चैव राज्यकृत् । प्रजावृद्धिकरं राज्ञं ताम्रमायुःप्रवर्धनं । इति । **लैंगे**—श्रीप्रदं दारुजं लिंगं शिलाजं सर्वसिद्धिदं । इति । **कालोत्तरे**—गंधपुष्पमयं लिंगं तथान्नादिविनिर्मितं । भस्मगोमयजं चाथ गुडान्नादिविनिर्मितं । सर्वकामप्रदं पुंसां लिंगं तात्कालिकं स्मृतं ।

इति । **लक्षणसमुच्चये**—गांधं सौभाग्यदं पौष्पं भुक्तिमुक्तिप्रदायकं । प्रभुमानप्रदं शार्ङ्गं सैन्यदं नागदंतजं । शालिपिष्टोद्भवं पुष्ट्यै षाष्टिकं शुद्धिवर्धनं । गोधूमं वातरोगघ्नं यवजं बलसौख्यदं । रिपुभेदकरं मौद्गं स्त्रीदं स्यान्माषसंभवं । तैलपिष्टं करोत्यर्थं सैद्धार्थं भयनाशनं । तैलमिश्रितपिष्टोद्भवं लिंगं क्षुधां करोतीत्यर्थः । सुखकृन्नावनीतं च गोमयं रोगनाशनं । अन्नमायुःप्रदं ज्ञेयं गौडं प्रीतिविवर्धनं । नानाफलोद्भवं लिंगं नानाकामप्रदायकं । गुणदं सैकतं भूरि सौभाग्याय च लावणं । उच्चाटने तु पाशव्यं मौलं शत्रुक्षयावहं । वंशांकुरसमुद्भूतं वंशवृद्धिप्रदं भवेत् । पुरक्षोभकरं पौरं रामठं चाग्निकारकं । इति । पौरं गौग्गुलं । रामठं हिंगुमयं । **ज्ञानरत्नावल्यां**—पूज्यं गंधमयं लिंगं त्रिकालं स्वसुखावधि । चंद्रेण चंदनेनाथ कुंकुमेन सुगंधिना । चतुःसमेन वा कार्यं लघुना केवलेन वा । चंद्रः कर्पूरः । लघुरगरुः । चतुःसमलक्षणं **गारुडे**—कस्तूरिकाया द्वौ भागौ चत्वारश्चंदनस्य च । कुंकुमस्य त्रयश्चैव शशिनश्च चतुःसमः । इति । **शिवनारदसंवादे**—तत्रापि पार्थिवं लिंगं क्षिप्रं सिद्धिप्रदं भवेत् । पार्थिवेन तु लिंगेन बहवः सिद्धिमागताः । कृते रत्नमयं लिंगं त्रेतायां हेमसंभवं । द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौयुगे । श्रेष्ठमित्यनुषंगः । ततश्च कलावपि न लिंगांतरनिषेधः ।

अथ **पार्थिवलिंगेषु संख्याभेदेन** फलविशेषः—मृल्लिंगं पार्थिवं लक्षं भुक्तिमुक्तिकरं परं । देशं कालं फलं ज्ञात्वा कुर्याल्लिंगं फलप्रदं । विद्यार्थी लिंगसाहस्रं धनार्थी च तदर्धकं । पुत्रार्थी सार्धसाहस्रं कन्यार्थी च शतत्रयं । विद्वान्लिंगायुतं कुर्यात्सर्वपापहरं परं । राज्यार्थी शतसाहस्रं कांतार्थी शतपंचकं । मोक्षार्थी कोटिगुणितं भूकामश्च सहस्रकं । रूपार्थी त्रिसहस्रं तु तीर्थार्थी द्विसहस्रकं । सुहृत्कामः सहस्रं तु वस्त्रार्थी शतमष्टकं । उच्चाटनपरश्चैव सहस्रं च यथोक्ततः । स्तंभने च सहस्रं तु जारणे च तदर्धकं । निगडोन्मुक्तिकामस्य सहस्रं सार्धमीरितं । महाराजभये पंचशतं चौरादिसंकटे । शतद्वयं तु डाकिन्या भये पंचशतं परं । दारिद्र्ये पंचसाहस्रमयुतं सर्वकामदं । इति ।

पूर्वोक्तमहासंख्यापूर्त्यर्थं प्रत्यहं कियल्लिंगं विधेयमित्यपेक्षाया-माह ।—एकं पापहरं प्रोक्तं द्विलिंगं चार्थसिद्धिदं । त्रिलिंगं सर्वकामानां कारणं परमीरितं । उत्तरोत्तरमेव स्यात्पूर्वोक्तग-णनाधिकं । इति । अन्यत्रापि—लिंगानामयुतं कृत्वा महा-राजभयं हरेत् । सहस्रमेकं लिंगानां व्याधीनां तु भयं हरेत् । सहस्राणि तथा पंच निगडान्मुक्तये नृणां । कारागृहविमुक्त्यर्थ-मयुतं कारयेद्बुधः । डाकिन्यादिभये सप्तसहस्रं कारयेत्तथा । सहस्राणां हि पंचाशदपुत्रोपि च कारयेत् । लिंगानामयुतेनैव कन्यकासंततिं लभेत् । एकलिंगार्चनेनैव अतुलां श्रियमाप्नुयात् । लक्षमेकं तु लिंगानां यः करोति नरो भुवि । शिव एव भवे-त्सोपि नात्र कार्या विचारणा । इति ।

एवं पूजाशिवकथाश्रवणादिना रात्रिमतिवाह्य प्रातःस्नानादि नित्यकर्मांते यथाशक्ति शिवं संपूज्य शैवमंत्रजपं शैवमंत्रेणाष्टो-त्तरशतं चरुहोमं कृत्वा शिवार्पणं व्रतं कुर्यात् ।—अविघ्नेन व्रतं देव त्वत्प्रसादात्समापितं । क्षमस्व जगतां नाथ त्रैलोक्या-धिपते हर । यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितं । त्वत्प्रसा-दान्महादेव व्रतमद्य समर्पितं । प्रसन्नो भव मे श्रीमन्सद्गतिं प्रतिपाद्यतां । त्वदालोकनमात्रेण पवित्रोस्मि न संशयः । इति । ततो यथाशक्ति शिवप्रीत्यर्थं ब्राह्मणान्संपूज्य भोजयित्वा तेभ्यस्तांबूलदक्षिणे श्वेतकुंभांश्च दत्त्वा व्रतसंपूर्णतां वाचयित्वा पारणं स्वजनैः सह कुर्यात् ।—उषःस्नानं जपो होमो भोज-येच्छिववत्सलान् । श्वेतान्कुंभान्प्रदद्याच्च यथाशक्त्या च दक्षिणां । वाचयेच्छिवशास्त्रं च स गच्छेच्छिवमंदिरं । इति **मदनरत्ने** स्कान्दवचनात् । **पारणेमंत्रः**—संसारक्लेशदग्धस्य व्रतेना-नेन शंकर । प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव । इति । तच्च दिवा तिथ्यंते चेत्संभवति तदा दिवैव कार्यं तादृशविष-याशयं चेदं **स्कांद**वचः—कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिश्च-तुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यंते पारणं भवेत् । इति । अस्तपर्यंतं चतुर्दशीसत्वेन तादृशपारणाया असंभवेपि तिथेर्या-मत्रयोर्ध्वगामित्वे अशक्तश्चेत्प्रातस्तिथिमध्ये पारणं कार्यं । सात्व-स्तमयपर्यंतं व्यापिनी चेत्परेहनि । दिवैव पारणं कुर्यात्पारणं नैव दोषभाक् । इति **कालादर्शो**दाहृतवचनात् ।—यामत्र-

चोर्ध्वगामिन्यां प्रातरेव हि पारणं । इति माधवोक्तेश्च । न चेदं निर्मूलमिति वक्तुमुचितं । माधवोदाहृतत्वेनैव समूलत्व-निर्णयात् । नहि निबंधांतरोदाहृतत्वान्माधवोदाहृतत्वे प्रामाण्यसाधकत्वे काचिदूनतास्ति । तादृशपारणविषयं च मदनरत्नाद्युदाहृतमपरं स्कान्दवचः ।—उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणं । कृतैः सुकृतलक्षैश्च लभ्यते वाथवा नवा । ब्रह्मा स्वयं चतुर्वक्त्रैः पंचवक्त्रैस्तथा ह्यहं । सिक्थे सिक्थे फलं तस्य वक्तुं शक्तो न पार्वति । ब्रह्मांडोदरमध्ये तु यानि तीर्थानि संति वै । संस्थितानि भवंतीह भूतायां पारणे कृते । इति ।

अथ कथा हेमाद्रौ ब्रह्मांडे । सूतउवाच । कैलासशिखरासीनं देवदेवं जगद्गुरुं । पंचवक्त्रं दशभुजं त्रिनेत्रं शूलपाणिनं ॥ १ ॥ कपालखट्वांगधरं खड्गखेटकधारिणं । कपालधारिणं भीमं वरदं चाभयप्रदं ॥ २ ॥ कपालमालाधारिणमित्यर्थः । भस्मांगव्यालशोभाढ्यं शशांककृतशेखरं नीलजीमूतसंकाशं सूर्यकोटिसमप्रभं ॥ ३ ॥ दृष्ट्वा तं देवदेवेशं प्रहस्योत्फुल्ललोचनं । देवी पप्रच्छ भर्तारं शंकरं लोकशंकरं ॥ ४ ॥ देव्युवाच । कथयस्व प्रसादेन यद्गोप्यं व्रतमुत्तमं । यत्कृत्वा देवदेवेश पापहानिः प्रजायते ॥ ५ ॥ श्रुतानि देवदेवेश व्रतानि तिथिनिर्णयाः । दानधर्माण्यनेकानि त्वत्तस्तीर्थान्यनेकशः ॥ ६ ॥ नास्ति मे निश्चयो देव भ्रामिताऽहं पुनःपुनः । तस्माद्वदस्व देवेश एकं निःसंशयं व्रतं ॥ ७ ॥ भुक्तिमुक्तिप्रदं चापि सर्वपापक्षयं परं । तदहं श्रोतुमिच्छामि कथयस्व मम प्रभो ॥ ८ ॥ ईश्वर उवाच । शृणु देवि परं गुह्यं व्रतानामुत्तमं व्रतं । कस्यचिन्न मयाख्यातं भुक्तिमुक्तिप्रदं नृणां ॥ ९ ॥ यस्य श्रवणमात्रेण पातकं विलयं व्रजेत् । तदहं कीर्तयिष्यामि शृणुष्वैकमनाः प्रिये ॥ १० ॥ माघांते बहुले पक्षे सदा कार्या चतुर्दशी । शिवरात्रिस्तु सा ज्ञेया सर्वयज्ञोत्तमोत्तमा ॥ ११ ॥ दानैर्यज्ञैस्तपोभिश्च व्रतैर्बहुविधैरपि । तीर्थैश्चापि न तत्पुण्यं यत्पुण्यं शिवरात्रितः ॥ १२ ॥ शिवरात्रिसमं नास्ति व्रतं पापविनाशकृत् । अज्ञानाज्ज्ञानतो वापि कृत्वा मुक्तिमवाप्नुयात् ॥ १३ ॥ सर्वमांगल्यकरणी सर्वाशुभविनाशिनी । मृतास्ते नरकं यांति यैरेषा न कृता कलौ ॥ १४ ॥ सर्वमंगलशीला च स्वर्गलोकप्रदायिनी । भुक्तिमुक्ति-

प्रदा चैषा सत्यं सत्यं वरानने ॥ १५ ॥ पार्वत्युवाच । कथं यमपुराध्वानं त्यक्त्वा दिवं व्रजेन्नरः । एतन्मे महदाश्चर्यं प्रत्ययं कुरु शंकर ॥ १६ ॥ शिव उवाच । शृणु देवि यथावृत्तां कथां पौराणिकीं शुभां । यमशासनहर्त्रीं च शिवशासनदायिनीं ॥ १७ ॥ कश्चिदासीत्पुरा कल्पे निषादश्चामिषप्रियः । प्रत्यंतदेशवासी च भूधरासन्नभूचरः ॥ १८ ॥ सीमांते स सदा तिष्ठन्कुटुंबपरिपालकः । तन्वा पीनो धनुर्धारी श्यामांगः कृष्णकंचुकः ॥ १९ ॥ बद्धगोधांगुलित्राणः सदैव मृगयारतः । एवंविधो निषादोसौ चतुर्दश्यां दिनोदये ॥ २० ॥ स्वद्रव्यार्थे वणिग्भिः स देवताग्रे निरुंधितः । तेनापि देवता दृष्टा जनानां वचनं श्रुतं ॥ २१ ॥ उपवासरतानां च जल्पतां शिवशिवेति च । दिनांते स तदा मुक्तः प्रातर्द्रव्यं प्रदीयतां ॥ २२ ॥ ततोऽसौ धनुरादाय दक्षिणेन गतः स्वयं । जगाम च वनोद्देशं जनहासं चकारह ॥ २३ ॥ शिवः शिवः किमेतद्वै वदंति नगरे जनाः । वनेचरान्निरीक्षन्स चतुर्दिक्षु ततस्ततः ॥ २४ ॥ पदं च पदमार्गं च मृगसूकरचित्तलान् । धावतस्तस्य सर्वासु दिक्षु वै लब्धचेतसः ॥ २५ ॥ वनं सपर्वतं सर्वं भ्रमतस्तु दिनं गतं । अप्राप्ता एव गच्छंति सकला मृगजातयः ॥ २६ ॥ स स्वल्पमपि चापश्यन्न मृगं नच चित्तलं । निराशो लुब्धको यावत्तावदस्तं गतो रविः ॥ २७ ॥ चिंतयित्वा जलोपांते जागरं मृगघातनं । स विधास्याम्यहं रात्रौ निश्चितं मम जीवितं ॥ २८ ॥ तडागसंनिधौ गत्वा तत्तीरे जालमध्यतः । निलयं कर्तुमारब्धमात्मार्थे गुप्तिकारणं ॥ २९ ॥ जालमध्ये महालिंगमस्ति स्वायंभुवं शुभं । ततो विल्वस्य पत्राणि त्रोटित्वा मार्गशोधने ॥ ३० ॥ क्षिप्तानि दक्षिणे भागे गतानि लिंगमूर्धनि । न दिवा भोजनं जातं संरुद्धस्य प्रभावतः ॥ ३१ ॥ मृगान्निरीक्षतस्तस्य निद्रानाशोऽप्यजायत । जालमध्यगतस्यापि प्रथमः प्रहरो गतः ॥ ३२ ॥ ततो जलार्थमायाता हरिणी गर्भसंयुता । निरीक्षंती दिशः सर्वा उत्फुल्लनयना भृशं ॥ ३३ ॥ लुब्धकेनाथ सा दृष्टा बाणगोचरतां गता । कृतं च बाणसंधानं तेनैकाग्रेण चेतसा ॥ ३४ ॥ त्रोटित्वा बिल्वपत्राणि प्रक्षिप्तानि शिवोपरि । स्मरन् शिवेति वादं च शीतेन परिपीडितः ॥ ३५ ॥

बिल्वमध्ये स्थितो दृष्टो हरिण्या लुब्धकस्तदा। लुब्धकः स स्व-रूपेण कृतांत इव तिष्ठति ॥ ३६ ॥ दृष्ट्वा च तस्य संधानं यम-दंष्ट्रासमप्रभं । सा मृगी दिव्यया वाचा लुब्धकं वाक्यमब्रवीत् ॥ ३७ ॥ मृग्युवाच । स्थिरो भव महाव्याध सर्वजीवनिकृंतन। किमर्थं मारयसि मां कथयस्व मम प्रभो ॥३८॥ शिव उवाच। तस्यास्तद्वचनं श्रुत्वा लुब्धकः प्राह तां मृगीं । सभ्रातृकं कुटुंबं मे क्षुधया पीड्यते भृशं ॥ ३९ ॥ धनं च मद्गृहे नास्ति तेन त्वां हन्मि शोभने। शिव उवाच । जातपूजाप्रभावेण जागरोपो-षणेन च ॥ ४० ॥ चतुर्थांशेन पापेन विमुक्तो लुब्धकस्तदा । विस्मयोत्फुल्लनयनो मृगीवाक्येन पार्वति ॥ ४१ ॥ उवाच वच-नं तां वै धर्मयुक्तमसंशयं । मया हि पातिता देवि उत्तमाधमम-ध्यमाः ॥ ४२ ॥ न श्रुता त्वीदृशी वाणी श्वापदानां कथंचन । कस्मिन्देशे त्वमुत्पन्ना कस्मात्स्थानादिहागता ॥ ४३ ॥ कथय त्वं प्रयत्नेन परं कौतूहलं प्रिये । मृग्युवाच । शृणु त्वं लुब्ध-कश्रेष्ठ कथयामि तवाखिलं ॥ ४४ ॥ आसं पूर्वमहं रंभा स्वर्गे शक्रस्य चाप्सराः । अनेकरूपलावण्यसौभाग्येन च गर्विता ॥ ४५ ॥ सौभाग्यमदसंयुक्तो दानवो मदगर्वितः । मयैव स कृतो भर्ता हिरण्याक्षो महासुरः ॥ ४६ ॥ तेन सार्धं चिरं कालं मया भुक्तं यथेप्सितं। अन्यस्मिन्दिवसे व्याध क्रीडितं मेऽसुरेण च॥४७॥ गतो बहुतरः कालो महादेवस्य कोपकृत्। प्रत्यहं प्रेक्षणं नृत्यं शंकर-स्याग्रतश्चरे ॥४८॥ यावद्गच्छाम्यहं तत्र तावद्रुद्रोऽब्रवीत्क्रुधा। हे रंभे क्व गतासि त्वं केन वा संगता शुभे ॥४९॥ सौभाग्यमदगर्वेण नागता मम मंदिरं । सत्यं कथय शीघ्रं त्वं नोचेच्छापं ददामि ते ॥ ५० ॥ शापभीत्या मया तत्र सत्यमुक्तं शिवाग्रतः। शृणु देव प्रवक्ष्यामि शापानुग्रहकारक ॥ ५१ ॥ मम भर्ता समः प्राणैर्दानवो बलदर्पितः। तेन सार्धं मया देव क्रीडितं निजमंदिरे ॥५२॥ तस्य भोगेन लुब्धाहं शयनादेव नोत्थिता । तेनाहं नागता शीघ्रं सृष्टिसंहारकारक ॥ ५३ ॥ रुद्रस्तद्वचनं श्रुत्वा सकोपो वाक्य-मब्रवीत् । मृगः कामातुरो नित्यं हिरण्याक्षो भविष्यति ॥ ५४ ॥ त्वं मृगी तस्य भार्या वै भविष्यसि न संशयः । यस्मात्त्यक्त्वा सर्वदेवान्दानवं भोक्तुमिच्छसि ॥ ५५ ॥ तस्मात्तु निर्जले देशे तृणाहारा भविष्यसि । द्वादशाब्दानि भद्रं ते भावी श्वापदसं-

गमः ॥ ५६ ॥ परस्परस्य शोकेन शापांतोपि भविष्यति । कृतस्त्वनुग्रहो व्याध शंकरेण यदृच्छया ॥ ५७ ॥ यदा कश्चिद्व्याधवरो मम सान्निध्यमाश्रितः । बाणाग्रे तस्य संप्राप्ता पूर्वजन्म स्मरिष्यसि ॥ ५८ ॥ शंकरस्य तदा रूपं दृष्ट्वा मोक्षमवाप्स्यसि। शंकरो न मया दृष्टो वसत्यस्मिन्महावने ॥ ५९ ॥ तेन दुःखमतिप्राप्ता मेदोमांसविवर्जिता । गर्भाक्रांता विशेषेण अवध्या चापि निश्चितं ॥ ६० ॥ सकुटुंबस्य ते नूनं भोजनं न भविष्यति । आयास्यति मृगी त्वन्या मार्गेणानेन लुब्धक ॥ ६१ ॥ रूपयौवनसंपन्ना बहुमांसामदोद्धता । भोजनं सकुटुंबस्य तथा नूनं भविष्यति ॥ ६२ ॥ अथवान्यो मृगो व्याध तव बाणस्य गोचरे । प्रभाते ते क्षुधार्तस्य निश्चयादागमिष्यति ॥ ६३ ॥ गर्भं त्यक्त्वा पुनः प्रातर्बालानादिश्य बंधुषु । शपथैरागमिष्यामि संदिश्य च सखीजनं ॥ ६४ ॥ तस्यास्तद्वचनं श्रुत्वा व्याधो विस्मयमागतः । क्षणमेकं तथा स्थित्वा मृगीं वचनमब्रवीत् ॥ ६५ ॥ नागमिष्यति यद्यन्यो मृगस्त्वमपि गच्छसि । क्षुधया पीडितोऽहं वै कुटुंबं च भविष्यति ॥ ६६ ॥ प्रातस्त्वया मम गृहमागंतव्यं यदा भवेत् । व्रज त्वं शपथान्कृत्वा यथा मे निश्चयो भवेत् ॥ ६७ ॥ पृथिवी वायुरादित्यः सत्ये तिष्ठंति देवताः । पालनीयं ततः सत्यं लोकद्वयमभीप्सुभिः ॥ ६८ ॥ तस्य तद्वचनं श्रुत्वा सा गर्भार्ता तदा मृगी । चक्रे सत्यं प्रतिज्ञानं व्याधस्याग्रे पुनः पुनः ॥ ६९ ॥ मृग्युवाच । द्विजो भूत्वा तु यो व्याध वेदभ्रष्टोऽभिजायते । स्वाध्यायसंध्यारहितः सत्यशौचविवर्जितः ॥ ७० ॥ अविक्रयाणां विक्रेता अयाज्यानां च याजकः । तेन पापेन लिप्यामि नागच्छामि पुनर्यदि ॥ ७१ ॥ धूर्ते दुष्टे शठे यच्च यत्पापं मानकूटके। वेदविक्रयके वापि शावसूतकभोजने ॥ ७२ ॥ वंचके च विशीले च परदाररते तथा । मृतशय्याग्राहके च मातापित्रोरपोषके ॥ ७३ ॥ दानं दातुं प्रसक्तश्च प्रार्थितं न ददाति यः । तेन पापेन लिप्यामि नागच्छामि पुनर्यदि ॥ ७४ ॥ स्वदत्तां परदत्तां वा यो हरेत्सागरांबरां । देवद्रव्यं गुरुद्रव्यं ब्रह्मद्रव्यं तथा हरेत् । तेन पापेन लिप्यामि० ॥ ७५ ॥ देवतां स्वामिनं मित्रं आत्मानं बालमेव च । गां च विप्रं गुरुं नारीं व्यापादयति दुर्मतिः । तेन पापेन०

॥ ७६ ॥ दीपं दीपेन यः कुर्यात् पादं पादेन धावयेत् । तेन पापेन० ॥ ७७ ॥ दानस्य कीर्तने पापं यत्पापं दांभिके तथा । असंजितेंद्रिये नित्यं परदोषोपकीर्तने ॥ ७८ ॥ कृतघ्ने च कदर्ये च नास्तिके वेदनिंदके । सदाचारविहीने च परपीडाप्रदायके ॥ ७९ ॥ परपैशुन्यसक्तेपि कन्याविक्रयकारके । परापवादसंदुष्टे सर्वधर्मबहिष्कृते ॥ ८० ॥ वृषलीपतौ च यत्पापं मातापित्रोरपोषके । हैतुके बकवृत्तौ च श्राद्धतीर्थविवर्जिते ॥ ८१ ॥ एतेषां पातकं मह्यं नागच्छामि पुनर्यदि । यत्पापं ब्रह्महत्यायां पितृमातृवधे तथा ॥ ८२ ॥ यत्पापं लुब्धकानां तु गोचोरविषघातिनां । तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥ ८३ ॥ द्विभार्यः पुरुषो यस्तु समदृष्ट्या न पश्यति । यस्त्रीन्हले बलीवर्दान्विषमान्वाहरेन्नरः । तेन पापेन० ॥ ८४ ॥ सकृद्दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति । तेन पापेन० ॥८५॥ यस्य संग्रहणी भार्या ब्राह्मणी च विशेषतः । एकाकी मिष्टमश्नाति भार्यापुत्रविवर्जितः ॥ ८६ ॥ आत्मजां गुणसपन्नां समाने सदृशे वरे । न ददाति च यः कन्यां नरो वै ज्ञानदुर्बलः । तेन पापेन लि० ॥ ८७ ॥ मृगीवाक्यं ततः श्रुत्वा लुब्धको हृष्टमानसः । मुमोच हरिणीं सद्यो मुक्त्वा बाणं धनुस्ततः ॥ ८८ ॥ तस्या उक्तिप्रभावेण लिंगार्चाकरणेन च । तत्पातकचतुर्थांशान्मुक्तोऽसौ तत्क्षणाद्ध्रुवं ॥ ८९ ॥ द्वितीये प्रहरे प्राप्ते अर्धरात्रे वरानने । स्मरन्शिवशिवं वाक्यं न निद्रां लब्धवांस्तथा ॥ ९० ॥ द्वितीयाथ ततः प्राप्ता कामार्ता मृगसुंदरी । संत्रस्ता भयवित्रस्ता पतिमन्वेषती तदा ॥ ९१ ॥ जालमध्ये स्थितेनाथ दृष्टा सा लुब्धकेन च ॥ ९२ ॥ पुनर्बिल्वस्य पत्राणि त्रोटितानि करेण तु । क्षिप्तानि दक्षिणे भागे लिंगस्योपरि पार्वति ॥ ९३ ॥ तस्या वधार्थं व्याधोपि बाणं धनुषि संदधे । हर्षपूर्णेन मनसा कुर्तुंबार्थं भृशं प्रिये ॥ ९४ ॥ निरीक्ष्य लुब्धको यावत्तस्यां बाणं विमुंचति । तावन्मृगी सुसंत्रस्ता व्याधं वचनमब्रवीत् ॥ ९५ ॥ धनुर्धर शृणु व्याध सर्वसत्त्वभयंकर । देहि मे वचनं ह्येकं पश्चान्मां विनिपातय ॥ ९६ ॥ आगता हरिणी चैका मार्गेणानेन लुब्धक । दृष्टा त्वयाथवा नैव सत्यं कथय सुव्रत ॥ ९७ ॥ तद्वचो लुब्धकः श्रुत्वा विस्मितस्तत्क्षणादभूत् । तस्यास्तु यादृशी

वाणी अमुष्या अपि तादृशी ॥ ९८ ॥ सैवेयमागता नूनं प्रतिज्ञापालनाय वै । अथवान्या समायाता या तया कथिता पुरा ॥ ९९ ॥ एवं संचिंत्य मनसा लुब्धको वाक्यमब्रवीत् । शृणु त्वं मृगि मे वाक्यं गता सा निजमंदिरं ॥ १०० ॥ त्वं दत्ता मम नूनं हि सा भवेत्सत्यवागपि । अहोरात्रं कृतं कष्टं कुटुंबार्थं मृगांगने ॥ १०१ ॥ अधुना त्वां हनिष्यामि देवतास्मरणं कुरु । व्याधोक्तं वचनं श्रुत्वा हरिणी दुःखिता भृशं ॥ १०२ ॥ व्याधं प्राह रुदित्वा सा मा मां व्याध निपातय । नास्ति मांसं तथा मेदः शरीरे रुधिरं मम ॥ १०३ ॥ तेजो बलं मे सकलं निर्दग्धं विरहाग्निना । अहं प्राणैर्वियुज्यामि भोजनं ते न जायते ॥१०४॥ बलवान्सुमहातेजा मेदोमांसपरिप्लुतः । अत्यंतस्थूलपीनांगो मृगो ह्यत्रागमिष्यति ॥ १०५ ॥ तं हत्वा सुखभागी त्वं तृप्तश्चैव भविष्यसि । तयोक्तं लुब्धकः श्रुत्वा किं करोमीत्यचिंतयत् ॥ १०६ ॥ मृगी ब्रूते ह्यसंदिग्धं निश्चयोऽयं परं मम । चिंतयित्वेति स प्राह मृगीं कामातुरां तदा ॥ १०७ ॥ कुरु प्रतिज्ञां सत्यां त्वं निश्चयो मे यथा भवेत् । तद्व्याधवचनं श्रुत्वा मृगी शोकसमाकुला ॥ १०८ ॥ सत्यां प्रतिज्ञां विदधे व्याधस्याग्रे पुनः पुनः । मृग्युवाच । क्षत्रियस्तु रणं दृष्ट्वा संग्रामाद्यो निवर्तते ॥ १०९ ॥ तेन पापेन लिप्यामि यद्येतदनृतं वदे । परद्रव्यरता नित्यं मायावंतोऽभ्यसूयकाः ॥११०॥ भेदयंति तडागानि वापीनां च गवामपि । मार्गे स्थानं च ये घ्नंति सर्वसत्त्वभयंकराः ॥१११॥ परित्यजंति सन्मार्गं पशून्भृत्यांस्तथैव च । ब्राह्मणान्निंदयेद्यश्च तथैवाश्रमनिंदकः ॥११२॥ तेन पापेन लिप्यामि यदेतदनृतं वदे । आकर्ण्येत्थं वचस्तेन मुक्ता सा तत्क्षणात्प्रिये ॥ ११३ ॥ जलं पीत्वा तु बहुशो गता सद्यो यथागतं । जालमध्ये स्थितः सोपि द्वितीयः प्रहरो गतः ॥ ११४ ॥ पीडितस्तीव्रशीतेन क्षुधया परिपीडितः । शिवं शिवं प्रजल्पन्वै न निद्रामुपलब्धवान् ॥ ११५ ॥ कृतं शिवार्चनं तेन द्वितीये प्रहरेऽपि च । वीक्षते स दिशः सर्वा जीवनार्थं वरानने ॥११६॥ सौभाग्यबलदर्पाढ्यो मृगस्तावत्समागतः । बाणं गृहीत्वा तं दृष्ट्वा मौर्व्यामाशु न्ययोजयत् ॥ ११७ ॥ आकर्णांतं धनुर्नस्य हृष्टतुष्टेन चेतसा । यावन्मुंचति बाणं स तावद्दृष्टो मृगेण वै

॥ ११८ ॥ कालरूपं तु तं दृष्ट्वा मृगश्चिंतां परां ययौ । निश्चितं भविता मृत्युर्यदि पादो विचाल्यते ॥ ११९ ॥ भार्या प्राणसमा चैव व्याधेनैव निपातिता । तया विरहितस्यापि मम मृत्युर्भविष्यति ॥ १२० ॥ हा कालविकृतं पापं मद्भार्यादुःखमागतं । नहि भार्यासमं सौख्यं गृहे वापि वनेपि वा ॥ १२१ ॥ तया विना न धर्मो हि नार्थकामौ विशेषतः । वृक्षमूलेपि दयिता यत्र तिष्ठति तद्गृहं ॥ १२२ ॥ प्रासादोपि तया हीनः कांताराद्‍तिरिच्यते । धर्मार्थकामकार्येषु पुंसां भार्या सहायिनी ॥१२३॥ विदेशगमने वापि सैव विश्वासकारिणी । नास्ति भार्यासमो बंधुर्नास्ति भार्यासमं सुखं ॥ १२४ ॥ नास्ति भार्यासमं लोके नरस्यार्तस्य भेषजं । यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी ॥ १२५ ॥ अरण्यं तेन गंतव्यं यथारण्यं तथा गृहं । तया विना जीवतोपि निष्फलं मम जीवितं ॥ १२६ ॥ एका प्राणसमा मेऽभूद्द्वितीया प्राणदा मम । ताभ्यां विरहितस्याद्य जीवितं निष्फलं मम ॥ १२७ ॥ एवं संचिंत्य शनकैर्लुब्धकं वाक्यमब्रवीत् । शृणु व्याध महासत्व आमिषाहारनिश्चय ॥ १२८ ॥ त्वां हि पृच्छामि किंचिद्वै सत्यं कथय सुस्फुटं । आयातं हरिणीयुग्मं केन मार्गेण तद्गतं ॥ १२९ ॥ त्वया विनाशितं नैव सत्यं कथय मेऽग्रतः । तस्य तद्वचनं श्रुत्वा लुब्धकोऽपि व्यचिंतयत् ॥ १३० ॥ असावपि न सामान्यो देवता कापि विद्यते । ध्यात्वापि सत्यं तस्याग्रे लुब्धको वाक्यमब्रवीत् ॥ १३१ ॥ ते गतेऽनेन मार्गेण प्रतिज्ञाय ममाग्रतः । ताभ्यां दत्तो भोजनार्थं मम त्वं नात्र संशयः ॥ १३२ ॥ अधुना त्वां हनिष्यामि नहि मोक्ष्यामि कर्हिचित् । व्याधोक्तं हि वचः श्रुत्वा हरिणः प्राह सत्वरं ॥ १३३ ॥ तत्सत्यं कीदृशं व्याध ताभ्यामुक्तं तवाग्रतः । येन ते प्रत्ययो जातो यन्मुक्तं हरिणीद्वयं ॥ १३४ ॥ व्याधेन कथिताः सर्वे ये कृता शपथाः पुरा । तस्य तद्वचनं श्रुत्वा हरिणो हृष्टमानसः ॥ १३५ ॥ व्याधं प्राह ततः शीघ्रं वचनं धर्मसंहितं । मृग उवाच । ताभ्यां यदुक्तं भो व्याध तत्सर्वं हि भवेन्मम ॥ १३६ ॥ प्रभाते त्वद्गृहं नूनमागमिष्यामि हिंसक । भार्या ऋतुमती मेऽद्य कामार्तापि च सांप्रतं ॥ १३७ ॥ गृहे गत्वाद्य तां भुक्त्वा अनुज्ञाप्य सुहृज्जनं ।

शपथैरागमिष्यामि त्वद्गृहं नात्र संशयः ॥ १३८ ॥ न मे देहे-ऽस्त्यसृङ्मांसं यत्त्वं भोक्तुमभीप्ससि। वृथा हि मरणं मे स्याद्यदि मां त्वं हनिष्यसि। तन्मृगस्य वचः श्रुत्वा व्याधो वचनमब्रवीत् ॥ १३९ ॥ असत्यं भाषसे धूर्त प्रतारयसि मामिह। ज्ञातो मृत्युः स्फुटं यत्र तत्रागच्छति कोऽल्पधीः ॥ १४० ॥ व्याधस्य वचनं श्रुत्वा वाक्यमाह वरं मृगः ॥ १४१ ॥ शपथान्वै करिष्यामि यथा ते प्रत्ययेद्धृदि। व्याध उवाच। मम त्वं शपथान्ब्रूहि विश्वासो येन जायते ॥ १४२ ॥ तथाहि प्रेषयामि त्वां स्वगृहं प्रति कामुक। मृग उवाच। भर्तारं वंचयेद्या स्त्री स्वामिनं वंचयेन्नरः ॥ १४३ ॥ मित्रं वंचयते यस्तु गुरुद्रोहं करोति यः। तेन पापेन लिप्यामि यदेतदनृतं वदे ॥ १४४ ॥ भेदयेद्यस्तु मित्राणि प्रासादं पातयेत्तु यः। विषमं तु रसं दद्यादेकपंक्त्यां हि भुंजतां। तेन पापेन० ॥ १४५ ॥ प्रवासशीला ये विप्राः क्रयविक्रयकारिणः। संध्यास्नानविहीनाश्च वेदशास्त्रविवर्जिताः। मद्यपाः स्त्रीसमासक्ताः परनिंदारतास्तथा ॥ १४६ ॥ परस्त्रीसेवका नित्यं परपैशून्यसेवकाः। शूद्रान्नभोजकाश्चैव रसविक्रयकारकाः। तेन पापेन लिप्यामि नायामि यदि ते गृहं ॥ १४७ ॥ मद्यादि विक्रयेद्यस्तु शूद्रो लोभविमोहितः। सर्वाशी सर्वविक्रेता विप्राणामपि निंदकः ॥ १४८ ॥ विप्रवाक्यं परित्यज्य पाखंडाभिरतस्तथा। तेन पापेन लिप्यामि यदि नायामि ते गृहं ॥ १४९ ॥ यो गां स्पृशति पादेन उदितेर्के प्रबुध्यते। एकाकी मिष्टमश्नाति विकर्मणि तथा रतः ॥ १५० ॥ मातापित्रोरभक्तश्च क्रियामुद्दिश्य याचकः। कन्याशुल्कोपजीवी च देवब्राह्मणनिंदकः ॥ १५१ ॥ एतेषां पातकं मह्यं यदि नायामि ते गृहं। यः पठेत्स्वरहीनं च लक्षणेन विवर्जितं ॥ १५२ ॥ रथ्यां पर्यटमानस्तु वेदमुद्गिरते यदि। पठ्यमानस्य विप्रस्य चांडालः शृणुते यदि। तेन पापेन लिप्यामि यदि नायामि ते गृहं ॥ १५३ ॥ वेश्यारताः सदा ये च देवदायनिवारकाः। नग्नाः स्वपंति नित्यं स्त्रीसहायप्रतिभोजकाः। तेषां पापेन लिप्यामि यदि नायामि ते गृहं ॥ १५४ ॥ शूद्रान्नेषु सदा सक्ताः शूद्रसंपर्कदूषिताः। संध्याभ्रष्टाश्च ये विप्रा दातुश्चैव निवारकाः। तेषां पापेन० ॥ १५५ ॥ भर्तारमर्थहीनं च कुरूपं व्याधिपीडितं। या न पूजयते नारी

रूपयौवनगर्विता । तस्याः पापेन० ॥ १५६ ॥ अथ किं बहुनो-
क्तेन भो लुब्धक तवाग्रतः । यदि नायामि ते गेहं मम सत्यं
भवेत्तदा ॥ १५७ ॥ तेन वाक्येन संतुष्टो व्याधो वै वीतकल्मषः ।
संहृत्य बाणं धनुषो मृगं त्यक्त्वा वनं प्रति । जगाम प्रीतमनसा
मुक्तपापो वरानने ॥ १५८ ॥ जलं पीत्वाऽथ हरिणः प्रविष्टो
गहनं वनं । गतोऽसौ तेन मार्गेण येन यातं मृगीद्वयं ॥ १५९ ॥
लुब्धकेन तदा तत्र जालमध्ये स्थितेन हि । छित्त्वा बिल्वस्य
पत्राणि प्रक्षिप्तानि शिवोपरि ॥ १६० ॥ अज्ञानाच्छिवपूजा तु
कृतानेन तथा व्रतं । ब्रुवन् शिवशिवं सोथ निःसृतो जालम-
ध्यतः ॥ १६१ ॥ उदिते सूर्यबिंबे तु अज्ञानाज्जागरे कृते ।
पापान्मुक्तोऽभवद्व्याधः शिवरात्रिप्रभावतः ॥ १६२ ॥ यावन्नि-
रीक्षते दिक्षु निशांते भोजनं प्रति । तावच्छिशुवृता चान्या
मृगीं तत्र समागता ॥ १६३ ॥ दृष्ट्वा मृगीं तदा व्याधो बाणं
धनुषि संदधे । यावन्मुंचति बाणं स तावत्प्रोवाच तं मृगी
॥ १६४ ॥ मृग्युवाच । मा बाणं मुंच धर्मात्मन्धर्मं पालय
सुव्रत । अहं त्ववध्या सर्वेषां सर्वशास्त्रनिदर्शनं ॥ १६५ ॥
शयानं मैथुनासक्तं मदनव्याधिपीडितं । न हिंसति मृगं राजा
मृगीं च शिशुना वृतां ॥ १६६ ॥ अथ त्वं धर्ममुत्सृज्य मां
वधिष्यसि मानद । बालकांश्च गृहे त्यक्त्वा आगमिष्याम्यहं
पुनः ॥ १६७ ॥ या भर्तारं समुत्सृज्य परपुंसि रता भवेत् ।
तस्याः पापेन लिप्यामि यदि नायामि ते गृहं ॥ १६८ ॥ ये
कृताः शपथाः पूर्वं तवाग्रे व्याध सत्तम । ते सर्वे मम संत्वत्र
यदि नायाम्यहं पुनः ॥ १६९ ॥ व्याधेन सा तदा मुक्ता जगाम
निजमंदिरं । व्याधोपि तत्सरस्त्यक्त्वा जगाम स्वगृहं प्रति ॥ १७० ॥
सर्वेषां वचनं ध्यायन्मृगाणां सत्यवादिनां । एतेषां घातको
नित्यमहं यास्यामि कां गतिं ॥ १७१ ॥ एवं संचिंतयन्गेहे दृष्टः
क्षुधितबालकैः । निरामिषं तु तं दृष्ट्वा जग्मुस्तेऽपि निराशतां
॥ १७२ ॥ नान्नं मांसं गृहे तस्य भोजनं येन जायते । व्याधोपि
स तदा तत्र तेषां वाक्यानि संस्मरन् ॥ १७३ ॥ न भोजनं च
निद्रां च लभते विस्मयान्वितः । आगमिष्यंति तन्नूनं शपथैर-
तियंत्रिताः ॥ १७४ ॥ तानहं न हनिष्यामि सतां व्रतमनुस्म-
रन् । लुब्धकेन तदा मुक्तो मृगोसौ शपथैः कृतैः ॥ १७५ ॥

स्वाश्रमं प्रति संप्राप्तो यत्र तद्धरिणीद्वयं । सद्यः प्रसूता तत्रैका द्वितीया रतिलालसा ॥ १७६ ॥ तृतीयापि समायाता वालकैः परिवारिता । सर्वाः समेता एकत्र मरणे कृतनिश्चयाः ॥१७७॥ परस्परेण जल्पंति लुब्धकस्य विचेष्टितं । ततो मृगीं ऋतुमतीं भुक्त्वा वाक्यं मृगोऽब्रवीत् ॥ १७८ ॥ स्थातव्यमत्र युष्माभिः कर्तव्यं प्राणरक्षणं । व्याघ्राद्द्विपाल्लुब्धकेभ्यो वालकानां च रक्षणं ॥ १७९ ॥ अहमत्र समायातः शपथैरतियंत्रितः । अस्या ऋतुप्रदानाय पुनः संतानहेतवे ॥ १८० ॥ ऋतुमतीं तु यो भार्यां नैव सेवेत मोहितः । भ्रूणहत्या भवेत्तस्य धर्मश्चैव निरर्थकः ॥ १८१ ॥ संतानात्स्वर्गमाप्नोति इह कीर्तिश्च शाश्वती । संततिर्यत्नतः पाल्या स्वर्गसौख्यप्रदायिका ॥ १८२ ॥ अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च । येन केनाप्युपायेन पुत्रमुत्पादयेत्पुमान् ॥ १८३ ॥ मया तत्रैव गंतव्यं यत्र व्याधस्य मंदिरं । सत्यं तत्पालनीयं स्यात्सत्ये धर्मः प्रतिष्ठितः ॥ १८४ ॥ एतच्छ्रुत्वा नाथवाक्यं ऋजुवर्णसुखान्वितं । वयमप्यागमिष्यामस्त्वया सार्धं मृगोत्तम ॥ १८५ ॥ अस्माकं मरणं श्लाघ्यं भर्त्रा सह सदा प्रभो । वयं ते विप्रियं कांत न स्मरामोऽथ किंचन ॥ १८६ ॥ पुष्पितेषु वनांतेषु नदीनां संगमेषु च । कंदरेषु च शैलानां भवता रमिता वयं ॥ १८७ ॥ न कार्यमर्थतः कान्त जीवितेन विना त्वया । दीनानां पतिहीनानां जीवितं निष्प्रयोजनं ॥ १८८ ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ १८९ ॥ अपि द्रव्ययुता नारी वहुपुत्रसुहृद्वृता । शोच्या सा वंधुवर्गस्य पतिहीना कुरंगम ॥ १९० ॥ वैधव्यसदृशं दुःखं स्त्रीणामन्यन्न विद्यते । धन्यास्ता योषितो यास्तु म्रियंते भर्तुरग्रतः ॥ १९१ ॥ नातंत्री वाद्यते वीणा नाचक्रो वाह्यते रथः । नापतिः पूज्यते नारी अपि पुत्रशतैर्वृता ॥ १९२ ॥ निर्धनो व्यसनी वृद्धो व्याधिना विकलस्तथा । पतितः कृपणो वापि भर्ता स्त्रीणां सदा गतिः ॥ १९३ ॥ नास्ति भर्त्रा समो धर्मो नास्ति भर्त्रा समः सुहृत् । नास्ति भर्त्रा समो नाथः स्त्रीणां भर्ता गतिः परा ॥ १९४॥ एवं विलप्य ताः सर्वा मरणे कृतनिश्चयाः । वालकैस्ताः समायुक्ता भर्तृशोकेन पीडिताः ॥ १९५ ॥ तासां वाक्यं मृगः श्रुत्वा हृदि

चिंतापरोऽभवत् । सर्वथापि हि गंतव्यं मया व्याधस्य संनिधौ ॥ १९६ ॥ एकतः सत्यसंरक्षां कुटुंबस्य ततोऽन्यतः । यदि गच्छामि तत्राहं कुटुंबस्य क्षयो भवेत् ॥ १९७ ॥ नो वा प्रयामि तत्राहं मम सत्यं व्रजेत्पुनः । वरं पुत्रस्य मरणं भार्यायां आत्मनस्तथा ॥ १९८ ॥ सत्यलोपान्नरो नूनं सृष्ट्यंतं नरकं व्रजेत् । तस्मात्सत्यं पालनीयं नरैः श्रेयोर्थिभिः सदा ॥ १९९ ॥ सत्येन धार्यते पृथ्वी सत्येन तपते रविः । सत्येन वायवो वांति सर्वं सत्ये प्रतिष्ठितं ॥ २०० ॥ एवं संचिंत्य स मृगो धर्मान्हृदि मनोहरान् । ताभिः सह कुरंगीभिराश्रमात्तत्क्षणं ययौ ॥२०१॥ तस्मिन्सरसि स स्नात्वा कर्मन्यासं चकार ह । तच्च लिंगं नमस्कृत्य हृदि ध्यायन्सदाशिवं ॥ २०२ ॥ स्नानं दानं परित्यज्य मैथुनं भोगमेव च । कामं क्रोधं तथा लोभं भार्यां मायाविनाशिनीं ॥ २०३ ॥ खाद्यपेयादिकं न्यस्य लुब्धकाभिमुखो ययौ । तस्य भार्यास्तथा पुत्राः पृष्ठलग्ना व्रजंति वै ॥ २०४ ॥ अनाशकं परं गृह्य मरणे कृतनिश्चयाः । भार्यापुत्रैः परिवृतो मृगस्तं देशमागतः ॥ २०५ ॥ क्षुधितो बालकैर्युक्तो लुब्धको यत्र तिष्ठति । मृगस्तं देशमागत्य कुटुंबेन समन्वितः ॥ २०६ ॥ पालयन्सत्यवाक्यानि लुब्धकं वाक्यमब्रवीत् । मृग उवाच । हन मां प्रथमं व्याध पश्चाद्भार्याः क्रमेण तु ॥ २०७ ॥ बालकांश्च ततः पश्चाद्वध्यतां मा विलंबय । मृगाणां भक्षणाद्व्याध न ते दोषोऽस्ति कश्चन ॥ २०९ ॥ यास्यामः स्वर्गं वै सर्वे शस्त्रपूता न संशयः । तवापि सकुटुंबस्य प्राणयात्रा भविष्यति ॥ २०९ ॥ एतच्छ्रुत्वा तु वचनं मृगोक्तं लुब्धकस्तदा । आत्मानं निंदयित्वा तु हरिणं वाक्यमब्रवीत् ॥ २१० ॥ व्याध उवाच । अहो मृग महासत्व गच्छ गच्छ स्वमालयं । आमिषेण न मे कार्यं यद्भाव्यं तद्भविष्यति ॥ २११ ॥ सत्त्वानां हि वधात्पापं तर्जने बंधने तथा । नैव पापं करिष्यामि कुटुंबार्थं कथंचन ॥ २१२ ॥ धर्माणां च दया मूलं सत्यं शाखा फलं दमः । त्वं गुरुः सर्वधर्माणामुपदेष्टा हि सांप्रतं ॥ २१३ ॥ गच्छ गच्छ कुरंग त्वं कुटुंबेन समन्वितः । मया त्यक्तानि शस्त्राणि सत्यधर्मं समाश्रितः ॥ २१४ ॥ तथा तद्वचनं श्रुत्वा हरिणः प्राह तं पुनः । कर्मन्यासमहं कृत्वा त्वत्सकाशमिहागतः ॥ २१५ ॥

हन्यतां हन्यतां शीघ्रं न ते पापं भविष्यति । मया दत्ता पुरा वाचा तया बद्धो न याम्यहं ॥ २१६ ॥ मया मम कुटुंबेन त्यक्तो मोहो ब्रवीमि ते । एतच्छ्रुत्वा च वचनं लुब्धको वाक्यमब्रवीत् ॥ २१७ ॥ त्वं गुरुस्त्वं पिता माता त्वं मे बंधुः सखा सुहृत्। मया त्याज्यानि शस्त्राणि त्याज्यं मायादिकं फलं ॥२१८॥ कस्य भार्या सुतः कस्य कुटुंबं कस्य हे मृग । तैस्तैः स्वकर्म भोक्तव्यं मृग गच्छ यथासुखं ॥ २१९ ॥ इत्युक्त्वा लुब्धकस्तूर्णं सत्यलापं शरैः सह । मृगान्प्रदक्षिणीकृत्य नमस्कृत्वा क्षमापयत् ॥ २२० ॥ प्रोचुर्व्याधं वचस्ते च वचः पीयूषसंनिभं । एतस्मिन्नंतरे नेदुर्देवदुंदुभयो दिवि ॥ २२१ ॥ आकाशात्पुष्पवृष्टिश्च बभूव सुमनोहरा । देवदूताः समायाता विमानं गृह्य शोभनं ॥ २२२ ॥ देवदूता ऊचुः । अहो व्याध महासत्व सर्वसत्वभयंकर । विमानवरमारुह्य सदेहस्त्रिदिवं व्रज ॥ २२३ ॥ शिवरात्रिप्रभावेण पातकं तत्क्षयं गतं । उपवासश्च संजातस्तथा वै निशि जागरः ॥ २२४ ॥ यामे यामे कृता पूजा अज्ञानेन शिवस्य च । सर्वपापविनिर्मुक्तो गच्छ त्वं रुद्रमंदिरं ॥ २२५ ॥ मृगराज महासत्व सर्वापत्यसमन्वितः । भार्यात्रितयसंयुक्तो नाक्षत्रं पदमाप्नुहि । तव नाम्ना त्विदं ऋक्षं लोके ख्यातिं गमिष्यति ॥ २२६ ॥ एतच्छ्रुत्वा च वचनं लुब्धकोऽथ मृगस्तथा । विमानानि समारुह्य नाक्षत्रं पदमागतः ॥ २२७ ॥ हरिणीद्वयमार्गस्तु दृश्यतेऽद्यापि पार्वति । यदेतत्पृष्ठताराणां द्वितयं मणिसंनिभं ॥ २२८ ॥ ऋक्षं तु लुब्धकं चात्र दृश्यते द्योतनं शुभं। तारात्रितयसंयुक्तं मृगशीर्षं तदुच्यते ॥ २२९ ॥ बालकद्वितयं चाग्रे तृतीयं पृष्ठतो मृगी । पृष्ठतस्तत्र संप्राप्ता मृगशीर्षस्य संनिधौ ॥ २३० ॥ मृगराट् दृश्यतेऽद्यापि ऋक्षं व्योमगमुत्तमं । अकामाज्जागरं रात्रौ तथोपोषणपूजनं ॥ २३१ ॥ जातं लुब्धकराजस्य तत्फलं परिवर्णितं । ये नरा भक्तिभावेन शिवरात्रिव्रतं शुभं ॥ २३२ ॥ सोपवासं करिष्यंति जागरेण समन्वितं । तेषां फलं हि वै वक्तुं ब्रह्मापि च जडायते ॥ २३३ ॥ शिवरात्रिसमं नास्ति व्रतं पापभयापहं । यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ २३४ ॥ यत्फलं माघमासे वै प्रयागे भजतां नृणां । वैशाखे द्वारकायां तु तपस्याषाढसेवनात् ॥ २३५ ॥ गयायां

पिंडदानेन कार्तिके माधवाग्रतः । तत्फलं जायते नूनं श्रवणादेव पार्वति ॥ २३६ ॥ इति श्रीलिंगपुराणे उमामहेश्वरसंवादे शिवरात्रिव्रतकथा समाप्ता ॥

अथोद्यापनं हेमाद्रौ कालोत्तरे—फाल्गुने चैव भूतायां तस्माद्भूतपतिं यजेत् । अष्टम्यां च चतुर्दश्यां व्रतान्युक्तानि सर्वशः । तानि सर्वाणि तेनैव व्रतान्येव कृतानि तु । स्कंद उवाच । व्रतस्योद्यापनं कर्म किं कर्तव्यं च मानवैः । को विधिः कानि द्रव्याणि कथं कार्यं वद प्रभो । ईश्वर उवाच । शृणु षण्मुख तत्त्वेन लोकानां हितकाम्यया । चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभं । एकभक्तं त्रयोदश्यां चतुर्दश्यामुपोषणं । संपाद्य सर्वसंभारान्मंडपं तत्र कारयेत् । वस्त्रैः पुष्पैः समाच्छन्नं पट्टकूलैश्च शोभितं । तन्मध्ये लेखयेद्दिव्यं लिंगतोभद्रमंडलं । अथवा सर्वतोभद्रं मंडपांतः प्रकल्पयेत् । शोभोपशोभासंयुक्तं दीपैः सर्वत्र सोज्ज्वलं । इति ।

अथातो **लिंगतोभद्रप्रकारा** लिख्यंते । प्रागुदीच्यस्त्रयस्त्रिंशद्रेखाः कार्याः प्रयत्नतः । कोणादौ शृंखलाः कार्याः पदैः षड्भिर्यथाक्रमं । वल्ली कार्या तु दशभिश्चतुर्भिर्लघुशृंखला । सप्तभिश्च लघुर्वल्ली ततो लिंगं प्रकल्पयेत् । दशासने पदानि स्युर्मध्ये चैव चतुष्टयं । दशैव तु जलाधारे पुनर्लिंगे चतुष्टयं । एवं पदानि लिंगे स्युरष्टाविंशतिसंख्यया । पदमेकं परित्यज्य लिंगाल्लिंगं प्रकल्पयेत् । पदैर्द्वादशभिः कार्या लिंगयोर्मध्यदीर्घिका । पदैर्द्वादशभिः कार्या ममार्चा लिंगमस्तके । पंचभिश्च पदैः कार्या शृंखला मध्यतः पुनः । नवभिश्च तथा वल्ली भद्रं द्वादशभिः स्मृतं । चतुष्पदं तु कमलं सर्वमध्ये समालिखेत् । पूरयेत्पंचवर्णैस्तु शोभाढ्यं सुमनोहरं । हस्तपादशिरोयुक्तं वर्णाक्षिप्राणसंयुतं ॥ ॥ षट्त्रिंशदथवा रेखास्तिर्यगूर्ध्वं प्रकल्पयेत् । खंडेंदुस्त्रिपदः कोणे शृंखला सप्तपादिका । दशपंचपदा वल्ली भद्रं नवपदं स्मृतं । त्रयोदशपदा वापी लिंगमष्टादशैव तु । पूजा अष्टपदा कार्या शोभा नवपदा भवेत् । सर्वतोभद्रसंज्ञं तु मध्ये कुर्याद्विचक्षणः । त्रिंशद्भिस्तु पदैस्तत्र वापी कार्या प्रयत्नतः । एतन्मंडलराजं तु लिंगैर्द्वादशभिः स्मृतं । शिवव्रते प्रयत्नेन कुर्यादेतद्द्विजोत्तमः । इति द्वादशलिंगं सर्वतोभद्रगर्भं

लिंगतोभद्रमंडलं ॥ ॥ त्रिंचत्वारिंशद्रेखा वा प्रागुदीचीः करोत्यधः । खंडेंदुस्त्रिपदः कोणे शृंखला सप्तभिः पदैः । पंचदशपदा वल्ली भद्रं तु नवभिः पदैः । त्रयी लिंगांतरे वापी चतुर्विंशतिभिः पदैः । लिंगं स्यात्तत्र चेशस्य अष्टाविंशतिभिः पदैः । लिंगं स्यात्पार्श्वतो वापी वाप्यलिंगं ततः परं । एवं वाप्यश्चतस्रः स्युर्लिंगानां मध्यतस्त्रिके । मध्ये स्यात्सर्वतोभद्रं सत्वं रजस्तमोवृतं । शृंखला पिंगला वापी ऊर्ध्वं पीतेन पूरयेत् । वापी पीतांतराले तु रक्तवर्णेन पूरयेत् । एतद्द्वादशभिर्लिंगैर्हरिहरमंडलं । इति द्वादशलिंगोद्भवं हरिहरमंडलमिति ।

अथ **चतुर्लिंगोद्भवप्रकारः** कथ्यते । रेखास्त्वष्टादश प्रोक्ताश्चतुर्लिंगसमुद्भवे । कोणेंदुस्त्रिपदः श्वेतस्त्रिपदैः कृष्णशृंखलाः । वल्ली सप्तपदा नीला भद्रं रक्तचतुष्पदं । भद्रपार्श्वे महारुद्रं कृष्णमष्टादशैः पदैः । शिवस्य पार्श्वतो वापीं कुर्यात्पंचपदां सितां । पदमेकं तथा पीतं भद्रं वाप्योस्तु मध्यतः । शिरसि शृंखलाश्चैव कुर्यात्पीतं पदत्रयं । लिंगानां स्कंधतः कोष्ठा विंशती रक्तवर्णकाः । परिधिः पीतवर्णैस्तु पदैः षोडशभिः स्मृतः । पदैस्तु नवभिः पश्चाद्रक्तं वर्णं सकर्णिकं । इति चतुर्लिंगोद्भवं मंडलं ।

ततः **कर्तव्यं तत्रैव** ।—आचार्यं वरयेत्तत्र ऋत्विग्भिः सहितं शुचिः । शिवरूपास्तथा विप्राः पूज्याश्चंदनपुष्पकैः । अनुज्ञातश्च तैर्विप्रैः शिवपूजां समारभेत् । अव्रणं सजलं कुंभं तस्योपरि तु विन्यसेत् । सौवर्णं राजतं ताम्रं मृन्मयं वापि कारयेत् । कुंभोपरि न्यसेद्देवं उमया सहितं शिवं । सौवर्णेप्यथवा रौप्ये वृषभे संस्थितं शुभे । रत्नालंकरणैर्हेमैरलंकृत्य प्रपूजयेत् । वस्त्रयुग्मेन संवेष्ट्य बिल्वपत्रैः प्रपूजयेत् । पलेन वा तदर्धेन तदर्धेनाथवा पुनः । उमामहेश्वरीं मूर्तिं पूजयेद्वृषभे स्थितां । आगच्छ देवदेवेश मर्त्यलोकहितेच्छया । पूजयामि विधानेन प्रसन्नः सुमुखो भव । आवाहनमंत्रः । पादासनं कुरु प्राज्ञ निर्मलं स्वर्णनिर्मितं । भूषितं विविधै रत्नैः कुरु त्वं पादुकासनं । आसनं । हृदिस्थं चिंतयेद्देवं शुद्धस्फटिकसंनिभं । व्याघ्रचर्मपरीधानं चिंतयेदव्ययं हृदि । गंगोदकेन पुष्पेण चंदनेन सुगंधिना । अर्घ्यं गृहाण देवेश भक्तिं मे ह्यचलां कुरु ।

अर्घ्यं । आचमनीयं । अभिषेकः । वस्त्रं सूक्ष्मं दुकूलं च देवानामपि दुर्लभं । गृहाण त्वमुमाकांत प्रसन्नश्च सदा भव । वस्त्रं । यज्ञोपवीतं सहजं ब्रह्मणा निर्मितं पुरा । आयुष्यं शुभवर्चस्यमुपवीतं गृहाण मे । उपवीतं । श्रीखंडं चंदनं दिव्यं मलयाचलसंभवं । विलेपनं सुरश्रेष्ठ गृहाण परमेश्वर । चंदनं । माल्यादीनि सुगंधीनि० । पुष्पाणि । वनस्पतिरसो० । धूपं । आज्यं च वर्तिसंयुक्तं० । दीपं । नैवेद्यं गृह्यतां देव० । नैवेद्यं । पूगीफलमिति तांबूलं । इदं फलमिति फलं । हिरण्यगर्भस्थमिति दक्षिणां । सोमं च सगणं चैव पूजयित्वा महेश्वरं । होमं कुर्यात्प्रयत्नेन रौद्रमंत्रैर्यथाविधि । ब्राह्मणान्पूजयेद्भक्त्या भोजयेच्च चतुर्दश । आचार्यं च सपत्नीकं वस्त्रालंकारभूषणैः । यज्ञोपवीतवस्त्रादि दद्यात्तेभ्यः पृथक्पृथक् । गां सवत्सां सवसनां नानालंकारभूषितां । दद्यादाचार्यवर्याय शिवो मे प्रीयतामिति । ततः सकुंभां तां मूर्तिं सवस्त्रां वृषभस्थितां । सर्वालंकारसहितामाचार्याय निवेदयेत् । व्रतमेतत्कृतं यन्मे पूर्णं वाऽपूर्णमेव वा । सर्वं संपूर्णतां यातु प्रसादाद्भवतां मम । इति संप्रार्थ्य तान्विप्रान्प्रणम्य च पुनःपुनः । नाममंत्रैस्ततस्तेभ्यो दद्यात्कुंभान्पृथक् पृथक् । अजैकपादहिर्बुध्न्यो भवः शर्व उमापतिः । रुद्रः पशुपतिः शंभुर्वरदः शिव ईश्वरः । महादेवो हरो भीमो नामान्येवं चतुर्दश । इति वार्षिकव्रतम् ।

अथ प्रयोगः । संकल्पपूर्वकं नांदीश्राद्धांतं कृत्वा आचार्यस्य चतुर्दश ऋत्विजां च वरणं । यथाशक्ति तेषां पूजनं च । सायं स्नात आचार्यश्चतुर्दशलिंगैर्नंदिना च सहोमामहेश्वरप्रतिमाया अग्न्युत्तारणं कुर्यात् । ततो मंडपमध्ये लिंगतोभद्रे सर्वतो भद्रे वा अनंतव्रतोद्यापनप्रकरणोक्ता देवता मंडलसंबंधिनीरावाह्य संपूज्य मंडलमध्ये एकं पूर्वादिदिक्षु प्रत्येकं त्रींस्त्रीन्मध्यकलशदक्षिणोत्तरयोर्द्वौ इत्येवं चतुर्दश महीद्यौरित्यादि कलशस्थापनविधिना आसाद्य वरुणपूजांतं कुर्यात् । ततो मध्यकलशे नंदिनं तस्मिन्नुमामहेश्वरौ च स्थापयित्वा । चतुर्दशकलशेषु लिंगानि स्थापयेत् । मध्यकलशस्थप्रतिमायामुक्तपौराणमंत्रै-

१ पंचदशइत्यपेक्षितम् ।

वैदिकमंत्रसहितैर्यथासंभवं षोडशोपचारैः पूजनं कुर्यात् । इतरकलशेषु प्रादक्षिण्येनाजायैकपदेनमः । अहयेबुध्न्यायनमः । इत्येवं नाममंत्रैः पूजां कुर्यात् । तत्रासंभवे आवृत्तिः । पुष्पनिवेदनांते आह्निकप्रकरणस्थशिवपूजायामुक्तावरणगणः पूज्यः । पंचामृतादिगता विशेषाः शिवरात्रिप्रकरणोक्ता यथासंभवं द्रष्टव्याः । ततो जागरणं । प्रातर्नित्यक्रियांते आचार्यो होमसंकल्पांते यदत्रसंस्थितमित्यादिना सर्षपविकिरणपंचगव्यप्रोक्षणादिना भुवं संशोध्याग्निं प्रतिष्ठाप्य ध्यानांते तदैशान्यां लोकपालांतदेवतासहितां ग्रहपूजां विधाय । तदैशान्यां विधिना स्थापितकलशे वरुणं संपूज्य । कलशस्यमुखे० । देवदानवसंवाद इति प्रार्थ्याग्नेः पश्चादुपविश्यान्वादध्यात् । चक्षुषी आज्येनेत्यंते आदित्यादीनुद्दिश्य अर्कादिसमिच्चर्वाज्याहुतिषु अंगदेवतोद्देश्यकतदाहुतिषु चाष्टोत्तरशतादिचिकीर्षितसंख्यासंकीर्तनं कार्यं । ततः प्रधानदेवतां रुद्रं अष्टोत्तरशतसंख्याभिर्बैल्वसमिदाहुतिभिस्तावतीभिः पायसाहुतिभिस्तावतीभिराज्याहुतिभिश्च । उमां नंदिनं अजैकपादं अहिर्बुध्न्यं भवं शर्वं उमापतिं रुद्रं पशुपतिं शुभ वरदं शिवं ईश्वरं महादेवं हरं भीमं एताः षोडशदेवताः एकैकया पायसाहुत्या शेषेण स्विष्टकृतमित्यादि० । ततःस्थालीपाकविधिना पायसं श्रपयित्वा गृहसिद्धं वादाया-ज्यभागांते यथान्वाधानं यजमानेन त्यागे कृते यथा त्यागं ग्रहतदंगोद्देश्यकहोममृत्विजः कुर्युः । प्रधानदेवताहोममाचार्यः कुर्यात् । कद्रुद्रायेति त्रिभिरेकैकमष्टोत्तरशतं कुर्यात् । एकैकर्चा त्र्यस्त्रिंशदाहुतय इत्येवं अष्टोत्तरशतसिद्धिः । उमायै नंदिने अजायैकपदे इत्यादि षोडशदेवताभ्य एकैकपायसाहुतिं हुत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते वलिदानपूर्णाहुती । ततः प्रणीतानिनयनसंस्थाजपपरिस्तरणविसर्जनाग्न्यर्चनादि । ततो वरुणकलशोदकेन यजमानाभिषेकः । आचार्याय धेनुदानं । ततः अजैकपादादिसहितस्य उमायुतश्रीरुद्रस्य ग्रहाणां चोत्तरपूजांते सोपस्करां श्रीरुद्रप्रतिमां आचार्यहस्ते प्रतिपाद्य । सोपस्कराश्चतुर्दशप्रतिमा अजैकपादादिनाममंत्रैः पूर्ववृतेभ्यश्चतुर्दशभ्यः प्रतिपाद्य ।—व्रतमेतत्कृतं यन्मे पूर्णं वाऽपूर्णमेव वा । सर्वं संपूर्णतां यातु प्रसादाद्भवतां मम । इति तान्संप्रार्थ्य पूर्ववृतां-

श्चतुर्दशविप्रान्वस्त्रोपवीतकुंडलादिभिः संपूज्य साचार्यांस्तान्भोजयित्वा चतुर्दशभ्यो यथाशक्ति दक्षिणां दत्त्वा ईश्वरार्पणं कुर्यादिति शिवरात्र्युद्यापनविधिः। इति वार्षिकशिवरात्रिव्रतं।

अथ मासशिवरात्रिव्रतं। तद्विधिर्हेमाद्रौ—आदौ मार्गशिरे मासि दीपोत्सवदिनेपि वा। गृह्णीयान्माघमासे वा द्वादशैवमुपोषयेत्। निशि जागरणं कृत्वा दीपोद्द्योतितदिङ्मुखः। गीतवाद्यविनोदेन पूजाजाप्यैः शिवे रतः। एवं द्वादशवर्षे तु द्वादशैव तपोधनान्। आचार्यं शिवशास्त्रज्ञं ब्राह्मणं च विशेषतः। आमंत्र्य परया भक्त्या गृहं गत्वा तपोधनान्। आचार्यं वरयित्वा तु गृह्णीयाच्चरणद्वयं। आगच्छ मे गृहं तात कृतकृत्यं गृहं कुरु। आमंत्र्य निशि तानेवं प्रभाते विमले पुनः। गृहीत्वोभयलिंगं तु स्थावरं जंगमं पुनः। पंचामृतेन दिव्येन स्नाप्य चोद्वर्तनादिभिः। स्नापयेद्वारिकुंभानां सहस्रेण शतेन वा। पंचाशता तदर्धेन स्नापयेच्छीतलेन तु। चंदनेन विलिप्याथ स्थावरं जंगमं तथा। शतपत्रैर्जातिपुष्पैरर्चयेद्बिल्वपत्रकैः। दीपान्दिक्षु च सर्वासु प्रज्वाल्य सघनांस्तथा। सघनान्सकर्पूरान्। नैवेद्यमपि भक्ष्यांश्च क्षीरखंडसमंडकान्। गुडाढ्यं लड्डुकांश्चैव अन्नं च रुचिरं बहु। निवेदयेत्तथैवापि गुरुदेवतपस्विनां। देवाग्रे तु गुरुं पूज्य कृत्वा मंडलकं शुभं। सुसूक्ष्माणि च वस्त्राणि शय्यां सोपस्करां तथा। द्वादशैव तु गा दद्यात्परिधानादिकं तथा। अथवा दक्षिणामेव प्रदद्याज्जुहुयात्तिलान्। दत्त्वैवं भोजयेत्सर्वान् गुरुं चैव तपस्विनः। पश्चात्क्षमापयेद्देवं प्रीयतां मे महेश्वरः। सर्वं चैव तथाचार्ये शिवव्रतपरायणे। अत्र द्वादशानां मध्ये एक आचार्यः। तस्मिन् शिवव्रतपरायणत्वं विशेष इत्येव विवक्षितं। द्वादशैव तु गा दद्यादिति लिंगात्।—गंधादिविविधैः सर्वानन्यांस्तत्र समागतान्। दक्षिणाभिश्च कुंभैश्च नवान्नैश्च प्रपूजयेत्। एवं कृत्वा महादेवि न भूयो देहमाप्नुयात्। यदासौ म्रियते देवि शिवलोकं व्रजेन्नरः। तस्मान्न च्यवते स्थानात्कल्पकोटिशतैरपि। इति। अत्रच बहुरात्रव्यापिनी तिथिर्ग्राह्या। साम्ये तु पूर्वेति प्रांचः। नव्यास्तु हेमाद्रौ कालोत्तरे—सर्वकामप्रदं कृष्णचतुर्दश्यां शिवव्रतं। इत्युपक्रम्य—चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभं। इति शिव-

रात्रिशब्दप्रयोगान्मासमग्निहोत्रं जुहोतीत्यत्र च नामातिदेशात्प्रदोषनिशीथोभयव्याप्त्यैव निर्णय इत्याहुः । वस्तुतस्तु कालोत्तरे कृष्णचतुर्दश्यां सामान्यत उपक्रमे व्रतसंकीर्तनेपि मध्ये—फाल्गुने चैव भूतायां तस्माद्भूतपतिं यजेत् । अष्टम्यां च चतुर्दश्यां व्रतान्युक्तानि सर्वतः । तानि सर्वाणि तेनैव व्रतान्येव कृतानि तु । इति वार्षिकशिवरात्रेः स्तुत्यतिशयप्रतीत्या विध्याद्यश्यकत्वाज्जर्तिलयवाग्वादेरिव न पृथङ्मासिकशिवरात्रविधिसंभवः । अतो यजेदिति स्पष्टविशेषविधिसंनिधानादुपक्रमस्थं कृष्णचतुर्दश्यामिति सामान्यपदं विशेषपरत्वेनैव ज्ञेयं । चतुर्दश्यंतराभिप्रायत्वे वा जर्तिलादिवन्मुख्यशिवरात्रिस्तुतिपरत्वेन नेयं । अतश्च तदनंतरपठिते चतुर्दशाब्दमिति विधौ अनंतरकीर्तनादुक्तरीत्या प्रकरणत्वाच्च वार्षिकव्रतस्यैव शिवरात्रिपदेन निर्देश इति कथं नामातिदेशवार्तासंभवः । हेमाद्रिमदनरत्नोदाहृतस्कान्दे तु यद्यप्यादौ मार्गशिरे मासीत्यनियतो यत्र स विधिर्मासशिवरात्रिविषयः स्पष्टः प्रतीयते न तत्र शिवरात्रिशब्दः । नच प्रकरणांतरात्कर्मांतरं । शिवयमसंवादांतेऽव्यवहितपूर्वग्रंथे—माघमासे तु या कृष्णा फाल्गुनादौ चतुर्दशी । इति वार्षिकशिवरात्रिव्रतपरिवृत्तेः । नापि गुणात्कर्मभेदः । दाक्षायणयज्ञइव प्रसिद्धशिवरात्रिव्रताश्रितस्य सकलकृष्णचतुर्दश्यधिकरणकाभ्यासरूपगुणस्योपसंहारस्थशिवलोकप्राप्त्यादिफले विध्यंगीकरणात् । अतश्च कर्मांतरत्वाभावान्न नामातिदेशः । काम्यगुणे न्यायप्राप्तस्याश्रयधर्मातिदेशस्य द्वादशैवमुपोषयेदित्येवं शब्दोऽनुवादः । अतः प्रसिद्धशिवरात्रिवदेव निर्णयः पूजादि चेत्यलं । इति शिवरात्रिनिर्णयः ।

अथामावास्यायां युगादित्वादपिंडं श्राद्धं कार्यं । प्रकृतिपार्वणेन सह तंत्रेण प्रयोगोपि तथा । द्वादशाध्यायस्थन्यायेन विकृतितंत्रस्य बलवत्त्वात् । तत्र प्रमाणं प्रागेवोक्तं । तामेव प्रकृत्य भारते—काले धनिष्ठा यदि नाम तत्र भवेत्तु भूपाल तदा पितृभ्यः । दत्तं तिलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः । इति । अत्र प्राप्तश्राद्धाश्रितं तिलान्नद्रव्यं निमित्ते विधीयते । ततश्चेदमिदं तिलान्नमिति संकल्पो विहितो भवति । विष्णुपुराणेतु—माघासिते पंचदशी कदाचिदुपैति योगं यदि वारुणेन ।

ऋक्षेण कालः स परः पितॄणां नह्यल्पपुण्यैर्नृप लभ्यते सदा। इति । येनार्जितानि० ॥ १ ॥ योनंतदेवकृतमंथनसंनिबंधक्षीराब्धिजातकमलापतिना धृतो यः । ०माघाख्यदीधितिरियं स्मृतिकौस्तुभस्य । इति माघकृत्यं ।

अथ फाल्गुनकृत्यं । निर्णयामृते—फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितं । गोविंदप्रीणनार्थाय दातव्यं पुरुषर्षभ । इति । अथ फाल्गुनशुक्लप्रतिपदमारभ्य द्वादशदिनपर्यंतं पयोव्रतं । श्रीभागवते अदितिरुवाच । केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिं । यथा मे सत्यसंकल्पो विदध्यात्स मनोरथं । आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनं। आशु तुष्यति मे देवः सीदंत्याः सह पुत्रकैः । कश्यप उवाच। एतन्मे भगवान्पृष्टः प्रजाकामस्य पद्मजः । यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणं । फाल्गुनस्यामले पक्षे द्वादशाब्दं पयोव्रतं अर्चयेदरविंदाक्षं भक्त्या परमयान्वितः । सिनीवाल्यां मृदालिप्य स्नायात्क्रोडविदीर्णया। यदि लभ्येत वै स्रोतस्येतं मंत्रमुदीरयेत् । त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता । उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय । निर्वर्तितात्मनियमो देवमर्चेत्समाहितः । अर्चायां स्थंडिले सूर्ये जले वह्नौ गुरावपि । नमस्तुभ्यं भगवते पुरुषाय महीयसे । सर्वभूतनिवासाय वासुदेवाय साक्षिणे । नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च । चतुर्विंशद्गुणज्ञाय गुणसंख्यानहेतवे । नमो द्विशीर्ष्णे त्रिपदे चतुःशृंगाय तंतवे । सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः । नमः शिवाय रुद्राय नमः शक्तिधराय च । सर्वविद्याधिपतये भूतानां पतये नमः । नमो हिरण्यगर्भाय प्राणाय जगदात्मने । योगैश्वर्यशरीराय नमस्ते योगहेतवे । नमस्ते आदिदेवाय साक्षिभूताय ते नमः । नारायणाय ऋषये नराय हरये नमः । नमो मरकतश्यामवपुषेऽधिगतश्रिये । केशवाय नमस्तुभ्यं नमस्ते पीतवाससे । त्वं सर्ववरदः पुंसां वरेण्यो वरदर्षभ । अतस्ते श्रेयसे धीराः पादरेणुमुपासते । अन्ववर्तंत यं देवाः श्रीश्च यत्पादपद्मयोः । स्पृहयंत इवामोदं भगवान्मे प्रसीदतां । एतैर्मंत्रैर्हृषीकेशमावाहनपुरस्कृतं । अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः। अर्चित्वा गंधमाल्याद्यैः पयसा स्नापयेद्विभुं । वस्त्रोपवीताभरणैः

पाद्योपस्पर्शनैस्ततः । गंधपुष्पादिभिश्चार्चेद्द्वादशाक्षरविद्यया । श्रृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति । ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया । निवेदितं तद्भक्ताय दद्याद्भुंजीत वा स्वयं । दत्त्वाचमनमर्चित्वा तांबूलं च निवेदयेत् । जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुं । कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दंडवन्मुदा । कृत्वा शिरसि तच्छेषां देवमुद्वासयेत्ततः । द्व्यवरान्भोजयेद्विप्रान्पायसेन यथोचितं । भुंजीत तैरनुज्ञातः शेषं सेष्टः समाहितः । ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि । स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः । पयसा स्नापयित्वार्चेद्यावद्व्रतसमापनं । पयोभक्षो व्रतमिदं चरेद्विष्णवर्चनादृतः । पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् । एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतः । हरेराराधनं होममर्हणं द्विजतर्पणं । प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी । ब्रह्मचर्यमधःस्वप्नं स्नानं त्रिषवणं चरेत् । वर्जयेदसदालापं भोगानुच्चावचांस्तथा । अहिंस्रः सर्वभूतानां वासुदेवपरायणः । त्रयोदश्यामथो विष्णोः स्नपनं पंचकैर्विभो । कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः । पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः । चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे । श्रृतेन तेन पुरुषं यजेत सुसमाहितः । नैवेद्यं चातिगुणवद्दद्यात्पुरुषतुष्टिदं । आचार्यं ज्ञानसंपन्नं वस्त्राभरणधेनुभिः । तोषयेदृत्विजश्चैव तद्विद्ध्याराधनं हरेः । भोजयेत्तान्गुणवता सदन्नेन शुचिस्मिते । अन्यांश्च ब्राह्मणान्शक्त्या ये च तत्र समागताः । दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथार्हतः । अन्नाद्येनाश्वपाकांश्च प्रीणयेत्समुपागतान् । भुक्तवत्सु च सर्वेषु दीनांधकृपणादिषु । विष्णोस्तत्प्रीणनं विद्वान्भुंजीत सह बंधुभिः । नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः । कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहं । एतत्पयोव्रतं नाम पुरुषाराधनं परं । पितामहेनाभिहितं मया ते समुदाहृतं । त्वंचानेन महाभागे सम्यक् चीर्णेन केशवं । आत्मना शुद्धभावेन नियतात्मा भजाव्ययं । अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति स्मृतं । तपःसारमिदं भद्रे दानं चेश्वरतर्पणं । त एव नियमाः साक्षात्तएव च यमोत्तमाः । तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः । तस्मा-

देतद्व्रतं भद्रे प्रयता श्रद्धया चर । भगवान्परितुष्टस्ते वरानाशु विधास्यति । इति ।

द्वादशाहव्रतांगत्वेन पूर्वदिनकृत्यमाह । सिनीवाल्यामित्यादिना तद्रात्र्यामित्यंतेन । अतएव प्रतिपद्द्वैधे प्रथमे दिनममाविद्धा प्रतिपत् । क्रोडविदीर्णयारण्यवराहोत्खातया । आलेपने त्वं देवीति मंत्रः करणं । गुर्वंतानां पूजास्थानानां विकल्पेप्यपिशब्दोऽन्वाचयार्थः । एतैरिति श्लोके संग्रहेणोक्तं प्रयोगविधिं विवृणोति अर्चित्वेत्यादिना । आवाहनपुरस्कृतमित्यनेनोक्तमावाहनेन संमानितमित्यर्थं विवृणोति अर्चित्वेत्यर्धेन । अतश्चावाहनासनगंधपुष्पधूपदीपनैवेद्याचमनीयपयःस्नपनरूपनवपदार्थेषु नव मंत्रा विहिता भवंति । अर्चयेदित्यर्धविहितं पाद्यार्घ्यर्पणमनूद्य मंत्रांतरविधानायाह वस्त्रेत्यादिना । छंदोनुरोधिनि द्वंद्वे न पदार्थक्रमो विवक्षितः । नैवेद्ये विशेषविधिमाह शृतमिति । मूलविद्यया द्वादशाक्षरेण दद्यादिति द्वादशदिनेषु । भुंजीतेति तत्पूर्वदिने । एवं व्यवस्थितविकल्पो वोध्यः । आचमनानंतरं अर्चनं करोद्वर्तनार्पणं । चकारः फलदक्षिणासमुच्चयार्थः । यथोचितमिति पायसं नियम्यते शाकादिष्वनियम इत्यर्थः । तद्रात्र्यां पूर्वदिनस्य अर्चेत् । अत्र विधिनेत्यस्यान्वयः । तत एव पयःस्नपने प्राप्ते पुनःसंकीर्तनं तस्यैव पयसोऽधिकृतत्वेन पयोभक्ष इत्यत्र ग्रहणार्थं । पूजाहोमब्राह्मणभोजनानां समप्राधान्येन व्रतस्य त्र्यात्मकत्वं दर्शयितुं पुनरुपन्यासः।अतएव हरेराराधनस्य त्र्यात्मकत्वमनंतरोक्तं । उक्तव्रतानुवादेन पयोव्रतब्रह्मचर्यादीनां फलिसंस्कारित्वं दर्शयितुमाह एवमिति । प्रतिपदितितिथ्योरवधित्वेन संकीर्तनाच्चांद्रदिनानामेव द्वादशत्वं न सावनानामिति सूचितं । वासुदेवपरायण इति शिष्टकालस्य वक्ष्यमाणनृत्यादिभिरिति वादनं संगृह्यते । अथेतियोग्यतया गणपतिपूजनाद्यृत्विग्वरणांतं कर्मानंतर्यमुच्यते । पंचकैः पंचामृतैः । कोविदैः ऋत्विग्भिः । शिपीति ततश्चेद्दशचतुर्थ्यंताभ्यां निर्वापादिसंस्कारो होमश्चेति सिद्धं । होमोत्तरं पूजायां विशेषमाह नैवेद्यमिति । तद्धिद्धीति तेन विना नैवाराधनसिद्धिरिति भावः । अतएव श्रुतिः—यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मानिति । हरिवंशे च—आयुष्मांश्चास्मि धन्यश्च दक्षि-

णाभिः सहैव तु । इति । तानाचार्यऋत्विजः । ब्राह्मणभोजनांगत्वेन पुनर्दक्षिणादानमाह दक्षिणामिति । गुरवे आचार्यायाधिकामित्यर्थः । विष्णोस्तद्विष्णुसंबंधि नैवेद्यं भुंजीतेत्यन्वयः। प्रीणनं विद्वानिति नैवेद्यभोजनं भगवत्प्रीतिकरमिति विधिर्भोजनसमये स्वयमेव विधीयते। चतुर्दशपूजास्वपि गुणविधिमाह नृत्येति । वाचकैरिति तृतीयया प्रयोज्यकर्तृनिर्देशः । इतरतृतीयायाः सहयोगे यान्वहं पूजा तां नृत्यादिसहितां कारयेदित्यर्थः । उक्तव्याख्यानुसारेण प्रयोगः सुज्ञान इति विस्तरभयान्न लिख्यते ।

अथ फाल्गुनचतुर्थ्यामारभ्य गणेशव्रतं **निर्णयामृते वाराहे**—अथाविघ्नव्रतं राजन्कथयामि शृणुष्व तत् । चतुर्थ्यां फाल्गुने मासि ग्रहीतव्यं व्रतं त्विदं । नक्ताहारेण राजेंद्र तिलान्नं पारणं स्मृतं । तदेवाग्नौ च होतव्यं तद्देयं ब्राह्मणेषु च । चातुर्मास्यव्रतं सस्यकृत्वैवं पंचमे तथा । सौवर्णं गजवक्रं तु कृत्वा विप्राय दापयेत् । आयसैः पंचभिः पात्रैरुपेतं पंचधान्यकैः । एवं कृत्वा व्रतमिदं सर्वविघ्नैर्विमुच्यते । इति । पारणं नक्तभोजनमेव । पंचम इति आषाढशुक्लचतुर्थ्यामित्यर्थः । पूजाहोमदानेषु मंत्रः—दिव्योच्चशुंडाय गजाननाय लंबोदरायैकदंतायुधाय । नगात्मजादेहसमुद्भवाय कुठारहस्ताय नमो वराय । इति। होमे स्वाहांतोऽयं योज्यः ।

**अथैकादश्यां** कर्तव्यं **भविष्ये**—फाल्गुने मासि शुक्लायामेकादश्यां जनार्दनः। वसत्यामलकीवृक्षे लक्ष्म्या सह जगत्पतिः। तत्र संपूज्य देवेशं भक्त्या कुर्यात्प्रदक्षिणं । उपोष्य विधिवत्कल्पं विष्णुलोके महीयते । इति ।

अथ फाल्गुनपौर्णमास्याः कृत्यं **निर्णयामृते भविष्योत्तरे** राजानं प्रति पौरा ऊचुः—अस्माकं हि गृहे कापि ढुंढानामेति राक्षसी । दिवा रात्रौ समागम्य बालान्पीडयते बलात् । ततो राज्ञा पृष्टो नारद उवाच । सांप्रतं कथयिष्यामि येनोपायेन हन्यते । अथ पंचदशी शुक्ला फाल्गुनस्य नराधिप । अभयप्रदानं लोकानां दीयतां पुरुषोत्तम । यथा ह्यशंकिता लोका रमंति च हसंति च। योधा इव विनिर्यांतु शिशवः संप्रहर्षिताः । संचयं शुष्ककाष्ठानामुपलानां च कारयेत् । तत्राग्निं

विधिवद्बुद्ध्वा रक्षोघ्नैर्मंत्रविस्तरैः। ततः किलकिलाशब्दैस्तालशब्दैर्मनोरमैः। तमग्निं त्रिः परिक्रम्य गायंतुच हसंतुच। जल्पंतु स्वेच्छया लोका निःशंका यस्य यन्मनः। तेन शब्देन सा पापा होमेन च निराकृता। अदृष्टिघातै(?)र्डिंभानां राक्षसी क्षयमेष्यति। सर्वदुष्टापहो होमः सर्वरोगोपशांतिदः। क्रियतेऽस्यां द्विजैः पार्थ तेन सा होलिका स्मृता। अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे। गोमयेनोपलिप्ते च सुचतुष्के गृहांगणे। आकारयेच्छिशुप्रायान् खड्गव्यग्रकरान्नरान्। ते काष्ठखड्गैः संस्पृश्य शब्दैर्हास्यकरैः शिशून्। भक्ष्यं तु तेषां दातव्यं गुडपक्वान्नमेवच। एवं ढुंढानिपातस्य स दोषः प्रशमं व्रजेत्। इति। उपलाः शुष्ककरीषपिंडाः। बुद्ध्वेति वोधयित्वा प्रदीप्येत्यर्थः। प्रदीपानंतरं च होलिकायैनम इति मंत्रेण पूजाद्रव्यप्रक्षेपात्मको होमः कार्यः। यथोक्तं **पृथ्वीचंद्रोदये** दुर्वासोवचः।—निशागमे तु पूज्येयं होलिका सर्वतोमुखैः। इति। केचित्तु हुत्वा रक्षोघ्नैरिति पठंतो रक्षोघ्नमंत्रैर्होममप्याहुः। सुचतुष्के सुचतुरस्रे। शिशवो वहवो येषु ते शिशुप्रायाः। ते काष्ठेति शिशुभिन्नविषयो विधिः। अत्र च प्रदोषव्यापिपूर्णमासी भद्रारहिता ग्राह्या। प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा। मुखे पंच गले त्वेका वक्षस्येकादश स्मृताः। नाभौ चतस्रः षट् श्रोणौ तिस्रः पुच्छाख्यनाडिकाः। इति **नारदोक्तं**। तस्या भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे। इति **नारदीयवचनात्**। पूजाग्रहणं तस्याः प्राधान्यद्योतनार्थं प्रधानकालो ह्यंगेषु न्यायत एव सिद्ध्यति इति प्रसिद्धं। **पूजामंत्रश्च**—अस्माभिर्भयसंत्रस्तैः कृता त्वं होलिके यतः। अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव। इति। दिनद्वये प्रदोषव्याप्तौ परदिने प्रदोषैकदेशव्याप्तिलाभे वा पूर्वदिने भद्रादोषादेव परैव ग्राह्या। परदिने प्रदोषस्पर्शाभावे पूर्वदिने प्रदोषे भद्रासत्त्वे तु यदि पौर्णमासी परदिने सार्धत्रियामा ततोऽधिका वा तत्परदिने प्रतिपच्च वृद्धिगामिनी तदा पूर्वदिनं परित्यज्य परदिने प्रदोषव्यापिन्यां प्रतिपद्येव होलिका पूज्या।—सार्धयामत्रयं पूर्णा द्वितीये दिवसे यदा। प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता। इति **निर्णयामृते भविष्योत्तरवचनात्**। तदा द्वितीयदिने सा प्रतिपत्। यदा

तु नोक्तविधे पूर्णमासीप्रतिपदौ तदा परदिने प्रदोषस्पर्शाभावात्पूर्वदिने प्रदोषे भद्रासत्वेपि भद्रांतं प्रतीक्ष्य शेषः सूर्योदयः स्मृतः इति परिभाषानुसारिसूर्योदयपूर्वभाविघटिकाद्वयात्पूर्वं होलिकापूजनं कार्यं ।—दिनार्धात्परतोऽपि स्यात्फाल्गुनी पूर्णिमा यदि । रात्रौ भद्रावसाने च होलिकां तत्र दीपयेत् । इति पुराणसमुच्चयवचनात् । होलां भद्रावसाने च निशि स्वांते प्रदीपयेत् । इति भविष्योत्तराच्च । यदा तु परदिने प्रदोषस्पर्शाभावः पूर्वदिने भद्रारहितकालाभावः तदा पूर्वदिन एवोक्तसमये भद्रापुच्छे होलिकापूजनं कार्यं ।—पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि च । तानि सर्वाणि सिध्यंति विष्टिपुच्छे न संशयः । इति लल्लोक्तेः । यदा तु प्रतिपत्क्षयः दिनद्वयेपि पूर्णिमायाः प्रदोषस्यांशाभावः उक्तसमये भद्रापुच्छालाभो वा तदा सर्वत्रैव भद्रायामपि कार्यं नतु परत्र सायाह्नादौ ।—पूर्वविद्धा प्रकर्तव्या फाल्गुनी पूर्णिमा सदा । इति शिवरहस्योक्तेः ।—श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनं । इति बृहद्यमोक्तेश्च । उक्तविषय एवेदृशवचःसाफल्यात् ।—दिवाभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा । सा भद्रा भद्रदा यस्माद्भद्रा कल्याणकारिणी । इति ज्योतिःशास्त्रोक्तेश्च ।

पूर्णमास्यामेव होलिकोत्सवं कृतवतां प्रतिपत्कृत्यं भविष्योत्तरे—चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा । यस्तस्यां श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः । न तस्य दुरितं किंचिन्नाधयो व्याधयो नृप । भवंति कुरुशार्दूल तस्मात्स्नानं समाचरेत् । दिव्यं नीराजनं तद्धि सर्वपापविनाशनं । इति । तथा—प्रवृत्ते मधुमासे तु प्रतिपत्सु विभूतये । कृत्वा चावश्यकार्याणि संतर्प्य पितृदेवताः । वंदयेद्धोलिकाभूतिं सर्वदुष्टोपशान्तये । वंदने मंत्रः—वंदितासि सुरेंद्रेण ब्रह्मणा शंकरेण च । अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव । इति । तथा—गोमहिष्यादि यत्किंचित्तत्सर्वं भूषयेन्नृप । चैलवस्त्रादिभिः सर्वैस्तोरणाधस्ततो नयेत् । इदं च सर्वं कार्यं होलिकानंतरं कर्तव्यत्वात्पूर्वविद्धायां प्रतिपद्येव कार्यं इति निर्णयामृते । अतश्च—प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ । इत्यप-

पाठः। निर्णयामृते धृतपाठेन तत्कृतनिर्णयेन न्यायसदाचारसंवादिना विरोधात्। सन्वापाठः पूर्णमासीविद्धप्रतिपदि पूर्वोक्तहोलिकाभिप्रायो बोध्यः।

कृत्यांतरं तत्रैव युधिष्ठिरं प्रति कृष्ण आह—यत्पिबंति वसंताद्ये भूतये पुष्पचंदनं। सत्यं हृत्स्थस्य कामस्य पूजनं क्रियते जनैः। इति। पुष्पं चाम्रस्य।—वृत्ते तुषारसमये सितपंचदश्यां प्रातर्वसंतसमये समुपस्थिते च। संप्राप्य चूतकुसुमं सह चंदनेन सत्यं हि पार्थ पुरुषोऽथ समां सुखी स्यात्। इति वाक्यशेषात्। प्राशनप्रकारश्च—गोमयेनोपलिप्ते च चतुरस्रे गृहांगणे शुक्लवस्त्रोत्तरच्छदे शुभआसने प्राङ्मुख उपविष्टो ब्राह्मणैः कृतस्वस्त्ययनः सुलक्षणया सुवासिन्या कृतचंदनतिलकनीराजनादिमंगलः सचंदनमाम्रकुसुमं मंत्रेण प्राश्नीयात्। चूतमग्र्यं वसंतस्य माकंद कुसुमं तव। सचंदनं पिबाम्यद्य सर्वकामार्थसिद्धये। इति।

अथ राजानंप्रति द्वितीयादिकृत्यं तत्रैव—ततः प्रातर्द्वितीयायां पुत्रमित्रादिसंयुतः। नृपतिर्वितते देशे वितानवरशोभिते। सर्वतश्च समास्तीर्णे रत्नकंबलशोभिते। उपविश्यासने रम्ये पौरजानपदैः सह। सिंदूरजजमक्षोदपङ्कवासैः सचंदनैः। विकीर्य लोकांस्तांबूलैः संमान्य च पृथक् पृथक्। नृत्यगीतविनोदैश्च कुर्यात्काममहोत्सवं। एवं कुर्वन्नवाप्नोति यावत्संवत्सरं शुभं। इति। विकीर्येति लोकेभ्य एतानि दत्त्वेत्यर्थः। इति होलिकोत्सवः।

उक्तप्रतिपदि तैलाभ्यंग आवश्यकः। वत्सरादौ वसंतादाविति पूर्वोदाहृतवचने वसंतादिग्रहणस्यानन्यार्थत्वात्। ब्राह्मे—नरो दोलागतं दृष्ट्वा गोविंदं पुरुषोत्तमं। फाल्गुन्यां संयतो भूत्वा गोविंदस्य पुरं व्रजेत्। इति। अत्र फाल्गुन्यामिति फाल्गुनीविद्धप्रतिपल्लाभार्थं।—वत्सरादौ वसंतादौ बलिराज्ये तथैव च। पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः। इति बृहद्वसिष्ठादिवचःसंवादात्। दोलोत्सवप्रकारश्च पूर्ववदेव बोध्यः। ये नार्जितानि०॥ १॥ योऽनंतदेवकृतमंथनसंनिबंधक्षीराब्धिजो०। तस्य तापस्यदीधितिरियं स्मृतिकौस्तुभस्य। इति फाल्गुनकृत्यं।

अथाधिमासकृत्यं । प्रसिद्धा ह्येतद्विषयिणी श्रुतिः । अस्ति त्रयोदशो मास इति । तथा चातुर्मास्येषु पर्वत्रयैककपालहोमानंतरं मधुश्चेत्यादिद्वादशमासनामभिरुपहोममुक्त्वांत्ये शुनासीरीये पर्वणि सौर्यैककपाले हुते संसर्पोसीति मंत्रेणोपहोम उक्त आपस्तंबेन । सचाधिमासदैवत्य इत्यवाद्यन्विलायां । तथा सोमेपि उपयाम गृहीतोसि मधुश्चेत्येवंरूपैर्द्वादशमासलिंगैर्मंत्रैर्ऋजुग्रहणमुक्त्वांते तेनैव सꣳसर्पोसीत्यादिमंत्रेणाधिमासदैवत्यग्रहणमुक्तं । तत्राधिमासो नामाऽसंक्रांतो मलमासः । मलमासत्वं च क्रियावाह्यत्वं । तच्च मासवृत्तियद्धर्मावच्छेदेनानावश्यक्रियानिषेधस्तद्धर्मवत्त्वं । असंक्रान्तपदेन क्षयस्य द्वितीयेन क्षयपूर्वभाव्यसंक्रांतस्य निरासः । वक्ष्यमाणरीत्या तस्यालक्ष्यत्वात् । अतएवैकसंक्रांतिरहितो मासो मलमास इति प्राचां लक्षणमपास्तं । मासवृत्तीत्यत्र मासपदेन शुक्लादिकृष्णांतमानेन चांद्रमासोऽभिधीयते । तेन न कृष्णादिमासवृत्तिधर्मावच्छेदेन कार्तिकमाघादौ सत्यप्यनावश्यकामिषादिभक्षणक्रियानिषेधे कार्तिकादौ शुद्धेऽप्यतिप्रसंगः । तथाच हेमाद्रौ भृगुः—एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् । हव्यकव्यक्रियावाह्यस्तदा ज्ञेयोऽधिमासकः । इति । दर्शद्वयममावास्यान्तद्वयं । दर्शः सूर्येंदुसंगम इत्यंत्यक्षण एव दर्शपदस्य मुख्यत्वात् । द्विसंक्रांत उक्तःचांद्रः क्षयो यस्मिन्वत्सरे भवति तदा कार्तिकादित्रयान्यतरमध्यपातिनस्तस्मात्प्रागूर्ध्वं चैषादिषट्क एकश्चैत्रादिषट्केऽपर इत्येवं, अथवैषादिषट्क एव तस्मात्प्रागूर्ध्वं च द्वावसंक्रांतौ च भवतः । असंक्रांतमासोऽधिमासः स्फुटः स्याद्विसंक्रांतमासः क्षयाख्यः कदाचित् । क्षयः कार्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं च । इति ज्योतिःसिद्धांतात् । अन्यतोऽन्यतरस्मिन्भागे प्रागेवोर्ध्वमेव वेत्येवं न किंतु प्रागेक ऊर्ध्वमेक इत्येवं वर्षमध्ये संक्रांतिद्वयं भवतीति व्याख्यातं हेमाद्रौ । स्फुट इति स्फुटमानेन भवेदित्यर्थः । अतएव काठकगृह्ये—यस्मिन्मासे न संक्रांतिः संक्रांतिद्वयमेव वा । मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत् । इति । प्रथमाधिकमासमारभ्य त्रिंशत्तमे मासेऽतीत इत्यर्थः । इदंच संभवाभिप्रायं नतु नियतं । सूर्यगतिवैचित्र्यावलंबनेन ज्योतिर्वित्प्रसिद्धेन मानेन त्रि-

शत्तममासादर्वागप्यधिमासदर्शनात् । अतएव—त्रिंशत्षट्त्रिंशन्मासस्य बाह्याभ्यंतरयोर्द्वयोः । अधिमासो विकल्पेन बादरायणकीर्तितः । इति ज्योतिःसागरवचनात् । त्रिंशत्तमान्मासादूर्ध्वं षट्त्रिंशन्मासात्पूर्वं त्रयोदशो मासो भवतीति नियम इति निर्णयामृतोक्तं चिंत्यं । यत्तु मध्यममानानुसारिवचनं सिद्धांते उक्तं—द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा । घटिकानां चतुष्केण संपतत्यधिमासकः । इति । यद्यपि तदनुसृतं प्राचीनैस्तथापि नैतत्तात्त्विकं । एतावता समयेनाधिमासोत्पत्तिपर्याप्तचांद्रदिनसंभवप्रदर्शनार्थत्वात् । अन्यथा कृष्णद्वितीयायां घटिकाचतुष्टयोपरि अधिमासप्रवृत्त्यापत्तेः । नचैतदिष्टं ।—इंद्राग्नी यत्र हूयेते मासादिः परिकीर्तितः । अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ । तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन । आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः । इति लघुहारीतवचनेन शुक्लप्रतिपदादित्वस्य दर्शांतत्वस्य च नियमप्रतीतेः । शुक्लकृष्णप्रतिपदीष्ट्योरमायां कार्ये च पितृयज्ञे तिसृणामुक्तदेवतानां सत्वात् । कदाचिदित्युक्त्या यद्यपि क्षये सर्वथैव नियमाभावः प्रतीयते तथापि कादाचित्कनियतावध्यभिप्रायमेव बोध्यं ।

तथाच माधवीये सिद्धांतशिरोमणिवचः—गतेऽब्ध्यद्रिनंदैर्मिते शाककाले तिथीशैर्भविष्यत्यथांगाक्षसूर्यैः । गजाद्र्यग्निभूमिस्तथा प्रायशोऽयं कुवेदेंदुभिः स्यात्कचिद्गोकुभिश्च । इति । एवमेतद्विवृतं तत्रैव । शकसंबंधिनि कालैरियद्भिर्वर्षैर्मिते गते कश्चित्क्षयमासो गतः कश्चिद्भविष्यतीति श्लोकार्थः । तृतीयांतानि संख्यापराणि । तथाहि अब्धयश्चत्वारः । अद्रयः सप्त । नंदा नव । अंकानां वामतो गतिरिति रीत्यांकप्रक्षेपे चतुःसप्तत्यधिकनवशतसंख्यैरित्यर्थः । तिथयः पंचदश । ईशा एकादश । ततश्च पंचदशाधिकैकशतयुक्तसहस्रसंख्यैरित्यर्थः । अंगानि षट् । अक्षाणींद्रियाणि पंच । सूर्या द्वादश । षट्पंचाशदधिकशतद्वययुक्तः । गजा अष्टौ । अद्रयः सप्त । अग्नयस्त्रयः । भूरेका । अष्टसप्तत्यधिकशतत्रयोपेतसहस्रसंख्यैरित्यर्थः । कुरेका । वेदाश्चत्वारः । इंदुरेकः । एकचत्वारिंशदधिकशतसंख्यैरित्यर्थः । गोशब्देन नवसंख्योच्यते । कुलवर्जि-

तेषु स्वरेष्वोकारस्य नवमत्वात्। कुरेका । ततश्चैकोनविंशतिसंख्यैरित्यर्थः । एवमसंक्रांतद्विसंक्रांतात्मकमलमासद्वैविध्ये प्रथम उत्तरमासपूर्वार्धतया तत्संज्ञो भवति।—षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः। पूर्वमर्धं परित्यज्य कर्तव्या उत्तरे क्रिया। इति ज्योतिःपितामहवचनात्।—मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चांद्रः। चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वेऽधिमासोंऽत्यः। इति ज्योतिःशास्त्रवचने पादत्रयस्य शुद्धमासविषयत्वेन तदुक्तचैत्रादिलक्षणाविषयेऽधिकेत्य इति पदेन चतुर्थपादस्थितेनांत्यमाससंज्ञाया विधानाच्च। द्विसंक्रांतो यत्र वर्षे भवति तत्र तत्पूर्वोऽसंक्रांतः संसर्पः । तस्य शुद्धत्वेन कर्मसु सम्यक्सर्पणात् । द्विसंक्रांतस्तु मकरस्थे समाप्तश्चेत्पौषोऽसौ धनुस्थसमाप्तिनिमित्तमार्गशीर्षस्तु लुप्त इत्येवं पूर्वमासग्रासित्वादंहसः पापस्य पतिरित्यंहस्पतिरित्युच्यते। तदुत्तरोऽसंक्रांतोऽधिमासः। नचैवमेकवर्षेऽसंक्रांतद्वयेन चतुर्दशमासात्मकत्वापत्तिः। त्रयोदशं तु श्रुतिराह मासं चतुर्दशः क्वापि न चैव दृष्टः। इति शास्त्रविरुद्धा च सा इति वाच्यं। पूर्वस्य शुद्धत्वात्। तथापि ससंक्रांतीनामेकादशद्वादशमासाः संवत्सर इति ससंक्रांतिकद्वादशमासात्मकत्वनित्यवच्छ्रुतिविरोध इति चेत्। सत्यं। क्षयमासगतपूर्वसंक्रांतेः पूर्वासंक्रांतेचालनसंस्कारांगीकारे तमादायैव द्वादशसंख्योपपत्तेः। चालनाभावे तु क्षयमास एव मासद्वयात्मको ज्ञेयः।—यदि न चलति वै मासयुग्मं विचिंत्यं इति माधवीये वटेश्वरसिद्धांतोक्तेः।—तिथ्यर्धे प्रथमे पूर्वो द्वितीयेर्धे तदुत्तरः । मासाविति बुधैश्चिंत्यौ क्षयमासस्य मध्यगौ। इति स्मृतेश्चेति प्राचः। नव्यास्तु मेषादिस्थ इति चैत्रादिलक्षणस्य चैत्रादिसंज्ञेऽप्यधिमासे व्यापकत्वात् । पूर्तिद्वित्वेऽधिमासोंत्य इति पूर्वसंज्ञत्वस्य प्रतीयमानस्य स्मृतिविरुद्धत्वान्नेदं लक्षणं तात्विकं। उपलक्षणं त्वेतद्व्यासोक्तलक्षणांतरस्य। —मीनादिस्थे रविर्येषामारंभप्रथमक्षणे । भवेत्तेऽब्दे चांद्रमासाश्चैत्राद्या द्वादश स्मृताः । इति । व्यापकं चैतदधिमासतदुत्तरार्धभूतशुद्धयोर्द्वयोरपि प्रथमदर्शे मीनसंक्रांतः सन् द्वितीयदर्शोत्तरशुक्लप्रतिपदि मेषसंक्रांतश्चेत्तदा द्वयोरपि शुक्लप्रतिपदोराद्यक्षणे मीनस्थ एव सूर्य इति संभवत्युत्तरस्येव पूर्वस्यापि

चैत्रसंज्ञत्वं। नचैवं क्षयमासे मासद्वयव्यवहारानुपपत्तिः। तदीयशुक्लप्रतिपदाद्यक्षणे राशिद्वयस्थितेरसंभवादिति वाच्यं। इष्टापत्तेः। तिथ्यर्धे प्रथमे पूर्वे इति वचस्तु क्षयाहवर्धापननिर्णयमात्रपरमिति हेमाद्रिणा स्वीकृतमिति न तद्बलेन मासद्वयात्मकत्वसिद्धिः। नन्वेवमपि यत्र वर्षे तुलासंक्रांतियुक्तदर्शोत्तरं दर्शमतिक्रम्य शुक्लप्रतिपदि वृश्चिकसंक्रांतिस्तदुत्तरदर्शे धनुःसंक्रांतिः तदुत्तरदर्शोत्तरशुक्लप्रतिपदि च मकरसंक्रांतिस्तत्राद्योत्तरावसंक्रांती मासौ तावत्तुलास्थधनुस्थरवियुक्ताद्यक्षणवत्त्वात्कार्तिकपौषौ। मध्यस्थो द्विसंक्रांत औचित्येन मार्गशीर्षो वाच्यः। नच तत्र वृश्चिकस्थ इति रवियुक्ताद्यक्षणत्वं तल्लक्षणमस्तीत्यव्याप्तिरिति चेन्न। तत्तद्राशिस्थरवियोगयोग्याद्यक्षणवत्त्वस्य लक्षणघटकत्वात्। यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः। तयैव सर्वसंक्रांतिर्यावन्मेषं तु गच्छति। इति वचनेनोक्तस्थले दर्शस्यैव वृश्चिकयोग्यत्वेन तत्स्थरवियोगयोग्याद्यक्षणवत्त्वरूपलक्षणस्य द्विसंक्रांते संभवात्। एवं सति सत्यामेव तिथौ सूर्योदयस्पर्शाभावेन क्षयव्यवहारवत्सत्येव मासे तदुचितराशिस्थरवियुक्ताद्यक्षणाभावात्क्षयव्यवहारो नतु कस्यचिन्मासस्य क्षय इत्याहुः। इति मलमासस्वरूपनिर्णयः।

अथ तत्रत्यकार्याकार्यनिर्णयः। तत्र यद्यपि—नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे। इति बृहस्पतिवचनात्, इष्ट्यादिसर्वकाम्यं तु मलमासे विवर्जयेत्। इति माधवोदाहृतस्मृतिवचनाच्च काम्यानां सर्वेषामकर्तव्यता नित्यनैमित्तिकानां च सर्वेषां कर्तव्यता प्रतीयते। तथापि यत्कर्म मलमासे कर्तव्यतया प्रसक्तमपि तदुत्तरशुद्धे कृतमिष्टप्राप्त्या अकरणनिमित्तानिष्टनिवृत्त्यैव प्रभवति तन्त्रिविधमपि न कार्यं। यथा ज्योतिष्टोमजातेष्टिपुत्रकामेष्ट्यादि। यत्तु मलमास एव कृतं ताभ्यां प्रभवति तन्त्रिविधमपि तत्रैव कार्यं। यथाग्निहोत्रग्रहणस्नानकारीर्यादि। शुष्यत्सस्यसंजीवनार्था हि कारीरीष्टिः। नच तत्र कालप्रतीक्षा घटते। एवं रक्षोगृहीतस्य बालस्य जीवनार्थां रक्षोघ्नीष्टिः अग्नयेरक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेदिति विहिता। तथा आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्प्रति वै पुरस्तादभिचरंतमभिचरंति द्वेद्वे पुरोनुवाक्ये

कुर्यादिति अभिचरतः प्रत्यभिचरतश्चैकैकेवेष्टिर्विहिता, प्रत्यभिचरतो द्वेद्वे पुरोनुवाक्ये इति विशेषः । तत्र शत्रुकृतोपद्रवे संकटवशेनाभिचारे प्रवृत्तस्य न कालविलंबो घटते । नापि तन्निवारणाय प्रत्यभिचारं चिकीर्षोरप्यसौ युज्यते । अत ईदृशकाम्यानि मलमासे कर्तव्यानि । तथाच **काठकगृह्ये**—मलेऽनन्यगतिं कुर्यान्नित्यां नैमित्तिकीं क्रियां । इति । अत्र नित्यां नैमित्तिकीमिति काम्योपलक्षणं अनन्यगतिं क्रियां कुर्यादित्येव विवक्षितं । तावता नित्यनैमित्तिकयोरपि संग्रहात् । अन्यथा तयोः प्रत्येकसंबंधविधाने वाक्यभेदापत्तेश्च । अतश्चान्यगतिककाम्यनिषेधोपि । सच तदारंभसमाप्तिविषयः । असूर्या नाम ये मासा न तेषु मम संमताः । व्रतानां चैव यज्ञानामारंभाश्च समाप्तयः । इति स्मृतेः । अत्र समाप्तिनिषेधो मलमासे मोहादुपक्रांतिसमाप्तिविषय इति **हेमाद्रिः** । अन्ये तु सावनमासप्रयुक्तनियमानपेक्षा समाप्तिर्येषां चातुर्मास्यव्रतादीनां तत्समाप्तिविषयोयं । तथाच तत्समाप्तेः प्रागधिमासनिपाते तत्रापि व्रतानुवर्तनमुक्तं । अधिमासनिपाते च एष एव विधिक्रमः । इति । एवंच प्रयोगमध्ये उपरमेण प्रयोगप्राशुभावभंगस्याप्यप्रसक्तौ न तत्समाप्तौ सगतिकायामधिमासकर्तव्यतोचितेति तन्निषेध एवायं । यत्तु—प्रवृत्तं मलमासात्प्राग्यत्काम्यमसमापितं । आगते मलमासेपि तत्समाप्यमसंशयं । इति **काठकगृह्यं** तत्सावनमानापेक्षकृच्छ्रसत्रादिविषयमित्याहुः ।

एवंचात्र विवेकः । अधिमास एव कर्तव्यं किंचित् । शुद्धोत्तरमास्येव किंचित् । निमित्तवशादुभयत्रापि किंचित् । तत्राद्यं यथा **हेमाद्रौ पाद्मे** तत्रैव विहितं दानं । अधिमासे तु संप्राप्ते गुडसर्पिर्युतानि च । त्रयस्त्रिंशदपूपानि दातव्यानि दिने दिने । साज्यानि गुडमिश्राणि अधिमासे नृपोत्तम । यावंति तत्र छिद्राणि अपूपस्य च पार्थिव । तावद्वर्षसहस्राणि स्वर्गलोके महीयते । चंद्रांशुनिर्मलाः पूपाः शालितंडुलनिर्मिताः । आहारः सर्वदेवानां प्रकुर्वंति हि मंगलं । सहिरण्यान्घृताभ्यक्तांस्त्रयस्त्रिंशदपूपकान् । अधिमासे तु संप्राप्ते त्रयस्त्रिंशत्तु देवताः । उद्दिश्यापूपदानेन पृथ्वीदानफलं लभेत् । मासाधिके तु संप्राप्ते यावत्सर्वानपूपकान् । तावद्वर्षमवाप्नोति विष्णु-

लोकं सनातनं । त्रयस्त्रिंशदपूपान्नं कांस्यपात्रे निधाय च । सघृतं सहिरण्यं च ब्राह्मणाय निवेदयेत् । प्रत्यहमसंभवे क्वचिदेकस्मिन्दिने कार्यमित्याशयेनैष विधिः । अन्यथा सघृतमित्यस्य वैयर्थ्यापत्तेः । धात्वर्थानुवादेन कांस्यहिरण्यविधौ वाक्यभेदापत्तेश्च । नच निधायेत्यत्र सघृतमित्यादिकर्मान्वयः । प्रथमचकारस्यालग्नतापत्तेः । दानमंत्रास्तत्रैव—विष्णुरूपी सहस्रांशुः सर्वपापप्रणाशनः । अपूपान्नप्रदानेन मम पापं व्यपोहतु । नारायण जगद्बीज भास्करप्रतिरूपधृक् । व्रतेनानेन पुत्रांश्च संपदं चाभिवर्धय । यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनं । शंखः करतले यस्य स मे विष्णुः प्रसीदतु । कलाकाष्ठादिरूपेण निमेषघटिकादिना । यो वंचयति भूतानि तस्मै कालात्मने नमः । कुरुक्षेत्रमयो देशः कालः पर्व द्विजो हरिः । पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम । मलानां च विशुद्ध्यर्थं पापप्रशमनाय च । पुत्रपौत्राभिवृद्ध्यर्थं तव दास्यामि भास्कर । इति ।

तथा मलमासमृतानां यदा कदाचित्तस्मिन्नेव मलिने सति तत्रैव वार्षिकश्राद्धं कार्यं—मलमासमृतानां तु श्राद्धं यत्प्रतिवत्सरं । मलमासे तु तत्कार्यं नान्येषां तु कदाचन । इति भृगूक्तेः । नान्येषामिति शुद्धमासमृतानां द्वितीयाद्याब्दिकविषयो निषेधः । तदीयमपि प्रथमाब्दिकं तु मलिने एव कार्यं ।—असंक्रांते हि कर्तव्यमाब्दिकं प्रथमं द्विजैः । इति माधवीये हारीतोक्तेः । अत्र प्रथमाब्दिकमिति प्रथममासारंभे कर्तव्यतया प्राप्तं मासिकमिवाब्दिकमपि श्राद्धमाद्यमेकादशेहनि उत्कृष्टमेकादशेहनि कर्तव्यं तदुच्यते । सपिंडीकरणोत्तरं संवत्सरांते कर्तव्यं तु द्वितीयाब्दिकत्वान्निषेधविषय इति केचित् । तदसत् । सांवत्सरिकश्राद्धस्य वत्सरांते कर्तव्यतयोत्पन्नस्य वत्सराद्यमृततिथौ प्राप्तेरेवाभावात् । तथाच हेमाद्रौ प्रभासखंडे—मृताहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात् । मातुश्चैव वरारोहे वत्सरांते मृतेऽहनि । नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः । इति । भविष्येपि—मृता(?)मातुश्च खगशार्दूलवत्स नाहं तस्य खगश्रेष्ठ पूजां० । इति । व्याख्यातं चैतद्धेमाद्रिणा । अत्र [illegible] तिथिर्विव-

क्षिता । संवत्सरांते मुख्यसृताहस्यासंभवादिति । एवंच मासिकतुल्यता नाब्दिक इति स्पष्टमेव दर्शितं । अस्तु वा तत्र प्राप्तिरुत्कर्षश्चैकादशेहनि । तथाप्यसंक्रांते कर्तव्यता नवश्राद्धत्वादेव वक्ष्यमाणवचनाद्भवेत् । नतु तद्विषयत्वं । हारीतोक्तेः—प्रत्यब्दं द्वादशे मासि कार्या पिंडक्रिया सुतैः । क्वचित्त्रयोदशेपि स्यादाद्यं मुक्त्वा तु वत्सरं । इति हेमाद्रिमाधवोदाहृतलघुहारीतोक्तिविरोधात् । द्वादशे मासि पूर्णे सतीति पूर्वेषां व्याख्यानौचित्यप्रसंगाच्च । अथ—मृतियुञ्मासाङ्किषट्कीपरः स स्याच्चेन्मलमास एव तनुयादाद्याब्दिकमिति दीपिकाविरोधाच्च । मासादिति ल्यब्लोपे पंचमी तमारभ्येत्यर्थः । षण्णां समाहारः षट्की । तेच तेच षट्कौ च ताभ्यां परस्त्रयोदश इति व्याख्यातं तत्तद्विवरणे ।

अथोत्तरमास्येव कर्तव्यानि ज्योतिःपितामहः—मासः कन्यागते भानावसंक्रांतो भवेद्यदि । दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरक्षयं । इति ।—उपाकर्म तथोत्सर्गं काम्यमुत्सवमष्टकाः । मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकं । इति । तथा पूर्वमासे निषेधादपि केषांचिदुत्तरत्र कर्तव्यता लभ्यते । ज्योतिःशास्त्रे असंक्रांतं प्रकृत्य—न यात्रां न विवाहं तु न च वास्तुनिवेशनं । न प्रतिष्ठां च देवानां प्रासादग्रामभूरुहां । न हिरण्यं न वासांसि धारयेदिति निश्चयः । इति । माधवीये स्मृत्यंतरेपि—वापीकूपतडागादिप्रतिष्ठां यज्ञकर्म च । न कुर्यान्मलमासे हि महादानव्रतानि च । इति । महादानानि तुलापुरुषादीनि । कालादर्शे—अग्न्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणं । देवारामतडागादिप्रतिष्ठा मौंजिबंधनं । आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः । राजाभिषेकः प्रथमश्चूडाकर्म व्रतानि च । अन्नप्राशनमारंभो गृहाणां च प्रवेशनं । स्नानं विवाहो नामातिपन्नं देवमहोत्सवं । तथारंभसमाप्ती च काम्यानामथ पाप्मनः । प्रायश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् । उपाकर्मोत्सर्जनं च पवित्रदमनार्पणं । अवरोहश्च हैमंतः सर्पाणां बलिरष्टकाः । ईशानस्य बलिर्विष्णोः शयनं परिवर्तनं । दुर्गेंद्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः । पूर्वत्र प्रतिषिद्धानि परत्रैव तु कारयेत् । इति । स्नानं समावर्तनं । तृतीये प्रकारेपि

द्वैविध्यं निमित्तवशात्कदाचित्पूर्वत्र कदाचित्परत्रेत्येवमुभयत्र कर्तव्यं किंचित् किंचिदावृत्त्येति । तत्राद्यं यथा यमः—गर्भे[1] वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके । सपिंडीकरणे नित्ये नाधिमासं विवर्जयेत् । तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः । जातकर्मांत्यकर्माणि नवश्राद्धं तथैव च । मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश । चंद्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकं । कार्याणि मलमासेपि नित्यं नैमित्तिकं तथा । इति । गर्भे गर्भाधाने । वार्धुषिके द्रव्यप्रयोगप्रयुक्तद्रव्यदाने । भृत्ये सेवाप्रयुक्तधनग्रहणे । मासिकपदेनामावास्याश्राद्धमिति माधवः—षोडशश्राद्धानां पृथगुपादानादिति तदाशयः । वस्तुतस्तु सपिंडीकरणात्प्रागूर्ध्वं कर्तव्यानां मासिकानां भेदाभिप्रायो द्विःपाठः । अमावास्याश्राद्धस्य नित्यपदेनैव लाभादिति बोध्यं । नवश्राद्धग्रहणेन सपिंडीकरणसंग्रहसंभवेपि पृथग्ग्रहणं तस्यानेककालसंभवेपि नाधिमासभयाद्विप्रकृष्टकालप्रतीक्षोचितेत्येवमर्थं । तीर्थस्नानं द्वितीयादि । न यात्रामिति प्रथमयात्राया निषेधेन यात्रोद्देश्यस्नानादेः सुतरां निषेधात् । जप इति गायत्रीजपेन संध्यावंदनं लक्ष्यते । होम औपासनादिः । अंत्यकर्माणि दाहांजलिदानादीनि । मघेत्यलभ्ययोगमात्रोपलक्षणं ।—रोगे चालभ्ययोगे च सीमंते पुंसवेपि च । यद्ददाति समुद्दिष्टं पूर्वत्रापि न दुष्यति । इति मरीचिवचनात् । एतदाशयमेव दशहरासु नोत्कर्ष इत्यपि । चंद्रेत्यर्धेन ग्रहणनिमित्तमेवोच्यते । तथा तादृशमित्यर्थः । मरीचिवचनेपि यस्य सीमंतोन्नयनादेः षष्ठेऽष्टमे वा सीमंत इत्येवमनेककालविधौ सत्यपि केनापि हेतुनाधिमासादन्यत्रानुष्ठानासंभवः तन्मलमासेपि कर्तव्यमित्याशयेनेदं । अनन्यगतिकप्रपंचनार्थत्वात् । जातकर्मादिकमपि विहितकाले चेत्क्रियते तदैवाधिमासप्रयुक्तदोषाभावः । स्वकालादतिपन्नं तु न तत्र कार्यं । अतएव नामातिपन्नमित्यतिपन्ननामकरणस्याकर्तव्यतोक्ता । एवं नैमित्तिकयोर्विच्छिन्नाधानपुनःप्रतिष्ठयोर्निमित्तानंतरमधिमासेऽपि करणमुचितं नातिपन्नयोः । जातेष्टिन्यायात् । अमुनैवाशयेन दीपिकायामुक्तं ।—यन्नैमित्तिकमग्निनष्टयनुगताग्न्याधानमर्चासु वा संस्कारादिविलोपने

[1] गर्भेवा र्धुषिके भृत्ये ।

सति पुनः प्रोक्तं प्रतिष्ठादिकं । दाहेष्ट्यादि च यत्स्वकालविमगे गौणाविधानात्परं लुप्येताधिकमासि तद्धितन्तुयात्....... इति । उक्तंच जातेष्टेरकर्तव्यत्वं **तत्रैव**—गर्भाधानमुखं च चौलविधितः प्राग्जातयागं विना । इति । **पैठीनसिः**—संक्रांतिरहिते मासि कुर्यादाग्रयणं न वा । इति । अतो विकल्प एवेति **माधवः** । **हेमाद्रिस्तु** दुर्भिक्षवशेन नवान्नभक्षणप्रसक्तौ कार्यं तदभावे न कार्यमित्याह । अतएवोक्तं **दीपिकायां**—कृष्णेष्वाग्रयणमिति । द्वितीयं यथा **कौथुमिः**—अब्दमंबुघटं दद्यादन्नं चापि सुसंचितं । संवत्सरे विवृद्धेपि प्रतिमासं च मासिकं । इति । **मरीचिः**—प्रतिमासं मृताहे यच्छ्राद्धं यत्प्रतिवत्सरं । मन्वादौ च युगादौ च मासयोरुभयोरपि । इति । सांवत्सरिकस्य मासद्वये कर्तव्यतोक्तिरुक्तव्यवस्थाशयैवेति बोध्या । तेनोदकुंभश्राद्धमासिकयुगादिमन्वादिश्राद्धानां मासद्वयेप्यावृत्तिरिति बोध्यं । यत्र वत्सरे क्षयमासः तत्पूर्वोत्तरभाव्यसंक्रांतिसहिते तस्मिन्केषांचिन्निषेधमाह **बृहस्पतिः**—एकत्र वर्षेऽधिकमासयुग्मं तत्कार्तिकादित्रितये क्षयाख्यः । तद्वर्जनीयं त्रितयं प्रयत्नाद्विवाहयज्ञोत्सवमंगलेषु । इति । **काठकगृह्ये**—चूडा मौंजीवंधनं च अग्न्याधेयं महालयं । राजाभिषेकं काम्यं च न कुर्याद्भानुलंघिते । चूडां मौंजीं च काम्यं च मलमासे विवर्जयेत् । इति । अत्र भानुलंघितपदेन पूर्वोक्तासंक्रांत उच्यते । उत्तरस्य मलमासपदनिर्दिष्टस्य तेष्वेव कर्मसूत्तरश्लोकेनैव निषेधलाभात् । अतश्च समानविषयत्वादत्र निर्दिष्टानां चूडादीनां मंगलपदेनोपादानं बृहस्पतिवाक्ये । एतदन्येषु तु कर्मसु सर्वोऽप्यसंक्रांतिनिर्णय उत्तरस्मिन्प्रवर्तते न पूर्वस्मिन् । प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तर इति पूर्वोक्तवचनात् । आब्दिकश्राद्धं यत्पूर्वासंक्रांतगतं तत्तत्र कृत्वा क्षयेपि कर्तव्यं । क्षयमासगतमाब्दिकं च तत्रैव कार्यं ।—तत्प्राक्संग्यधिमासिको यदि भवेत्तत्रत्यसांवत्सरं तस्मिन्शुद्धतया क्षये च वचनात्कुर्याद्द्वये कोविदः । इति **दीपिकोक्तेः** ।—एक एव यदा मासः संक्रांतिद्वयसंयुतः । मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते । इति **सत्यव्रतोक्तेः** । क्षये मृतानां तु तिथिः पूर्वार्धे मृतानां पूर्वमासगता सा तिथिर्ग्राह्या । उत्तरार्धे मृतानां उत्तर-

मासगता सा तिथिर्ग्राह्या । एवं क्षयोत्पन्ने वर्धापनेपि निर्णयः । तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्धे तदुत्तरः । मासाविति बुधैश्चित्यौ क्षयमासस्य मध्यगौ । इति वचनादिति हेमाद्रिः । तथाच दीपिका—नष्टानां क्षयमासगासु तिथिषु प्रागंत्ययोरर्धयोर्ग्राह्यास्तत्तिथयः क्षयाहविषये प्रागूर्ध्वमासस्थिताः । एवं तन्नववर्धनेपि इति । काम्यानां च प्रथमारंभ एवात्र निषिद्धो न द्वितीयादिः । पौषस्य क्षयमासत्वे माघस्नानद्वितीयारंभस्य तत्रावश्यकत्वात्कार्तिकस्य क्षयमासत्वे तत्र समाप्तेरावश्यकत्वादिति हेमाद्रिः । तथाच दीपिका—प्रथमतः प्रारंभमेव क्षय इति न वितनुयादित्यनुषंगेण पूर्यते । येनार्जितानि० । श्रीबाजबाहदुरसंज्ञनृपस्य तस्य० । योनंतदेवकृतमंथनसंनिबंधक्षीराब्धिजो० संक्रांतिदीधितिरियं स्मृतिकौस्तुभस्य । इति मलमासकृत्यं ।

उक्तचांद्रसंवत्सरस्यावांतरभेदानाह । नारदः—प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः । अंगिरा श्रीमुखो भावो युवा धाता तथैव च । ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः । चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः । सर्वजित्सर्वधारी च विरोधी विकृतिः खरः । नंदनो विजयश्चैव जयो मन्मथदुर्मुखौ । हेमलंबी विलंबी च विकारी शार्वरी प्लवः । शुभकृच्छोभकृत्क्रोधी विश्वावसुपराभवौ । प्लवंगः कीलकः सौम्यः साधारणविरोधकृत् । परिधावी प्रमादी च आनंदो राक्षसो नलः । पिंगलः कालयुक्तश्च सिद्धार्थी रौद्रदुर्मती । दुंदभी रुधिरोद्गारी रक्ताक्षी क्रोधनः क्षयः । इति । अत्र पंचानां संवत्सरादिसंज्ञा उक्ता माधवीये ब्रह्मवैवर्ते—संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः । इदावत्सरस्तृतीयश्चतुर्थश्चानुवत्सरः । इद्वत्सरः पंचमस्तु तत्संघो युगसंज्ञकः । इति । तेषु प्रत्येकं कार्यविशेषो विष्णुधर्मोत्तरे—संवत्सरे तु दातॄणां तिलदानं महाफलं । परिपूर्वे तथा दानं यवानां द्विजसत्तम । इदापूर्वे च वस्त्राणां धान्यानां चानुपूर्वके । इत्पूर्वे रजतस्यापि दानं प्रोक्तं महाफलं । इति । नच प्रतिपंचकं तत्संज्ञाप्रवृत्तौ न मानमिति वाच्यं ।—चांद्राणां प्रभवादीनां पंचके पंचके युगे । संपरीदान्विदित्वेतच्छब्दपूर्वास्तुवत्सराः । इति माधवोक्तेरेव मानत्वात् । सकलशिष्टव्यवहारसहकृता-

दतएव माधववचनाच्चांद्रविषया एव प्रभवादिसंज्ञा धर्मानुष्ठानोपयोगिन्यो नतु वत्सरांतरविषया इत्यपि सिद्धं । सर्वचांद्रसाधारणमपि कार्यं द्विविधं । चैत्रशुक्लप्रतिपदुपक्रमकवत्सरसाध्यं किंचित् । यथा पूर्वोदाहृतं विष्णुधर्मोक्तं विद्याव्रतं तथा सर्वकर्मारंभे स्मरणं च ।—स्मरेत्सर्वत्र कर्मादौ चांद्रं संवत्सरं तथा । दानान्यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तिता । इत्यार्ष्टिषेणवचनात् । अन्यादृशोपक्रमवत्सरसाध्यमपि किंचिद्यथोदाहृतानंतव्रतादि । अयंच विवेको माधवीये कृत इति नास्माकं प्रयास उचित इत्यलं । येनार्जितानि० । योनंतदेवकृत० । चांद्राब्ददीधितिरियं स्मृतिकौस्तुभस्य। इति चांद्रसंवत्सरकृत्यं।

अथ **सौरसंवत्सरकृत्यं** । द्वादश सौरमासाः सौरसंवत्सरः । संक्रांतेरासंक्रांतिकालश्च सौरमासः । मासाः सावनसौरचांद्रभभुवोऽह्नां त्रिंशता संक्रमादासंक्रांति सितादिपक्षयुगतः सर्वर्क्षभुक्त्या क्रमात् । इति **दीपिकोक्तेः** । भभूर्नाक्षत्रः । सर्वर्क्षाणि सर्वनक्षत्राणि। यथा चांद्रमासस्त्रिंशत्तिथ्यवच्छिन्नकालात्मकचांद्रदिनात्मकः । तथा सौरमासोपि राशित्रिंशांशसौरभोगावच्छिन्नकालात्मकत्रिंशत्सौरदिनात्मकः । अतश्च सावनसौरचांद्राख्त्रयोऽपि स्वस्वमानेन षष्ट्यधिकशतत्रयदिनात्मकः सन्नपि नाक्षत्रवत्सरो नैव । नाक्षत्रमासस्य सप्तविंशतिदिनात्मकत्वात् । सूचितं चैवं **दीपिकायां**—नाडीषष्टिमितोऽर्कराश्यनुगतत्रिंशांशभाक्तिथ्यवच्छिन्नो भावधिरेवमेव दिवसः प्रोक्तश्चतुर्धा बुधैः । इति । सूर्यचंद्रादीनां गतिवैचित्र्यात्तन्न्यूनाधिकसंख्यसावनाहोरात्रैस्तेषां समाप्तिः । तथाचायुर्वेदपठितं वचः—सौरबृहस्पतिसावनशशधरनाक्षत्रिकाः क्रमेण स्युः । मातुलपातालातुलविमलवरांगाश्च वत्सराः पंच । इति । बृहस्पतिशशधरपदाभ्यां तत्प्रयुक्तौ वत्सरावुच्येते। अत्र मकारतकारलकारैः पंच षट् त्रिसंख्या उपस्थाप्यंते । गणकप्रसिद्ध्यनुसारेणांकक्षेपे सति मातुलपदोपस्थापितपंचषष्ट्यधिकशतत्रयसंख्यैरहोभिः सौरस्य समाप्तिरिति । एवमग्रेपि पातालशब्दोक्तैकषष्ट्यधिकशतत्रयसंख्यैर्बार्हस्पत्यस्य । अतुलशब्दोक्तषष्ट्युत्तरशतत्रयसंख्यैः सावनस्य । विमलशब्दोक्तचतुःपंचाशदधिकशतत्रयसंख्यैश्चांद्रस्य । वरांगशब्दोक्तचतुर्विंशत्यधिकशतत्रयसंख्यैर्नाक्षत्रस्येति ।

अथ द्वादशसौरमासोपक्रमभूतसंक्रांतिकृत्यं **नागरखंडे**—रवेः संक्रमणं राशौ संक्रांतिरिति कथ्यते । स्नानदानतपःश्राद्धहोमादिषु महाफला । इति । अत्र पृथिव्यादिनववाचिनोपि द्रव्यशब्दस्य द्रव्यवानेष इत्यादौ यथा सुवर्णादिपरत्वं सुवर्णादेर्महाफलत्वात् वृद्धैस्तत्परकथनाच्च, तथा सर्वग्रहाणां राश्यंतरसंक्रमणवाचिनोपि संक्रांतिशब्दस्य—संक्रांतेः पुण्यकालस्तु षोडशोभयतः कला इत्यादिशास्त्रे रविसंक्रमणमात्रपरत्वं । तथैव निबंद्धृभिर्लौकिकैश्च कथनात्, रविसंक्रमणस्यैव महाफलत्वाच्चेति वक्तुं पुना रविशब्दस्य न पाठः । कथ्यत इति पदमुत्तरार्धे च संबध्यते । तत्र संज्ञाभेदमाह **वसिष्ठः**—झषकर्कटसंक्रांती द्वे उदग्दक्षिणायने । विषुवती तुलामेषौ तयोर्मध्ये ततोऽपराः । वृषवृश्चिककुंभेषु सिंहे चैव यदा रविः । एतद्विष्णुपदं नाम विषुवादधिकं फलं । कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः । षडशीतिमुखी प्रोक्ता षडशीतिगुणा फलैः । इति । तयोरित्यस्य वीप्सा बोध्या । द्वयोर्द्वयोरयनविषुवतोर्मध्ये एकं विष्णुपदमपराशीतिरित्येवं सतां चतुर्णां द्विकानामाद्याश्चतस्रो विष्णुपदोऽपराश्चतस्रः षडशीतय इति प्रदर्शनार्थं वृषादीनां पूर्वपाठः । रविग्रहणेन नैता अपि संज्ञा ग्रहांतरसंक्रमणविषया इति कथ्यते ।

अत्र फलतारतम्यं **वृद्धवसिष्ठः**—अयने कोटिपुण्यं च लक्षं विष्णुपदीफलं । षडशीतिसहस्रं तु षडशीत्याः स्मृतं बुधैः । शतमिंदुक्षये दानं सहस्रं तु दिनक्षये । विषुवे शतसाहस्रं व्यतीपाते त्वनंतकं । इति । संक्रांतिसमयस्य दुर्ज्ञेयत्वात्तत्संबंधी कः कालः कियांश्च पुण्य इत्यपेक्षायां **देवलः**—संक्रांतिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः । तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रता । इति । प्राक्पंचदशोर्ध्वं च पंचदशेत्येवं त्रिंशदिति व्याख्येयं । अतीतानागतो भोगो नाड्यः पंचदश स्मृताः । इति **देवीपुराणसंवादलाभात्** । **शातातपः**—अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश । कालः पुण्योऽर्कसंक्रांतेः । इति । अत्र च गतिवैचित्र्यवशेन रविकेंद्रपूर्वोत्तरभागयोरुत्तरराशिचक्रप्रवेशः कदाचित्पंचदशभिः कदाचित्षोडशभिर्भवतीति तदनुसारेण पुण्यकालव्यवस्था बोध्या ।

यत्तु स्कांदे—पुण्यकालो विष्णुपद्याः प्राक्पश्चादपि षोडश। इति। न तद्वशेनोक्तसामान्यवाक्योपसंहारः शंक्यः।—अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत्। इत्युपक्रमस्थविध्यनुसारेणोपसंहारगतेऽर्थवादेऽस्मिन्विष्णुपदीग्रहणस्योपलक्षणत्वात्।

उक्तः संक्रांतिसामान्यपुण्यकालः। संक्रांतिविशेषे विशेषोपि स्मर्यते। वसिष्ठः—मध्ये तु विषुवं पुण्यं प्राग्विष्णौ दक्षिणायने। षडशीतिमुखेऽतीते अतीते चोत्तरायणे। इति। मध्ये उभयत इत्यर्थः। विष्णौ विष्णुपदे। पुण्यमित्यस्य चतुर्ष्वप्यनुषंगः। प्रागित्यस्य दक्षिणायन इत्यनंतरमपि विषुवे सामान्यप्राप्तानुवादः परस्तुत्यर्थः। न तूपसंहार एषोपि। उक्तस्कांदवाक्ये निरालंबनत्वप्रसंगात्। एवं विष्णुपदादिष्वपि प्रागेवेति अतीत एवेति न कालांतरपुण्यत्वपरिसंख्या क्रियते तस्यां दोषत्रयात्, स्कांदवाक्ये निरालंबनत्वापत्तेश्च। किंतु प्रागादिकाले पुण्यतरत्वं विधीयते।—षडशीतिमुखेऽतीते तथोदगयनेपिच भूरिफलमिति ज्योतिःशास्त्रसंवादलाभात्। बौधायनः—पुण्यं विषुवति प्रोक्तं दश पूर्वास्तथा पराः। इति। वसिष्ठः—त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः पराः। इति। ब्रह्मवैवर्ते मकरे तु दशाधिकाः इति पाठः। अत्र विषुववाक्ये सामान्यप्राप्तसंख्यामध्ये दशानां पुण्यतरत्वं प्राप्यते। अयनवाक्ये तु दशाधिकानां संक्रमव्यवहितानां न्यूनपुण्यजनकत्वे तात्पर्यं। माधवीये वृद्धवसिष्ठः—षडशीत्यामतीतायां षष्टिरुक्तास्तु नाडिकाः। इति। तत्र प्रत्येकं पंचदशेत्येवं मिलित्वा षष्टिरिति हेमाद्रिणा व्याख्यातं। अन्यैस्त्वष्टिरिति पाठमवलंब्य तच्छंदसः षोडशाक्षरपादत्वात्प्रत्येकं षोडशेत्यर्थ इत्युक्तं। व्याख्याद्वयेपि सामान्यप्राप्तार्थस्य पुनः संकीर्तनं व्यर्थं माभूदिति विषुवे यद्दशानां पुण्यतरत्वं तदिहेयतीनामिति ज्ञापयति।—पुण्यकालो विष्णुपद्याः प्राक्पश्चादपि षोडशेति वसिष्ठवाक्येपि तदेव पुण्यतरत्वं पुण्यपदाभिहितं प्राग्विधीयते। पश्चादिति तु सामान्यप्राप्तानुवादः। ब्रह्मवैवर्ते—विषुवे षण्मुहूर्तं स्यात्षडशीतिमुखे त्रयं। तथा विष्णुपदे त्रीणि युग्मानि कवयो विदुः। इति। मेषे त्रीणि तुलायां त्रीणीति विभागो बोध्यः। तथाच दशसंक्रांतिषु मुहूर्तत्रयपुण्यतमत्वं विधीयत इत्येकरूपो वाक्यार्थः।

एवमुदाहृतवाक्यानामन्येषां च पुण्यतारतम्ये तात्पर्यं शातातपवाक्येन निर्णीयते । यायाः संनिहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः । इति । नन्वत्र वाक्ये षोडशादिसामान्यविहितपुण्यकालमध्ये यद्यन्न्यूनसंख्यानां घटिकानां पुण्यत्वं दश पूर्वा दश परा इत्यादिशास्त्रांतरप्रसिद्धं तत्तत्संख्यास्ता या या इत्यनूद्य तासां पुण्यतमत्वाभिप्रायं तत्तत्स्मरणमिति विधीयते, उताविशेषेण सामान्यविशेषप्रवृत्तशास्त्रांतरप्रसिद्धपुण्यघटिकामध्ये प्रतिघटिकं संक्रांतेः पूर्वासूपांत्यातोंऽत्येत्येवमुत्तरासु च द्वितीयस्याः प्रथमेत्येवं पुण्यतमत्वमप्राप्तं विधीयते । नाद्यः । तथा सति विषुवे दशानामपि मध्ये उपांत्यघटिकातोंत्यघटिकाया आदरेण शिष्टानां स्नानाद्याचारस्य निर्मूलत्वापत्तेः । नच संक्रांतिसंनिहितत्वेन न्यायादेव तत्र पुण्यतमत्वलाभ इति शंक्यं । पूर्वाह्णसंधौ तत्संनिहितप्रधानयोगानुष्ठाने शिष्टादरादर्शनात्, धर्मस्य शास्त्रैकगम्यत्वाच्च । न द्वितीयः । सर्वसंक्रांतिषु षोडशमध्ये व्यवहिताभ्यः षड्भ्योऽव्यवहितानां दशानां पुण्यतमत्वे सति विशिष्य विषुवे दश पूर्वा दश परा इति कीर्तनस्य निस्तात्पर्यत्वापत्तेः । नच दशसु तारतम्यबाधेनैकरूपपुण्यजनकत्वं बोध्यत इति सुवचं । तथा सति शिष्टाचारविरोधतादवस्थ्यात् । अत्र ब्रूमः । द्वितीयपक्षे विशेषवचसां निस्तात्पर्यकत्वापत्तिरूपो दोषो न संगच्छते । मेषादेः षोडशघटिकानां सामान्यविहितस्नानादौ तारतम्येन पुण्यत्वे सत्यपि वक्ष्यमाणसुजन्माप्तिव्रतादौ विशिष्य मेषसंक्रमणे भार्गवं रामं पूजयेत् वृषे श्रीकृष्णं पूजयेदिति यत्पूजनादिविहितं तत्तदपूर्वसाधनता भार्गवपूजायां दशस्वेव पूर्वोत्तरासु, श्रीकृष्णपूजायां षोडशस्वपीत्येवमतिशयबोधकत्वे तात्पर्यांगीकारात् । अतश्च या या इति शास्त्रात्तास्वपि तारतम्ये सत्यपि तदधिकासु तन्नैव कर्तुमुचितं । नचैवं न्यूनाधिकपुण्यकालबोधकशास्त्रव्यवस्थाहेतुत्वेन या या इति शास्त्रोपन्यासो ग्रंथकर्तॄणां न संगच्छते भिन्नविषयत्वात्तेभ्योऽस्येति वाच्यं । षोडशानामपि तारतम्येन पुण्यत्वबोधकेनानेन तदंशादिन्यूनपुण्यत्वबोधकशास्त्राणामधिके परिसंख्यायां तात्पर्यनिवृत्त्यर्थत्वेन तदुपन्यासोपपत्तेः । यदा चोदगयनादिसंक्रांतिरस्तात्प्राक् भवति मुहूर्तद्वयावशेषे कर्कादिर्वोदयानंतरं मुहूर्तद्वयमुल्लंघ्य भवति

तदा दिवैव मुहूर्तद्वये स्नानादि कार्यं नतु रात्रावपि—अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितं । रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः । इति वसिष्ठोक्तेः । अत्र पूर्वार्धेनोक्तविषये दिनरात्रिगतघटिकानां समुच्चित्य पुण्यत्वं शास्त्रांतरप्राप्तमनूद्य तत्परिसंख्या रात्रौ क्रियते । अह्नि संक्रमणे सति यत्कृत्स्नमनेकविधसंख्यघटिकापरिमितं पुण्यं प्रकीर्तितं तदह्नरेवेति । एवमस्ताव्यवहितपुण्यकाले उदयाव्यवहितोत्तरकाले चोक्तक्रमेण मकरकर्कटयोः सत्वे पूर्वोत्तरकालयोः प्रशस्तप्रशस्ततरत्वाभ्यां प्राप्तौ प्रशस्ततरपरिसंख्या क्रियते । एवं विषुवस्य तथासत्वे उभयोः पूर्वोत्तरकालयोस्तुल्यतया प्राप्तौ रात्रिगामिनः कालस्य परिसंख्येति बोद्धव्यं । उत्तरार्धेन तु रात्रिगतघटिकानां पुण्यत्वं सामान्यशास्त्रप्राप्तमपोह्य दिनार्धपुण्यत्वं विधीयते । रात्रिशब्देन संध्याद्वयमपि संगृह्यते ।—संपूर्णे अर्धरात्रे तु उदयेऽस्तमयेऽपि च । मानार्धे भास्करे पुण्यमपूर्णे शर्वरीदले । इति देवीपुराणवचनात् । भास्करो दिवसः । निशीथे संध्ययोस्तन्मध्यभागयोश्च संक्रमणे सति दिनार्धे पुण्यमित्यर्थः । कुत्र भागे संक्रमणे कतरद्दिनार्धं पुण्यमित्याकांक्षायां देवीपुराणएवोक्तं—अर्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतं । संपूर्ण उभयोर्ज्ञेयमतिरेकोऽपरेहनि । आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् । अर्धरात्रे व्यतीते तु विज्ञेयमपरेऽह्नि । इति । असंपूर्ण इत्यंतेन निशीथपूर्वसायमादिकालीनसंक्रममुद्दिश्यानागतमित्यंतेनातीतदिनोत्तरार्धस्य पुण्यत्वं बोध्यते । तृतीयेपादे निशीथसंक्रमणे पूर्वोत्तरदिनार्धयोरविशेषेण । चतुर्थेत्वतिरेकपदेन निशीथोत्तरसंध्यांतकालीनमुद्दिश्योत्तरदिनपूर्वार्धस्य । एतच्चायनव्यतिरिक्तविषयं ।—अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया । ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयं । पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः । प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ । इति गोभिलवचनात् । देवीपुराणसंवादाय मध्याह्न आवर्तनं(?) दिनद्वयमर्धावच्छिन्नमिति व्याख्येयं । अत्र च प्रथमार्धे मकरस्य पर्युदासं द्वितीये कर्कस्य दिनद्वयमित्यत्र द्वयोरपीति तात्पर्यं बोध्यं । पूर्वोत्तरदिनार्धयोरव्यवस्थया निशीथसंक्रमणनिमित्तपुण्यत्वे प्राप्ते व्यवस्थापकमादावित्यादिवचः । निशीथे यस्यां

तिथौ संक्रमणं सा चेत्पूर्वदिनतिथ्यभिन्ना तदा पूर्वदिनार्धं पुण्यं। अर्थात्तयोर्भेद उत्तरदिनार्धमिति तृतीयचरणानंतरं द्वितीयानुषंगः। ततश्च निशीथोत्तरसंक्रमणतिथेः पूर्वतिथ्यभेदेपि उत्तरदिनार्धस्यैव पुण्यत्वमिति। यदा तु निशीथसंक्रमतिथिः पूर्वोत्तरोभयदिनप्रविष्टा भवति तदा पूर्वभागिनीषु संक्रांतिषु पूर्वदिनोत्तरार्धे पुण्यं। उत्तरभागिनीषु उत्तरदिनार्धे। उभयभागिनीषु ऐच्छिको विकल्प इति केचित्। तच्चिंत्यं। यथाहि पूर्वदिनमात्रवृत्तितिथ्यभेदे कर्कमकरान्यसर्वसंक्रांतिषु पूर्वदिनार्धस्यैव पुण्यत्वं स्वीक्रियते। तथा दिनद्वयवृत्तितिथ्यभेदोपि स्वीकर्तुमुचितः। पूर्वदिनवृत्तितिथ्यभेदाख्यस्य निमित्तस्य तुल्यत्वात्। यदि ह्युत्तरदिनवृत्तितिथ्यभेदोऽपि निमित्तत्वेन श्रूयेतोत्तरदिनार्धग्रहणे। तथा निमित्तद्वयसंनिपाते व्यवस्थापेक्षायामुक्तविधमव्यवस्थाकल्पनं घटेत तथापि नचैव श्रूयते, अर्थात्कल्प्यत इतिचेन्न। पूर्वतिथ्यभेदे पूर्वदिनार्धस्य पुण्यत्वे कथिते हि तद्विनविपर्यये पूर्वतिथिभेदे उत्तरदिनार्धस्य ग्राह्यत्वमर्थात्सिध्येत् नतूत्तरतिथ्यभेदे। तस्य तदविरोधित्वेनाविपर्ययत्वात्। उक्तंच **हेमाद्रिणा** कर्कमकरव्यतिरिक्तसर्वसंक्रांतिविषयत्वमस्य साधयितुं प्रवृत्तेनाप्यस्य व्याख्यावसरे—आदावहनि पुण्यं जानीयात् यद्यर्धरात्रे पूर्वदिनतिथ्या एकैव तिथिर्भवति। यद्यन्या स्यात्तदा आदावहनि न पुण्यमित्यर्थसिद्धं किंतु परदिन एवेति। अतएवोक्तं **दीपिकायां**—निशीथे तु चेत्। जायेतायनवर्जितेह सकला संक्रांतिरर्वागहस्तिथ्यैकैवनिशीथगा यदि तिथिः शस्तं तदा प्राक्दिने। अंत्यार्धे यदि संक्रमस्य समये भिन्ना तिथिः स्यात्परेऽहन्याद्यं दलमुत्तमं स्मृतं। इति। अनुसृतं चेत्थमेवार्थिकोन्नयनं **निर्णयामृतादावपि**। नच पूर्वतिथ्यभेददृष्टांतेनोत्तरतिथ्यभेदस्य निमित्तत्वानुमानं शंक्यं। विवृद्धस्तोमकेषु आनीयमानसकलचां वृषणवत्तृचदृष्टांतेन प्राक्पर्यासांनिवेशानुमानस्य(?) निरासत्साधकपांचमिकन्यायेन निरस्तत्वात्। अतो दिनद्वयवृत्तितिथ्यभेदेपि अयनव्यतिरिक्तसर्वसंक्रांतिषु पूर्वदिनार्धमेव पुण्यमिति युक्तं।

अयने कथं निर्णय इत्यपेक्षायां **वृद्धगार्ग्यः**—यदास्तमयवेलायां मकरं याति भास्करः। प्रदोषे वार्धरात्रे वा स्नानं दानं

परेहनि । अर्धरात्रे तदूर्ध्वं वा संक्रांतौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः । इति । नोदयते नोदित इत्यर्थः । औचित्येनोदयस्यास्तसामान्यात् । यत्तु गार्ग्यवचः—विष्णुपद्यां धनुर्मीननृयुक्कन्यासु वै यदा । पूर्वोत्तरगतं रात्रौ भानोः संक्रमणं भवेत् । पूर्वाह्ने पंचनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः । अपराह्णे च पंचैव श्रौते स्मार्ते च कर्मणि । इति । नृयुक् मिथुनं । यच्च स्कांदं—धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा । पूर्वापरविभागेन रात्रौ संक्रमते रविः । दिनांते पंच नाड्यस्तु तदा पुण्यतमाः स्मृताः । उदये च तथा पंच दैवे पित्र्ये च कर्मणि । इति । नैताभ्यां सामान्यशास्त्रप्राप्तदिनार्धपुण्यत्वं बाध्यते । तस्य निर्विषयत्वेनानर्थक्यापत्तेः । नह्येताभ्यामविषयीकृता काचित्संक्रांतिरस्ति यद्विषयत्वेन सामान्यशास्त्रमर्थवत्स्यात् । नचानयोः पूर्वापरभागविषयत्वेन सामान्यशास्त्रस्य निशीथसंक्रममात्रविषयत्वं शंक्यं । उदाहृतदेवीपुराणादिवचसि अपूर्णे शर्वरीदल इत्येवं पूर्वोत्तरभागयोरपि विशिष्य कीर्तनात् । अतः पुण्यतमत्वाशये इमे शास्त्रे इति बहवः । अत्रापि पूर्वोक्तरीत्या आनर्थक्यपर्यवसानान्न तत्संक्रांतिविशेषविहितभार्गवपूजादिविषयत्वं युक्तमिति तु तत्त्वं । या या इति शास्त्रात्पुण्यतमत्वं तु पंचनाडीनां न विचारयामः । एवं रात्रिसंक्रमणे दिवैव पुण्यत्वमिति स्थितं ।

यत्तु नारदः—अहःसंक्रमणे कृत्स्नमहःपुण्यं प्रकीर्तितं । रात्रौ संक्रमणे भानोर्व्यवस्था सर्वसंक्रमे । १ । सूर्यास्तमानसंध्यायां यदि सौम्यायनं भवेत् । परतः पुण्यकालः स्यात्परतश्चेत्परेहनि । २ । सूर्यस्योदयसंध्यायां यदि याम्यायनं भवेत् । तदोदयादहः पुण्यं पूर्वाहः पूर्वतो यदि । ३ । संक्रांतगतयो राश्योरंतरालमहर्पतेः । किंत्वेवं विंबमध्यं तदहः पुण्यं महत्फलं । ४ । अर्धास्तमानसंध्या स्याद्घटिकात्रयसंमिता । तथैवार्धोदयात्प्रातर्घटिकात्रयसंमिता । ५ । प्रागर्धरात्रात्पूर्वाहः पूर्ववद्विष्णुपादयोः । पश्चात्पराहः संक्रांतेः षडशीतौ विपर्ययात् । ६ । इति । अत्र प्रथमश्लोके तावदहःशब्दौ दिवसपरौ । उत्तरार्धे रात्रौ वैलक्षण्योक्तेः । तत्रापि यदह्नि संक्रमणं तदहः कृत्स्नं पुण्यमिति निर्दिश्यते उपस्थितिलाघवात् । निर्दिष्टं चतु-

र्थश्लोके स्पष्टं तथा । तदहरित्युक्तेः यस्मिन्नहनि तादृशं विंव-मध्यं तदहः पुण्यमित्यत्रापि दिवसस्यैव ह्रिःप्रतीतिः अहर्पतेरि-त्यहःपदसाहचर्यान्निशापत्यहर्पतिशब्दयोर्व्यवस्थितविषयत्वात् । पंचमश्लोके चार्धास्तोदयहेतुकसंध्ययोस्त्रिघटिकामानं नान्यतर-भागे विधीयते । ऊर्ध्वमध इति ऐच्छिकाध्याहारस्यात्यंतान्या-य्यत्वात् । किंतु प्रागूर्ध्वं च सार्धघटिकेत्येवं तद्विधिः । संधिनि-रूप्याया उभयभागघटितत्वौचित्यात्, संध्याकर्मणस्तदुभयभा-गाधिकरणत्वविधेर्नव्यतरैस्तथैव व्याख्यानाच्च ।एवंच द्वितीयतृ-तीयश्लोकाभ्यां संध्यांतर्गतदिनभागस्थयोरस्तोदयव्यवहितक्षण-योरयननिमित्तात्तत्स्वभावविपरीता कृत्स्नाहःपुण्यता नियम्यत इति वक्तुमुचितं । प्रथमचतुर्थश्लोकरूपोपक्रमोपसंहारैकवाक्य-तानुरोधेन तयोरपि दिनमात्रगतनिमित्तनैमित्तिकपरत्वलाभात् । प्रथमे रात्रावित्युत्तरार्धस्य शास्त्रांतरसिद्धव्यवस्थानुवादिनः पूर्वा-र्धशेषत्वात् । द्वादशाहीनस्येत्यस्य त्र्युपसत्ताविधिशेषत्ववत् । यदि ह्यंतरालगतौ श्लोकौ नाहर्भागमात्रविषयौ तदा प्रथमचतु-र्थावनर्थकावेव स्यातां । नापि प्रथमश्लोके कृत्स्नपदं विधित्वेनानु-वादत्वेन वा नेतुं शक्यं । तयोस्तन्मात्रविषयत्वेन व्यवस्थापके तस्मिन्व्यवस्थाप्यशास्त्रवशेन यथाप्राप्तं कार्त्स्न्यं तदनुवादत्वेन तं नेतुं उक्तलक्षणगतायनयोः स्वभावविपरीताहःपुण्यताविधौ न संकोचकमस्तीति निःसंदेहं कार्त्स्न्यप्राप्तेः । भवतूपक्रमेप्युपसंहा-रबलाद्द्वितीयतृतीययोर्दिनांतरगतसंध्याभागविषयत्वं तादृशलक्ष-णविषयत्वं कुतो लभ्यत इति चेच्छृणु—प्राग्विष्णौ दक्षिणायने । षडशीतिमुखेऽतीते अतीते चोत्तरायण इति तत्तत्संक्रांतेः क्लृप्त-स्वभावानुसारिणि दिनांतर्गते स्वल्पेपि पुण्यकाले संभवति तद्वि-परीतपुण्यत्वं विधेरपूर्वविधित्वमापद्यते । एवं रात्र्यंतर्गतसंध्या-भागस्थायनयोस्तत्स्वभावविपरीतपुण्यत्वविधेरपि—यदास्तमय-वेलायां मकरं याति भास्करः । प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनि । अर्धरात्रे तदूर्ध्वं वा संक्रांतौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः । इति अनेकनिबंधलिखित-वृद्धवसिष्ठवचोबाधमंतरेणाप्रवृत्तेः । आपद्यते चात्रत्ययोरस्त-मयोदयग्रहणयोरानर्थक्यं अस्ताव्यवहितपूर्वक्षणवर्तिनि मकरे। उदयाव्यवहितोत्तरक्षणवर्तिनि कर्के तु यद्दिने संक्रमणं तद्दिनं

पुण्यमिति नियमानुरोधे। ततः स्वभावो वा बाध्यतां स्वभावानुरोधेन नियमो वेत्याकांक्षायां स्वभावबाधेन नियमानुसरणं नियम्यते। आकांक्षितसमर्पणलाभात्, नियमविधित्वे लाघवात्, उपक्रमोपसंहारयोरर्थवत्त्वात् कस्याप्यानर्थक्याप्रसंगाच्च। स्वीकृतश्चेद्दृशविषये सामान्यप्रवृत्तस्यापि शास्त्रस्य विशेषविषये संकोचो जैमिनीये—उपांशु यजुषा पत्नीसंयाजांतान्यहानि संतिष्ठते इत्यादौ। नच संध्यांतर्गतक्षणविशेषमात्रगोचरनियमचिकीर्षायां संध्यालक्षणोपन्यासस्य निस्तात्पर्यापत्तिः—दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः। कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः। इत्यादौ संध्यायाः पृथङ्निर्देशेन न तस्या दिनरात्र्यंतर्गतत्वमिति पूर्वोत्तरभागगतसंक्रमयोर्दिनरात्रिसंक्रमांतर्गतत्वमंगीकृत्य निर्णयोऽनुचित इति शंकापनयनार्थत्वात्। याज्ञवल्क्यवचने हि संध्याशब्दोऽर्धोदितास्तमितपरः। तथैव व्याख्यातं विज्ञानेश्वरेण। इहतु पूर्वोत्तरभागपरोपि। तौ च दिनरात्र्यंतर्गताविति संभवति तथा निर्णय इति तात्पर्यं। अर्धविवक्षणे तु संदेहादस्तु दिनसंक्रमणानिर्धारणेपि वाचिको नियमः। संगच्छतेचैवं मदनरत्नग्रंथोपि अस्तमयवेलायां तदुत्तरकाले तत्संनिहित इति। एवंच षष्ठश्लोके विष्णुपदे अशीत्यां च पूर्ववद्विपर्ययादितिपदाभ्यां शास्त्रांतराविरोधेनोक्तलक्षणगततत्तत्संक्रमणनिमित्तः स्वभावविपर्ययो नियम्यत इति लाघवं।

यत्तु—राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु। स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च। इति वृद्धयाज्ञवल्क्यवचनं तत् मुक्त्वा मकरकर्कटाविति पर्युदासबलादयनविषयमेवेति माधवः। तत्त्वं तु उदाहृतवचनैः सर्वसंक्रांतिष्वविशेषेण दिनार्धपुण्यत्वविधिवशेन रात्रिपुण्यत्वनिषेधे सत्ययने विशेषहेत्वभावात्। अतः सर्वसंक्रांतिषु दिने वा रात्रौ वा पुण्यकालो देशाचारवशेन व्यवस्थित इति प्रापकं, तद्दिवासंक्रमणनिमित्तस्नानाद्यसंभवे गौणत्वेन रात्रिप्रापकं च। प्रतिपत्सद्वितीयेत्येतत्कृष्णप्रतिपदि मुख्यत्वेन शुक्लायां गौणत्वेन प्रापकमिति माधवोक्तरीत्येति मंतव्यं। यत्तु हेमाद्रौ देवीपुराणे—मंदा मंदाकिनी ध्वांक्षी घोरा चैव महोदरी। राक्षसी मिश्रिता प्रोक्ता संक्रांतिः सप्तधा नृप। सूर्ये घोरा विधौ ध्वांक्षी भौमवारे महो-

दरी । बुधे मंदाकिनी नाम मंदाऽसुरपुरोहिते । मिश्रिता शुक्रवारे स्याद्राक्षसी च शनैश्चरे । मंदा ध्रुवेषु विज्ञेया मृदौ मंदाकिनी तथा । क्षिप्रैर्ध्वांक्षीं विजानीयादुग्रैर्घोरा प्रकीर्तिता । चरैर्महोदरी ज्ञेया क्रूरैर्ऋक्षैस्तु राक्षसी । मिश्रिता चैव निर्दिष्टा मिश्रितर्क्षैस्तु संक्रमे । त्रिचतुःपंचसप्ताष्टनवद्वादश एव च । क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकं । इति ।

तत्र ध्रुवादीनि नक्षत्राणि हेमाद्रिणैव व्याख्यातानि । ध्रुवाण्युत्तरात्रयं रोहिणी च । मृदूनि अनुराधाचित्रारेवतीमृगशीर्षाणि । क्षिप्राणि अभिजिद्धस्ताश्विनीपुष्याः । उग्राणि पूर्वात्रयं भरणी मघा चा।चराणि पुनर्वसुश्रवणधनिष्ठास्वातीशतभिषाः । क्रूराणि मूलज्येष्ठार्द्राश्लेषाः । मिश्रे कृत्तिका विशाखा चेति । एवं सप्तविधसंक्रांतीनां तत्तज्जातीयान्प्रति व्यवस्थितं शांतिकपौष्टिकोपयोगित्वमपि तत्रैवोक्तं ।—मंदा विप्रजने शस्ता मंदाकिन्यथ राजनि । ध्वांक्षी वैश्येषु विज्ञेया घोरा शूद्रे शुभप्रदा । महोदरी तु चोराणां शौंडिकानां जयावहा । राक्षसीति विशेषः । चंडालपुल्कसानां च ये चान्ये क्रूरकर्मिणः । सर्वेषां कारुकाणां च मिश्रिता वृद्धिवर्धिनी । इति । उक्तं चैतद्व्याख्यातं हेमाद्रिणा । एवंच या यस्य जयावहा स तस्यामभ्युदयसाधनानि कर्माणि कुर्यात् । यस्या जयावहा स दोषनिवृत्त्यर्थं शांतिकानि कुर्यादिति । अतो ब्राह्मणादिजातीयेन मंदादिघटितदेशकालोच्चारणांते त्रिघटिकादिमितकाले तुलादानादिकाम्यं ग्रहदोषनिवृत्त्यर्थं वक्ष्यमाणस्नानादि च कार्यमित्येतदर्थं त्रिचतुरादिपुण्यत्वस्मरणमिति न सामान्यशास्त्रप्राप्तषोडशादिमध्यन्यूनानां पुण्यतमत्वार्थमेतदिति विद्वद्भिर्वक्तुमुचितं । उक्तरीत्या वैयर्थ्यापत्तेश्चेत्यलं ।

अत्र स्नानं नित्यं ।—रविसंक्रमणे प्राप्ते न स्नायाद्यस्तु मानवः । सप्तजन्मनि रोगी स्यान्निर्धनश्चैव जायते । इति हेमाद्रौ शातातपोक्तेः । मानव इति मनुष्यमात्राधिकारित्वं ज्ञाप्यते । तत्रैव—संक्रांतौ यानि दत्तानि हव्यकव्यानि दातृभिः । तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि । इति । भरद्वाजः—षडशीत्यां तु यद्दत्तं यद्दत्तं विषुवद्वये । दृश्यते सागरस्यांतस्तस्यांतो नैव दृश्यते । तत्रैव विश्वामित्रः—मेषसंक्रमणे भानोर्मेषदानं महाफलं । वृषसंक्रमणे दानं गवां

प्रोक्तं तथैवच । वस्त्रान्नपानदानानि मिथुने विहितानि तु । घृतधेनुप्रदानं तु कर्कटे परिशस्यते । ससुवर्णं मंचदानं सिंहे च विहितं सदा । कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च । तुलाप्रवेशे धान्यानां बीजानामेव चोत्तमं । कीटप्रवेशे वस्त्राणां वेश्मनां दानमेव च । कीटो वृश्चिकः । धनुःप्रवेशे वस्त्राणां यानानां च महाफलं । झषप्रवेशे दारूणां दानमग्नेस्तथैव च । कुंभप्रवेशे दानं तु गवामंबुतृणस्य च । मीनप्रवेशे ह्यम्लानां माल्यानामपि चोत्तमं । दानान्यथैतानि मया द्विजेंद्राः प्रोक्तानि काले तु नरः प्रदाय । प्राप्नोति कामं मनसस्त्वभीष्टं तस्मात्प्रशंसंति हि कालमुख्यं । इति । बीजानामेवेति बीजभावयोग्यानामित्यर्थः ।—तुलां प्रत्यागते सूर्ये विषुवे दिवसे सति । ब्राह्मणेभ्यः प्रदेयानि सस्यान्यभिनवानि च । इति **ब्राह्मोक्तेः** ।

मकरे कर्तव्यं तत्रैव कालिकापुराणे—कनकं कुलिशं नीलं पद्मरागं च मौक्तिकं । एतानि पंचरत्नानि न्यसेद्देवस्य मूर्धनि । कुलिशं हीरकं । रत्नानां चाप्यभावे तु कर्षं कर्षार्धमेव वा । सुवर्णं योजयित्वा तु तस्मिन्नेवोत्तरायणे । विधिवच्च तथाभ्यर्च्य गव्येनाज्येन भूरिणा । प्रक्षाल्य मर्दयित्वा तु प्रदद्याद्घृतकंबलं । दत्त्वा चोपस्करं भूयो ब्राह्मणान्यतिभिः सह । संभोज्य दक्षयित्वा तु कल्पयेदनिवारितं । भोजनमन्येभ्य इति शेषः । उपोष्य सर्वमेवैतत्कुर्याद्भक्तिपुरःसरः । पंचगव्यं तिलैर्युक्तं पीत्वा वै पारयेत्स्वयं । तिलैः स्नानं प्रकुर्वीत तैरेवोद्वर्तनं बुधः । देवतानां पितॄणां च उभाभ्यां तर्पणं तथा । होमं तैश्च प्रकुर्वीत सर्वदैवोत्तरायणे । तान्वै देवाय विप्रेभ्यो हाटकेन समं ददेत् । यत्नादेव करोत्येवं चित्तं शंभौ निवेश्य यः । उत्तरायणमासाद्य नरः कस्मात्स शोचति । इति । अत्र शंभौ निवेश्येति वाक्यशेषादुपक्रमे देवस्येति शंभोरित्यर्थः । ततश्चांतरालपठितं होमदानभोजनादि तदुद्देश्यकमेवेति निर्णीयते । स्नानपारणयोर्न क्रमो विवक्षित इति **हेमाद्रिः** । उभाभ्यामिति तादर्थ्ये चतुर्थीत्याह । वस्तुतस्तु क्रमविवक्षायां द्वयोर्ग्रहणमुपलक्षणार्थं । उभाभ्यामिति तृतीयांतं शुक्लकृष्णतिलाभिप्रायं। शुक्लैर्देवानां कृष्णैः पितॄणामित्यर्थः । पूर्वदिने उपोष्य परदिने काले तिलोद्वर्तनतिलस्नानतिलतर्पणानि कृत्वा शिवं गव्येनाज्येन मर्दयित्वा

शुद्धोदकेन प्रक्षाल्य वस्त्राद्युपचारैरर्चयेत् । ततः पंचरत्नान्युक्तपरिमाणं वा सुवर्णं समर्प्य तिलदीपैः सुवर्णतिलैः साक्षतैः संपूज्य घृतकंबलं वितानचामरादीनुपस्कारांश्च समर्प्य ब्राह्मणेभ्यः सुवर्णतिलान्दत्त्वा तिलैर्हुत्वा यतिभिः सह ब्राह्मणान्संभोज्य तेभ्यो दक्षिणां दत्त्वा अन्येभ्यश्चानिवारितमन्नं दत्त्वा सतिलं पंचगव्यं पीत्वा पारयेदिति च प्रयोगक्रमः ।

**तुलाविधिः** शिवरहस्ये मकरं प्रकृत्य—तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः । सतिलैस्तंदुलैश्चैव पूजयेद्द्विधिवद्द्विज । इति । गारुडे—प्रथमा तु घृतस्योक्ता तेजोवृद्धिकरी तुला । लवणस्य तु लावण्यमरोगित्वं गुडस्य तु । अवियुक्ता भवेत्पत्नी तुलया कुंकुमस्य च । न संतापो हृदि भवेत्क्षीरस्य तुलया सदा । इति । तथा—अथ लोहं प्रदातव्यं सर्वरोगोपशांतये । कांस्यं च यक्ष्मके देयं त्रपु चार्शे विदारिकः । इत्यादि प्रकृत्योक्तं ।—तत्रारुहेत्सवस्त्रास्त्रः पुष्पालंकारभूषितः । अभीष्टां देवतां गृह्य स्नापयित्वा घृतादिभिः । तुलादानस्य सर्वस्य विधिरेष प्रकीर्तितः । इति । कृतनित्यक्रियो देशकालौ संकीर्त्य तत्तत्कामनानुसारेण परमेश्वरप्रीतिकामनया वा तत्तद्द्रव्यतुलादानं संकल्प्य गणेशपूजनस्वस्तिवाचनमातृकापूजननांदीश्राद्धान्याचार्यवरणं च कृत्वा यथाशक्ति तत्पूजां कुर्यात् । मंडपपक्षे होमः सग्रहमखः सवास्तुकः कार्यः । तत आचार्यः पवित्रपाणिः सुष्ठुलिप्तायां भुवि गोविंदसूर्यधर्मराजाभीष्टदेवतानां चतसृषु प्रतिमासु अग्न्युत्तारणं कृत्वा । दक्षिणोत्तरावस्थिततुलादंडे दक्षिणप्रांतमारभ्य सूत्रग्रंथिषु चतुर्विंशतिदेवता आवाह्य पूजयेत् । ईशानाय नमः शशिने० मरुताय० सोमाय० सूर्याय० विश्वकर्मणे० गुरवे० अंगिरोग्निभ्यां० प्रजापतये० विश्वेभ्योदेवेभ्यो० जगद्विधात्रे० पर्जन्यशंभुभ्यां० पितृदेवतायै० सौम्याय० धर्माय० अमरराजाय० अश्विभ्यां० जलेशाय० मित्रावरुणाभ्यां० मरुद्गणेभ्यः०धनेशाय०गंधर्वाय०जलाधिपाय०विक्लवाय० इति । ततश्चतसृषु प्रतिमासु गोविंदाद्याश्चतस्रो देवता आवाह्य पूजयेत्षोडशोपचारैः । तत्राभीष्टदेवतायाः घृतादिपंचामृताभिषेकोपि कार्यः । ततो यजमानः शुक्लमाल्यांबरधरः पुष्पांजलिमादाय तुलां त्रिःप्रदक्षिणीकृत्य तुलानुमंत्रणं कुर्यात् । ॐनमस्ते

सर्वदेवानां शक्तिस्त्वं सत्यमाश्रिता । साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना । एकतः सर्वसत्यानि तथानृतशतानि च । धर्माधर्मकृतां मध्ये स्थापितासि जगद्धिते । त्वं तुले सर्वभूतानां प्रमाणं परिकीर्तिता । मां तोलयंती संसाराद्धुद्धरस्व नमोस्तु ते । योसौ तत्त्वाधिपो देवः पुरुषः पंचविंशकः । स एषोऽधिष्ठितो देवि त्वयि तस्मान्नमोनमः । इति । ततस्तुलामध्यलंबितगोविंदानुमंत्रणं । ॐ नमोनमस्ते गोविंद तुलापुरुषसंज्ञक । त्वं हरे तारयस्वास्मानस्मात्संसारसागरात् । पुष्पांजलिना तुलां हरिं चाभ्यर्च्य तुलापार्श्वयोः साम्ये कृते पुनस्तुलां प्रदक्षिणीकृत्य । सूर्यप्रतिमां वाममुष्टौ धर्मराजाभीष्टदेवते दक्षिणमुष्टौ गृहीत्वा प्राङ्मुख उत्तरशिक्यं समारुह्य गोविंदमुखमवेक्षमाणस्तिष्ठेत् । तत आचार्यो दक्षिणतो यजमानाभ्यधिकंघृतादि निदध्यात् । गोदोहमात्रं स्थित्वापठेत् । नमस्ते सर्वभूतानां साक्षिभूते सनातनि । पितामहेन देवि त्वं निर्मिता परमेष्ठिना । त्वया धृतं जगत्सर्वं सह स्थावरजंगमं । सर्वभूतात्मभूतस्थे नमस्ते सर्वधारिणि । ततोऽवतीर्य देशकालोच्चारणपूर्वकं अर्धं पादं वा आचार्याय दद्यात् । सच स्वस्तीत्युक्त्वा सावित्रं पठित्वा स्वशाखोक्तां कामस्तुतिं पठेत् । ततः आचार्याय हिरण्यदक्षिणादानं ततो नानानामगोत्रेभ्योऽवशिष्टं दद्यात् । भूयसीं दक्षिणां च । ततो यथाशक्तिब्राह्मणभोजनसंकल्पः । प्रतिमानां विसर्जनमाचार्यहस्ते समर्पणं परमेश्वरार्पणं चेति घृतादितुलादानविधिः ।

स्कान्दे—धेनुं तिलमयीं राजन्दद्याद्यश्चोत्तरायणे । सर्वान्कामानवाप्नोति विंदते परमं सुखं । इति । विष्णुधर्मोत्तरे—उत्तरे त्वयने विप्रान्वस्त्रदानं महाफलं । तिलपूर्वमनड्वाहं दत्त्व रोगैः प्रमुच्यते । तिलपात्रदानादि तु माघकृत्य एवोक्तं ।

सर्वसंक्रांतिष्वपिंडं श्राद्धं कर्तव्यं—अयनद्वितये श्राद्धं विषुवद्वितये तथा । संक्रांतिषु च कर्तव्यं पिंडनिर्वपणादृते । इति मात्स्यात् । अयनादेः पृथग्ग्रहणं फलातिशयद्योतनार्थं । बृहच्छातातपः—पिंडनिर्वापरहितं यत्तु श्राद्धं विधीयते । स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते । इति । ब्राह्मे—शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः । महाजया तदा सा वै सप्तमी भास्कर-

प्रिया । यस्तस्यां मानवो भक्त्या घृतेन स्नापयेद्रविं । सोऽश्वमेधफलं प्राप्य ततः सूर्यपुरं व्रजेत् । पयसा स्नापयेद्यस्तु भास्करं भक्तिमान्नरः । विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकतां । मयैषा कथिता पुण्या सप्तमी त्रिपुरांतक । यामुपोष्य नरो भक्त्या अचलान्मंगलाँल्लभेत् । आपस्तंबः—अयने विषुवे चैव ग्रहणे चंद्रसूर्ययोः । अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते । इति । सर्वोऽप्युपवासविधिः पुत्रगृहिव्यतिरिक्तविषयः ।—आदित्येहनि संक्रांतौ ग्रहणे चंद्रसूर्ययोः । उपवासो न कर्तव्यो गृहिणा पुत्रिणा सदा । इति निषेधात् । यश्च यस्यां संक्रांतौ दानादीनां पुण्यकालः स एव संक्रांतौ यात्रादीनां वर्जनकालः । यात्रानिषेधा अपि सूक्ष्मकाले पदं स्थिरीकर्तुमशक्नुवंतः । आलोच्य यत्तुल्यतयोपदिष्टं भवंति नित्यं परिपूर्णकामाः । इति लौगाक्षिवचनात् ।

संक्रांतावनध्यायः हेमाद्रौ—अह्नि चेद्रात्रियुग्मं स्याद्रात्रौ चेद्वासरद्वयं । संक्रांतिः पक्षिणी ज्ञेया दानाध्ययनकर्मसु । इति । अत्र दानमध्यापनसंक्रांतिरित्ययनविषुवयोरेव ग्रहणं ।—निशाद्वयं दिवारात्रौ संक्रमे वासरद्वयं । अनध्यायं प्रकुर्वीत अयने विषुवे तथा । इति शास्त्रांतरसंवादात् । संक्रम इति द्विवेत्यनेनान्वितं । रवे राशिसंक्रमवन्नक्षत्रसंक्रमेपि पुण्यकालो बोद्धव्यः । नक्षत्रराश्यो रविसंक्रमे स्युरर्वाक्परत्रापि रसेंदुनाड्यः । पुण्या इति जैमिनिस्मृतेः । रसेंदुनाड्यः षोडश घटिका इत्यर्थः । अन्येषां ग्रहाणामपि संक्रमे पुण्यकालं स एवाह ।—तथैव चेंदोस्त्रिधरापलैर्युगे एकैव नाडी मुनिभिः शुभोक्ता । नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रो मनवः पलानि । सार्धाश्चतस्रः पलसप्तयुक्ता गुरोश्च शुक्रे सपलाश्चतस्रः । द्विनागनाड्यः पलसप्तयुक्ता शनैश्चरस्यापि हिताः सुपुण्याः । आद्यंतमध्ये जपहोमदानं कुर्वन्नवाप्नोति सुरेंद्रधाम । इति । इंदोरित्यादिषष्ठ्यंतानंतरं रविपदस्युःपदरहितं नक्षत्रेत्यादि परत्रापीत्यंतमनुषज्यते । त्रिधरापलैस्त्रयोदशपलैः । सपला एकपलयुक्ताः । मनवश्चतुर्दश । द्विनागाः षोडश । रात्रौ ग्रहांतरसंक्रमे रात्रावेव पुण्यकालः । तत्रापवादाभावात् । काम्यं चात्र स्नानादि । नित्यत्वबोधकाभावात् ।

अथ सर्वसंक्रांतिषु ग्रहपीडापहारकाणि स्नानानि हेमाद्रौ देवीपुराणे—कुंकुमं रोचनामीशा मुराचंदनवालकं। हरिद्रासहसंयुक्तं मेषे स्नानं ग्रहापहं। रोचना गोरोचना। ग्रहापहं ग्रहदोषापहं। प्रियंगुः सप्तकं कुष्ठं त्वचमीशा निशाकरं। रोचनागरुसंयुक्तं वृषे स्नानं महाफलं। प्रियंगुः फलनी। निशाकरं कर्पूरं। उशीरं पद्मकं कुष्ठं रोचना ग्रंथिपर्णकं। कुंकुमागरुसंयुक्तं मिथुने राज्यदं महत्। उशीरं वालकं। रोचना वालकं मुस्ता मुरा शैलेयचंदनं। हरिद्राकुष्ठसंयुक्तं कर्कसंक्रमणे मतं। मुरा मुलहटी। शैलेयं शिलारसः। पत्रकं रोचना मुस्ता मुरा मांसी च चंदनं। सिंहे स्नानं सुराध्यक्ष राज्यायुःपुत्रवर्धनं। हरिद्रा वालकं कुष्ठं मांसी चंदनरोचना। कन्ये स्नानं प्रकर्तव्यं संतानरतिवर्धनं। रोचना तुरगं कुष्ठं पत्रकौशीरपत्रकं। हरिद्रावालसंयुक्तं तुले दुष्कृतनाशनं। प्रियंगुः स्फटिकं मांसी पद्मकं रोचनागरू। मुस्ताकुष्ठसमोपेतं वृश्चिके राज्यदं मतं। प्रवालं रोचनाकुष्ठे मौक्तिकं घनपद्मकं। मुरामांसीसमोपेतं धनुःसंक्रमणे शुभं। घनो मुस्ता। रोचना दारुकं कुष्ठं चंदनागरु कुंकुमं। उशीरपद्मकैर्युक्तं मकरे सर्वसौख्यदं। ग्रंथिपर्णं वचा वाला केसरं जातिपत्रकाः। रोचनासहसंयुक्तं कुंभे पुत्रायुराज्यदं। केसरं नागकेसरं। कर्पूरफल(?)मुस्ता च मांसी चंदनपद्मकं। वालकं सघनोशीरं त्वचा मीने शुभावहं।

अथेतरग्रहसंक्रमेषु तत्तद्ग्रहसूचितपीडानिवृत्त्यर्थं स्नानानि विष्णुधर्मोत्तरे—मंजिष्ठा मदमातंगं कुंकुमं रक्तचंदनं। पूर्णकुंभे कृतं ताम्रे सूर्यस्नानं विधीयते। मदमातंगं गजमदः। उशीरं च शिरीषं च कुंकुमं रक्तचंदनं। शंखन्यस्तमिदं स्नानं चंद्रदोषविनाशनं। खदिरं देवदारुं च तिलान्यामलकानि च। पूर्णकुंभे कृतं रौप्ये भौमपीडाविनाशनं। नदीसंगमतोयानि तन्मृदा सहितानि च। न्यस्तानि कुंभे माहेये बुधपीडाविनाशनं। माहेयं मृन्मयं। औदुंवरं तथा विल्वं वटमामलकं तथा। न्यस्तं तु कुंभे सौवर्णे जीवपीडाविनाशनं। आमलकांतानि फलानि। गोरोचना नागमदः शतपुष्पा शतावरी। विन्यस्ता राजते कुंभे शुक्रपीडाविनाशनं। तिलान्माषान्प्रियंगुं च गंधपुष्पे तथैव च। न्यस्तं कार्ष्णायसे कुंभे सौरिपीडाविनाशनं। गुग्गुलं हिंगुलं तालं

शुभ्रां चैव मनःशिलां । शृंगे च माहिषे न्यस्य राहुपीडाविनाशनं । तालं हरितालं । वराहविहितं राजन्पर्वताग्रभृतं तथा । छागक्षीरं खड्गपात्रे केतुपीडाविनाशनं । ग्रहस्नानमिदं प्रोक्तं सर्वपीडाविनाशनं । इति ।

अथ यावद्ग्रहदौष्ट्यं रत्नधारणं । जातकाभरणे— माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगोर्माहेयस्य च विद्रुमं मरकतं सौरस्य गारुत्मतं । देवेज्यस्य च पुष्परागमसुरामात्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैडूर्यके ।

अथ ग्रहप्रीत्यर्थानि दानानि । तत्रैव—माणिक्यगोधूमसवत्सधेनुकौसुंभवासोगुडहेमताम्रं । आरक्तकं चंदनमंबुजं च वदंति दानं हि विरोचनाय । १ । सद्वंशपात्रस्थिततंडुलांश्च कर्पूरमुक्ताफलशुभ्रवस्त्रं । युग्योपयुक्तं वृषभं च सौम्यं चंद्राय दद्याद्घृतपूर्णकुंभं । २ । प्रवालगोधूममसूरिकाश्च वृषोऽरुणश्चापि गुडः सुवर्णं । आरक्तवस्त्रं करवीरपुष्पं ताम्रं च भौमाय वदंति दानं । ३ । चैलं च नीलं कलधौतकांस्यं मुद्गांश्च गारुत्मतसर्वपुष्पं । दासी च दंतो द्विरदस्य नूनं वदंति दानं विधुनंदनाय ।४। शर्करा च रजनी तुरंगमः पीतधान्यमपि पीतमंबरं । पुष्परागलवणं सकांचनं प्रीतये सुरगुरोः प्रदीयते । ५ । चित्रांबरं शुभ्रतरस्तुरंगमो धेनुश्च वज्रं रजतं सुवर्णं । सुतंडुलाश्चोत्तमगंधयुक्ता वदंति दानं भृगुनंदनाय । ६ । माषाश्च तैलं विमलेंद्रनीलंतिलाः कुलित्था महिषी च लोहं । कृष्णा च धेनुः प्रवदंति नूनं दुष्टाय दानं रविनंदनाय । ७ । गोमेदरत्नं च तुरंगमश्च सुनीलचैलामलकंबलोऽग्र्यः । तिलाश्च तैलं खलु लोहमिश्रं स्वर्भानवे दानमिदं वदंति । ८ । वैडूर्यरत्नं सतिलं च तैलं सुकंबलश्चापि मदो मृगस्य । शस्त्रं च केतोः परितोषहेतोश्छागस्य दानं कथितं मुनींद्रैः । इति ।

अथ ग्रहकर्मकदानानि ब्रह्मांडे—ग्रहदानक्रमं वक्ष्ये सर्वसिद्धिकरं परं । सर्वशांतिकरं नृणां सर्वपापप्रणाशनं । विषुवत्ययने राहुग्रहणे चंद्रसूर्ययोः । जन्मर्क्षे सौरवारे च पंचदश्यां तथैव च । ग्रहदानं तु कर्तव्यं नित्यं श्रेयोभिकांक्षया । हस्तमात्रं द्विहस्तं वा त्रिहस्तं वाथ नारद । चतुरस्रां समां भूमिं गोमयेनोपलेपयेत् । रेखाः प्राच्य उदीच्यश्च चतस्रस्तास्तथा समाः । नवकोष्ठेषु

पद्मानि विन्यसेच्छ्वेततंडुलैः। आदित्यश्चंद्रमा भौमो बुधजीवसितार्कजाः। राहुः केतुरिति प्रोक्ता ग्रहा लोकसुखावहाः। एषां हिरण्यरूपाणि कारयित्वा यथाविधि। त्रिनिष्केणाथवा कुर्याद्यथाशक्ति पृथक्पृथक्। आदित्यं मध्यमे कोष्ठे दक्षिणेऽगारकं न्यसेत्। उत्तरे तु गुरुं विद्याद्बुधमुत्तरपूर्वके। भार्गवं पूर्वतो न्यस्य सोमं दक्षिणपूर्वके। पश्चिमेऽर्कसुतं न्यस्य राहुं दक्षिणपश्चिमे। पश्चिमोत्तरतः केतुः संनिवेश्यो यथाविधि। तद्वर्णपुष्पगंधाद्यैरर्चयेत्स्वस्वमंत्रकैः। दानं शूद्रोऽथवा कुर्यात्स्त्री वा तत्र तु नारद। भूलेपनादि यत्कार्यं सर्वं विप्रेण कारयेत्। स्नानकाले तु संप्राप्ते स्नात्वा कुशतिलोदकैः। प्रयतो यजमानस्तु धौतवस्त्रः प्रसन्नधीः। अर्चयित्वा स्वयं दद्यादहस्करमुखान्ग्रहान्। प्रत्येकमेकं विप्रोसौ स्ववर्णं मंत्रमीरयेत्।—पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरंगवाहः। दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः। १। श्वेतांबरः श्वेतविभूषणश्च श्वेतद्युतिर्दंडकरो द्विबाहुः। चंद्रोऽमृतात्मा वरदः किरीटी श्रेयांसि मह्यं प्रददातु देवः।२। रक्तांबरो रक्तवपुः किरीटी चतुर्भुजो मेषगतो गदाभृत्। धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशांत।३। पीतांबरः पीतवपुः किरीटी चतुर्भुजो दंडधरश्च हारी। चर्मासिधृक्सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधोस्तु।४। पीतां वरः पीतवपुःकिरीटी चतुर्भुजो देवगुरुः प्रशांतः। दधाति दंडं च कमंडलुं च तथाक्षसूत्रं वरदोस्तु मह्यं। ५। श्वेतांबरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशांतः। तथाक्षसूत्रं च कमंडलुं च जपं च बिभ्रद्वरदोस्तु मह्यं।६। नीलद्युतिः शूलधरः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान्। चतुर्भुजः सूर्यसुतः प्रशांतः स चास्तु मह्यं वरमंदगामी। ७। नीलांबरो नीलवपुः किरीटी करालवक्त्रः करवालशूली। चतुर्भुजश्चर्मधरश्च राहुः सिंहासनस्थो वरदोस्तु मह्यं। ८। धूम्रो द्विबाहुर्वरदो गदाभृद्गृध्रासनस्थो विकृताननश्च। किरीटकेयूरविभूषितांगः सदास्तु मे केतुगणः प्रशांतः। ९। इत्युक्त्वा दापयेत्सर्वानादित्यादिनवग्रहान्। पुरुषो वाथ नारी वा यथोक्तं फलमाप्नुयात्। अपरं गुरवे दद्यादन्यस्मै वा प्रदापयेत्। अत्र वा दक्षिणा देया सुवर्णं वाससी शुभे। इत्याह भगवान्ब्रह्मा नारदाय महात्मने। इति।

तद्वर्णेति[1] क्लृप्तोपकाराभ्यामाज्यभागाभ्यां गृहमेधीयस्येवास्य कर्मणोऽपूर्वत्वार्थं क्लृप्तोपकाराणां गंधाद्यर्चनमंत्राणां विधानं। दानमित्यर्थे[2] यदीत्यध्याहारेण स्त्रीशूद्रकर्तृकदानानुवादेनोत्तरार्धार्थो विधीयते। प्रतीति एकमेकं ग्रहं प्रति। स्ववर्णे स्ववर्णानुसारिणं सप्रणवमित्यर्थः। अतएव विप्र इति द्विजोपलक्षणं। असौ यजमानः स्वयं द्विजश्चेन्मंत्रमुदीरयेत्। इत्युक्त्वेति। पुरुषः शूद्रः प्रक्रमानुसारात्। अतएव पूर्वार्धे विप्र इत्यध्याहारः। अपरं पूजोपस्करादि गुरवे पूजादिकर्त्रे। अन्यस्मै ग्रहप्रतिमाग्रहीत्रे सुवर्णं वाससी वेत्यन्वयः। इति नवग्रहदानं। एवं सूर्येतरग्रहसंक्रांतिषु कर्तव्यमुक्तं। यथाच सूर्यसंक्रांतौ दानादिकर्तव्यं तथाऽयनांशप्रवृत्तावपि तत्तत्संक्रांतिसंबंधिन्यां तद्वदेव पूर्वत्रोत्तरत्र वा षोडशघटिकापरिमितकाले दानादि कर्तव्यं। यथोक्तं हेमाद्रौ—अयनांशकतुल्येन कालेनैव स्फुटं भवेत्। मृगकर्काटके सूर्ये याम्योदगयने सति। तदा संक्रांतिकालाः स्युरुक्ता विषुवदादयः। इति। व्याख्यातं चैतत्तत्रैव राशिप्रति त्रिंशदंशा भवंति। सूर्योत्र प्रतिदिनमेकैकमंशं भुंक्ते। ततश्च द्वादशभिरंशैरयनच्युतिर्भवति। तत्र भाविन्याः संक्रांतेर्द्वादशभिर्दिनैरर्वाक्पुण्यकालो भवति तस्मिन्संक्रांतिनिमित्तं दानादि विधेयं। एवं न्यूनातिरिक्तेपि बोद्धव्यमिति। अनेन च पूर्वोदाहृतसार्धश्लोके प्रथमेर्धे पुण्यकालो भवेदित्यध्याहारेण व्याख्यातं। द्वितीये सूर्ये सति पुण्यकालौ स्यातामिति। तृतीये तदेति प्रथमार्धगतकालपरामर्श इति। द्वादशेति हेमाद्रिनिबंधनिर्माणकाले तावद्भिर्दिनैरयनच्युतिरासीदित्यभिप्रायं। अतएवोपसंहृतमेवमिति। ततश्चेदानीमष्टादशदिनैरर्वाक्संक्रांतितुल्यः पुण्यकाल इति सिद्धं। येनार्जितानि० ।१। योनंतदेवकृत० संक्रांतिदीधितिरियं स्मृतिकौस्तुभस्य। २। इति संक्रांतिनिर्णयः॥

अथर्तुः। यथाच चैत्रादिपदवाच्यानां चित्रादिद्विनक्षत्रयुतपूर्णमासीमध्यशुक्लादिकृष्णांतचांद्रमासानां द्वाभ्यांद्वाभ्यां मासाभ्यां वसंताद्यृतवो भवंति। तथा मीनादीनां मेषादीनां सूर्येण भोगे संजाताभ्यां द्वाभ्यां द्वाभ्यां सौरमासाभ्यां सौरा अपि भवंति। सौरश्चांद्र इति द्विमासज ऋतुर्द्वेधेति दीपिकोक्तेः। नच चैत्रा-

---

1 तद्वर्णगंधमाल्याद्यैरित्यस्य व्याख्या। 2 दानं शूद्रोथवेत्यस्य व्याख्या।

दिपदवाच्यत्वं सौराणामपि कुतो न स्यादिति शंक्यं । चांद्रेषु प्रसिद्धिबाहुल्येन नक्षत्रेणयुक्तः कालः सास्मिन्पौर्णमासीति तिथिघटितव्युत्पादनपरपाणिनीयस्मरणेन च चांद्रेष्वेव तद्वाच्यत्वस्य हेमाद्रिप्रभृतिभिः स्वीकरणात् । तथापि कृष्णादिशुक्लांतचांद्रेषु तद्वाच्यत्वं कुतो न स्यादिति चेत् । शुक्लादिष्वेव सर्वदेशस्थप्रसिद्धिबाहुल्यात्, सर्वमुनिसंमतत्वाच्च । तथाच त्रिकांडमंडनः—चांद्रोपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा । कृष्णपक्षादिकं मासं नांगीकुर्वंति केचन । येऽपीच्छंति न तेषामपीष्टो विंध्यस्य दक्षिणे । इति । नचैवमपि चैत्रादिपदानां व्युत्पत्तौ चित्राद्येकैकनक्षत्रनिमित्ततायाः स्फुटत्वाद्वित्रेत्ययुक्तं । व्युत्पत्तौ चित्रादेः प्रत्यासन्ननक्षत्रांतरोपलक्षणत्वात् । तथाच संकर्षणकांडे—द्वंद्वे चित्रादिताराणां परिपूर्णेंदुसंगते । मासाश्चैत्रादयो ज्ञेयास्त्रिकैः षष्ठांत्यसप्तमाः । इति । पूर्वार्धे चेदित्यध्याहारः । श्रावणपर्यंतपंचसंज्ञासु चित्रादिद्वंद्वानि प्रयोजकानि । एवं कार्तिकादिमाघांतानां कृत्तिकादिद्वंद्वानि । भाद्रपदाश्विनफाल्गुनेषु शततारकादिरेवत्यादिपूर्वाफल्गुन्यादित्रिका इत्यर्थः । नचैवमपि द्वाभ्यां मासाभ्यामित्ययुक्तं । सत्यधिमासे वसंताद्यृतोर्मासत्रयात्मकत्वापातादिति शंक्यं । तत्रोक्तरीत्या षष्टिदिनात्मकैकमासांगीकारेण द्व्यात्मत्वाविघातात् । नचैवं सितादिपक्षयुगत इति चांद्रलक्षणमव्याप्तं । तत्र ससंक्रांतिकानामेव लक्ष्यत्वात् । नच वसंतादिशब्दा अपि चांद्रर्तुष्वेव मुख्याः स्युः—मधुश्च माधवश्च वासंतिकावृतू इति श्रुतौ चैत्रादिपर्यायश्रवणादिति वाच्यं । मीनमेषयोर्मेषवृषभयोर्वसंत इत्यपि श्रवणात् । नच त्रिकांडमंडनेन—श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चांद्रेषु चर्तुषु । तदलाभे तु सौरर्तुष्विति ज्योतिर्विदां मतं । इति गौणत्वेन सौरविधानात्कथं चांद्रसमत्वमिति वाच्यं । कर्मणि मुख्यगौणयोरपि वसंतादिपदवाच्यतायां बाधकाभावात् । प्रत्युतात्रैवर्तुपदस्योभयत्र योगेन तद्विशेषवसंताद्यात्मकतादृढीकरणात्सत्यप्येवं वचनात्सौरादेरेव मानस्य क्वचित्स्वीकरणमविरुद्धं । यथाह ज्योतिर्गार्ग्यः—सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः । आब्दिके पितृकार्ये च चांद्रो मासः प्रशस्यते । यज्ञोत्र सावनमानसाध्यं गवामयनादि । पितृकार्यं षाण्मासिकादि । विवा-

ह्यादावित्यादिपदेनाभ्युदयफलकानि मांगलिककर्माणि गृह्यंते। यज्ञादावित्यत्र सांतपनादिकृच्छ्राः। द्वितीयार्धं सप्तम्यंतद्वयं पितृकार्यमात्रसंग्रहार्थं। रवेरभ्युदये मानं चंद्रस्य पितृकर्मणि। यज्ञे सावनमित्याह ऋक्षं सर्वव्रतादिषु। इति बृहस्पतिवचनात् व्रतानि नक्षत्रसाध्यानि। आदिपदेन नक्षत्रसत्रसंग्रहः—नक्षत्रसत्राण्ययनानि चेंदोर्मानेन कुर्याद्भगणात्मकेन। इति विष्णुधर्मोत्तरोक्तेः। तत्रच नक्षत्राणां दिनद्वयगामित्वे निर्णयो मत्कृते नक्षत्रसत्रप्रयोगे बोद्धव्यः। तथाच ब्रह्मसिद्धांते—अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु। संक्रांतिपौर्णमासाभ्यां तथैव नृपवैश्ययोः। इति। नन्वेवमेकत्र विंध्यदक्षिणदेशवर्तिवैश्यविवाहकर्मणि ज्योतिर्गार्ग्यवचनात्सौरस्य, मंडनवचनाच्छुक्लादेश्चांद्रस्य, ब्रह्मसिद्धांतवचनात्कृष्णादेश्च प्राप्तौ विकल्पापत्तिरिति चेन्न। भिन्नविषयत्वात्। मंडनवचनं तावदाचारानुसारेण विंध्यदक्षिणदेशे कर्मसंकल्पांगभूते अंगानंगसाधारणाधिकरणीभूतदेशकालमात्रविषयोल्लेखे शुक्लादेरेव मासस्योल्लेखः कार्यो न कृष्णादेः, विंध्यतदुत्तरदेशयोस्तु कृष्णादेरपीति व्यवस्थापरं। येपीच्छंतीति वाक्यं हि दक्षिणेदेशे कृष्णादिनिषेधमुखेन शुक्लादेः प्राप्तिपरं। अर्थात्कृष्णादेरितरत्र प्रापकं च प्रतीयते। इष्ट इतीच्छोपन्यासाच्च तन्मूलकाचारवशेन व्यवस्थाप्यत इति युक्तं। नच प्रयोगारंभेंगभूतं मासाद्यनुसंधानस्य प्रयोगविध्यपेक्षितत्वादुल्लेखस्य तन्मात्रविषयत्वमेवोचितमिति वाच्यं। मासपक्षतिथीनां च निमित्तानां च सर्वशः। उल्लेखनमकुर्वाणो न तत्फलमवाप्नुयात्। इति वचनेऽनंगभूतनिमित्तस्यापि संकीर्तनेन सर्वश इति पदोपादानेन वोल्लेखस्यांगानंगसाधारण्यावधारणात्। आरुण्यादेरेकहायन्यादिद्रव्योपादानकालीनपरिच्छेदे यथापेक्षा तथा प्रयोगारंभात्पूर्वमुचितकालप्रतीक्षाकालीनतत्परिच्छेदेंऽगभूतमासाद्यनुसंधानापेक्षायाः सत्या अपि संकल्पाख्यारंभात्पूर्वमुल्लेखमूलभूतेनावश्यंभाविना तदनुसंधानेनैव निवृत्तौ उल्लेखजपानुसंधानस्य तादर्थ्यासंभवेनादृष्टार्थत्वाच्च। उक्तं हि मंत्रप्रतिनिधिनिराकरणाय भाट्टैः प्रतिनिध्युपादानार्थमवश्यं मंत्रार्थस्मरणे सति तेनैव कार्यसिद्धेर्न प्रतिनिधेः फलमिति। इतरे अपि शास्त्रे शास्त्रांतरमूलकाव्यवस्था-

प्राप्तौ व्यवस्थापरे नत्वपूर्वार्थविधातृणी । उपांशुयजुषा पत्नीसंयाजांतान्यहानि संतिष्ठत इत्यादावुक्तन्यायेन नियमविधित्वादपूर्वविधित्वस्यान्याय्यत्वात् । तथाहि संति तावद्विवाहे सौरमासविषयाणि विधिनिषेधशास्त्राणि । विधिस्तावत् **आश्वलायने**नोक्तः—उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः इति । निषेधमाह **वृद्धगार्ग्यः**—मीने धनुषि सिंहे च स्थिते सप्ततुरंगमे । क्षौरं यात्रां न कुर्वीत विवाहं गृहकर्म च । इति । तथा चांद्रविषयाण्यपि । विधिस्तावत् **व्यासेनोक्तः**—माघमासे भवेदूढा कन्या सौभाग्यसंयुता । फाल्गुनोढा भवेत्साध्वी वैशाखे पुत्रिणी भवेत् । धर्मयुक्ता भवेज्ज्येष्ठे धनिनी कार्तिके भवेत् । देवपूजारता नित्यं मासे स्यात्सोमदैवते । इति । सोमदैवते मार्गशीर्षे । निषेधश्च **ज्योतिःशास्त्रे**—न भाद्रमासे नच चैत्रपौषे क्षौरं विवाहो नच कर्णवेधः । इति । अत्रच उदगयनशब्दस्य सौरमासवाचित्वाच्चैत्रादिशब्दानां चंद्रवाचित्वाद्भिन्नार्थकशास्त्रमूलत्वेनाभिन्नश्रुतिकल्पनायां सत्यामुभयोपसंहारासंभवे कदाचिच्चांद्रस्य कदाचित्सौरस्योपादानमित्यव्यवस्थाप्रसक्तौ **ज्योतिर्गार्ग्य**वाक्येन चैत्रादिशब्दानामदूरविप्रकर्षेण मूलश्रुत्यैक्यलाघवेन च सौरपदत्वमापाद्य सौरमास एवोपादेयो विवाह इति नियम्यते । तथा आदिपदोपात्तउपनयनादौ—कुले ऋतुत्रयादर्वाङ्मुंडनान्न तु मुंडनम् । इति चोलोपनयनविषयशास्त्रवशेनाव्यवस्थाया द्विविधर्तुनिषेधप्रसक्तौ सौरनिषेधो नियम्यते । प्रसिद्धाश्चाधानोपनयनयोर्वर्णविशेषपुरस्कारेण वसंतादिविधयः—वसंते ब्राह्मणोऽग्नीनादधीत वसंते ब्राह्मणमुपनयीतेत्यादयः । वसंतादिशब्दे उभयविधमासानामव्यवस्थया प्राप्तौ च ब्रह्मसिद्धांतवाक्येन व्यवस्था क्रियते—ब्राह्मणस्यामावास्यापरिच्छिन्नो, नृपस्य संक्रांतिपरिच्छिन्नो, वैश्यस्य पूर्णमासीपरिच्छिन्नः स्यादिति । मासपदं तु हीषिति वृष्टिकामाय निधनं कुर्यादित्यत्र निधनपदमनुवादः । तथाहि वृष्टिकामसंबंधित्वेनानियमप्राप्तं हीषित्येतन्निधनत्वेनैव प्राप्तमिति नियम्यमानं तत्स्थान एव विनिविशत इति निधनपदमनुवादः । एवं ब्राह्मणादिसंबंधित्वेनाधानादिवाक्यादनियमप्राप्तममावास्यापरिच्छिन्नादिरूपं मासात्मनैव प्राप्तमिति मास-

पदमनुवादः । एवमन्यविषयेष्वपि व्यवस्थोह्या । यत्र तु न सौरप्रापकं संवादिवाक्यं न वा वाक्यांतरव्यवस्थापेक्षा सामान्योक्तिर्यथोदाहृतेषु चैत्रादिपदोपेतेषु मासकार्यविधायिवाक्येषु तत्र चैत्रादिपदवाच्यचांद्रमासविशेषाणां ग्रहणमेवोचितं । तदलाभे सौराणामुदाहृतमंडलोक्तेरित्यलं । इत्यृतुनिर्णयः ।

**सौरर्तुत्रयमयनमुच्यते** । सौरर्तुत्रितयं प्रदिष्टमयनं इति **दीपिकोक्तेः** । तच्च द्विविधं दक्षिणायनमुत्तरायणं च । अर्चिरादिमार्गे धूमादिमार्गे चापूर्यमाणपक्षात्षण्मासान्यानुदङ्ङेति सविता कृष्णपक्षात्षण्मासान्यान्दक्षिणैति सवितेति श्रुतेः । तत्कार्यं च **त्रिविक्रमपद्धतौ**—चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा । माघे वा सर्वदेवानां प्रतिष्ठा शुभदा सिते । इति । अत्र चैत्रादिभिरुदगयनमुपलक्ष्यते । तथाच **सिद्धांतशेखरे**—श्रेष्ठोत्तरे प्रतिष्ठा स्यादयने भुक्तिमिच्छतां । इति । **देवीपुराणे**—मातृभैरववाराहनारसिंहत्रिविक्रमाः । महिषासुरहंत्र्यश्च स्थाप्या वै दक्षिणायने । इति । इत्ययननिर्णयः ।

अयनद्वयं च **सौरवत्सरः** । कृत्स्नतत्साध्यकार्यं च **हेमाद्रौ विष्णुधर्मोत्तरे**—मेषसंक्रमणे भानोः सोपवासो नरोत्तमः । पूजयेद्भार्गवं देवं रामं शक्त्या यथाविधि । वृषसंक्रमणे पार्थ तथा कृष्णं प्रपूजयेत् । तथा मिथुनसंक्रांतौ पूजयेद्भोगशायिनं । तथा कुलीरसंक्रांतौ वराहमपराजितं । नारसिंहं तथा देवं सिंहसंक्रमणे विभुं । कन्यासंक्रमणे देवं तथाऽश्वशिरसं यजेत् । तथा मकरसंक्रांतौ रामं दशरथात्मजं । कुंभसंक्रमणे राजन्रामं यादवनंदनं । मीनसंक्रमणे मत्स्यं वासुदेवं तु पूजयेत् । यादवाग्र्यादिकार्चायां गंधमाल्यान्नसंपदा । प्रादुर्भावस्य नाम्ना च होमं कुर्वीत पार्थिवं । व्रतांते जलधेनुं च छत्रोपानत्समन्वितां । वस्त्रयुग्मयुतां दद्यात्प्रतिमां च सकांचनां । रात्रौ तु दीपमालाभिर्देवदेवं प्रपूजयेत् । कृत्वा व्रतं वत्सरमेतदिष्टं म्लेछेषु तिर्यक्षु नचापि जन्म । प्राप्नोत्यवाप्नोति चिरं सुजन्म कामं तथाप्नोति मनोभिरामं । इति ।

**धान्यसंक्रांतिः स्कान्दे**—अयने विषुवे चैव स्नानं कृत्वा विचक्षणः । व्रतस्य नियमं कुर्याद्ध्यात्वा देवं दिवाकरं । करिष्यामि व्रतं देव त्वद्भक्तस्त्वत्परायणः । तदविघ्नेन मे यातु तव देव प्रसादतः । इत्युच्चार्य लिखेत्पद्मं कुंकुमेनाष्टपत्रकं । भास्करं

पूर्वपत्रे तु आग्नेये चं तथा रविं। विवस्वंतं तथा याम्ये नैर्ऋत्ये पूषणं तथा। आदित्यं वारुणे पत्रे वायव्ये तपनं तथा। मार्तंडमपि कौबेरे ईशाने भानुमेव च। एवं च क्रमशोऽभ्यर्च्य विश्वात्मा मध्यदेशतः। पूज्य इति शेषः। कृतांजलिपुटो भूत्वा अर्घ्यं दद्यात्समंत्रकं। कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः। व्याधिमृत्युजराशोकसंसारभयनाशनः। इति। पुष्पधूपैः समभ्यर्च्य शिरसा प्रणिपत्य च। रविं ध्यात्वा ततो दद्याद्धान्यं प्रस्थं द्विजातये। प्रतिमासं पुनस्तद्वत्पूज्यो देवः सहस्रपात्। एवं सदा प्रदातव्यं धान्यप्रस्थं द्विजन्मने। एवं संवत्सरे पूर्णे कुर्यादुद्यापनक्रियां। अर्घ्यपात्रं हि सौवर्णं कारयेन्मंडलं शुभं। द्विभुजं पूजयेद्भानुं रक्तवस्त्रयुगान्वितं। धान्यद्रोणेन सहितं तदर्धेन स्वशक्तितः। स्वर्णशृंगीं रौप्यखुरां कांस्यदोहां पयस्विनीं। रविरूपं द्विजं ध्यात्वा तस्मै वेदविदे तथा। विद्यापात्राय विप्राय तत्सर्वं विनिवेदयेत्। सप्तजन्मसहस्राणि धनधान्यसमन्वितः। निर्व्याधिर्नीरुजो धीमान्नृपवानपि जायते। इति। अयने विषुवान्यतरसंक्रांतोपक्रमसमाप्ती ज्ञेये। मंडलाकारमर्घ्यपात्रं द्विभुजमूर्तेः पूजास्थानं। धान्यं व्रीहयः। इति धान्यसंक्रांतिव्रतं।

तत्रैव स्कान्दे—संक्रांतिदिवसे पूज्य पूर्ववच्च दिवाकरं। कांस्ये क्षीरघृतं दद्यात्सहिरण्यं स्वशक्तितः। मंत्र एव पृथक्तत्र पूजा सैव प्रकीर्तिता। सक्षीरं सुरभीजातं पीयूषसमरूपधृक्। आयुरारोग्यमैश्वर्यमतो देहि द्विजार्पितं। इति। उद्यापनादिकं सर्वं धान्यसंक्रांतिवद्भवेत्। एवं कृते तु यत्पुण्यं शक्यं नेदं मयोदितुं। निर्व्याधिरपि दीर्घायुस्तेजस्वी सर्वजन्मसु। अपमृत्योर्भयं नास्ति जीवेच्च शरदः शतं। इति आयुःसंक्रांतिव्रतं।

संक्रांतिदिवसे पुण्ये प्रारभेन्नियमं व्रती। पद्ममष्टदलं कृत्वा कुंकुमेन तु भास्करं। पूजयेन्मंत्रमुच्चार्य विधिवद्गुरुसंनिधौ। विधिवदिति धान्यसंक्रांतिगतविधिनेत्यर्थः। मंत्रमिति प्रतिदलपूजासु मध्ये च एकएव मंत्र इत्यर्थः। तमाह—आज्ञां तेजस्करीं पृष्ठे प्रभादीप्तियशस्करीं। आज्ञां सर्वत्रगां देव मम देहि नमोस्तु ते। पूज्यैवं कुंकुमेनाथ दद्याद्विप्राय भोजनं। उद्यापने तु चंडांशुं सौवर्णं सरथं तथा। एकचक्रं च सप्ताश्वमरुणेन

समन्वितं । दद्यादित्यनुषंगः । यः कुर्याद्विधिनानेन आज्ञासंक्रांतिमुत्तमं । अप्याज्ञास्खलिता लोके सूर्यवत्तस्य जायते । रिपवः संक्षयं यांति सुखमाप्नोत्यनुत्तमं । इति । इत्याज्ञासंक्रांतिव्रतं । येनार्जितानि० । १ । योनंतदेवकृत० । सौराब्ददीधितिरियं स्मृतिकौस्तुभस्य । २ । इति सौरवत्सरकृत्यं ।

अथ **सावनमासकृत्यं** । तत्रोदयादुदयं षष्टिनाडीमितो वासरपदाभिधेयः सावनो दिवसः । सचादित्यादितः सप्तग्रहसंबंधितया सप्तविधः प्रसिद्धः । तस्यच सदैवैकरूप्यान्न तिथ्यादिवन्निर्णयापेक्षा । तत्कार्यमुच्यते **विष्णुधर्मोत्तरे**—आरोग्यमथ सौभाग्यं समरे विजयं तथा । सर्वान्कामांस्तथा विद्यां धनं जीवितमेव च । आदित्यादिदिनेष्वेवं श्राद्धं कुर्वन्सदा नरः । क्रमेणैतदवाप्नोति नात्र कार्या विचारणा । इति । तिथिनक्षत्राद्यनपेक्षार्थं सदेति न नित्यत्वार्थं । काम्यश्राद्धेषु **हेमाद्रि**प्रभृतिभिरेतदुदाहरणात् । **मार्कंडेयः**—अपुष्टिः कांतिरल्पायुर्धनी सौभाग्यवर्जितः । निर्धनो नृपतिश्चैव वारेष्वभ्यंगकृन्नरः । इति । एतदपवादं **बौधायनः**—अष्टम्यां च चतुर्दश्यां नवम्यां च विशेषतः । शिरोभ्यंगं वर्जयेत्तु पर्वण्यपि तथैव च । इति । तथाच यत्किंचित्स्नेहसाधनकशिरोभ्यंगं विहितवासरेष्वपि अष्टम्यादिवर्जं कुर्यात् । यानि तु वचनांतराणि—षष्ठ्यां तैलमनायुष्यं चतुर्ष्वपि च पर्वसु । सप्तम्यां न स्पृशेत्तैलं नवम्यां प्रतिपद्यपि । अष्टम्यां च चतुर्दश्याममावास्यां विशेषतः । इति । तथा—उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः । तावच्छ्रीस्तिष्ठति प्रीता यावत्तैलं न संस्पृशेत् । इति । तानि तिलविकारेण यत्किंचिदंगाभ्यंजनविषयाणि । एतदपवादं **प्रचेताः**—सार्षपं गंधतैलं च यत्तैलं पुष्पवासितं । अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन । **यमः**—घृते च सार्षपे तैले तथा पुष्पैश्च वासिते । न दोषः पक्वतैलेषु तैलाभ्यंगेषु नित्यशः । **कात्यायनः**—मांगल्यं विद्यते स्नानं वृद्धिपर्वोत्सवेषु च । स्नेहमात्रसमायुक्तं मध्याह्नान्न विशिष्यते । इति । तथा **ज्योतिःशास्त्रे**—जीर्णे रवौ सततमंबुभिरार्द्रमिंदौ भौमे शुचे बुधदिने च भवेद्धनाय । ज्ञानाय मंत्रिणि भृगौ प्रियसंगमाय मंदे मलाय च नवांबरधारणं स्यात् । इति ।

हेमाद्रौ भविष्ये । देवाः पिप्पलादमूचुः ।—ततो मंदस्य दिवसे स्नानमभ्यंगपूर्वकं । कार्यं देयं च विप्राय तैलमभ्यंगहेतवे । यत्तु संवत्सरं यावत्प्राप्ते शनिदिने नरः । तैलं ददाति विप्रेभ्यः स्वशक्त्याऽन्यदिनेऽपि वा । ततः संवत्सरस्यांते प्राप्ते तस्य दिने पुनः । लौहं(?)घंटार्पितं सौरिं तैलकुंभे विनिक्षिपेत् । लोहे वा मृन्मये चापि कृष्णवस्त्रयुगान्वितं । कृष्णगोदक्षिणायुक्तं कृष्णकंवलशालिनं । स्नात्वाभ्यंगेन च स्वयं कृष्णपुष्पैस्तमर्चयेत् । सुगंधिगंधपुष्पैश्च कृसरान्नैस्तिलौदनैः । पूजयित्वा सूर्यपुत्रं क्षमस्वेति पुनःपुनः । कृष्णाय द्विजमुख्याय तद्लाभेतराय च । देयः शनैश्चरो भक्त्या मंत्रेणानेन वै द्विज । शन्नोदेवीति विप्राणामितरेषां शृणुष्व यः। क्रूरावलोकनवशाद्भुवनं क्लेशयति यो ग्रहो रुष्टः। तुष्टो धनकनकसुखं ददाति सोऽस्मान् शनैश्चरः पातु । यः पुनर्नष्टराज्याय नलाय परितोषितः । स्वप्ने ददौ निजं राज्यं स मे सौरिः प्रसीदतु । कोणं नीलांजनप्रख्यं मंदचेष्टाप्रसारिणं । छायामार्तंडसंभूतं नमस्यामि शनैश्चरं । नमोऽर्कपुत्राय शनैश्चराय नीहारवर्णांजनमेचकाय । श्रुत्वा रहस्यं भवकामदस्त्वं फलप्रदो मे भव सूर्यपुत्र । नमोस्तु प्रेतराजाय कृशदेहाय वै पुनः । शनैश्चराय क्रूराय शुद्धवुद्धिप्रदायिने । य एभिर्नामभिः स्तौति तस्य तुष्टो ददात्यसौ । तदीयं तु भयं तस्य स्वप्नेऽपि न भविष्यति । इत्यनेन विधानेन शनिं दत्त्वा विसर्जयेत् । एवमेतद्व्रतं विप्र ये चरिष्यंति मानवाः । वासरे वासरे प्राप्ते वत्सरं यावदेव तु । तेषां शनैश्चरीपीडा देशेपि न भविष्यति। मदनरत्ने स्कान्दे—श्रावणे मासि संजाते शोभने शनिवासरे । लोहरूपं शनिं कृत्वा स्नाप्य पंचामृतेन वै । पुष्पैरष्टविधैर्धूपैः फलैश्चैव विशेषतः । नामभिः पूजयेदेतैः क्रमेण ग्रहसत्तमं । कोणस्थः पिंगलो बभ्रुः कृष्णो रौद्रोंऽतको यमः । सौरिः शनैश्चरो मंदः पिप्पलादेन संस्तुतः । शन्नोदेवीति मंत्रेण वैदिकेन च पूजयेत् । पूजयित्वा च नैवेद्यं ततः कुर्यात्क्रमेण तु । समाषभक्तं प्रथमे द्वितीये पायसं शुभं । तृतीये त्वंविली कार्या चतुर्थे पूरिका शुभा । प्रथमादिशब्दैः शनिवासराः शुक्लादिकृष्णांतश्रावणगता उच्यंते । समाषभक्तमिति लिंगात्तत्सहितौदननिवेदनं विधेयं। तक्रतंडुलपिष्टकृता यवागूरंविली ।

अत्र प्रसंगाच्छनैश्चरस्तोत्रं लिख्यते । स्कान्दे—ततः कृतांजलिर्भूत्वा स्तुतिं चक्रे स बालकः । पिप्पलादो द्विजश्रेष्ठः प्रणिपत्य मुहुर्मुहुः । नमस्ते कोणसंस्थाय पिंगलाय नमोस्तुते । नमस्ते बभ्रुरूपाय कृष्णाय च नमोस्तु ते । नमस्ते रौद्रदेहाय नमस्ते चांतकाय च । नमस्ते यमसंज्ञाय नमस्ते सौरये विभो । नमस्ते मंदसंज्ञाय शनैश्चर नमोस्तु ते । प्रसादं कुरु देवेश दीनस्य प्रणतस्य च । शनैश्चर उवाच । परितुष्टोसि ते वत्स स्तोत्रेणानेन सांप्रतं । वरं वरय भो वत्स येन यच्छामि वांछितं । पिप्पलाद उवाच । अद्यप्रभृति वै पीडा बालानां रविनंदन । त्वया कार्या महाभाग न स्वकीया कथंचन । यावद्वर्षाष्टकं यातं मम वाक्येन सूर्यज । स्तोत्रेणानेन योऽन्यस्त्वां प्रब्रूयात्प्रातरुत्थितः । तस्य पीडा न कर्तव्या देयो लाभो महाभुज । अर्धाष्टसामिके योगे तावके संस्थितो नरः । तव वारे तु संप्राप्ते यस्तिलान्लोहसंयुतान् । शक्त्या ददाति नो तस्य पीडा कार्या त्वया प्रभो । कृष्णां गां यस्तु विप्राय तवोद्देशेन यच्छति । अर्धाष्टसामिकी पीडा तस्य कार्या त्वया नच । शमीसमिद्भिर्यो होमं तवोद्देशेन निर्वपेत् । तथा कृष्णतिलैश्चैव कृष्णपुष्पानुलेपनैः । पूजां करोति यस्तुभ्यं धूपं वै गुग्गुलुं दहेत् । कृष्णवस्त्रेण संवेष्ट्य त्याज्या तस्य त्वया व्यथा। सूत उवाच । एवमुक्तः शनिस्तेन बाढमित्येव जल्प्य च । नारदं समनुज्ञाप्य जगाम निजसंश्रयं । इति ।

हेमाद्रौ भविष्ये रविवारं प्रकृत्य—नक्तं कुर्वंति ये त्वत्र मानवास्तं समाश्रिताः । जपमानाः परं जप्यमादित्यहृदयं परं । आरोग्यमिह वै प्राप्य सूर्यलोकं व्रजंति ते । उपवासं च कुर्वंति ये त्वादित्यदिने सदा । जपंति च महाश्वेतं लभंतेऽभीप्सितं फलं । आदित्यस्य दिने यस्तु जपमानो गणाधिप । षडक्षरं महाश्वेतं गच्छेद्वैरोचनं पदं । इति । महाश्वेतमंत्रः । ह्रींह्रीं नमः खखोल्कायनमः महाश्वेताय ह्रींह्रींसः । इति । षडक्षरः—ह्रीं-ह्रीं सः सूर्याय इति ।—यो वै सूर्यदिने भक्त्या भानुं संपूज्य श्रद्धया । नक्तं करोति पुरुषः स याति परलोकतां । इति ।

एवं दिङ्मात्रेण सावनदिनकृत्यानि दर्शितानि । उक्तसावनदिनैस्त्रिंशद्भिः सावनो मासः । षष्ट्युत्तरशतत्रयसंख्यैस्तैः साव-

नवत्सरः । तयोः कार्यमपि हेमाद्रौ—सत्राण्युपास्यान्यथ सावनेन लोक्यं च यत्स्याद्व्यवहारकर्म । इति । उपलक्षणमेतत् । यस्य शास्त्रीयस्य लौकिकस्य वा कर्मणः सावनदिनैरेव निर्वाहः तदहीनाद्यपि तथेति बोध्यं विहितं च सावनाब्दसाध्यं व्रतं हेमाद्रौ भविष्ये आदित्य उवाच—योऽब्दमेकं प्रकुर्वीत नक्तं मम दिने नरः । ब्रह्मचारी जितक्रोधो ममार्चनपरायणः । संवत्सरांतमासाद्य मद्भक्तांश्चैव वै द्विजान् । भोजयित्वा ततो ब्रूयात्प्रीयतां मे दिवाकरः । एवं भक्तिसमायुक्तो मम लोकं स गच्छति । नच मानुष्यकं लोकमध्रुवं प्राप्नुते नरः । इति । येनार्जितानि० । १ । योनंतदेवकृत० । तस्य सौराब्ददीधितिरियं स्मृतिकौस्तुभस्य । २ । इति सावनाब्दकृत्यं ।

अथ बार्हस्पत्याब्दकृत्यं । यद्यपि हेमाद्रिणा चांद्रसौरसावनात्मकमब्दत्रयमेवांगीकृतं । तथाच दीपिकायां—त्र्यब्दी भमानं विना । इति । तथापि माधवेन सप्रमाणतया बार्हस्पत्यनाक्षत्रयोरपि प्रदर्शनान्न तदनादरणमुचितं । उदाहृतं च तत्प्रमाणं । नच तयोर्धर्मशास्त्रे सर्वथैवानुपयोगः । तदुपजीव्यविधिनिषेधानामुपलंभात् । तत्र बृहस्पतेः संक्रमणादासंक्रांतिकालो बार्हस्पत्यो वत्सरः । तत्कार्यं स्कान्दे द्वारकामाहात्म्ये—तत्र काशी कुरुक्षेत्रमयोध्या मथुरा पुरी । इति । बहूनि तीर्थान्युपक्रम्य—स्वर्गे मृत्यौ च पाताले यानि तीर्थानि निम्नगाः । स्थिता गोदावरीतीरे सिंहराशिगते गुरौ । कन्यास्थे पुष्करादीनि सदा सिंधुसरांसि च । मेर्वादिपर्वताः पुण्या दर्शनात्पापनाशनाः । तीर्थराजं प्रयागं च सर्वतीर्थसमन्वितं । द्वारकां वै समायांति गोमत्यां कृष्णसंनिधौ । इति । ततश्च सिंहस्थे गुरौ गोदावरीयात्रा कर्तव्या, कन्यास्थे द्वारकायात्रेत्युन्नीयते । ज्योतिषे—रविणा संयुते जीवे सिंहसंस्थे गुरौ तथा । अस्तं गते तथा शुक्रे बाले वृद्धे तथैव च । व्रतं यात्रां विवाहं च विद्यां पार्थिवदर्शनं । कूपवापीतडागानि देवतानां च मंदिरं । देवतानां प्रतिष्ठां च बालानां कर्णवेधनं । सर्वदा नैव कुर्वीत करणे मरणं ध्रुवं । इति । अस्तमित्यर्थे जीवे इत्यनुषंगः । तिलगोभूहिरण्यानां संध्योपासनयोः क्रिया । पर्वहोमश्चाग्रयणं साग्नेरिष्टिश्च पर्वणोः । नित्याग्निहोत्रहोमश्च देव-

तातिथिपूजनं। तर्पणं च निमित्तस्य नित्यत्वात्सिंहगे गुरौ। एतत्काठकगृह्योक्तं। **पैठीनसिः**—संक्रांतिरहिते मासि कुर्यादाग्रयणं नवेति। अतो विकल्पएवेति **माधवः**। हेमाद्रिस्तु दुर्भिक्षवशेन नवान्नभक्षणप्रसक्तौ कार्यं। अतएवोक्तं **दीपिकायां**—कृच्छ्रेष्वाग्रयणं कार्यमिति। विद्यां विद्यारंभं। **लल्लः**—नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधोपि दीक्षा। मौंजीबंधोऽथ चूडा परिणयनविधिर्वासुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्नात्रिदशपतिगुरौ सिंहराशिस्थिते च। इति। नीचस्थे मकरस्थे।

तत्र सिंहस्थनिषेधापवादस्त्रेधा स्मर्यते। तत्रैको **ज्योतिर्निबंधे**—रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ। न कुर्याच्छुभकर्माणि व्रतोद्वाहमुखानि च। रविक्षेत्रं तु पैत्रर्क्षं गुरुक्षेत्रं च रेवती। मिथः क्षेत्रगतौ तौ चेन्नाशयेतां तु मंगलं। पैत्रं मघा। अत्र च सिंहस्थे गुरौ यो निषेधः स मघास्थविषय एवेति, मीनस्थे रवौ यो निषेधः स रेवतीस्थविषय एवेति विधीयते लाघवात्। विवाहे तु पूर्वाग्रप्रथमांशनिषेधोपि **राजमार्तंडे**—सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः। सर्वदेशेष्वयं त्याज्यो दंपत्योर्निधनप्रदः। **वसिष्ठसंहितायांतु**—मृगेंद्रमध्यमांशस्थे जीवेयोगोऽशनिस्त्वयं। गौतमीवामभागे तु दंपत्योर्निधनप्रदः। इत्युक्तं। तद्देशे दोषाधिक्यार्थमदः देशविशेषे द्वितीयोपवादो विवाहोपनयनयोर्वसिष्ठेनोक्तः।—भागीरथ्युत्तरे कूले गौतमीदक्षिणे तथा। विवाहो व्रतबंधश्च सिंहस्थे ज्ञे न दुष्यति। सूचितं **चैतत्पराशरेण**—गोदाभागीरथीमध्ये नोद्वाहः सिंहगे रवौ। मघास्थे सर्वदेशेषु तथा मीनगते रवौ। इति। अत्र वसिष्ठवचनानुरोधेन उद्वाहग्रहणं व्रतबंधोपलक्षणं। एवं **वृद्धवसिष्ठवचनेष्वपि**—मृगेंद्रसंस्थिते जीवे मध्यदेशे करग्रहे। मृत्युयोगे मृत्युदः स्याद्दंपत्योः पंचवर्षतः। सिंहे सिंहांशगे जीवे कलिंगे गौडगुर्जरे। कालमृत्युरयं योगो दंपत्योर्निधनप्रदः। मृगेंद्रमध्यमांशस्थे जीवे योगोऽशनिस्त्वयं। गौतमीयाम्यभागे तु दंपत्योः पंचवर्षतः। योगत्रयं वर्जनीयं चोक्तदेशेषु सर्वदा। उद्वाहेष्वन्यकार्येषु चात्यर्थं मंगलप्रदं। इति। गौतमीयाम्यभागग्रहणं भागीरथ्युत्तरोपलक्षणार्थं। तृतीयोऽपवादो

ज्योतिर्निबंधे—मंगलानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा । भानौ मेषगते सस्यगित्याहुः शौनकादयः । इति । एवंच मघास्थे गुरौ सर्वमांगलिकनिषेधः सर्वदेशेषु । सिंहांशे विवाहनिषेधोपि सर्वदेशेषु । कलिंगादिदेशविशेषनिषेधो दोषाधिक्यार्थः । गंगागोदावरीमध्यदेशे तु विवाहव्रतबंधयोः सर्वसिंहस्थे निषेधः । अन्यकर्मणां मघास्थं विहाय सर्वदेशेषु करणं । मेषस्थे सूर्ये तु सर्वदेशेषु सर्वमांगलिककर्मणां सिंहस्थे न दोष इति । नचैषां शास्त्राणां परस्परोपजीवनेन प्रवृत्तिमंगीकृत्य व्यवस्थांतरं शक्यं । सर्वेषां सिंहस्थनिषेधोपजीवनेन प्रवृत्त्यार्थवत्त्वे संभवति परस्परोपजीवनेन प्रवृत्तेरन्याय्यत्वात् । यत्तु ज्योतिर्निबंधे भृगुः—सीमंतजातकादीनि प्राशनांतानि च क्रमात् । कर्तव्यानि न दोषोस्ति पंचाननगते रवौ । मांडव्यः—श्रुतिवेधजातकान्नप्राशनचूडादिकं सर्वं । रविभवनस्थे जीवे कार्यं वर्ज्यो विवाहस्तु । तथा—मघर्क्षं तु परित्यज्य यदा सिंहे गुरुर्भवेत् । तदा कन्या नवोढा चेत्सुभगा सुप्रिया भवेत् । इति । तच्च निमित्तानंतरभाविजातकर्मण्यगतिकेषु चौलादिषु प्रतिप्रसवार्थं । केचित्तु—माघ्यां यदि मघा नास्ति सिंहे गुरुरकारणं । इति शतानंदवचनात् । माघ्यां मघायोगे सिंहस्थगुरुदोषो नान्यथेत्याहुः । अन्येतु—माघी चेन्मघासंयुक्ता मघायां च गुरुर्भवेत् । महामाघस्तदा प्रोक्तो व्रतोद्वाहौ च वर्जयेत् । इति वचने पूर्वार्धगतचकारवशादितरेतरयुक्तविशेषणद्वयविशिष्टतया प्रकृतमाघ्यामुत्तरार्धे तदेति निर्दिष्टायां चकारयुक्तचतुर्थपादेन कृतनिषेधविपर्ययार्थत्वाच्छतानंदवचनस्य माघीमात्रविषयत्वमिति मघास्थेपि गुरौ मघाशून्यमाघ्यां व्रतोद्वाहौ कार्यावित्याहुः ।

अथ गुरोरस्तादितत्साहचर्याच्छुक्रस्यापि तन्निरूप्यते ब्रह्मसिद्धांते—रविणासत्तिरन्येषां ग्रहाणामस्तमुच्यते । ततोऽर्वाग्वार्धकं मौढ्यादूर्ध्वं बाल्यं प्रकीर्तितं । पक्षं प्राक्दिशि वृद्धत्वं पश्चात्पंचदिनं कवेः । शैशवं प्राक्तु पंचाहं पश्चाद्दशदिनं स्मृतं । इति । बार्हस्पत्ये—प्राक्पश्चादुदितः शुक्रः पंचसप्तदिनं शिशुः । विपरीतं तु वृद्धत्वं तद्वदेव गुरोरपि । इति । रत्नमालायां—प्रागुद्गतः शिशुरहस्त्रितयं सितः स्यात्पश्चाद्दश-

ह्ममिह पंचदिनानि वृद्धः । प्राक्पक्षमेव कथितोऽत्रिवसिष्ठग-
र्गैर्जीवस्तु पक्षमपि वृद्धशिशुर्विवर्ज्यः। इति। **राजमार्तंडे**—
बाले वृद्धे च संध्यांशे चतुःपंचत्रिवासरान्। जीवे च भार्गवे
चैव विवाहादिषु वर्जयेत् । बाले वृद्धे च संध्यांशे नष्टे च
भृगुनंदने। दुर्गता चासती वंध्या मृत्युयुक्ता फलं क्रमात्।
इति । वार्धकांतर्गतमस्तप्रत्यासन्नं त्रिरात्रं संध्यापवादवाच्य-
मतिनिषिद्धमित्याशयः । **वराहमिहिरः**—बहवो दर्शिताः
काला ये बाल्ये वार्धकेऽपि वा। ग्राह्यास्तत्राधिकाः शेषा देश-
भेदाद्दुतापदि । **गार्ग्यः**—शुक्रो गुरुः प्राक्परतश्च बाल्ये
विंध्ये दशावंतिषु सप्तरात्रं। वंगेषु हूणेषु च सप्त पंच शेषे तु
देशे त्रिदिनं वदंति। इति। तथा **ज्योतिर्निबंधे**—विंध्यस्य
दक्षिणे देशे वृद्धबाल्ये सितेज्ययोः । त्रिदिनं वर्जयित्वा तु
ततः कुर्यात्तु मंगलं। इति। महास्तपादास्तयोस्तु **ज्योतिषे**—
द्वात्रिंशद्दिवसाश्चास्ते जीवस्य भार्गवस्य तु । द्वासप्ततिर्महत्यस्ते
पादास्ते द्वादश क्रमात् । पक्षं वृद्धो महास्ते तु बालश्चात्र
दशाधिकः । पादास्ते द्वादशाहानि वृद्धौ कालो दिनत्रयं।
इति। महतीति जीवस्येत्यनंतरमपि योजनीयं। येनार्जितानि०।
श्रीवाजबाहादुरसंज्ञनृपस्य तस्य वाचाहरेरिव गिरावनिदेव-
तुष्ट्यै।१। योनंतदेवकृतमंथन०। गुर्वब्ददीधितिरियं स्मृतिकौ-
स्तुभस्य।२। इति बार्हस्पत्यवत्सरकृत्यं।

**अथ नाक्षत्रवत्सरकृत्यं**। तत्रैकं नक्षत्रं यावता कालेन
चंद्रमसा युज्यते तावन्नाक्षत्रो दिवसः । तादृशसप्तविंशति-
दिनैर्नाक्षत्रो मासः । तादृशद्वादशमासैर्नाक्षत्रो वत्सरः। तत्र
नाक्षत्रदिनानां केषांचिद्विनियोगः श्रुतावेवोक्तः। कृत्तिकाः प्रथमं
विशाखे उत्तमं तानि देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्या-
दिति। कृत्तिका इति बहुवचनं ताराबहुत्वाभिप्रायेण। विशाखे
इति द्विवचनमप्येवं। सर्वेषां कार्यमाह **याज्ञवल्क्यः**—स्वर्गं
ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा। सुतान्श्रैष्ठ्यं च सौभाग्यं
समृद्धिं मुख्यतां शुभां। प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीं-
स्तथा। अरोगित्वं यशो वीतशोकतां परमां गतिं। धर्मविद्यां
भिषक्सिद्धिं कुप्यं गामप्यजादिकं। अश्वानायुश्च विधिवद्यः
श्राद्धं संप्रयच्छति। कृत्तिकादिभरण्यंतं स कामानाप्नुयादि-

मान् । इति । मनुः—युक्षु कुर्वन्दिनर्क्षेषु सर्वान्कामात्समश्नुते । अयुक्षु च पितॄनर्चेत्प्रजां प्राप्नोति पुष्कलां । इति । तथा हेमाद्रौ देवीपुराणे—अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः । व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीडितः । भरण्यां यममभ्यर्च्य कुसुमैरसितैः शुभैः । तथा गंधादिभिः शुभ्रैरपमृत्योर्विमुच्यते । एवं कृत्तिकादिष्वप्यश्यादिनक्षत्रदेवतानां पूजनमुक्तं । तथा नक्षत्रेषु व्रतविधयः श्रूयंते हेमाद्रौ विष्णुधर्मोत्तरे—कृतोपवासो याम्यर्क्षे कृत्तिकासु सदैव तु । पूजयेद्वासुदेवं च कुसुमेन सुगंधिना । रक्तैश्च कुसुमैर्हृद्यैर्धूपं दद्याच्च गुग्गुलं । घृतेन दीपं दद्याच्च रक्तवस्त्रं तथैव च । निवेदनीयं देवाय तथा सर्वं निवेदयेत् । होतव्यं च समिद्धेऽग्नौ तथैवासुरसर्षपाः । आसुरसर्षपा राजिकाः । आयुधानि च देयानि ब्राह्मणेभ्यश्च दक्षिणां । कृत्वैतदग्र्यं रिपुनाशमिष्टं प्राप्नोति मर्त्यो नहि संशयोऽत्र । इति । क्षत्रियविषयमेतत् । आयुधानीति लिंगात् । कूटदक्षिणेति लिंगान्निषादविषयत्ववत् । स्कान्दे—रोहिणीं जन्मनक्षत्रं देवदेवस्य चक्रिणः । ताम्रे रुक्ममयीं कृत्वा पंचरत्नैस्तु संयुतां । रोहिणीं स्त्रीरूपिणीं । स्थापयेद्वस्त्रयुग्मेन धूपदीपैः प्रपूजयेत् । कालोद्भवफलैर्दिव्यैर्नैवेद्यैर्घृतपायसैः । द्वितीयेह्नि समायाते ब्राह्मणाय निवेदयेत् । श्रोत्रियाय सुरूपाय भिक्षुकाय कुटुंबिने । स्वयं नक्तं च भुंजीत रोहिण्या दर्शने कृते । एवंविधं व्रतमिदं दिवि देवाश्च चक्रिरे । वर्षे वर्षे समायाते देवा अद्यापि कुर्वते । यंयं काममभिध्यायेत्तंतं प्राप्नोत्यसंशयं । इति उपक्रमवशादत्र रोहिणीविशेष एव ग्राह्यः । अतएवोक्तं वर्षेवर्षे इति ।

तथा विष्णुधर्मोत्तरे—पुण्यस्नानं महापुण्यं राज्ञां प्रोक्तं स्वयंभुवा । वत्सरे वत्सरे कुर्यात्पुष्ययुक्ते निशाकरे । गर्गोप्याह—वत्सरेवत्सरे कुर्याद्राज्ञः पुष्याभिषेचनं । पुष्येपुष्येऽपि चाप्यत्र वृद्ध्या वृत्त्यनुसारतः । इति । एतत्प्रकारं नक्षत्रजननशांतीश्वावसरे वक्ष्यामः । एवं नक्षत्रसाध्यानां कर्मणां नानात्वे सति यदोदयाद्युदयं नक्षत्रं भवति तदा नैव संशयः । तस्य दिनद्वयसंबंधोपवासेऽस्तसंबंधिनक्षत्रं ग्राह्यं—उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः । यत्र वा युज्यते राम निशीथः शशि-

ना सह । इति विष्णुधर्मोत्तरोक्तेः । यत्रार्धरात्रादर्वाक्तु नक्षत्रं प्राप्यते तिथौ । तन्नक्षत्रव्रतं कुर्यादतीते पारणं भवेत् । इति सुमंतूक्तेश्च । ततश्च यदा पूर्वदिन एवास्तसंबंधि नक्षत्रं तदा तत्रैवोपोष्य परदिने नक्षत्रांते पारणं कार्यं । यदा दिनद्वयेपि नास्तमयसंबंधः तदाप्येवं पूर्वदिने । निशीथसंबंधस्य नियामकत्वात् । यदा परदिनएवास्तमयसंबंधो दिनद्वयेपि वा तत्संबंधस्तदा परदिन एवोपोषणं । संकल्पप्रभृति कर्मकालव्याप्तिलाभात् । उक्तरोहिणीव्रते नक्तसत्वेपि परदिनस्थमेव नक्षत्रमुपादेयं ।—यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदंगं। इति वचनात् । यदि तु कचिन्नक्षत्रे नक्तमात्रं प्राधान्येन विहितं भवेत्तदा दिनद्वयेऽस्तसंबंधिनोपि नक्षत्रस्य परदिनेऽस्तादूर्ध्वं समत्वे पूर्वदिनएव नक्तं कार्यं। एवं परदिन एवास्तसंबंधिनोपि पूर्वदिनएव। नक्तकालव्याप्तेर्बलवत्त्वात्। यत्तु विष्णुधर्मोत्तरे—सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः । तदा कर्माणि कुर्वीत ह्रासवृद्धी न कारणं। इति । तदुपवासनक्तान्यपूजनैकभक्तादिविषयं। यत्तु बौधायनेनोक्तं—सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः । वर्धमानस्य पक्षस्य ह्रानौ त्वस्तमयं प्रति । इति । तन्नक्षत्रमात्रसाध्यपितृकार्यविषयं । तिथिह्रासवृद्ध्यपेक्षनिर्णयस्य पितृकार्यविषयतायाः प्रागुपादानात्तत्साहचर्यान्नक्षत्रेऽपि तथात्वौचित्यात् । नाक्षत्रमासस्य नक्षत्रसत्रे उपयोगः, नाक्षत्रसंवत्सरस्य तु पुष्यस्नानादौ निमित्तत्वेनेति बोध्यं । इति नक्षत्रनिर्णयः ।

अथ चांद्रसौरनक्षत्रेयत्तानिर्णयाधीननिर्णयत्वाद्योगस्वरूपाणां तत्कृत्यमुच्यते । हेमाद्रौ भविष्ये—विष्कंभादिषु योगेषु भवेदेकाशनो नरः । यो ददाति क्रमात्पार्थ घृततैलफलेक्षवः । यवगोधूमचणकं निष्पावान्छालितंडुलान् । लवणं दधि दुग्धं च वस्त्रं कनकमेव च । कंबलं गां वृषं छत्रमुपानद्युगमेव च । कर्पूरं कुंकुमं चैव चंदनं कुसुमानि च । लोहं ताम्रं च कांस्यं च रौप्यं चेति युधिष्ठिर । स्नातः स्वशक्त्या विधिवत्सर्वपापैः प्रमुच्यते । न वियोगमवाप्नोति योगव्रतमिदं स्मृतं । इति । तत्र व्यतीपाते श्राद्धं नित्यं—अमावास्याव्यतीपातपूर्णमास्यष्टकासु च । विद्वान् श्राद्धमकुर्वाणः प्राय-

श्चित्तीयते तु सः । इति वचनात्। हेमाद्रौ भरद्वाजः— व्यतीपाते वैधृतौ च दत्तस्यांतो न विद्यते । व्यतीपातो विशेषेण सहि शस्तः प्रकीर्तितः । इति । तत्र व्यतीपातस्योत्पत्त्यादिभागमानं ज्योतिषे—विंशतिर्द्वियुतोत्पत्तौ भ्रमणे चैकविंशतिः । पतने दश नाड्यस्तु पतिते सप्त नाडिकाः । इति । तत्र फलतारतम्यं याज्ञवल्क्यः—उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायां तु । अर्बुदगुणितं पतने जपदानाद्यक्षयं पततः । इति ।

व्यतीपातव्रतं वाराहे—शुभे व्यतीपातदिने विगाह्येत्सपंचगव्येन महानदीजलं । उपाविशेद्वै पवमानजापको जपेत्तु शूद्रो व्यतिपात ते नमः । शूद्रवत्स्त्रियोपि—छादिते ताम्रपात्रेण शर्करापूरिते घटे । कांचनाक्षे प्रतिष्ठाप्य हैममष्टभुजं नरं । अत्राष्टपदेनाष्टादशसंख्योच्यते । व्यतीपातस्योत्पत्तौ अष्टादशभुजपुरुषत्वावधारणादिति हेमाद्रिः ।—गंधपुष्पाक्षतैर्धूपैर्दीपवस्त्रसमन्वितैः । भक्ष्यैर्भोज्यैः फलैश्चित्रैर्मासि मार्गशिरेऽर्चयेत् । नमस्तेस्तु व्यतीपात सूर्यसोमसुत प्रभो । यद्दानादि कृतं किंचित्तदनंतमिहास्तु मे । इत्युक्त्वा पंचरत्नाढ्यं सपुष्पाक्षतमंजलिं । प्रक्षिप्य तत्क्षणादेव सर्वपापक्षयो भवेत् । सर्वादिर्बहुव्रीहिः समानकर्तृकत्वनिर्वाहाय । यदि द्वितीयेपि दिने व्यतीपातो भवेन्महान् । तदा पूर्वोपवासस्तु दद्यात्तत्सकलं गुरोः । पारणं व्यतीपातांते कुर्यात्संप्राश्य गोमयं । अथैकस्मिन्नेव दिने व्यतीपातो भवेद्यदि । तत्रैवाह्नि तदा दत्त्वा उपवासं समाचरेत् । कुर्यादेवं मासिमासि व्यतीपातास्त्रयोदश । व्यतीपाते तु संप्राप्ते कुर्यादुद्यापनं बुधः । व्यतीपाताय स्वाहेति क्षीरवृक्षसमन्वितं । आज्यक्षीरतिलानां च होतव्यं वै शतं शतं। शर्करापूर्णकुंभेन सह सोपस्करं नरं । शय्यां चोपस्करैर्युक्तां प्रदद्यात्कृतदेशिने । मंत्रः—वंदे व्यतीपातमहं महांतं रवींदुसूनुं सकलेष्टलब्ध्यै । समस्तपापस्य मम क्षयोस्तु पुण्यस्य चानंतफलं ममास्तु । इति ।—इति समाप्य गुरुः परिपूज्यते कटककुंडलकंठविभूषणैः । सकलमेव समर्प्य पुरोहितं तदुपलभ्यमिहैव सुजन्मनि । गां वै पयस्विनीं दद्यात्सुवर्णोत्तरदक्षिणां । इति । ततः शय्यानुवादेन दार्वादिदीपिकोपानहछत्रचामरवैशिष्ट्यं

चोपन्यस्य व्रतफलमुक्तं तत्रैव—देहांते सूर्यलोकाय विमानै रत्नसप्रभैः। गत्वा कल्पार्बुदशतं मोदते त्रिदशार्चितः। तदंते राजराजः स्याद्रूपसौभाग्यभाङ्महान्। इति। सर्वेपि योगाः खंडत्वेन नक्तादौ तत्तत्कालव्यापिनो ग्राह्याः पूजादानयोस्त्वौदयिकाः। उपवासेऽहोरात्रसंबंधिनः। उभयसंबंधाभावे त्वौदयिकाः। कर्मकालव्याप्तिवशेन तदुपक्रमसंबंधेन निर्णयौचित्यस्येहापि तुल्यत्वात्। इति योगकृत्यं।

अत्रैव प्रसंगात्करणकृत्यमुच्यते। करणानां तिथ्यर्धपरिच्छेद्यत्वेन चांद्राधिकारे वक्तुमर्हाणामपि स्वल्पोपयोगित्वेन योगांते कथनस्य लोके शास्त्रे च दर्शनात्। तदुक्तं हेमाद्रौ ब्रह्मांडे—माघमासे तु संप्राप्ते शुक्लपक्षे यदा भवेत्। बवाभिधानं करणमुपवासस्तदा भवेत्। पूजयेच्चाच्युतं देवं गंधमाल्यविलेपनैः। सौवर्णी प्रतिमा कार्या विष्णोः कर्षमिता शुभा। जपेदष्टोत्तरं तत्राहर्निशं तु मनुं बुधः। कलशं तु समानीय ताम्रपात्रं तथोपरि। विन्यस्य पूजयेद्देवं सुवर्णकलशेन च। वितानं चामरं घंटां देवाय प्रतिपादयेत्। एवं सप्त विधेयानि बवाख्यान्यथ सप्तके। बवे तु करणे प्राप्ते पूर्वं पूर्णं समारभेत्। ब्राह्मणान्भोजयेच्चात्र सप्तसंख्यान्सदक्षिणान्। अथैवं बालवादीनि विष्ट्यंतानि यथाक्रमं। उषित्वा सप्तसप्तैव पूर्वोक्तविधिना नृप। समापयेद्व्रतं भूरि गोभूहेमादिदानतः। एवं कृते व्रतं राजन् राजसूयाश्वमेधयोः। समस्तं फलमाप्नोति सुखं कीर्तिं महाश्रियं। इति। बवाख्यानीति बवाख्यसप्तस्वेवंप्रकारेणोपवासादिपूजनांतं कार्यमित्यर्थः। पूर्वमिति बवव्रतस्य पूर्णतां कुर्यादित्यर्थः। उषित्वेति बालवादिषु प्रत्येकं सप्तसु बवोक्तरीत्या पूजनांतं कुर्यादित्यर्थः। हेमादीत्यादिपदेन प्रतिमादि। ततश्चांते दानविधानात्सर्वकरणव्रतेष्वेका प्रतिमेति गम्यते। अत्र कृत्स्नकर्मकालव्यापिनः करणस्य कदाप्यसंभवात् कर्मोपक्रमकालीनस्य ग्रहणमुचितं। यत्र तु कर्मकालव्याप्तिः संभवति तत्तदादरः कार्यः। तदभावे तु तत्रापि तथैवेति।

अथ विष्टिनिर्णयः ज्योतिःप्रकाशे—चतुर्थ्येकादशी रात्रौ शुक्ले पूर्णाष्टमी दिवा। भद्रा त्रिदशमी रात्रौ कृष्णेह्वयद्रिमनौ तिथौ। रात्रिरुत्तरार्धं। दिवेत्यह्नीति च पूर्वार्धमुच्यते।

शुक्ल इत्यस्य कृष्ण इत्यस्य च मध्यमणिन्यायेनान्वयः । त्रिस्तृतीया । अद्रिः सप्तमी । मनुश्चतुर्दशी । तत्फलं दैवज्ञवल्लभे—मुखे कार्यहानिर्गले प्राणनाशो हृदि द्रव्यनाशः कलिर्नाभिदेशे । कटावर्थविध्वंसनं पुच्छभागे जयश्चेति भद्राशरीरे फलं स्यात् । इति । तन्मुखादिस्वरूपं नारदः—मुखे पंच गले त्वेका वक्षस्येकादश स्मृताः । नाभौ चतस्रः षट् श्रोणौ तिस्रः पुच्छाख्यनाडिकाः । इति । समासांतर्गतस्यापि नाडिकापदस्य निष्कृष्य मुखादावप्यनुषंगः । राज्ञामेकादश इत्यादौ गर्भाष्टमपदाद्गर्भपदानुषंगवत् । पंचनाड्यात्मकमुखस्य विष्टिभेदेन देशभेदानाह ज्योतिर्निबंधे श्रीपतिः—जलशिखिशशिरक्षःशर्वकीनाशवायुत्रिदशपतिककुप्सु प्रोक्तमास्यं हि विष्टेः । नियतमृषिभिराशासंख्ययायामैः क्रमेण स्फुटमिह परिहार्यं मंगलेष्वेतदेव । इति । जलं वरुणः । शिखी अग्निः । रक्षो निर्ऋतिः । शर्व ईशानः । कीनाशो यमः । त्रिदशपतिरिंद्रः । एषां ककुभो दिशः । ऐंद्रीमारभ्य गणनायां यत्संख्योक्तदिशि यन्मुखं तत्संख्यमाद्यं पंचनाड्यात्मकं तदिति यामैरित्यंतार्थः । एवकारेण मांगलिककर्मसु मुखमतिनिषिद्धं ज्ञाप्यते । तत्र शुक्लचतुर्थ्या उत्तरार्धे प्रतीच्यां मुखं । अतएव पंचमे प्रहरे तिथेः विष्टेः प्रहरचतुष्टयाधिक्याभावात् विष्ट्यंते त्रिघटिकं पुच्छं । ततोऽष्टम्यां मुखमाग्नेयामतो द्वितीययामे । ततः प्राक्पुच्छं तावदेव । स्पष्टीकृतं चैतद्बोपदेवेन । भेष्वर्कनखनाड्यूर्ध्वं भद्रापुच्छं घटीत्रयं । क्रमेण शुक्लपक्षे स्याद्व्युत्क्रमेण सितेतरे । इति । भानि २७ इषवः ५ अर्काः १२ नखाः २० चतुर्थ्यादिक्रमेण व्युत्क्रमेणेति तृतीयायां विंशत्यूर्ध्वं सप्तम्यां द्वादश्योर्ध्वमिति द्रष्टव्यं । अयमेवार्थः शब्दांतरेण स्पष्टीकृतोऽन्यत्रापि—असिते सर्पिणी ज्ञेया सिते चैव तु वृश्चिकी । सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च । इति । यत्तु ज्योतिर्निबंधे आर्ष्टिषेणिः—भानि २७ सार्धाब्धयः ४।३० सूर्याः १२सार्धगोब्जाः १९।३० क्रमोत्क्रमात् । क्रमाद्भद्रासु पुच्छं स्यादाभ्यो नाडीत्रयं परं । इति । यत्र द्वितीयचतुर्थसंख्ययोरुक्तसंख्यातोऽर्धन्यूनतोक्त्या न विसंवादः । तिथिक्षयेण विष्टेरपि न्यूनतायां तदीययामानां तन्न्यूनत्वे तिथ्याधिक्ये यामाधिक्यमिति सूच-

नात् । एवं पुच्छं त्रिघटिकमित्याद्यपि न नियतं । किंतु फल-संख्यामप्यालोच्य कल्पितो विष्टिदशमांश उक्तप्रदेशस्थः पुच्छं । एवं षष्ठांशाद्यात्मकं मुखाद्यपीति बोध्यं । क्रमोत्क्रमयोर्व्यवस्थार्थ-मुत्तरार्धे क्रमादिति मुख्यचांद्रमानगतपक्षक्रमात् । शुक्ले क्रमात् कृष्णे व्युत्क्रमात् इति यावत् । एवं निरूपितं पुच्छं पुच्छभागे जयश्चेति कार्येषु ग्राह्यत्वेनोक्तं । विष्टिविशेषे कृत्स्नेपि प्रतिप्रसवं द्वेधा दैवज्ञाः स्मरंति—रात्रिभद्रा यदाह्नि स्याद्दिवाभद्रा यदा निशि । न तत्र भद्रादोषः स्यात्सा भद्रा भद्रदायिनी । इति ।—मेषोक्षकौर्पिमिथुनेष्वलिसिंहमीनकुंभेषु चापमृगतौलिवरांग-नेंदौ । स्वर्मर्त्यनागनगरीः क्रमशः प्रयाति विष्टिः पलान्यपि ददाति हि तत्र देशे । इति । मेषवृषभवृश्चिकमिथुनगतचंद्रे भद्रा स्वर्गता । कर्कमीनसिंहकुंभगते मृत्युलोकगता । धनुर्म-करतुलाकन्यागते पातालगता । लोकांतरगता तदन्यलोके निषिद्धेत्यर्थः । कार्यविशेषे सर्वस्या अपि विष्टेः प्रतिप्रसवं ज्यो-तिर्निबंधे वसिष्ठः—वधबंधविषाग्न्यस्त्रच्छेदनोच्चाटनादि यत् । तुरंगमहिषोष्ट्रादि कर्म विष्ट्यां च सिध्यति । इति । कर्मे-त्यनंतरं यच्चेति चकारान्वयः । इति विष्टिनिर्णयः । येनार्जि-तानि० ।१। योनंतदेवकृत० । तस्य नाक्षत्रदीधितिरियं स्मृति-कौस्तुभस्य ।२। इति नाक्षत्रवत्सरकृत्यं ।

अथोक्तवत्सरसमुदायरूपकलिसंबंधिकार्याकार्यविवेकः । महाभारते—तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमं । द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे । अत्र तपःप्रभृतिभिः कलौ यद-लभ्यं तद्दानेन लभ्यमित्यत्र तात्पर्यं नतु तपःप्रभृतित्यागे । एवमग्रेपि । तथा—गीता गंगा तथा भिक्षुः कपिलाश्वत्थसेवनं । वासरः पद्मनाभस्य सप्तमं न कलौ युगे । वासर एकादशी । काशीखंडे—कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी । कलौ भागीरथी गंगा कलौ दानं विशिष्यते । ब्रह्मवैवर्ते कलिं प्रति ब्रह्मवचः—ये भजंति महात्मानं शिवं चापि जनार्दनं । न तेषां तत्कृतो दोषः काश्यां निवसतामपि । गुरु-सेवापराणां च पितृमातृसुसेविनां । गोवैष्णवमहाशैवतुलसी-सेविनामपि । तथा—सत्यादौ यद्दुर्लभं स्वात्मरूपं तिष्येका-दश्यां संप्रदद्यादपाते । बृहस्पतिः—तपो धर्मः कृतयुगे तिष्ये

दानं दया दमः । शिवपुराणे—ध्यानं परं कृतयुगे त्रेतायां यजनं तथा । द्वापरे लिंगपूजा च कलौ शंकरकीर्तनं । ज्ञानं परं कृतयुगे प्रतिष्ठा च कलौ युगे । वैष्णवब्रह्मांडयोः—यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तु । द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ । विष्णुधर्मोत्तरे—पुष्करं तु कृते सेव्यं त्रेतायां नैमिषं तथा । द्वापरे तु कुरुक्षेत्रं कलौ गंगां समाश्रयेत् । इति । स सम्यक्तीर्थांतरप्रयुक्तं फलं दातुं गंगैव प्रभवतीति निश्चयेन यावज्जीवं न त्यजेदित्यर्थः । पराशरः—कृते तु मानवो धर्मस्त्रेतायां गौतमस्य च । द्वापरे शांखलिखितः कलौ पाराशरः स्मृतः । इति । ततश्च पराशरस्मृतेः स्मृत्यंतरविरोधेन विकल्पे न्यायसिद्धेऽपि कलौ पाराशरोक्तमेवानुष्ठेयं । महाभारते—यस्त्वोंनमःशिवायेति मंत्रेणानेन शंकरं । सकृत्कालं किलावर्तैत्सर्वपापैः प्रमुच्यते । सर्वावस्थां गतो ब्रूयाद्युक्तो वा सर्वपातकैः । यस्त्वोंनमःशिवायेति मुच्यते स कलौ नरः । शाठ्येनापि नमस्कारः प्रयुक्तः शूलपाणये । संसारदोषसंहार उद्दिष्टः परमः कलौ । लैंगे—ये तं विप्रास्तु सेवंते येन केनापि शंकरं । कलिदोषं विनिर्जित्य प्रयांति परमं पदं । इति । हेमाद्रौ व्यासः—ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवं । इति । अत्रच कृताद्यधिकरणकध्यानादिफले कल्यधिकरणं कीर्तनं विधीयत इति वाक्यार्थः पितामहचरणैर्भक्तिविवेके निरूपित इति नेह निरूप्यते ।

पुरश्चरणचंद्रिकायां वैशंपायनः—यस्मिंश्च निगदेनैव मंत्रे संख्या निगद्यते । तत्र सर्वत्र मंत्राणां संख्यावृद्धिर्युगक्रमात् । कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणा भवेत् । द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा । इति । अन्यत्रापि—प्रजपेदुक्तसंख्यायाश्चतुर्गुणजपं कलौ । इति । प्रात्याहिकजपे पुरश्चरणजपे चैष विधिरविशेषात् । तत्रैवाग्नेये—नास्ति श्रेयस्करं नृणां विष्णोराराधनान्मुने । युगेऽस्मिंस्तामसे घोरे यज्ञवेदविवर्जिते । कलौ कलिमलध्वंसं सर्वपापहरं हरिं । येऽर्चयंति नरा नित्यं तेऽपि वंद्या यथा हरिः । तत्रैव श्रीभागवते—कलिं सभाजयंत्यार्या गुणज्ञाः सारभागिनः । यत्र संकीर्तनेनैव

सर्वः स्वार्थोऽपि लभ्यते। इति। संकीर्तनेनेति हरिसंकीर्तनेनेत्यर्थ इति व्याख्यातं हेमाद्रिणा। तथा तत्रैव—कृष्णवर्णं त्विषा कृष्णं सांगोपांगास्त्रपार्षदं। यज्ञैः संकीर्तनप्रायैर्यजंति हि सुमेधसः। इति। कृष्णं कृष्णनामानं। ततश्च कलौ कृष्णावतारस्य सेव्यत्वं ध्वन्यते। प्रायैरिति यज्ञादिस्वाचारमाचरद्भिरपि कालेषु संकीर्तननिष्ठैर्भवितव्यमित्याशयः। तांश्च कालाननुपदं वक्ष्यामः। तत्रैव विष्णुधर्मोत्तरे—देवतावेश्मपूर्वाणि नगराणि कलौ युगे। कर्तव्यानि महीपालैः स्वर्गलोकमभीप्सुभिः। इति कलिकार्याणि।

अथ तत्राकार्याणि स्मृत्यर्थसारे—देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः। दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च। समुद्रयात्रास्वीकारः कमंडलुविधारणं॥ देवरेणेत्युपलक्षणं।—अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया। सपिंडो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्। इति विहितं। मिताक्षरादौ वा वाग्दत्ताविषयत्वेनोक्तं यत्। यच्चेतिहासपुराणेषु परिणीतास्वपि कुंतीमाद्र्यादिषु असपिंडाऽसगोत्रशक्रादिनियोगेन प्रतीयमानं क्षेत्रजपुत्रोत्पादनं तन्निषिध्यते। परस्य चेति षष्ठी चतुर्थ्यर्थे। दत्तेति मुख्यदाने संज्ञाते प्राक्सप्तमपदातिक्रमणाद्युक्तमिताक्षरायामुत्कृष्टवरांतरलाभेऽन्यस्मै दानमुक्तं। यच्च—पुरा पुरुषसंयोगान्मृते देयेति केचन। इतीतिहासगतैकीयमतात्प्रसक्तं तन्निषिध्यते। ननु वाग्दत्ताविषयं। वाग्दाने दातेर्गौणत्वात् प्रकृते च गौणग्रहणे मानाभावात्। यत्तु वाग्दत्तायां क्षतयोनित्वशंकाया अभावान्न तद्विषयत्वमिति। तन्न। वाग्दानोत्तरं बहुवत्सरव्यवधानेन विवाहमाचरत्सु पुरुषापराधस्यानिवार्यत्वात्। समुद्रेति तीर्थयात्रा निषिध्यते। तीर्थयात्राऽतिदूरत इति माधवोदाहृतवचसैकमूलश्रुतिकल्पनालाघवात्। कमंडल्विति—वैणवीं धारयेद्यष्टिं सोदकं च कमंडलुं। यज्ञोपवीतं वेदं च शुभे रौक्मे च कुंडले। इति मनुना स्नातकधर्ममध्ये विहितं यत्सदा यज्ञोपवीतवत्कमंडलुधारणं तन्निषिध्यते। यत्तु बौधायनोक्तं सधर्मकं निषिध्यत इति। तन्न। धर्माधिक्येपि कर्मभेदाभावात्। धर्माणामेव निषेधांगीकारे च तल्लक्षणाया अन्याय्यत्वात्। महाप्रस्थानगमनं

गोपशुश्च सुराग्रहः। अग्निहोत्रहवण्याश्च लेह्यो लीढापरिग्रहः। महाप्रस्थानगमनं यथा प्रसिद्धं पांडवपुराकल्पे। क्षत्रियादीनां मरणांतप्रायश्चित्तत्वेन प्रसक्तं च। गोपशुरानुबंध्यादौ। सुराग्रहः सौत्रामण्यादौ। लेहस्य विहितस्यैवायं निषेध इति द्योतनायाह लीढेति। लीढाया उच्छिष्टदोषशुद्ध्युपायं विना परिग्रहो यस्मिन्विहितत्वेन निर्दोषत्वादित्याशयः। ततश्च न पृथङ्निषेधः परिग्रहस्य।—असवर्णासु कन्यासु विवाहश्च द्विजातिषु। वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा। तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमं। ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः। इति द्विजानां योऽसवर्णाविवाहो विहितः स कलौ निषिध्यते।—एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः। त्र्यहात्केवलवेदस्तु विहीनो दशभिर्दिनैः। इति स्मृत्या आशौचसंकोचो विहितः सोपि। अत्रैकाहादिना सर्वात्मना यदि शुद्धिर्विवक्षिता। यदि वा मिताक्षरोक्तरीत्या ब्रह्मोज्झाशादिकृतार्तिनिमित्तका स्वाध्यायाध्ययनादिमात्रविषया उभयथापि निषिध्यते।—अस्थिसंचयनादूर्ध्वमंगस्पर्शनमेव च। प्रायश्चित्तविधानं च विप्राणां मरणांतिकं। यत्स्मृत्यर्थसार एवाशौचप्रकरणे उक्तं संचयने कृते स्वाशौचकालत्रिभागैस्त्रिचतुःपंचदिनैः स्पृश्या वर्णा इति। यच्च महापातकप्रायश्चित्तप्रकरणेषु मन्वादिभिर्मरणांतं प्रायश्चित्तं विहितं। प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिरा इत्यादि। व्यवस्थापितं च कामकारविषयत्वेन विज्ञानेश्वरादिभिस्तत्कलौ वर्ज्यमित्यर्थः।—संसर्गदोषः पापेषु मधुपर्के पशोर्वधः। दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः। पापेषु महापापिपुरुषे यः संसर्गस्तन्निमित्तो दोषोऽव्यवहार्यत्वकर्मानधिकाररूपपातित्यं तन्निषिध्यते। नचासमर्थसमासापत्तिः। संसर्गस्य नित्यसापेक्षत्वात्। ततश्च पारलौकिकनरकानुकूलदोषस्य न निषेधः। तथाच हेमाद्रौ शातातपः—कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु। द्वापरे त्वन्नमादाय कलौ पतति कर्मणा। इति। अत्रच ब्रह्महत्याप्रभृति संभाषणादिसंसर्गस्य पातित्यहेतुत्वं यत्कृप्तं पादत्रयेपि तदनूद्यते यथाप्राप्तं। नत्वपूर्वं विधीयते। वाक्यभेदापत्तेः। नच नवविधसंसर्गस्य संवत्सरमनुवर्तमानस्यैव तत्प्राप्तं न संभा-

षणमात्रादेरिति वाच्यं। चिरभाविनि स्वर्गे प्रत्येकापूर्वद्वाराग्नेयादीनामिव संभाषणादीनां प्रत्येकहेतुताया अवश्याभ्युपेयत्वात्। एवंच संभाषणादिनिरूपकत्वेनोपस्थितपुंविशेषेण ब्रह्महननादेरेव चतुर्थपादे कर्मणेति निर्देशः। ततश्च ब्रह्महंत्रादेरेवाव्यवहार्यत्वादिरूपं पातित्यं न तत्संसर्गिण इत्यर्थः। नच कर्मणेति नवविधसंसर्गकथनमिति साधु। तस्यानुपस्थितत्वात्। अतएव कलौ कर्तैव लिप्यते इति पाठांतरसंवादलाभः। नचैवं संसर्गिणः पारलौकिकदोषनिषेधोपि किं न स्यादिति वाच्यं।—त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्। द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे। इति शातातपवचस्यैव चतुर्थपादे तुशब्देन कर्तृभिन्नानां विप्रकृष्टसंनिकृष्टतरसंसर्गिणां संसर्गनिवृत्तिफलकदेशादित्यागस्य युगांतरीयत्वेन पादत्रये निर्दिष्टस्य व्यवच्छेदेपि कर्तुस्त्यागविधानेन तदीयसाक्षात्संसर्गस्य यथाप्राप्तनरकहेतुताया दृढीकरणादिति शाब्दव्युत्पत्तिमंत एव विदांकुर्वंतु।

मधुपर्के पशोर्गोः पाक्षिको वधो मधुपर्कविधिं वदद्भिर्मुनिभिराम्नातः कलौ निषिध्यते। औरसो धर्मपत्नीज इत्यादिग्रंथे याज्ञवल्क्येन द्वादशविधपुत्रा उक्ताः। तेषु—दद्यान्माता पिता चायं स पुत्रो दत्तको भवेत्। इति योऽभिहितः। यश्च दत्तात्मा तु स्वयंदत्त इति तावुभौ दत्तपदेनोच्येते। एवं त्रयाणां पर्युदासात्क्षेत्रजनिषेधस्य प्रागेव सूचनादवशिष्टाष्टविधपुत्रसंग्रहः कलौ निषिध्यते।—सत्रदीक्षा च स्तेयान्यमहापातकनिष्कृतिः। प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्मकः। दीक्षानिषेधमुखेन सत्रमेव निषिध्यते। पूतिकानभिषुणुयात्तमस्मै भक्षं प्रयच्छेदित्यत्राभिषवादिसंबंधमुखेन यागसंबंधवत्। स्तेयान्यमहापातकेष्वकामकृतेषु नरकनिवृत्त्यर्था निष्कृतिः कलौ निषिध्यते। कुत इतिचेत् शृणु। हेमाद्र्यादिनिबंधेष्वादित्यपुराणगतत्वेनैतदेवेत्थमुदाहृतं।—प्रायश्चित्तविधानं च विप्राणां मरणांतिकं। संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः। इति। अत्र च पूर्वार्धे नरकनिवृत्त्येकफलकमरणांतप्रायश्चित्तनिषेधात्—विहितं यदकामानां कामात्तद्द्विगुणं चरेत्। इति व्रतात्मकप्रायश्चित्तस्य तु—कामतो व्यवहार्यस्तु वचनादिह जायते। इति शास्त्रेण नरक-

निवृत्तिहेतुत्वनिषेधात्कामकृतमहापातके नरकनिवृत्तिफलकं प्रायश्चित्तं कलौ नैवास्तीति सिद्धं । संसर्गदोष इत्यंशेपि पूर्वोक्तरीत्या पातित्यनिषेधेपि नरकनिवृत्त्यभावः सिद्धः । तत्प्रायपाठान्नरकनिवृत्तिफलका निष्कृतिरेव निषिध्यते । साच परिशेषादकामकारविषयैवेति सिध्यतीति तत्संवादिन्यत्रापि वचसीत्थमेव व्याख्योचिता श्रुतिकल्पनालाघवादिति । यत्तु स्तेयान्यमहापातकेषु रहस्यप्रायश्चित्तं निषिध्यत इति । तन्न । सर्वथैवानुपस्थितार्थस्य वाक्यार्थेऽतर्भावकल्पनाया असंभवात् । यत्तु—कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः । द्वापरे शंखलिखिताः कलौ पाराशराः स्मृताः । इति शास्त्रेण स्मृत्यंतरविरोधे विकल्पप्रसक्ताविव बाधप्रसक्तावपि पाराशरस्मृतेर्बलवत्त्वनियमात्तस्यां च महापातकप्रायश्चित्ताम्नानात्तद्विरोधेन स्तेयान्येत्यस्य रहस्यप्रायश्चित्तोपदेशनिषेधे तात्पर्यं कल्प्यत इति । तदप्यसत् । अत्र शब्दोपस्थितबलवत्त्वनियमस्य वाक्यार्थेंतर्भावासंभवात् । धर्मपदानुषंगलब्धात्मनश्च शास्त्रस्य विकल्पप्रसक्तौ नियमपरत्वे संभवति बाधप्रसक्तावपूर्वविधित्वस्यान्याय्यत्वात् । उपदेशनिषेधपर्यंततात्पर्यवर्णने चोपदेशस्य रहस्यप्रायश्चित्तेष्वप्रसक्तेर्बलात्प्रकाशकृतप्रायश्चित्तविषयत्वापत्तेः । यत्तूपदेशाभावाद्ब्राह्मणभोजनादिविधिविरोधाच्च रहस्यप्रायश्चितं निष्कृतिर्न भवतीति कल्प्यमिति । तदपि सर्वसाधारणहेत्वोः कलिमात्रविषयप्रतिज्ञायामसाधकत्वादसद्धेतुत्वस्य स्पष्टत्वाच्च तुच्छमित्यलं ।

प्रतिमेत्यर्थेऽभिशब्दोऽपरोक्षज्ञानपरः । ब्राह्मणवतीमिष्टकामभिजानीयादित्यत्राभिशब्दस्यापरोक्ष्यार्थकत्वेन पंचमे मीमांसकैर्व्यवस्थापनात् । अपरोक्षत्वजातेश्च ज्ञानत्वव्याप्यत्वेन जानीतेरनपेक्षणात् । ततश्च देवतासाक्षात्काररूपो यः प्रतिमार्चनार्थः पूजाफलमिति यावत् । तदुद्देश्यकः संकल्पो निषिध्यते । प्रसक्तश्चासौ पूजाफलत्वेन देवतासाक्षात्कारस्य पौराणध्रुवादिगोचरानेकवचःसिद्धत्वात् । यत्तु यावज्जीविकैकप्रतिमापूजासंकल्पो निषिध्यत इति । तदप्यसत् । अशब्दार्थस्य वाक्यार्थेऽतर्भावस्य साहसत्वात् । तादृशसंकल्पस्य शास्त्रीयप्रसक्त्यभावाच्च ।—सवर्णाऽन्यांगनादुष्टैः संसर्गः शोधितैरपि । शामित्रं चैव वि-

प्राणां सोमविक्रयणं तथा। सवर्णान्या असवर्णा या अंगना तत्संभोगेन दुष्टाः कृतप्रायश्चित्ता अपि ये वर्णास्तत्संसर्गो निषिध्यते। सवर्णानिरूपकत्वेन वर्णोपस्थितेः उत्तमवर्णांगनाभोगदुष्टाधमवर्णविषयं चैतत्।संसर्गनिषेधापेक्षितदोषगुरुत्वस्य दंडप्रायश्चित्तगुरुत्वाभ्यां क्लृप्तत्वात्। विप्राणामिति मध्यमणिन्यायेनान्वयः। तथाचाध्रिगु(?)प्रैषे शमितृकर्मत्वेन प्रसिद्धं यद्यज्ञियपशोः संज्ञपनादि तद्विप्रान्प्रति निषिध्यते तत्प्रायपाठाद्यज्ञियसोमविक्रयणं च।—दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ।कलौ युगे त्विमान्धर्मान्वर्ज्यानाहुर्मनीषिणः। इति। उपकुर्वाणकं प्रति प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि ग्रहणांतं वेति विहितं—वेदानधीत्य वेदौ वा वेदं वापीति, वेदव्रतानि वा पारमिति च बहुविधविकल्पविधिभिः कादाचित्कत्वेनावगतं यद्दीर्घकालं ब्रह्मचर्यं तन्निवृत्तिः कलौ नियम्यते लाघवात्। नतु फलकामं प्रति—नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ। इति प्रकृत्य —अनेन विधिना देहं साधयन्विजितेंद्रियः। ब्रह्मलोकमवाप्नोति नचेहाजायते पुनः। इति नित्यवद्विहितनैष्ठिकब्रह्मचर्यनिवृत्तिरपूर्वा विधीयते। गौरवात्। यत्तु तद्ग्रहणे कालपदोपादानं व्यर्थमिति तदसत्। तत्प्रापकशास्त्रेऽपि नैष्ठिकव्याख्यावसरे उक्तप्रकारेणात्मानं निष्ठामुत्क्रांतिकालं नयतीति दीर्घकालत्वप्रतीतेस्तुल्यत्वात्। आर्थिकस्य ब्रह्मचर्यगतदीर्घत्वस्यापि प्राप्तेरष्टाचत्वारिंशद्वर्षवेदब्रह्मचर्येऽप्यविशेषात्। नरमेधस्ते प्राजापत्या इति श्रुत्युक्तः, अश्वमेधोपि योऽश्वमेधेन यजत इति श्रुत्युक्तस्तौ उभौ कलौ निषिध्येते। इति स्मृत्यर्थसारोक्तकलिवर्ज्यं व्याख्यातं।

अथैतेभ्योऽन्यान्यपि हेमाद्रिस्थानि प्रदर्श्यंते। आदित्यपुराणे—गोत्रान्मातृसपिंडाच्च विवाहो गोवधस्तथा। नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः। मातृसंबंध्येव गोत्रं मातुःशब्दोपस्थितत्वात्। ततश्च मातुलकन्यानिषेधे तात्पर्यं। मद्यमिति—उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनौ। इति महाभारताद्युक्त्या क्षत्रियादेः प्रसक्तस्य पैष्टीभिन्नमद्यपानस्य निषेधः। वस्तुतस्तु मेधपदोक्तयज्ञसाहचर्याच्छ्रौतेषु यज्ञेषु सौत्रामण्यादिषु स्मार्तेषु विनायकशांत्यादिषु विनियुक्तमद्यनिषेधोयं। यत्तु

वामागमादौ विहितस्य निषेध इति । तदसत् । वामागमादेः प्रामाण्यस्य भट्टचरणप्रभृत्यनेकशास्त्रकर्तृभिः सर्वदेशस्थशिष्टैश्चानभ्युपगमेन तद्विहितत्वेन प्रसक्तेरसंभवात् । असत्परिग्रहमूलकप्रामाण्यस्य भ्रमेण प्राप्तेश्च सौत्रामण्यादिभिः सह वचनानर्हत्वात् । तत्रैव—तथोद्धारविभागोपि नैव संप्रति वर्तते । आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनं । द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः । योगियाज्ञवल्क्येन ज्येष्ठं वा श्रेष्ठभागेनेति सामान्येन ज्येष्ठाद्यर्थः श्रेष्ठादिभागोद्धार उक्तः । विवृतश्च मनुना—ज्येष्ठस्य चांशउद्धारः सर्वद्रव्याच्च यद्वरं । ततोर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः । इति स कलौ निषिध्यते । द्विजाग्र्या विप्रास्तेषां संमुखमकूटशस्त्रेण हननं यत्—आततायिनमायांतं हन्यादेवाविचारयन् । इति विहितं तन्निषिध्यते । अतश्च—नाततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्यः इति सुमंतुवाक्यमपि कलिविषयमेवेति केचित् । तन्न । मिताक्षराकारेण अर्थशास्त्रात्तु वलवद्धर्मशास्त्रमिति स्थितिः । इति मूलव्याख्यावसरे—शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते । इत्युपक्रम्य—आत्मनश्च परित्राणे दक्षिणानां च संगरे । स्त्रीविप्राभ्यवपत्तौ च घ्नन्धर्मेण न दुष्यति । इति शास्त्रस्यार्थमात्मनो दक्षिणादियज्ञोपकरणानां च स्त्रीब्राह्मणादीनां च रक्षणार्थं कूटशस्त्रेण घ्नन्दंडभागित्युक्त्वा तस्यार्थवादार्थमिदमुच्यते ।—गुरुं वा वालवृद्धौ वा श्रोत्रियं वा वहुश्रुतं । आततायिनमायांतं हन्यादेवाविचारयन् । इत्यादि । वाशब्दाद्गुर्वादीनपि हन्यात्किमुतान्यानिति । अपि वेदांतपारगमित्यत्राप्यपिशब्दश्रवणान्न गुर्वादीनां वध्यत्वप्रतीतिरित्युपन्यस्य सुमंतुमनुवाक्ये आततायिब्राह्मणवधे दोषकथनार्थे उपन्यस्तसामान्यशास्त्रतात्पर्यभ्रमनिवृत्त्यर्थे निर्दिश्योपसंहृतं । अतश्च ब्राह्मणाद्य आततायिनः आत्मादिरक्षणार्थं हिंसानभिसंधिना निवार्यमाणाः प्रमादाद्यदि विपद्येरन् तत्र लघुप्रायश्चित्तं दंडाभावश्चेति ।

अस्माच्च ग्रंथादेवं प्रतीयते । अर्थशास्त्रविधयापि नाततायिगोब्राह्मणवधविधिरस्ति, धर्मशास्त्रविधया सुतरां नास्तीति । अतः कुत्र ब्राह्मणवधविधिर्युगांतरसाधारणो यदर्थवत्त्वाय

सुमंतुवाक्यं कलिविषयमुच्येतेत्याश्चर्यं । नच पांडवसहायेन धृष्टद्युम्नेन द्रोणहननाद्युगांतरे युद्धप्रवृत्तब्राह्मणवधो विहित इति शंक्यं । मरणदशायां न्यस्तशस्त्रस्याततायिलक्षणाभावेना-र्जुनकृतेन धृष्टद्युम्नधिक्कारेण युधिष्ठिरादिलज्जोत्पत्त्या च ब्रह्म-हननं दृष्ट्वा जनः सूर्यमवेक्षत इति धृष्टद्युम्नं प्रति सात्यकेरुक्त्या च द्रोणवधस्याधर्मत्वात् । अतो यादृशविषये मिताक्षराकारेण दंडाभाव उक्तः तत्रापि कलौ दंडप्रतिप्रसवः क्रियत इति बोध्यं । ततश्च प्रायश्चित्तगुरुत्वमपि कल्प्यमिति । प्रत्यंतदेश गमननिमित्तपुनःसंस्कारे कृतेऽप्यब्धौ नौयातुः संसर्गः कलौ निषिध्यते । तथा—वरातिथिपितृभ्यश्च पशूपाकरणक्रिया । अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः । परोद्देशात्मसंत्याग उद्दिष्टस्यापि वर्जनं । नामांसो मधुपर्को भवतीति शास्त्रेण वरातिथिभ्यां मधुपर्के यन्मांसदानं विहितं । यच्च—खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च । लोहामिषं महाशाकं मांसं वार्ध्री-णसस्य च । यद्ददाति गयास्थश्च सर्वमानंत्यमश्नुते । इतिं पितृभ्यः श्राद्धे खड्गादिमांसदानं विहितं तन्निषिध्यते । श्राद्धे क्वचिदप्युपाकरणाप्रसक्त्योपाकरणस्य मांसदाने लक्षणया आव-श्यकत्वाद्द्वंद्वोपात्तेष्वेकरूपार्थस्य वक्तव्यत्वाच्च । अयोनाविति नञ्प्राशस्त्ये । यथा ब्राह्मणं प्रत्यब्राह्मणोसीति । निमित्ते सप्तमी । संग्रहो गर्भधारणं । गुरुः पिता । तत्रैव गुरुपदवाच्यत्वस्य विज्ञानेश्वरेण व्यवस्थापनात् । ततः—चतस्रस्तु परि-त्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुंगितो-पगता च या । इति यस्त्यागो विहितः स कलौ पुत्रेण मातुर्न कार्यः । अन्यासां तु तादृशीनां कलावपित्यागो भवत्येवेति मंतव्यं । गोब्राह्मणादित्राणार्थे—गवार्थे ब्राह्मणार्थे च सद्यः प्राणा-न्परित्यजेत् । इति विहितो य आत्मत्यागः स कलौ निषिध्यते । केचित्तु परोद्देशात्मत्यागो दानं मनसा पात्रमुद्दिश्येत्युक्तं तन्नि-षिध्यत इत्याहुः । तन्न । उद्देशेन प्रतिगृह्यतामित्यादिव्यवहार-निवृत्तिलक्षणाया निर्मूलत्वात् । उद्दिष्टस्य त्यक्तस्य वर्जनं प्रति-ग्रहसमर्थोपीत्युक्तं निषिध्यत इति केचित् । अन्येतूच्छिष्टस्येति पाठं मन्यमानाः स्वमुच्छिष्टमुच्छिष्टोपहतं चेति वसिष्ठादिभि-र्निषिद्धस्यापि कलौ न दोष इत्याहुः । परेत्वपवर्जनमिति

पाठमवलंव्य विश्राणनं वितरणमिति कोशे दानवाचित्वेनाप-वर्जनशब्दस्य प्रसिद्धत्वाद्यद्ब्राह्मणायोदङ्कुच्छिष्टं प्रयच्छेदिति मधुपर्के विहितमुच्छिष्टदानं तन्निषिध्यत इत्याहुः । वस्तुतस्तु उदित्यव्ययेनोत्कृष्टेन पित्रादिनोद्दिष्टं निर्दिष्टं शिष्टमित्येकपदार्थः। तादृशस्यापवर्जनं प्रायपाठाद्विहितव्रतांतर्गतत्वं । अपेति पाठेपि तादृशस्य वस्तुनः परस्मै समर्पणं तन्निषिध्यते । सर्व-स्मिन्पाठे एकरूपार्थलाभात् मूलैककल्पनालाघवाच्च । तथाच कलौ गुरोर्वचनानुरोधेन व्रतविरुद्धाचरणे न केवलं व्रतहानि-दोषाभावः प्रत्युत तद्वचनोल्लंघने दोषाधिक्यमपि । तथाच ब्रह्मवैवर्तें कलिब्रह्मसंवादे गुरुभजनमीश्वरभजनादप्यादरणी-यमुक्तं । तथा—षड्भक्तानशनेनान्नहरणं हीनकर्मणः । एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि विद्व-द्भिर्व्यवस्थापूर्वकं बुधैः । समयश्चापि साधूनां प्रमाणं वेदवद्भ-वेत् । इति । यत्—तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः । इति विहितं शूद्रान्न-चौर्यं तन्निषिध्यते ।

तथा—शपथाः शकुनाः स्वप्नाः सामुद्रिकमुपश्रुतिः । उप-याचितमादेशाः संभवंति कलौ क्वचित् । तस्मात्तन्मात्रलाभेन कार्यं तत्र न कारयेत् । इति । अत्र शपथाः काशीस्थलोलार्क-तीर्थस्नानादयः । शकुनाः पूर्णकुंभादयः । स्वप्नाः पुरुषं कृष्णं कृष्णदंतं पश्यति स एनं हंतीत्यादि श्रुतिस्मृतिसिद्धाः । सामु-द्रिकं करादिवर्ति रेखादिचिह्नं । उपश्रुतिः संध्यायां निर्ण-जकादिगृहेऽक्षतप्रक्षेपपूर्वकं स्वेष्टादिसूचकतत्रस्थशब्दाकर्णनं । उपयाचितं अस्मिन्कार्ये सिद्धे भैरवाय सतैलं कृसरान्नं दास्या-मीत्यादिसंकल्पः । आदेशः प्रश्नवशेन ज्योतिर्विद्भिर्भविष्यत्क-थनं । एतत्सूचितस्यापीष्टादेः प्रतिबंधकादृष्टभावाभावाभ्यां सं-वादलाभनियमाभावान्न शकुनादिलाभमात्रेण जयाद्युद्देश्यक-विवादादिप्रवृत्तिरुचितेति दृष्टार्थकार्यनिषेध एव क्रियते नत्व-दृष्टार्थस्य शांत्यादेः । तस्य नैमित्तिकत्वेनावश्यकर्तव्यत्वात् । तथाच दुःस्वप्नाधिकारे श्रुतिः । सयद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वान्येना-न्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयादिति शौनकः ।

अथस्वप्नस्येति जपन् प्रातःप्रातर्दिनेदिने । दुःस्वप्नं तु दहेत्क्षत्रं न तस्माद्विदते भयं । इति । मार्कंडेयपुराणे—श्राद्धार्हं-द्रव्यसंपत्तौ तथा दुःस्वप्नदर्शने । जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छया । इति । तथा तत्रैव दुःस्वप्ननिमित्तकचंडीपाठविधिः प्रागुदाहृतः । मात्स्ये—स्तुतिश्च वासुदेवस्य तथा तस्य च पूजनं । गजेंद्रमोक्षश्रवणं ज्ञेयं दुःस्वप्नदर्शने । स्तुतिः सहस्रनामजपः । पुण्यो दुःस्वप्ननाशनः इति लिंगात् । गजेंद्र-मोक्षश्रवणं विष्णुधर्मस्थं श्रीभागवतस्थं वा । एतेषु वाक्येषु यदिशब्दवीप्सासप्तमीभिर्निमित्तप्रत्ययान्नैमित्तिकत्वं स्फुटं । इच्छयेति च रुचिश्राद्धं कर्तव्यतया ज्ञाप्यते नतु पूर्वोक्तानामैच्छिकत्वं । इति हेमाद्रिस्थानि कलिवर्ज्यानि ।

अथ माधवोक्तानि—शूद्रेषु दासगोपालकुलमित्रार्धसीरिणां । भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः । या दासादीनां नापितनिवेदितात्मनोश्च शूद्रयोर्भोज्यान्नता याज्ञवल्क्योक्ता । याच प्रत्यंतदेशगततीर्थयात्रा पौराणी सा कलौ नेति—शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता । आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा । या—नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ । तदभावेऽस्य तनये पत्न्यां वैश्वानरेपि वा । इति । गुरुपत्नीसमीपे गुरुपुत्राभावे चिरं स्थितिर्विहिता सा निषिध्यते । नतु—गुरुवत्प्रतिपूज्यास्तु सवर्णा गुरुयोषितः । इति मनूक्ता पूजा । वृत्तिशीलतेतिपदेन पूजानभिधानात् । आपदि ब्राह्मणानां—क्षात्रेण कर्मणा जीवेद्विशां वा त्वापदि द्विजः । इति यत्परवृत्त्या जीवनं विहितं । यच्च त्र्यहिकोऽश्वस्तनोपि वेति विहितमश्वस्तनत्वं तत्कलौ नेत्यर्थः ।—प्रजार्थं तु द्विजाग्र्याणां जातारणिपरिग्रहः । ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया । बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः । यतेश्च सर्ववर्णेषु भिक्षाचर्या विधानतः । नवोदकं दशाहं च दक्षिणा गुरुचोदिता । ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च । भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा । गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया । पितापुत्रविरोधेषु साक्षिणां दंडकल्पनं । यतेः सायंगृहत्वं च सूरिभिस्तत्त्वदर्शिभिः । एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि विद्वद्भिर्व्यवस्थापूर्वकं

बुधैः । इति । केषांचिच्छाखिनां जातकर्महोमेऽरणिपरिग्रहो विहितो यः । ब्राह्मणानां वेदाध्ययनार्थं गुरुकुले द्वादशवर्षं ब्रह्मचर्येण वासः प्रवासः । दीर्घकालं ब्रह्मचर्यमित्यनेन मूलैक्यकल्पनालाघवात् ।—द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव । राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनं । इत्यत्र प्रवासपदेन तदभिधानकृतेश्च । मुखेनैव धमेदग्निमिति विहितं धमन्यनपेक्षं मुखधमनं । गुरुस्त्रीभिन्नानां यस्त्याग उक्तस्तत्परं बलादित्यादि । चातुर्वर्ण्यभैक्षचर्यमुपनिषदि यतीनां प्रसिद्धं । यत्—दशाहेनैव शुध्येत भूमिष्ठं च नवोदकं । इति दशाहपर्यंतं नवोदकवर्जनं । विद्यांते गुरुप्रेरणया दक्षिणादानं यथा सांदीपनये श्रीकृष्णेन मृतपुत्रस्य नतु गुरवे दक्षिणामात्रं । चोदितेतिपदवैयर्थ्यापत्तेः—कंदुपक्वं स्नेहपक्वं यच्च दुग्धेन पाचितं । एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् । इत्यपरार्कोदाहृतवचसा ब्राह्मणाद्यर्थे शूद्रस्य पाकविशेषाचरणं । पाकोपयोगिकल्पनमादिपदार्थः ।—वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनांबुभिः । तस्य त्रिरात्रमाशौचमिति शास्त्रप्रसिद्धं वृद्धादिमरणं । अतएवांबुप्रवेशाद्युपलक्षणं भृगुपतनादि । शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतं । इति प्रसक्तं शिष्टाचमनं ।—पितापुत्रविरोधे तु साक्षिणां द्विशतो दमः । इत्युक्तं दंडकल्पनं । ततश्च विवादांतर इव तत्रापि साक्षिणः प्रमाणमेव । गृहशब्दो गृहस्थवेश्मपरः । सायंशब्दः प्रदोषवाचकः । प्रदोषांतो होमकाल इति होमांगसायंकालस्याश्वलायनेन विवरणात् । भिक्षाद्यर्थं प्रविष्टस्य तत्र काले गृहवासो न युक्त इति तात्पर्यं । अतएव श्रुतिः । ग्रामं प्रविशेदासायमिति । इति माधवोक्तकलिवर्ज्यानि ।

**मदनपारिजाते**—अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु । देवराच्च सुतोत्पत्तिः कलौ पंच विवर्जयेत् । इति । अक्षता तद्विवाहः । श्राद्धे मांसमिति यथा मंद्रं प्रातःसवन इति स्वरविधिः सौमिकेष्विव पाशुकेष्वपि सप्तमीबलाद्वार्तिकेंगीकृतः । तथा श्राद्धांगस्य पुरुषार्थतया तत्र विहितस्य मांसस्य निषेधः—पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च । इति

विहितं मधुदानं । व्यासः—चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च । कलेर्यदा गमिष्यंति तदा त्रेतापरिग्रहः । त्रेताशब्देनाग्नित्रयमुच्यते । एतच्च सर्वाधानपरं ।—अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया । इति लौगाक्षिवचनादिति केचित् । तन्न । कृतिद्वयस्तुत्यर्थमंते पठितस्य विशेषणस्य परिसंख्याश्रयणेन कलौतदुत्तरार्धे वा निषेधपरत्वकल्पनाया अनुचितत्वात् । अतएव—यावद्वर्णविभागोस्ति यावद्वेदः प्रवर्तते । संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे । इति देवलवचनं सर्वाधानप्रतिप्रसवार्थमित्यपि निरस्तं । वर्णविभागाभावे वेदप्रवृत्त्यभावे चाधिकारासंभवेनास्य वचनस्य न्यायप्राप्तानुवादत्वमित्यपि न शंक्यं । उक्तसंख्योत्तरं व्यासवचनेन निवारितयोः संन्यासाग्निहोत्रयोर्वर्णविभागादिकालेप्यप्राप्तयोः प्रतिप्रसवार्थसंभवात् । मुख्यगौणकालप्रापकत्वेन विरोधपरिहारसंभवाच्चेत्यलं । इति कलिवर्ज्यानि ।

अथ कलावुक्तोत्कर्षभगवन्नामोच्चारणकालः । हेमाद्रौ विष्णुधर्मोत्तरे—चक्रिणं हलिनं चैव शार्ङ्गिणं खड्गिनं तथा । मोक्षार्थी प्रवसंश्चैव दिक्षु प्राच्यादिषु स्मरेत् । अच्युतं चाधिकं चैव सर्वं सर्वेश्वरं पृथुं । संस्मरेत्पुरुषं भक्त्या व्यवहारेषु सर्वदा । कूर्मं वराहं मत्स्यं च जलप्रतरणे स्मरेत् । भ्राजिष्णुमग्निजनने जपेन्नाम त्वतंद्रितः । संग्रामाभिमुखो गच्छन्संस्मरेदपराजितं । केशवं पुंडरीकाक्षं पुष्कराक्षं तथा जपेत् । नेत्रव्यथासु सर्वासु हृषीकेशं तथैवच । अच्युतं चामृतं चैव जपेदौषधकर्मणि । गरुडध्वजानुस्मरणादापदो मुच्यते नरः । ज्वरदोषशिरोरोगविषवीर्यं प्रशाम्यति । ग्रहनक्षत्रपीडासु देवबाधाटवीषु च । दस्युवैरिनिरोधेषु व्याघ्रसिंहादिसंकटे । अंधकारे तथा तीव्रे नरसिंहेति कीर्तयेत् । नारायणं शार्ङ्गधरं श्रीधरं गजमोक्षणं । वामनं खड्गिनं चैव दुःस्वप्नेषु नरः स्मरेत् । अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनं । बलभद्रं तु युद्धार्थी कृष्यारंभे हलायुधं । उत्तिष्ठन्कीर्तयेद्विष्णुं प्रस्वप्ने माधवं तथा । भोजने चैव गोविंदं सर्वत्र मधुसूदनं । नारायणं सर्वकालं क्षुतप्रस्खलनादिषु । स्नाने देवार्चने होमे प्रणिपाते प्रदक्षिणे । कीर्तयेद्वासुदेवं च अनुक्तेष्वपि यादवं । कार्यारंभे तथा राज-

न्यथेष्टं नाम कीर्तयेत् । जगतो मंगलं विष्णुं मांगल्येषु च कीर्तयेत् । इति । अत्र स्मरेदिति पदोपेतसर्ववाक्येषु यद्यपि प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् । गरुडध्वजानुस्मरणादिति षष्ठीसमासे च पूर्वपदार्थसंबंधिनपवोत्तरपदार्थस्य राजपुरुष इत्यत्रेव प्रतीतेरर्थस्मरणविधिः प्रतीयते तथापि— कस्मिन्काले तु देवस्य किं किं नाम प्रकीर्तयेत् । इत्युपक्रमात् । उपसंहारस्थेषु तिष्ठन्नित्यादिषु कीर्तनविधेः स्फुटत्वान्मध्यस्थवाक्येपि लक्षणयार्थस्मरणोपहितनामकीर्तनमेव विधीयते । द्वितीयांतप्रातिपदिकैरर्थविशिष्टशब्दलक्षणा । धातुना च स्मरणविशिष्टकीर्तनलक्षणा विशिष्टवैशिष्ट्यबोधोत्तरं तात्पर्याद्विशेषणयोरपि मिथोन्वयलाभः । अभ्युपगतो हि दीधितिव्याख्यातृभिर्विशिष्टप्रतिज्ञायां प्रयोजनयोः समुच्चितयोरन्वयोत्तरं विशेषणेपि प्रथमप्रयोजनान्वयः । समासे च पूर्वपदे लक्षितलक्षणया निर्वाहः । उत्तरपदे च धातुवल्लक्षणेति बोध्यं । नच जहल्लक्षणांगीकारेण लक्षकस्मरणविधिर्नाभ्युपेयः । यागलक्षकयोरपि द्रव्यदेवतयोरिव विधेयतया प्रतीयमानस्य त्यागायोगात् । यतस्तद्विषया मतिरिति शास्त्रेणार्थस्मरणसापेक्षत्वावगतेश्च । कीर्तनं गरुडध्वजाय नम इत्येवंप्रकारमिति वृद्धाः ।

गंतुं नार्हंति यत्र क्षणमपि मनुजास्तत्र देशे स्थितान्यो
दूरीकृत्याखिलारीन्निजभुजविलसच्चंडकोदंडबाणैः ।
श्रीमद्भीमेशतीर्थप्रभृतिबहुसरोदेवसद्वृक्षशक्तीः
स्पष्टीकर्तुं स्वदेशे परनगरगतं स्कांदखंडं जहार ॥ १ ॥

येनार्जितानि युधि सर्वरिपून्विजित्य
दुर्गाणि दुर्ग्रहतराणि धनैर्युतानि ।
श्रीबाजबाहदुरचंद्रनृपस्य तस्य
वाचा हिमाचलगतावनिदेवतुष्ट्यै ॥ २ ॥

योऽनंतदेवकृतमंथनसन्निबंध-
क्षीराब्धिजोऽथ सततं हरिणा धृतो यः ।

नित्यं निजे हृदि सतां प्रमुदेस्तु तस्य
सर्वाब्ददीधितिरियं स्मृतिकौस्तुभस्य ॥ ३ ॥
येनाकारि जगज्जनिस्थितिलयाः संकल्पतो यः फलं
यच्छन्भूरिविधं क्वचिन्न गदितो वैषम्यनैर्घृण्यभाक् ।
योंतर्यामितयाखिलेषु हृदयेष्वास्तेंऽतरात्मा च य-
स्तोषं यातु स नंदगोपतनयो वाचःश्रमेणामुना ॥ ४ ॥

इति श्रीमत्सकलभूमंडलमंडनायमानश्रीवाजवाहदुरचंद्र-
देववाक्प्रवृत्तेन विद्वद्वर्यापदेवसुतेनानंतदेवेनकृते
स्मृतिकौस्तुभे संवत्सरकृत्यं समाप्तं ॥


समाप्तश्चायं ग्रन्थः

| | मू० | डा. व्य. |
|---|---|---|
| ४८. **वाग्भटालंकारः**—श्रीवाग्भटप्रणीतः, सिंहदेवगणिविरचितया टीकया सहितः. ... ... ... ... | ॥ | ८- |
| ४९. **द्विसंधानमहाकाव्यम्**—श्रीधनंजयविरचितं, बदरीनाथविरचितया टीकया सहितम्. ... ... ... | १॥ | ८-॥ |
| ५०. **अलंकारशेखरः**—श्रीमाणिक्यचन्द्रकारितः, श्रीकेशवमिश्रकृतः. ... ... ... ... ... ... | ॥- | ८- |
| ५१. **पतञ्जलिचरितम्**—श्रीरामभद्रदीक्षितप्रणीतम्. ... | ॥= | ८- |
| ५२. **मन्दारमरन्दचम्पूः**—श्रीकृष्णकविविरचिता. ... | १। | ८= |
| ५३. **वाणीभूषणम्**—श्रीदामोदरमिश्रविरचितम्, अयं ग्रन्थो वृत्तरत्नाकरवदेव वृत्तवोधकः परं च वृत्तरत्नाकरापेक्षयाप्यस्मिन् कतिचिदधिकवृत्तानां लक्षणानि निवेशितानि, तथा प्रतिवृत्तस्य लक्षणमुदाहरणं चातीव रुचिरतया निवेशितं दृश्यते। तेन ग्रन्थवाचनसमये वृत्तज्ञानं मनोरञ्जनं चेत्येते युगपदेव संभवतः। ... | ।= | ८- |
| ५४. **धनंजयविजयः**—श्रीकाञ्चनाचार्यविरचितः. ... ... | ८≡ | ८- |
| ५५. **अद्भुतदर्पणनाटकम्**—श्रीमहादेवकविविरचितम्. ... | ॥। | ८- |
| ५६. **नेमिनिर्वाणकाव्यम्**—महाकविश्रीवाग्भटविरचितम्. | ॥= | ८- |
| ५७. **राघवनैषधीयकाव्यम्**—श्रीहरदत्तसूरिकृतम्, स्वकृतया टीकया सहितम्.... ... ... ... ... | ॥ | ८- |
| ५८. **शृङ्गारभूषणभाणम्**—वामनभट्टवाणविरचितम्. ... | ८≡ | ८॥ |
| ५९. **अमृतोदयनाटकम्**—श्रीमद्गोकुलनाथकृतम्. ... ... | ॥ | ८- |
| ६०. **युधिष्ठिरविजयकाव्यम्**—महाकविश्रीवासुदेवविरचितम्, राजानकरत्नकण्ठकृतया टीकया सहितम् ... ... | १॥ | ८= |
| ६१. **हरचरितचिन्तामणिकाव्यम्**—राजानकजयरथकृतम्. | १॥। | ८= |
| ६२. **राघवपाण्डवीयकाव्यम्**—कविराजविरचितं, शशधरकृतया (प्रकाश) टीकया सहितम्. ... ... ... | १। | ८-॥ |
| ६३. **साहित्यकौमुदी**—(अलंकारः) **श्रीविद्याभूषणविरचिता** कृष्णानन्दिनीटिकासहिता. ... ... | १॥ | ८≡ |
| ६४. **प्राचीनलेखमाला**—(द्वितीयो भागः). ... ... | १॥ | ८= |
| ६५. **भारतमञ्जरीकाव्यम्**—महाकविश्रीक्षेमेन्द्रविरचितम्. | ५ | ।- |
| ६६. **अलंकारकौस्तुभः**—(अलंकारः) श्रीविश्वेश्वरपण्डितविरचितः स्वोपज्ञव्याख्यासहितः. ... ... ... | ३ | ८≡ |
| ६७. **हीरसौभाग्यकाव्यम्**—श्रीदेवविमलगणिविरचितं, स्वोपज्ञया व्याख्यया समलंकृतम्. ... ... ... ... | ५॥ | ।= |
| ६८. **रावणार्जुनीयकाव्यम्**—काश्मीरिकश्रीभट्टभीमकृतम्. | १। | ८-॥ |

| | मू० | डा. व्य. |
|---|---|---|
| ६९. बृहत्कथामञ्जरी—श्रीक्षेमेन्द्रविरचिता. | ३॥। | ।· |
| ७०. यशस्तिलकचम्पूः—(महाकाव्यं) श्रीसोमदेवसूरिविरचितं श्रीश्रुतसागरसूरिकृतया व्याख्यया समेतं पूर्वखण्डम्. | ३॥। | ।· |
| ७१. यशस्तिलकचम्पूः—(महाकाव्य) श्रीसोमदेवसूरिविरचितं श्रीश्रुतसागरसूरिकृतया व्याख्यया समेतं उत्तरखण्डम्. | २॥। | ।· |
| ७२. काव्यानुशासनम्—आचार्यहेमचन्द्रविरचितं, स्वोपज्ञालंकारचूडामणिसंज्ञकवृत्तिसमेतम्. | २। | ८= |
| ७३. कथाकौतुकम्—पण्डितश्रीवरविरचितम्. | ·॥। | ८– |
| ७४. सुरथोत्सवम्—श्रीसोमेश्वरदेवविरचितम्. | ·॥= | ८–॥ |
| ७५. सौगन्धिकाहरणम्—श्रीमद्विश्वनाथकविविरचितम्. | ·।· | ८– |
| ७६. जयन्तविजयम्—श्रीमदभयदेवविरचितम्. | १ | ८–॥ |
| ७७. गङ्गावतरणम्—श्रीनीलकण्ठदीक्षितविरचितम्. | ·॥· | ८= |
| ७८. देलरामकथासारः—राजानकभट्टाह्लादकविरचितः | ·।= | ८– |
| ७९. शृङ्गारसर्वस्वभाणः—श्रीमल्लकविविरचितः | ·।– | ८– |
| ८०. कर्णभूषणम्—श्रीगङ्गानन्दकविराजप्रणीतम्. | ·॥· | ८– |
| ८१. प्राचीनलेखमाला—( तृतीयो भागः ). | १ | ८–॥ |
| ८२. विदग्धमाधवम्—( नाटकं ) श्रीरूपगोस्वामिप्रणीतम् ( सटीकम् ). | १। | ८–॥ |
| ८३. सुभाषितरत्नसंदोहः—श्रीमदमितगतिविरचितः. | ·॥। | ८= |
| ८४. रामायणमञ्जरी—क्षेमेन्द्रविरचिता. | ३। | ।· |
| ८५. स्तवमाला—श्रीरूपदेवविरचिता, श्रीजीवदेवविरचितभाष्यसमेता. | २ | ८= |
| ८६. तिलकमञ्जरी—धनपालकृता जैनाख्यायिका. | २॥ | ।· |
| ८७. हरिहरसुभाषितम्—श्रीहरिहरप्रणीतम्, अयमुत्तमः सुभाषितग्रन्थोस्ति. | ·॥· | ८– |
| ८८. चैतन्यचन्द्रोदयनाटकम्—कविकर्णपूरविरचितम् | १। | ८–॥ |
| प्रथमगुच्छकः. | १ | ८–॥ |
| द्वितीयगुच्छकः. | १ | ८–॥ |
| तृतीयगुच्छकः. | १ | ८–॥ |
| चतुर्थगुच्छकः. | १ | ८–॥ |
| पञ्चमगुच्छकः. | १ | ८–॥ |
| षष्ठगुच्छकः. | १ | ८–॥ |
| सप्तमगुच्छकः. | १ | ८–॥ |
| अष्टमगुच्छकः. | १ | ८–॥ |
| नवमगुच्छकः. | १ | ८–॥ |
| दशमगुच्छकः. | १॥ | ८–॥ |

